चतुर्विधं इति गीतायां वैश्वानरशब्दस्य परमात्मनि प्रयुक्तत्वात् वैश्वानरो भूतं अग्निदेवता वा भवितुं नार्हति । अग्न्यादिशब्दानां ब्रह्मणि परममुख्यत्वे लोकव्यवहारलोपप्रसंग इति चेन्न । मुख्यवृत्त्या ह्यनादिव्यवहारो न निरुध्यते इति जैमिन्याचार्यो वदति । अग्निविद्या इति निर्देशस्तु ब्रह्मण अग्न्यादिषु अभिव्यक्तिमपेक्ष्यैव । अनुस्मृति-संपत्ति-आम्नानादिविवक्षया अन्यत्र व्यवहारः संभवतीति ऋषयः वदंति ।

तंत्रदीपिकायामेतत्पादार्थः मनोज्ञतया संगृहीतः । अत्राऽऽद्यनये, विष्णोस्सर्वशक्तिप्रबोधकत्वं सर्वगतस्यापि अल्पस्थानस्थत्वं च । अत्तितिनयेऽदनक्रिया । गुहानये सारभोक्तृत्वमेकस्याऽप्यनेकत्वं च । अंतरनये ब्रह्मादेरीशं विना स्वावरनेतृत्वायोगः । अंतर्यामिनये सर्वस्य तच्छरीरत्वात्तत्तंत्रत्वाद्वा तच्छरीरत्वम् । अदृश्यत्वनये गोत्राद्यभावस्येशाख्यधर्मितो भेदेऽपि दृश्याद्यन्योन्याभावस्य तत्स्वरूपत्वं सिद्धम् । अंत्यनये सूक्तादिव्यवस्थेत्यादि ध्येयम् ।

## तृतीयः पादः

अस्मिन्पादे उभयत्रप्रसिद्धनामलिंगात्मकद्विविधशब्दसमन्वयः क्रियते ।

(१) द्युभ्वाद्यधिकरणम् ( सू. १–७ ) :– सप्तसूत्रात्मके अस्मिन्नधिकरणे 'यस्मिन् द्यौः पृथिवीं चांतरिक्षं इति ब्रह्मणि श्रुतसर्वाधारत्वलिंगं प्रधानवायुरुद्रजीवादिषु विकल्पयितुं न शक्यते । तमेवैकं जानथाऽऽत्मानम् । इति स्वशब्दार्थआत्मशब्दसमभिव्याहारात् आत्मशब्दस्य च विष्वैकनिष्ठत्वात् इति भावः । प्राणभृतलिंगेन द्वे विद्ये वेदितव्ये इति प्रस्ताव्य परविद्याविषयस्य विष्णोः प्रक्रान्तत्वात् जुष्टं यदा पश्यत्यन्यमीशमिति ब्रह्मणो जगद्भिन्नत्वेन व्यपदेशात् सर्वाधारत्वलिंगं ब्रह्मण्येवोपपद्यते न पुनः प्रधानवाय्वादिषु इति भावः ।

(२) भूमाधिकरणम् ( सू. ८, ९ ) :– सूत्रद्वयात्मकेऽस्मिन्नधिकरणे उभयत्रप्रसिद्धभूमनाम समन्वीयते । यो वै भूमा तत्सुखम् इत्यादिषु प्रकृतो भूमा सुखपूर्णत्वेन सर्वोत्तमत्वेन व्यपदेशात् विष्णुरेव भवितुमर्हति । न तु मुख्यप्राणः । तस्य विष्णोरवरत्वेन अल्पसुखत्वाच्च ।

(३) अक्षराधिकरणम् (सू. १०–१२) :– अत्र अक्षरनाम ब्रह्मणि समन्वीयते । एतस्मिन्खल्वक्षरे गार्गि आकाश ओतश्च प्रोतश्च, एतस्य वाऽक्षरस्य प्रशासने

गार्गि सूर्याचंद्रमसौ विधृतौ तिष्ठतः । इत्यादि श्रुतिषु अक्षरस्य अंबरांतधारणं सूर्यचंद्रादिप्रशासनं च उच्यते । तच्च सर्वाधारस्य विष्णोरेव युज्यते । न पुनः प्राणस्य चेतनप्रकृतेः श्रीतत्वस्य वा । अस्य स्थौल्य-अणुत्वादिप्राकृतधर्मराहित्यस्य श्रुतत्वात् । स प्रकृत्यतीतः सर्वोत्तमो विष्णुरेव ।

(४) सदधिकरणम् (सू. १३ ) :– एकसूत्रात्मकेऽस्मिन्नधिकरणे विष्णौ सन्नाम समन्वीयते । सदेव सौम्य इदमग्र आसीत् इत्यादि श्रुतिषु प्रकृतं सन्नाम विष्णोरेव न प्रधानस्य । यतः 'तदैक्षत' इत्यादिषु ईक्षणस्वरूपत्वं तत्कर्मत्वं च तस्योच्यते । कर्तृकर्मभावस्तु एकस्मिन्न संभवतीति न शंक्यम् । विशेषबलात् ब्रह्मण्येव तत्सूपपदम् ।

५) दहराधिकरणम् ( सू. १४–२१ ) :– अत्र हृत्पद्मस्थत्वलिंगं विष्णौ समन्वीयते। सूत्राष्टकवत्यस्मिन्नधिकरणे द्युभ्वाद्याधारो विष्णुरेव हृत्पद्मस्थ इति समर्थ्यते । 'आत्माऽपहतपाप्मा' इत्यादि श्रुतिभ्यः ब्रह्मशब्दसुप्तप्राप्तिलिंगाभ्यां 'स सेतुर्विधृतिः' इति सर्वाधारत्वलिंगं हृत्पद्मस्थत्वप्रसिद्धेश्च परंज्योतिरुपसंपद्येति जीवभेदपरामर्शात् इत्यादिहेतुभ्यः हृत्पद्मस्थो विष्णुरेवेति भावः।

६) अनुकृत्यधिकरणम् ( सू. २२, २३) :– सूत्रद्वयात्मकेऽस्मिन्नधिकरणे ज्ञानार्थं प्रार्थिततत्वरूपाऽऽनुकूल्येन गृह्यमाणत्वलिंगं विष्णौ समन्वीयते । कथं नु तद्विजानीयां किमु भाति न भाति वेत्युक्तमानुकूल्येन गृह्यमाणत्वलिंगं विष्णावेवोपपद्यते । न तु ज्ञानिसुखे । यतः सूर्यादिभिः तदनुभानात् । 'तस्य भासा सर्वमिदं विभाति' इति सर्वस्य तत्प्रकाश्यत्वात् ब्रह्मणः सूर्याद्यप्रकाश्यत्वात् (न तत्र सूर्यो भाति) यदादित्यगतं तेजो ........ तत्तेजो विद्धि मामकमिति गीतायां सर्वस्य तत्तेजःप्रकाश्यत्वाच्च आनुकूल्येन गृह्यमाणत्वलिंगं विष्णोरेव नान्यस्येति स्थितम् ।

७) वामनाधिकरणम् ( सू. २४, २५ ) :– अत्र नये सूत्रद्वयात्मके ईशाननाम विष्णौ समन्वीयते । अंगुष्ठमात्रः पुरुषः मध्ये आत्मनि तिष्ठति । ईशानो भूतभव्यस्य इत्युक्तेशानो विष्णुरेव न तु वाय्वादिः ।

हृद्यवकाशरूपस्थानगतो ब्रह्माख्यो पुरुषः मनुष्याधिकारत्वात् अंगुष्ठमात्र इत्युपचर्यते । वामनशब्दात् प्राणादिव्यवस्थापकत्वरूपनिरवकाशलिंगाच्च ईशानो

८) देवताधिकरणम् ( सू. २६–३३ ) :– पूर्वत्र मनुष्याधिकारत्वात् अंगुष्ठमात्रत्वं विष्णौ उपचर्यते इत्युक्तम् । प्रसंगसंगत्या (स्मृतस्योपेक्षाऽनर्हत्वेन) देवतानां शूद्राणां च वेदविद्याधिकारः चिंत्यते ।

अष्टसूत्रात्मके देवताधिकरणे देवानां वेदविद्याधिकारो वर्तते इति समर्थ्यते । देवतानां जातापरोक्षत्वात् ज्ञानार्थं वेदविद्याध्ययनं निरर्थकमिति प्राप्ते (जैमिनिमते) मोक्षफले तद्धेतुज्ञाने चातिशयोऽस्ति हि यतोऽतोऽतिशयार्थं देवानां मध्वाद्यशेषवेदविद्यास्वधिकारोऽस्ति इति ज्ञायते । अधिकारिफलभेदेन जैमिनिबादरायणमतयोर्न विरोध इति भावः ।

९) अपशूद्राधिकरणम् (सू. ३४–३८) :– शूद्राणां तु वेदविद्यायां सामान्यतोऽधिकारो न विद्यते इति उपनीतोऽधीयीत इत्यादि श्रुतिबलान्निर्णीयते । जातापरोक्षाणां विदुरादिशूद्राणां उर्वश्यादिस्त्रीणां तु अपवादविषयत्वं साध्यते । अत्र विस्तरस्तु उपरिष्ठात् चतुर्थसंपुटे अनुसंधेयः ।

१०) कंपनाधिकरणम् ( सू. ३९ ) :– एकसूत्रात्मकेऽस्मिन्नधिकरणे वज्रनाम समन्वीयते । 'महद्भयं वज्रमुद्यतं' इत्यत्र वज्रनाम नैंद्रायुधात्मकं किंतु ब्रह्मबोधकं यतो "जगत्सर्वं प्राण एजति निःसृतं" इति जगच्चेष्टकत्वलिंगादयमर्थोऽवसीयते ।

११) ज्योतिरधिकरणम् ( सू. ४० ) :– अत्र ज्योतिर्नाम समन्वीयते । प्राक् समन्वितत्वेऽपि उभयत्र प्रसिद्धत्वेन पृथगुक्तिरिति ध्येयम् । 'योऽयं विज्ञानमयः प्राणेषु हृद्यंतर्ज्योतिः' इत्युक्तज्योतिः विष्णुरेव 'विष्णुरेव ज्योतिः विष्णुरेव ब्रह्मेति श्रुतेः ।

१२) आकाशाधिकरणम् ( सू. ४१ ) :– एकसूत्रात्मकमिदमधिकरणम् । 'आकाशो वै नामरूपयोर्निर्वहिता' इत्युक्ताकाशो ब्रह्मैव नाऽव्याकृताकाश इति बोधयति । नामरूपराहित्यरूपविलक्षणार्थत्वव्यपदेशात् । नामरूपयोर्निर्वहिता ते यदंतरा तद्ब्रह्म तदमृतं इति श्रुतिवाक्येषु प्राकृतनामरूपराहित्यकथनात् प्रकृत्यतीतो विष्णुरेव आकाशशब्दवाच्यः इति ज्ञेयम् ।

१३) सुषुप्त्युत्क्रांत्यधिकरणम् ( सू. ४२ ):– अत्र स्वप्नादिद्रष्टृत्वलिंगं समन्वीयते । 'स यत्तत्र किंचित्पश्यत्यनन्वागतस्तेन भवति अनन्वागतस्तेन भवत्यसंगो

ह्ययं पुरुषः' इत्यसंगत्वलिंगात् स्वप्नादिद्रष्टा ब्रह्मैव न तु जीवः सुषुप्त्युत्क्रांतिप्रकरणयोर्जीवेशयोर्भेदेन व्यपदेशात्। 'प्राज्ञेनात्मनाऽन्वारूढः' प्राज्ञेनात्मना संपरिष्वक्तः' इत्यादिवाक्येषु।

१४) पत्यधिकरणम् (सू. ४३) :— अत्र ब्राह्मणनाम विष्णौ समन्वीयते। एष नित्यो महिमा ब्राह्मणस्येत्युक्ते ब्राह्मणः ब्रह्मैव न विरिंचः। 'सर्वस्य वशी सर्वस्येशानः सर्वाधिपतिः' इत्याद्युक्तसर्वाधिपत्यं तस्यैव संगच्छते।

तंत्रदीपिकायां अस्य पादस्य विषयसंग्रहः कृतः। अत्राऽऽद्यनये अजस्याविर्भावाख्यजनिः। भूमनये सर्वगतस्यापि परिस्पंदक्रिया। अक्षरनये महतोऽप्यणुत्वम्। ईक्षतिनये स्वरूपैरेव बहुभवनम्। दहरनये ईशांशस्यापि व्याप्तता। अनुकृतिनये सूर्यादिकृतेरीशायत्तत्वम्। शब्दादितिनये प्राणप्रेरकत्वं श्रुत्यादेः पूर्वपूर्वप्राबल्यं च। देवतानये देवर्ष्यादीनां कर्मब्रह्मविद्ययोरधिकारः। शुगितिनये वेदविद्यायामेव शूद्रस्यानधिकारः। कंपनादिनये रूढितः स्मार्तयोगस्य प्राबल्यम्। ज्योतिर्नये जीवेन सहेशस्य लोकांतरसंचारस्य कर्मानधीनत्वम्। आकाशनये ईशस्य स्थौल्यादिप्राकृतधर्मराहित्यम्। सुषुप्तिनये निर्लेपत्वम्। अंत्यनये विरिंचैक्यनिरासः इत्यादि सिद्धमिति विवेक्तव्यम्।

## चतुर्थः पादः

अस्मिन्पादे अन्यत्रैव प्रसिद्धनामलिंगात्मकोभयविधशब्दाः विष्णौ समन्वीयंते।

१) आनुमानिकाधिकरणम् (सू. १-९):— सूत्रनवकात्मकेऽस्मिन्नधिकरणे ऐश्वर्यविरोध्यवरत्व—दुःखित्व—बद्धत्वार्थकशब्दाः अन्यत्रैव जीवादिषु प्रसिद्धाः शब्दाः शब्दन्यायभेदेन विष्णावेव समन्वीयंते। अव्यक्तादिकं (आनुमानिकं) परममुख्यवृत्त्या ब्रह्मैव न प्रधानादि। 'स्वातंत्र्यं तद्गतत्वं चेति शब्दप्रवृत्तिनिमित्तं द्विविधम्। अव्यक्ततत्वनियामकं ब्रह्मैव। बद्धसूक्ष्मावरत्वादिकं तु तदधीनत्वादर्थवदिति न्यायात् सर्वस्वतंत्रे ईश्वरे बद्ध—अवर—सूक्ष्मनियामकत्वं सूपपदमेव। मुमुक्षुणा विष्णोरेवानिष्टनिवृत्तीष्टप्राप्त्यर्थं ज्ञेयत्वं वदति श्रुतिः 'तमेवैकं जानथाऽऽत्मानं अन्या वाचो विमुञ्चथेति। चमस—महदादिशब्दवत् द्व्यर्थकत्वेऽपि शब्दाः परममुख्यवृत्त्या प्रवृत्तिनिमित्तपौष्कल्येन विष्णमेव बोधयंति।

२) ज्योतिरुपक्रमाधिकरणम् (सू. १०–११):– योगद्वयात्मकेऽस्मिन्नधिकरणे पदान्वयन्यायेन ज्योतिरादिकर्मवाचकपदानां महायोगविद्रूढिबलेन विष्णौ समन्वयः उच्यते। कल्पनया मुख्यवृत्त्या परममुख्यवृत्त्या च मधुशब्दस्य पुष्परसे परब्रह्मणि च शक्तिर्यथा तथेत्यर्थः।

३) न संख्योपसंग्रहाधिकरणम् (सू. १२–१४):– सूत्रत्रयात्मके अस्मिन्नधिकरणे बहुत्ववाचिशब्दाः समन्वीयंते। यस्मिन् पंच पंचजनाः इत्यादिषु अधिकरणार्थकाधाराधेयभावः बहुत्वसंख्या चाचिंत्यशक्त्या विशेषबलेन स्वगतभेदविवर्जितेऽपि ब्रह्मणि न विरोधलेशमापादयति इत्यन्यत्रैव प्रसिद्धशब्दाः विष्णौ उपपादिताः। प्राणस्य प्राणः इति प्राणप्राणदत्वलिंगेन प्राणशब्दो विष्णुवाची 'वाच्यवक्तृस्वरूपतः' इति सर्वथाऽपि सप्तसु प्रथमा इति न्यायेन स्वर–वर्ण–पद–विभक्त्यादीनां विष्णुवाचकत्वमवगंतव्यम्।

४) कारणत्वेनेत्यधिकरणम् (सू. १५) :– अत्रावांतरकारणत्वलिंगं ब्रह्मणि समन्वीयते। आत्मनः आकाशः संभूतः। आकाशाद्वायुः इति श्रुतौ आकाशवाय्वादयः ब्रह्मैव आकाशादिषु अंतर्यामितया स्थितम्। व्यंग्यव्यंजकभावेनोभयरूपत्वं ब्रह्मणः संगच्छते।

५) समाकर्षाधिकरणम् (सू. १६–२३) :– अत्र अष्टसूत्राणि वर्तंते। परमात्मनि परममुख्यवृत्त्या वाचका अपि शब्दाः मुख्यवृत्त्या मध्वादिशब्दवत् जगति समाकृष्य प्रयुज्यंते। अन्यथा जगद्व्यवहारविलोपः प्रसज्येत। कर्मदेवताद्यन्यार्थबोधकत्वं मुमुक्षोर्ज्ञानहेतुत्वेन कर्मादिरवश्यकत्वात् कर्मादिषु ब्रह्मणः अवस्थितत्वाद्वा उपपद्यते इति ज्ञेयम्।

६) प्रकृत्यधिकरणम् (सू. २४–२८) :– पंचयोगात्मकेऽस्मिन्नधिकरणे स्त्रीलिंगशब्दाः श्रीवाच्यितया प्राधान्यात् प्रकृतिशब्दपुरस्कृताः ब्रह्मणि समन्वीयंते।

७) एतेनेत्यधिकरणम् (सू. २९) :– अस्मिन्नधिकरणे असद्, अभाव, शून्यादिशब्दाः आपाततः ऐश्वर्यविरोधिनः उक्तन्यायेन ब्रह्मण्येव समन्वीयंते।

तंत्रदीपिकायां अस्य पादस्य सग्रहः कृतः । तत्राद्यनये तत्तन्निष्ठेशसंबंधादन्यत्र व्यवहारः स्वातंत्र्यस्य शब्दप्रवृत्तौ निमित्तत्वं मुख्यत्वं च । ज्योतिर्नये शब्दानां पदवर्णरूपेणेशे वृत्तिरन्यत्र रूढिश्च । न संख्येतिनये ईशस्य रूपभेदेनाधाराधेयभावः । कारणत्वेनेति नये ईशस्य रूपभेदेन व्यंग्यव्यंजकत्वरूपकार्यकारणत्वम् । समाकर्षनये वृत्तितारतम्यम् । प्रकृतिनये एकस्मिन्नपि रूपे स्त्रीत्वपुंस्त्वसमावेशः । अंत्यनये तुच्छनियंतृत्वमित्यादि ध्येयम् ।

---

॥ श्रीकृष्णार्पणमस्तु ॥

॥ श्री गुरुभ्यो नमः ॥

॥ श्रीः ॥

॥ श्री वेदव्यासाय नमः ॥

॥ श्रीमदानंदतीर्थभगवत्पादाचार्येभ्यो नमः ॥

# ॥ श्रीमन्मध्वाचार्यकृतब्रह्मसूत्रभाष्यम् ॥

श्रीजयतीर्थकृततत्वप्रकाशिकाख्यटीकया तदुपरि
श्रीराघवेंद्रयतिकृतभावदीपाख्यटिप्पण्या च समलंकृतम् ।



## प्रथमाध्यायः

सूत्रभाष्यम्—

नारायणं गुणैस्सर्वैरुदीर्णं दोषवर्जितम् ।
ज्ञेयं गम्यं गुरूंश्चापि नत्वा सूत्रार्थ उच्यते ॥

तत्वप्रकाशिका—

श्री गुरुभ्यो नमः । श्रीमदानंदतीर्थभगवत्पादाचार्येभ्यो नमः । हरिः ॐ

शुद्धानंदोरुसंविद्द्युतिबलबहुलौदार्यवीर्यादिदेहं
चिन्तासंतापलेपोद्भवमृतिमुखराशेषदोषातिदूरम् ।
सद्भिर्वैराग्यभक्तिश्रुतिमतिनियतध्यानजज्ञानयोगाद्
गम्यं वन्दे मुकुन्दाभिधममलमलं ब्रह्म वेदान्तवेद्यम् ॥ १ ॥

याञ्चामन्दरलोलिताद्यत उदैद्विद्येन्दिरा निर्जरै-
र्जातो भारतपारिजातसुतरुः सद्ब्रह्मसूत्रामृतम् ।
आसीत्तन्त्रपुराणसन्मणिगणो जातः शुकेन्दुः सदा
सोऽयं व्याससुधानिधिर्भवतु मे भूत्यै सतां भूतिदः ॥ २ ॥

स्वांतध्वांतनिकृन्तने जितमहावैकर्तनांशुव्रजं
निर्दोषं जितचन्द्रचन्द्रिकमलं तापत्रयोन्मूलने ।
गाम्भीर्ये जितसिन्धुराजममितं भाष्यं यदास्याम्बुजा-
दाविर्भूतममन्दबोधभगवत्पादान् प्रपद्येऽथ तान् ॥ ३ ॥

श्रीमध्वसंसेवनलब्धशुद्धविद्यासुधाम्भोनिधयोऽमला ये ।
कृपालवः पङ्कजनाभतीर्थाः कृपालवः स्यान्मयि नित्यमेषाम् ॥ ४ ॥

श्रीमद्रमारमणसद्गिरिपादसङ्गिव्याख्यानिनाददलिताखिलदुष्टदर्पम् ।
दुर्वादिवारणविदारणदक्षदीक्षमक्षोभ्यतीर्थमृगराजमहं नमामि ॥ ५ ॥

अथ तत्कृपया ब्रह्मसूत्रभाष्यं यथामति ।
व्याकुर्वे श्रीमदानंदतीर्थार्यमुखनिःसृतम् ॥ ६ ॥

गङ्गासङ्गेन नैर्मल्यं रथ्याद्भिर्लभ्यते यथा ।
वाचो विशुद्धिसिध्द्यर्थं संगम्यन्ते गुरोर्गिरः ॥ ७ ॥

भावदीपः—

श्रीमद्धनुमद्भीमभध्वांतर्गतरामकृष्णवेदव्यासात्मक लक्ष्मीहयग्रीवाय नमः ॥ हरिः ॐ ॥

लक्ष्मीनारायणं नत्वा पूर्णबोधान्गुरूनपि ।
तत्वप्रकाशिकाभावदीपं कुर्वे यथामति ॥ १ ॥ यद्यपि
तत्वप्रकाशिकाऽऽकूतं चंद्रिकातः प्रकाशितं ।
अपि मंदकृते सर्वविषया च कृतिर्मम ॥ २ ॥
नूतनै (रूहिता) रुदिता ये तु दोषास्तेषामलग्नतां ।
संप्रदर्शयितुं चाऽतः प्रसन्नाः संतु सज्जनाः ॥ ३ ॥

इह खलु विविधसांसारिकदुःखपरिश्रमिणामधिकारिणामखिलदुःखनिवृत्ति-विशिष्टपरमानन्दावाप्तये प्रवृत्तानामाम्नायानामितिकर्तव्यताभूतब्रह्मसूत्राणां (च) यथावदर्थविवक्षया प्रवृत्तमतिगहनार्थं भाष्यं व्याचिकीर्षुर्ग्रंथादौ मंगलमाचरति जयतीर्थमुनिः ॥ शुद्धेति ॥

इदं च पद्यं भागवतस्थाद्यपद्यस्य तात्पर्यस्थाद्यपद्यमिव भाष्यस्थाद्यश्लोक विवरणरूपत्वात्तद्वदेव वक्ष्यमाणादिसूचकत्वेन व्याख्येयं । तथाहि । आद्याध्यायार्थस्य गुणैस्सर्वैरुदीर्णमित्यस्य व्याख्या शुध्देत्यादि । तत्र शुद्धत्वं चंद्रिकारीत्या सांतत्वसा-

तिशयत्वराहित्यं आनंदादेस्सर्वस्य विशेषणं । दुःखासंभिन्नत्वादेश्चितेत्यादिना लाभात् । उरुत्वादिकं तु सर्वविषयकत्वादिमात्रं । व्यक्तमेतत्सर्वमग्रे । आनंदमयोऽभ्यासादित्यादौ परिपूर्णानंदसंविदादेः अनुकृतेस्तस्यचेत्यादावुरुद्युतेः अत्तेत्यादौ सर्वसंहारकत्वाद्युक्त्या उरुबलस्य मुक्तोपसृप्यव्यपदेशात्तन्निष्ठस्य मोक्षोपदेशादित्यादौ मोक्षदानादिना बहुलौदार्यादीनामुक्तेः । एतेन भाष्यस्थगुणपदस्य वैशेषिकादिप्रसिद्ध्या दुःखादिकं वैदिकप्रसिद्ध्या सत्त्वादिकं वा नार्थ इत्युक्तं भवति । द्युतिबलादेर्गुणत्वं तु गुणाद्वाऽऽलोकवदित्यत्र द्वितीये तदनुविधानादिना वक्ष्यत इति भावः । ननु देहसत्त्वे दुःखादिभोगप्रसंगाद्दोषवर्जितमिति भाष्योक्तमसत् । करणवच्चेन्नभोगादिभ्यः अंतवत्त्वमिति वक्ष्यमाणत्वात् । तदसत्त्वे ज्ञानादिगुणोदीर्णता भाष्योक्ता न युक्ता । असर्वज्ञतावेति सूत्रकृतैव वक्ष्यमाणत्वादित्यतो वीर्यादिदेहमिति । अप्राकृतदेहवत्वान्नदुःखादि दोषप्रसंग इति भावः । एतच्च अदृश्यत्वनयगुणसूत्रे रूपोपन्यासादित्यत्र सिद्धं । तथा अन्यभावव्यावृत्तेश्चेत्यादावपि तस्यैवारूपवदेवेत्यत्र तृतीये उपपादयिष्यमाणत्वात् । द्वितीयाध्यायार्थस्य दोषवर्जितमित्यस्य विवरणं चितेत्यादि । लेपः पुण्यपापसंबंधः । चितादयो मुखं प्रधानं येषामस्तीति चितादिमुखराः । ते च ते अशेषदोषा इति विग्रहः । खमुखकुंजेभ्य इति मत्वर्थे रः । यद्वा सन्मुखरितं सद्भिः प्रधानीकृतमिति दशमतात्पर्योक्तेर्मुखरशब्द एव प्रधानवाची । चितादिभिर्मुखराः ध्वनंत इव स्थिता इत्यर्थ इत्यप्याहुः । अधिकं तु भेदनिर्देशात् नकर्माविभागादितिचेन्नानादित्वात् असंभवस्तु सतोऽनुपपत्तेः नात्माश्रुतेर्नित्यत्वाच्चताभ्यः सर्वधर्मोपपत्तेश्च इत्यादिभिश्चितादिदोषाभावस्य द्वितीये वक्ष्यमाणत्वादिति भावः । नकर्मेत्यत्र कर्मणोऽस्वातंत्र्योक्त्या तल्लेपाभावसिद्धेः । उक्तं च गीताभाष्ये । यः कर्मापि नियमयति कथं तत्तं बध्नातीति । एतेन तार्किकादिरीत्या रागादिरेव दोषपदार्थ इति भ्रमोऽपास्तः । तृतीयाध्यायार्थस्य ज्ञेयमित्यस्य ज्ञाने कर्त्रुपाययोर्गत्युपायत्वस्य चोक्त्या विवरणं क्रियते ।। सद्भिरिति ।।

एतच्च असार्वत्रिकी सर्वथापि तु त एवोभयलिंगादित्यादौ सिद्धम् । वैराग्येति आद्यपादार्थोक्तिः । तत्र गत्यागतिस्वर्गनरकगर्भवासादिस्वरूपोक्त्याऽर्थाद्वैराग्यस्योक्तेः । भक्तीति द्वितीयपादस्य । तत्र भगवन्माहात्म्योक्त्या भक्तेरुक्तेः । श्रुतिमती श्रवणमनने । नियतध्यानं स्वयोग्योपासनमिति तृतीयपादार्थः । तत्र सर्ववेदान्तनये यथाशक्ति कृत्स्नवेदविषयश्रवणमननयोः उपसंहारादिनयेषु स्वयोग्योपासनस्य चोक्तेः । एतेन ज्ञानप्रणाड्या एतान्येवोपायो नान्यत्कर्मादीति सूचितं । ज्ञानं

साक्षात्कारः स एव योग उपायस्तस्मादिति चतुर्थपादार्थः। तत्र पुरुषार्थनयादौ पुमर्थोपायत्वसिध्देः। एतेन चतुर्थार्थो गम्यमित्येतदपि विवृतं। प्रणाड्या वैराग्यादिजात् ज्ञानात्सद्भिर्गम्यं न कर्मादित इति। अत एवाऽलं सम्यक् मुख्यवृत्त्या असंशयं वा। वेदांतवेद्यं वेदानामन्तो निर्णयो यस्मात्तेन ब्रह्ममीमांसाशास्त्रेण वेद्यं। सर्ववेदांतप्रत्ययमित्यत्रेवांतो निर्णयः। एतेन भाष्योक्त विशेषणानामधिकृतत्वद्योतनमपि फलं सूचितम्। नारायणपदस्य प्रतिपदं ब्रह्मेति। तेन ब्रह्मतंत्रे नारायणनतिरनुचितेति शंकाऽपास्ता। अत एव मुकुंदाभिधमित्युक्तिः। नारायणमुकुंदशब्दयोः पर्यायत्व प्रसिद्धेः। वक्ष्यति च ब्रह्मशब्दव्याख्यानं नारायणपदमिति। नन्वेवमुक्तदिशा सविशेषं मुकुंदाभिधं ब्रह्म चेत्तर्हि 'निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः। ये मंदास्तेऽनुकंप्यंते सविशेषनिरूपणैरित्यद्वैत्युक्तदिशा मंदोपास्यं किं नेत्याह ॥ अमलमिति ॥

न विद्यते मलं संसाराख्यं यस्मात्तदमलं संसारनिवर्तकं मुमुक्षूपास्यं न मंदोपास्यमिति यावत्। मायाख्यमलरहितमिति वाऽर्थः। अलमित्यस्यालममलमिति वाऽन्वयः। एतच्च भाष्यस्थनारायणपदस्य मुक्ताश्रयत्वरूपार्थ मभिप्रेत्योक्तं। एवं वक्ष्यमाणार्थस्यादौ सूचनाच्छ्रोतृशेमुष्यनुकूलिता भवति। तथा वक्ष्यमाणदिशा ब्रह्मशब्दव्याख्यानपरतया तस्यैव नम्यत्वोपपादनपरतया चेदं पद्यं योज्यम्। ग्रंथगौरव भयान्न प्रपंच्यते ॥ १ ॥ गुरूंश्चेत्यत्र को गुरुः कथं च तस्य गुरुत्वमित्यतस्तद्विवृण्वन् व्याचिख्यासितभाष्यमूलसूत्रप्रामाण्यं च सूचयन्मंगलान्तर माचरति ॥ याञ्चेति ॥

सदा भूत्यै भवत्वित्यन्वयः। तंत्रं पंचरात्रं। ब्रह्मतर्कोपीत्येके। अत्र यत उदैद्विद्येंदिरेत्यनेन वक्त्रानुकूल्यं निर्जरैरित्यादिना श्रोत्रानुकूल्यं याञ्चेत्यादिना प्रसंगानुकूल्यं च दर्शयता वक्तृश्रोतृप्रसक्तीनां यदाप्तिरनुकूलतेत्यनुव्याख्यानोक्ताप्तिमूलता (तां) सूत्राणां सूचि(चय)ता। ब्रह्मसूत्रपदेन ब्रह्मपरश्रुतिव्याख्यानरूपत्वाच्छ्रुतिमूलत्वं न्यायव्युत्पादकत्वाद्युक्तिमूलत्वं च सूचयता आप्तिमूलतयाचैव श्रुतिमूलतया तथा। युक्तिमूलतयाचैव प्रामाण्यं त्रिविधं महदित्यनुव्याख्यानोक्त त्रिविधप्रामाण्यं स्मारितमिति चंद्रिकायामेव व्यक्तं। कामिताखिलदातृत्वसाम्याद्विद्येंदिरात्वेन। नानापर्वोपेतत्वान्नानाशाखोपबृंहितत्वाद्वा भारतं पारिजातत्वेन। जरामृतिनिवृत्त्युपायत्वाद् ब्रह्मसूत्रममृतत्वेन। नानातत्वार्थप्रकाशकत्वादिना पुराणा(दि) नि मणिगणत्वेन। तत्वोपदेशेनाह्लादकत्वाच्छुक इंदुत्वेनोक्त इति ज्ञेयं। एवंरूपेण भूतिदः शास्त्रप्रभवत्वादिना गुरुश्चेति भावः। संप्रदानत्वाभावात्संबंधसामान्ये सतामिति षष्ठी। बहुमानपूर्वकं स्वस्वत्वत्यागेन परस्वत्वापादनस्थल एव

संप्रदानसंज्ञेत्यभियुक्तव्याख्यानात्। अत एव संप्रदानमिति गुरुसंज्ञा अन्यथा टिघु भादिवल्लघ्वीमेव तां कुर्यात्। इदं च पद्यं द्वापरइत्यादि भाष्यस्य तात्पर्यतो व्याख्यानरूपं। तत्र सूत्रोपलक्षिततंत्रपुराणादेरप्याप्तिमूलत्वादिना ब्रह्मसूत्रतौल्येन प्रामाण्योक्त्या स्मृतेश्चेत्यादिसूत्रे भाष्ये च वक्ष्यमाणस्मृतीनामुदाहरणमुपपादितं भवति। स्मृतीनां श्रुत्यादिमूलत्वं च इतिहासपुराणः पंचमो वेदानां वेद इत्यादि तत्वनिर्णयाद्युक्त्या ध्येयम्। विस्तृतमेतत्स्मृतिप्रामाण्यं तत्वप्रदीपे तच्चोक्तमिति भाष्यव्याख्यावसरे॥ २॥

भाष्यस्य व्याख्येयत्वप्रयोजकसफलत्वगंभीरत्वादि दर्शयन् भाष्यकृतं प्रणमति ॥ स्वांतेति ॥

अलं समर्थम्। निकृंतन इत्यत्राप्यन्वेति। वैकर्तनांशुव्रजचंद्रचंद्रिकयोस्स्वांतध्वांतकृंतने तापत्रयोन्मूलने चाशक्तत्वाद्भाष्येण जितत्वम्। निर्दोषमिति तयोर्जये हेत्वंतरम्। तापह्रासादिदोषित्वात्तयोः। अमितं अमितार्थमिति हेतोर्जित सिंधुराजत्वम्। तदुक्तं भाष्यं चात्यर्थविस्तरमित्यनुभाष्ये। अथ तस्मादेवंरूप भाष्याविर्भावकत्वादवसरप्राप्तान्प्रपद्य इति चार्थः। अत्र निकर्तन इति पाठः साधुः। निकृंतन इति पाठे तु कृती छेदने इति धात्वंतरस्य रूपं ध्येयं। तथाहि गीतगोविंदे। विरहिनिकृंतनकुंतमुखाकृतिकेत (कि) कदंतुरिताशं इति प्रयोगः। एकेन नख--निकृंतनेनेति श्रुतौ च॥ ३॥

सन्न्यायरत्नावलिरूपटीकाकर्तृनर्थयते ॥ श्रीमध्वेति ॥ स्पृहिगृहिपतिदयिनिद्रातंद्राश्रद्धाभ्य आलुच् इत्यत्र शकारेत्संज्ञकलुश् प्रत्ययविधानेनापि तस्य सिद्धत्वेन तिङ्शित्सार्वधातुकमिति सार्वधातुकसंज्ञायां कर्तरि शबिति शपि सति गुणे अयादेशे च अतोदीर्घोयञीति दीर्घे च सति ण्यंतानां स्पृहीत्यादीनां स्पृहयालुरित्यादिरूपसिद्धावप्यालुच्ग्रहणं शयालुरित्यादिरूपसिध्यर्थमिति मंजर्यास्तृतीयस्य द्वितीयपादे अभिधानात्। कृपिधातोरपि आलुच्प्रत्यये कृते संज्ञापूर्वको विधिरनित्य इति पुगंतलघूपधस्य चेति गुणाभावे च सति कृपालुरिति साध्वित्येके। नष्टधर्मज्ञानलोककृपालुभिरिति गीताभाष्यटीकायामुक्तदिशा कृपाकलशा इति कलशार्थो वा आलुशब्दः। कर्कर्यालुर्गलंतिकेत्यमरकोशोक्तेः। कृपां लाति आदत्त इति कृपापदोपपदाल्लादान इति धातोर्डुप्रत्यये वा कृपालुरिति रूपं विप्रसंभ्योड्वसंज्ञायामित्यत्र मितंद्र्वादिभ्य उपसंख्यानमित्युक्तेरित्यन्ये। तत्राद्ये लत्वाभावोदयावत्वरूपार्थलाभश्च क्लिष्टः। अंत्ययोस्तु तृतीयाध्याये षिद्भिदादिभ्योऽङित्यङि कृपेः संप्रसारणंचेति भिदादिगणसूत्रेण निष्पन्नस्य कृपकृपाया-

ष्मिति धातुरूपस्य कृपेर्लाक्षणिकत्वेन कृपोरोल इत्यत्राग्रहणमित्यष्टमेऽध्याये वृत्तावुक्तत्वेन लत्वाभावोर्थानुगमश्च । स्याद्दयालुः कारुणिकः कृपालुःसूरतस्समा इत्यमरव्याख्यानबंदिघटीये दुर्घटवृत्तौ च कृपां लाती (त्ये) त्यस्यैव साधुतोक्तेरित्याहुः । दयालव इत्यपि क्वचित्पाठः ॥ ४ ॥

स्वगुरून्प्रणमति ॥ श्रीमदिति ॥ ५ ॥ अथेति प्रतिज्ञाया अवसरप्राप्तिमाह । अथ तस्माद् गांभीर्यादियुतत्वादिति वा तत्कृपया तेषां प्रागुक्तानां कृपया ॥ ६ ॥ व्याकुर्वे इत्यात्मनेपदेन प्राप्तमात्मगामिफलं दर्शयति ॥ गंगासंगेनेति ॥ भाष्यकर्तृतत्प्रतिपाद्ययोः प्रीतेः प्रधानफलत्वेऽपि इदमवांतरफलमिति भावः । गंगासंगेन रथ्याद्भिर्नैर्मल्यं यथा लभ्यते तथा मदीयायाः वाचो विशुद्धिसिध्द्यर्थं मदीयया वाचा गुरोर्गिरः संगम्यंते व्याख्यानव्याख्येयभावेन संबध्यंत इत्यर्थः । यद्वा भाष्यं व्याकुर्व इति प्राधान्येन भाष्यव्याख्याप्रतिज्ञानेऽपि न तावदेव किंतु यन्न्यायविवरणोक्तं यच्चानुव्याख्यानादिस्थानांतरोक्तमवश्यमत्र भाष्ये संयोज्य व्याख्यानार्हं तदप्यत्र संयोज्य व्याक्रियत इति स्ववाक्शुद्धिरूपनांतरीयकफलं वदन्नेवाह । गंगेति । मदीयवाचो विशुध्यर्थं मदीयया वाचा गुरोर्गिरः भाष्यादिस्थाः परस्परं संगम्यंते संबद्धतया प्रकाश्यंत इत्यर्थः । अस्मिन्पक्षे वाचो गिरां संग आर्थिक इति न दृष्टांतानानुगुण्यं ध्येयं । एतेन तत्वप्रदीपेनैवालं किमनेनेति प्रत्युक्तं । तत्र केवलं भाष्यस्यैव व्याख्यानात् । अत एवाग्रे न्यायविवरणाद्युक्तविवरणं नाप्रतिज्ञातकीर्तनं । अत एव च गीताभाष्याद्युक्तं शास्त्रयोनिसूत्रादौ तत्र तत्र संयोज्य व्याक्रियते । द्युभ्वाद्यधिकरणे चाभाषितं प्रधानं किं संयोज्यत इति चेन्न प्रकृतिजीवावभिधीयेते इत्यन्यत्रोक्तत्वादिति तत्वनिर्णयोक्तमपि संयोज्य व्याक्रियते । ऋक्पूरब्धूः पथामानक्ष इति समासांतस्तु पथामिति निर्देशेन तस्यानित्यत्वावगतेर्नाश्रितः । तेन रथ्याद्भिरिति साधु ॥ ७ ॥

तत्वप्रकाशिकाः—

अथाविद्यापटलपिहितनयनैरन्यैरन्यथाव्याख्यातानि ब्रह्मसूत्राणि यथावद्व्याचिख्यासुर्भगवानाचार्यवर्यः प्रारिप्सितभाष्यस्य कैवल्याद्यखिलफलसाधनतादिसिध्यर्थं निरंतरायपरिसमाप्त्याद्यर्थं च नारायणनमस्कारं प्रथयति ग्रन्थारम्भं च प्रतिजानीते ॥ नारायणमिति ॥ अत्र निरुपपदसूत्रशब्देन ब्रह्मसूत्रमुच्यते । तस्य मुख्यार्थाभिधायकत्वात् । तेषां च तादृशत्वात् । वक्ष्यमाणमेव सूत्रार्थं श्रोतृशेमुषीमनुकूलयिष्यन्नादौ प्रस्तावयितुं विशेषणचतुष्टयेनेष्टदेवतां विशिनष्टि । तथा हि । आदिसूत्रे भगवतः प्रसत्त्या पुरुषार्थो भवतीति सूचितेऽधिकारिणः शङ्कोन्मिषति पुरु-

षान्तरेऽनुपलभ्यमानं पुरुषार्थप्रदत्वं तस्य चेत्कीदृशोऽसाविति। तां निवारयदाद्याध्यायस्यार्थो ॥ गुणैःसर्वैरुदीर्णमिति ॥ तत्र ह्यपर्यायानन्तशब्दानां महायोगवृत्त्या हरौ समन्वयसमर्थनद्वारा सर्वगुणोदीर्णतैव वर्ण्यते। स च युक्त्यादिभिरुक्तसमन्वये निरोधिते दोषवानपि स्यादित्याशङ्कां परिहरतो द्वितीयाध्यायस्यार्थो ॥ दोषवर्जितमिति ॥ तत्र युक्त्यादीनामाभासत्ववर्णनेन निर्दोषत्वस्यैव भाषितत्वात्। एवंविधस्य च प्रसादः कया विधया भविष्यतीत्याकाङ्क्षां पूरयतस्तृतीयस्यार्थो ॥ ज्ञेयमिति ॥ तत्र विरक्त्यादिभिस्तत्प्रसत्त्यर्थं तस्य ज्ञेयतायाः कथितत्वात्। प्रसन्नश्च कीदृशं पुमर्थं प्रयच्छतीत्याकाङ्क्षां पूरयतस्तुरीयस्यार्थो ॥ गम्यमिति ॥

तत्र ज्ञानिनो भगवत्प्राप्तिलक्षणमोक्षस्योदितत्वात्। अथवा नैतन्नारायणपदं देवदत्तादिपदवत्साङ्केतिकं भवति किंतु विशिष्टगुणानप्याचष्ट इत्याशयवान्पदचतुष्टयेन तन्निर्वक्ति। तथा हि। दोषारशब्दयोरभिन्नार्थत्वान्नञश्च विरुद्धार्थवाचित्वाद्दोषविरुद्धा गुणा नारास्तदाश्रयो नारायणः। नञोऽभावार्थत्वादराश्रयो न भवतीति वा नारायणः। नरसंबन्धित्वान्नरीयतेऽनेनेति वा नारमणं येनेति वा निर्दोषवेदोत्पन्नत्वाद्वा नारं ज्ञानं विषयतया तदाश्रयत्वाच्च नारायणः। अरविधुरत्वादरतिरहितत्वात्क्षयरहितत्वाद्वा नारा मुक्तास्तदाश्रयो नारायणः। नगनाकादिशब्दवदयं शब्दो ज्ञातव्यः। अथ वा नारायणस्यैव नम्यत्वोपपादकमेतत्। यो हि बहुगुणो निर्दोषः शास्त्रज्ञेयोऽधीतशास्त्रगम्यः स हि वन्द्यो भवति। देवतानतिसमनन्तरं गुरूनपि नमति ॥ गुरूंश्चेति ॥ 'गुरोर्नाम न गृह्णीयाच्छिष्यो भार्या पतेरपि' इत्यतो न तन्नाम जग्राह। स्वस्य गुरुदेवताभेदेऽरुचिं सूचयत्यपिपदेन। यद्यपि गुरुर्न देवताभिन्नस्तथापि विशेषानुग्रहार्थं पृथङ्नतिरिति। अनेनैव शास्त्रस्याधिकारिविषयप्रयोजनसंबन्धाश्च श्रोतृप्रवृत्त्यङ्गभूताः सूचिता ज्ञातव्याः। तत्स्मरणस्य महाफलहेतुत्वाच्च। तदुक्तम्। 'अधिकारं फलं चैव प्रतिपाद्यं च वस्तु यत्। स्मृत्वा प्रारभतो ग्रन्थं करोतीशो महत्फलम् ॥ इति ॥ नमस्काराधिकार्यादिग्रथन सूचने शिष्यशिक्षार्थम्। तथाहि। ज्ञेयत्वगम्यत्वयोर्ज्ञातृगन्तृसापेक्षत्वात्तद्योग्यस्तदिच्छुरेवाधिकारी सूचितः। नारायण एव विषयः। तज्ज्ञानगमने प्रयोजनम्। यथायोग्यं संबन्ध इति।

भावदीपः—

अथाविद्येत्यथशब्दः प्रतिग्रंथव्याख्या प्रारभ्यत इति प्रारंभार्थः। अविद्यापटलमिव तेन पिहितं नयनमिव नयनं मनस्तत्वज्ञानं वा येषां तैरित्यर्थः। पटलपिहितनयनवद-

विद्यातिरस्कृततत्वज्ञानैरन्यथाव्याख्यातानीत्यर्थः। फलसाधनतासिध्यर्थं फलसाधनता सिद्धये। समंगलस्यैव सफलत्वादिति भावः। परिसमाप्त्याद्यर्थं परिसमाप्तिप्रचयादि प्रयोजनायच अवश्यकर्तव्यमितिशेषः। तदुक्तं सुधायां नारायणप्रणामादिकं प्रारिप्सित-स्यानंतरायपरिसमाप्तेः प्रचयस्यच हेतुतयाविगीतशिष्टाचारादिनावगतमवश्यकरणीयं शिष्यान्ग्राहयितुं ग्रंथादौ निबध्नातीति। सूत्रमितिसमुदाया (शयं)र्थं। अतएव तेषामित्यग्रे बहुवचनं। तस्य निरुपपदस्य। व्यक्तमेतदग्रे मुख्यस्य निर्विशेषेणेत्या-दाविति भावः। अत्र गुणदोषादिस्वरूपोक्तिः शुद्धेत्याद्यपद्य एव व्यक्तेति विशेषणानां कृत्यमेव त्रेधा व्यनक्ति वक्ष्यमाणमित्यादिना। प्रस्तावयितुं संक्षिप्यादौ वक्तुं। तस्य च प्रपंचजिज्ञासाजननं फलमिति भावः। प्रसत्त्या प्रसादेन ॥ सूचितइति ॥ अतः-शब्देन संक्षिप्योक्त इत्यर्थः ॥ महायोगेति ॥ अतोनंतगुणोयच्छब्दायोगवृत्ताय इत्यणु-भाष्योक्तेरितिभावः ॥ दोषवानपीति ॥ समन्वयनिरोधे सर्वकर्तृत्वसार्वज्ञसर्वैश्वर्यादे-रसिद्ध्या तत्तन्नयपूर्वपक्षोक्तयुक्त्यादिभिर्जीववज्जनिमृत्यादिदोषवानपि स्यादित्यर्थः। नकेवलं सर्वकर्तृत्वादिगुणाभाववानित्यपेरर्थः। तस्यच श्रुत्यैव निरस्यत्वात्। तत्स-मन्वयस्य युक्तिसमयादिर्भिनिरुद्धत्वादिति भावः ॥ निर्दोषत्वस्यैवेति ॥ सर्वदोषोज्झि-तस्तस्मादित्याद्युक्तेरिति भावः ॥ विरक्त्यादिभिरिति ॥ तस्माद्विरक्तः सन्ज्ञानमेव समाश्रयेदित्युक्तेरिति भावः ॥ प्रविश्य भुंजते भोगानित्याद्युक्तेराह ॥ भगवत्प्राप्तीति ॥

ननु ब्रह्मतंत्रोक्तगुणवैशिष्टयं कथं नारायणस्योच्यते। किंतु ब्रह्मण एव वाच्य-मित्याशंकां निरसितुं योजनांतरमाह ॥ अथवेति ॥ विशिष्टगुणानिति ॥

विशिष्टानितरासाधारणान् गुणोदीर्णत्वदोषवर्जितत्वज्ञेयत्वगम्यत्वरूपगुणानि-त्यर्थः। निर्वक्ति निरुच्य दर्शयति विशेषणचतुष्टयेनेत्यर्थः। भाष्यकारीयं नारायण-पदस्य विशेषणचतुष्टयेन विशिष्टगुणवाचकत्वप्रदर्शनं च तस्य ब्रह्मशब्दसमानार्थत्वात् शास्त्रार्थवाचकत्वाच्च नारायण एव शास्त्रार्थ इति दर्शयितुमिति नोक्तशंकावकाश इति भावः। एतदपि स्तुत्यर्थमिति सुधोक्तेरुपलक्षणत्वादविरोधः।

॥ दोषारशब्दयोरिति ॥ दोषारछिद्रशब्दानां पर्यायत्वं यतस्तत इत्यनुभाष्योक्ते-रिति भावः ॥ नरेति ॥ सज्जनेत्यर्थः।

॥ नरीयतइति ॥ नञुपपदाद्रीङ्क्षय इति धातोः करणे डप्रत्यये प्रज्ञादिभ्यश्चेति स्वार्थिकेऽण्प्रत्यये यस्येति चेतिलोपे चादिवृद्धौ वक्ष्यमाणदिशा नलोपाभावे च नारमिति रूपमिति भावः। अरमणं दुःखं। निर्दोषवेदवाचकान्नारशब्दात्तस्येदमित्यणि

कृते नारशब्दो वेदजन्यज्ञानवाचीति भावः। ननु नारशब्दात् वृद्धिर्यस्याचामिति वृद्धसंज्ञायां वृद्धाच्छ इति छप्रत्यये ईयादेशे नारीयमिति स्यात्कथं नारमिति। मैवं। वा नामधेयस्येति वृद्धसंज्ञाया एवाऽभावात्। ओर्गुण इत्यत्र गुणग्रहणेन संज्ञापूर्वको विधिरनित्य इति ज्ञापनाद्वा। संज्ञया विधीयमानस्यैव संज्ञापूर्वकविधित्वात्। अत एव तृतीयस्य द्वितीयपादे स्पृहि गृहीत्यादिसूत्रे श्रद्धालुरित्यत्र श्लाविति द्विर्वचनमाशंक्य संज्ञापूर्वको विधिरनित्य इति द्विर्वचनं नेत्युक्तं मंजर्यां। नन्वरायणो नेति व्युत्पत्तौ नलोपो नञ इति नलोपे तस्मान्नुडचीति नुटि सति अनरायणेति भाव्यमित्यत आह ॥ नगनाकादिशब्दवदिति ॥

नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या। नगोप्राणिष्वन्यतरस्यामित्याभ्यां नाकादिशब्दस्य निपातितत्वेन तत्र यथा सौत्रत्वेन समाधानं तथाऽत्रापि सौत्रत्वेन समाधानमूह्यमिति भावः। तथाहि नलोप इति सूत्रे रात्रेःकृति विभाषेति पूर्वसूत्रादनुवृत्ताया विभाषाया व्यवस्थितविभाषात्वस्य न्यास एवोक्तत्वान्नारायण इत्यत्रापि नलोपाभावाद्युपपत्तिः। यद्वा दोषारेत्याद्यनुभाष्यसुधोक्तदिशा नसमासोस्त्विति। लघ्वक्षरं पूर्वमित्युक्तेर्नगनाकेति निर्देशः। नलोपाभावमात्रस्याद्यम्। नलोपाभावनुडभावयोर्द्वितीयमित्येवं निर्देश इत्यप्याहुः। नारायणशब्दे पूर्वपदात्संज्ञायामग इति णत्वं ल्युटष्टित्त्वसामर्थ्येनायनशब्दोधिकरणे त्रिलिंग इति पुल्लिंगत्वं च सुधोक्तमेव ध्येयं। व्यक्तमेतत्सर्वं चंद्रिकायां। नन्वन्यथापि नारायणशब्दार्थनिरुक्तिसंभवे किमेवमेव निरुक्तौ बीजमिति चेन्न। ब्रह्मशब्दसमानार्थत्वादिद्योतकत्वेन प्रागेव समाधानात्। किंच नारायणनमनस्यावश्यकत्वोपपादनार्थतया च सार्थक्यं विशेषणानामिति भावेनाह ॥ अथवेति ॥ स हि वंद्य इति ॥

त्रिविधा हि देवता वंद्या भवति विशिष्टा अधिकृता इष्टा च। भक्तिपूर्वकदेवतानतेर्विघ्नविघातार्थत्वात् विशिष्टैव देवता तस्येष्टे। अधिकृता च स्वविषयग्रंथप्रबोधादिकं संपादयति। इष्टायामेव देवतायां भक्त्यादिपूर्वं नमनं भवतीति गुणोदीर्णं दोषवर्जितमित्याभ्यां वैशिष्ट्यस्य ज्ञेयमित्यनेनाधिकृतत्वस्य गम्यमित्यनेनेष्टत्वस्य चोक्त्या नम्यत्वमुपपादितं भवतीति भावः। तेन भाष्यं चात्यर्थविस्तरमित्यनुव्याख्यानोक्तं लेशतो दर्शितं भवति। तत्वप्रदीपे त्वर्थांतरमप्युक्तं ॥ गुरूनपीति ॥

भाष्ये बहुवचनं बहुवचनं गौरवादेवेति गीताभाष्यटीकोक्ताशयं वा। तमेव शास्त्रेत्यादिभिर्बहुभिः प्रकारैर्यद् गुरुत्वोपपादनं तेन गरूंश्चेति बहुवचनांतं पदं

विवृतमिति सुधोक्ताभिप्रायं वेति भावः। पतेः पत्युः। शेषोक्तेर्वक्ष्यमाणलक्ष्मीवाक्ये मम योनिरित्यत्रोपयोगः। चकारेणैव गुरुदेवतानतिसमुच्चयलाभादपीति व्यर्थमित्यत आह ॥ स्वस्येति ॥ कथमित्यत आह ॥ यद्यपीत्यादिना ॥ नतिरित्यंतेन ॥ अनेनैवेति ॥ विशेषणचतुष्टयेनैवेत्यर्थः। अन्यार्थमुपात्तेनापीत्येवकारार्थः। संबंधाश्चेति न केवलं प्रागुक्तार्थ इति चार्थः। अधिकार्यादिसूचनं व्यर्थमित्यतः प्रवृत्त्यंगत्वमेकं हेतुमुक्त्वान्यं चाह ॥ तत्स्मरणस्येति ॥ सूचिता इत्यन्वयः। तेषां श्रोतृप्रवृत्त्यंगत्वं निर्विषये निष्फलेन्यविषयफलोद्देशेनान्यत्र चाप्रवृत्तेस्तद्विषयफले ज्ञात्वैव तत्र प्रवृत्तेर्दर्शनादिति ज्ञेयं ॥ तदुक्तमिति ॥ प्रथमस्कंधतात्पर्य इति योज्यं। प्रारभतः प्रारभमाणस्य। चंद्राद्यस्तु मन्यंते सर्वस्मादुभयं पदमित्युक्तेः। महदिति भिन्नं पदं। ननु विघ्नाभावस्य नमस्कारेणैव सिद्धेर्ग्रंथनं व्यर्थमेव। यदपि तत्स्मरणस्येत्यादि तदप्यसाध्वेव ॥ अधिकार्यादिसूचनस्य श्रोतृप्रवृत्त्यंगतया कार्यत्वेपि न महाफलार्थं तत्कार्यं तेन विनापि तत्स्मरणसंभवेन तेनैव फलसिद्धेरित्यत आह ॥ नमस्कारेति ॥ यथाक्रममन्वयः। यद्यदाचरति श्रेष्ठ इत्यादेः शिष्या अप्येवं कुर्युरिति बोधनार्थमित्यर्थः। सूचिता इत्युक्तमेव व्यनक्ति ॥ तथाहीति ॥ विषय इति ॥ सूचित इति सर्वत्रान्वेति। प्रयोज (ने)नं इति। यथाक्रममवांतरप्रधानप्रयोजने सूचिते इत्यर्थः ॥ यथायोग्यमिति ॥ नारायणस्य विषयस्य शास्त्रप्रतिपाद्यत्वं ज्ञानस्य तद्विषयकत्वं गमनाख्यफलस्य तज्जन्यत्वं संबंध इति भावः।

सूत्रभाष्यम्----

द्वापरे सर्वत्र ज्ञान आकुलीभूते तन्निर्णयाय ब्रह्मरुद्रेन्द्रादिभिरर्थितो भगवान्नारायणो व्यासत्वेनावततार। अथेष्टानिष्टप्राप्तिपरिहारेच्छूनां तद्योगमविजानतां तज्ज्ञापनार्थं वेदमुत्सन्नं व्यञ्जयंश्चतुर्धा व्यभजत्। चतुर्विंशतिधैकशतधा सहस्रधा द्वादशधा च तदर्थनिर्णयाय ब्रह्मसूत्राणि चकार।

तत्वप्रकाशिका—

ननु यदुपादेयं तदेवानन्यार्थतया व्याख्येयम्। यच्च प्रमाणत्वे सतीष्टसाधनताऽवबोधकं प्रायस्तदेवोपादेयमतः कथं ब्रह्मसूत्राणां व्याख्येयत्वोपयोग्युपादेयतायै प्रामाण्यादीत्याशङ्कां परिहर्तुं सूत्रागतिक्रममाह ॥ द्वापर इति ॥

सर्वत्रेति सार्वत्रिकपुरुषोक्तिः। ज्ञाने सम्यग्ज्ञाने। आकुलीभूते किमिदमदो वेति संदिग्धे अन्यदेवेति मिथ्यादृष्टिदुष्टे च। आकुलीभावसमर्थनाय द्वापरग्रहणम्।

तद्योगमिष्टप्राप्त्यनिष्टपरिहारोपायम् । वेदमुत्सन्नमित्यादेरपपाठादिना तिरोहितम् । प्रागेव चतुर्धा विभक्तं वेदं ऋङ्निगदादिरूपं व्यक्तीकृत्यैकैकस्मादेकैको भाग इति चतुर्धा व्यभजदेकैकं चावान्तरमृगादिवेदं चतुर्विंशत्यादिशाखाभेदेन व्यभजदित्यर्थः । तदुक्तम् । 'ऋचः स ऋच उध्दृत्य ऋग्वेदं कृतवान्प्रभुः । यजूंषि निगदाच्चैव तथा सामानि सामतः' । इति । अवान्तरवेदादिविभागकथनं च ज्ञानाकुलीभावसमर्थनार्थम् । 'चक्रे वेदतरोः शाखा दृष्ट्वा पुंसोऽल्पमेधसः ।' इत्यादेः । अयं भावः । वाक्यप्रामाण्यं तावन्निर्दोषतया संभवति । निर्दोषता चापौरुषेयतया आप्तिमूलतया च । आप्तिश्च वक्तृनिर्दोषतैव । आप्तिमूलत्वाद् ब्रह्मसूत्राणां। प्रामाण्यसिद्धिः प्रमादाज्ञानसंशयविपर्ययाणां नारायणावतारे व्यासेऽसंभवात् भगवत्वादेव । विप्रलम्भकत्वस्य च श्रोतृदोषनिबन्धनस्य तदभावेनाभावनिर्णयात् ज्ञानायोग्यताया ब्रह्मादिश्रोतृष्वभावात् । अपहासस्य च प्रसङ्गदोषनिबन्धनस्य तदभावेनाभावनिर्णयात् । अज्ञाननिर्हरणस्य च प्रसक्तत्वेन प्रसङ्गदोषाभावात् । आप्तिमूलत्वेनैव प्रामाण्यसिद्धौ सुतरां श्रुतिनिर्णायकत्वेन श्रुतियुक्तिमूलत्वात् । इष्टानिष्टप्राप्तिपरिहारसाधनवेदनहेतुवेदनिर्णायकत्वेनेष्टसाधनावबोधकत्वं च सिध्यति । अतो ब्रह्मसूत्राणामत्युपादेयत्वाद् व्याख्येयतेति ।

भावदीपः—

भाष्ये सूत्रार्थोक्तिं प्रतिज्ञाय तदुत्पत्तिक्रमोक्तिरयुक्तेत्यत आह ॥ नन्विति ॥ ॥ अनन्यार्थतयेति ॥ प्रातीतिकार्थपरं न भवतीत्यनेन प्रकारेणेत्यर्थः । इष्टसाधनतावगमेऽपि अनाप्तवाक्ये उपादेयत्वाभावात्प्रमाणत्वे सतीति ।] अप्रमाणत्वादिना निश्चितस्यापि ख्यात्याद्यर्थं व्याख्यानदर्शनादाह ॥ प्रायइति ॥ बहुश इत्यर्थः देशे ज्ञानाप्रसक्तेराह ॥ सार्वत्रिकेति ॥ सम्यग्ज्ञान इति ॥ निरुपपदज्ञानपदस्य मुख्यार्थत्वादिति भावः ॥ इदमिति ॥ गुणोत्कर्षादिज्ञानमेव तत्वज्ञानं उत ऐक्यादिज्ञानं वेति केषांचित् । केषांचिदन्यदेव ऐक्यादिज्ञानमेव तत्वज्ञानमुत्कर्षादिज्ञानं तत्वज्ञानादन्यदेवेति विपरीतज्ञानविषयीभूते चेत्यर्थः ॥ द्वापरग्रहणमिति ॥ द्वावेव धर्मपादौ यस्मिन्युगे प्राप्ते ततःक्रमादपचयांते एकोऽवशिष्यत इति तत्वप्रदीपोक्तव्युत्पत्त्या पादद्वयह्राससूचनादिति भावः। अथेष्टानिष्टेति भाष्ये अथेत्यस्यावतारानंतरमेव न तु परोपदेशमपेक्ष्य येन सार्वज्ञादि न स्यादित्यर्थस्य तत्वप्रदीपे व्यक्तत्वान्नात्राथशब्दो व्याख्यातः । अत एव प्रमेयदीपिकायां व्यासोऽवततार। ततश्चेष्टानिष्टप्राप्तिपरिहारेति भाष्य-

गतस्य ततश्चेत्यस्यावतारानंतरमेवेत्यर्थ उक्तः। वेदमुत्सन्नमित्यादेरित्यस्य इत्यर्थ इति वक्ष्यमाणेनान्वयः। उत्सन्नमित्यस्यार्थः ॥ अपपाठेति॥ वेदमित्यस्य मूलवेदमिति-प्रतीतिं निरस्यन् व्याचष्टे ॥ प्रागेवेति ॥ अवांतरवेदादिविभागात्पूर्वमित्यर्थः। वेदं मूलवेदादुद्धृतमुपवेदमित्यर्थः। भाष्ये व्यंजयन्नित्यनंतरं एकैकस्मादिति वेदमित्यतः प्राक् प्रागेव चतुर्धा विभक्तमिति व्यभजदित्यनंतरं एकैकं चेति च योज्यमिति भावः। मूलवेदादुद्धृतऋङ्निगदादिरूपादुपवेदादवांतरवेदः कृत इति भाष्येऽस्पष्टमपि कुतः कल्प्यत इत्यत आह ॥ तदुक्तमिति ॥ तत् ऋङ्निगदादिरूपादुपवेदावांतरवेदकरणं ऋग्भाष्योक्तस्मृतावुक्तमित्यर्थः। ऋचो निगदात्सामत इति मूलवेदादुद्धृतोपवेदा उच्यंते। तथेति यजुर्वेदं सामवेदं समुच्छिनोति। ऋग्वेदं यजुर्वेदं सामवेदमित्यवांतर-वेदा उच्यंते। तेषामृग्यत्रार्थवशेन पादव्यवस्था। अर्थैकत्वादेकं वाक्यं साकांक्षं चेद्वि-भागे स्यात् गीतिषु सामाख्येत्यादि जैमिनिसूत्रोक्तलक्षणकानि ऋग्यजुस्सामान्युद्धृत्ये-त्यर्थः। व्यक्तमेतत्सर्वं तथा सामानि सामतः ॥ एवं पुराणवचनादुद्धृता हि ततस्ततः ॥ ऋचःशाखात्वमापन्नाः शिष्यतच्छिष्यकैरिमा इति श्लोकद्वयव्याख्यानावसर एव ऋग्भा-ष्यटीकायां। तथाहि तत्र टीका। भवेदेतद्यदि मूलवेदादुपवेदानां ततोऽवांतरवेदानां चोद्धारेण प्रबंधनिर्माणं प्रामाणिकं स्यात् तदेव कुत इत्यत आह ॥ ऋच इति ॥ ऋङ्नि-गदसामानीति मूलवेदादुद्धृता उपवेदा उच्यंते ततो मूलवेदादुपवेदास्ततश्चावांतरवेदा उद्धृता इत्येवं पुराणवचनादवगम्यत इत्यर्थः। यथोपवेदादिः प्रबंधः कृत्रिमः एवं शाखा भेदोपीत्येतत्प्रसंगादाह। ऋच इति। ऋच इति प्रस्तुतत्वादुक्तं यजुरादिकं चैवमिति-ज्ञातव्यमित्यादि। इह टीकायां वेदमुत्सन्नमित्येतस्य मूलवेदादुद्धृतमुपवेदमिति कंठ-तोऽनुक्तिरुत्सन्नान्भगवानिति वक्ष्यमाणस्मृतौ ऋच इति ऋग्भाष्योक्तस्मृतौ मूलवेदा-दुद्धृतत्वांशस्य अस्पष्टत्वात् ऋङ्निगदादिरूपाद्वेदादृगाद्युद्धारेण ऋग्यजुरादि वेदकरण-मात्रप्रतीतेस्तदनुरोधेनेति ध्येयं। वेदमुत्सन्नं व्यंजयंस्तदर्थनिर्णयायेत्यादिनैव पूर्तौ किमनेकविभागोक्तचेत्यत आह ॥ अवांतरवेदादीति ॥ स्वत एव ऋङ्निगदादिरूपा-देकैकस्मान्महावेदादुद्धृतस्यावांतरस्य ऋगादिवेदस्य चतुर्विंशत्यादिशाखाभेदेन। आदि पदेन शाखानां चोपशाखाभेदेन कथनमित्यर्थः। यद्वा महावेदस्यावांतरत्वेन च आदिपदेन चतुर्विंशत्यादित्वेन कथनमित्यर्थः ॥ ज्ञानेति ॥ एतच्च तन्निर्णयप्रसंजनार्थ-मिति भावः ॥ इत्यादेरिति ॥ प्रथमस्कंध इति ज्ञेयं। एतच्च शाखाभेदकृतेर्ज्ञानाकुली-भावानुमापकत्वे मानं। ननु यदुपादेयमित्यादिना कृतचोद्यस्य कथमनेन निरासः। किंच नारायणो व्यासत्वेनावतीर्य ब्रह्मसूत्राणि चकारेत्येतावतैवाप्तिमूलत्वेन प्रामाण्यलाभाद्व-

शिष्टं व्यर्थं । प्रामाण्यस्य स्वतस्त्वेन आप्तेरनुपयोगश्चेत्यत आह ॥अयं भाव इति॥ वक्तृ निर्दोषता केन लब्धेत्यत आह ॥ प्रसादेति ॥ भगवानित्यस्योपयोगमाह ॥भगवत्वादेवेति॥ ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः । भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिरित्यादावशेषत इति विशेषणान्निरतिशयज्ञानादिगुणवान्भगवच्छब्दार्थ उक्तस्स्यात् । गुणगुण्य भेदाभिप्रायादित्यादि तत्वप्रदीपोक्तदिशा वा । ऐश्वर्यस्य समग्रस्येत्यादेर्वा संपूर्णसार्वज्ञादिमत्त्वादेवेत्यर्थः । ब्रह्मरुद्रेत्यादेर्भावमाह ॥ विप्रलम्भेति ॥ तन्निर्णयायेत्येतदुपयोगमाह ॥ अपह्रासस्येति ॥ तदर्थनिर्णयायेत्येतद्भावमाह ॥ आप्तीति ॥ ॥ युक्तीति ॥ सूत्राणां न्यायैरेव निर्णायकत्वात् निर्णयायेत्युक्त्यैव युक्तिमूलत्वं प्राप्तमिति भावः । एतेन वक्तृश्रोतृप्रसक्तीनामित्याद्यनुभाष्योक्तदिशा प्रामाण्यमुपपादितं ध्येयं । अथेष्टानिष्टेत्यादेरुपयोगमाह ॥ इष्टेति ॥ इत्ययंभाव इतीति शब्दान्वयः ॥

सूत्रभाष्यम्—

तच्चोक्तं स्कांदे—

॥ नारायणाद्विनिष्पन्नं ज्ञानं कृतयुगे स्थितं ।
किंचित्तदन्यथा जातं त्रेतायां द्वापरेऽखिलम् ॥
गौतमस्य ऋषेः शापाज्ज्ञाने त्वज्ञानतां गते ।
संकीर्णबुद्धयो देवा ब्रह्मरुद्रपुरस्सराः ॥
शरण्यं शरणं जग्मुः नारायणमनामयम् ।
तैर्विज्ञापितकार्यस्तु भगवान्पुरुषोत्तमः ॥
अवतीर्णो महायोगी सत्यवत्यां पराशरात् ।
उत्सन्नान्भगवान्वेदानुज्जहार हरिः स्वयम् ॥
चतुर्धा व्यभजत्तांश्च चतुर्विंशतिधा पुनः ।
शतधा चैकधा चैव तथैव च सहस्रधा ॥
कृष्णो द्वादशधा चैव पुनस्तस्यार्थवित्तये ।
चकार ब्रह्मसूत्राणि येषां सूत्रत्वमञ्जसा ॥
अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् ।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ॥

निर्विशेषितसूत्रत्वं ब्रह्मसूत्रस्य चाप्यतः ।
यथा व्यासत्वमेकस्य कृष्णस्यान्ये विशेषणात् ॥
सविशेषणसूत्राणि ह्यपराणि विदो विदुः ।
मुख्यस्य निर्विशेषेण शब्दोऽन्येषां विशेषतः ॥
इति वेदविदः प्राहुः शब्दतत्त्वार्थवेदिनः ।
सूत्रेषु येषु सर्वेऽपि निर्णयास्समुदीरिताः ॥
शब्दजातस्य सर्वस्य यत्प्रमाणश्च निर्णयः ।
एवं विधानि सूत्राणि कृत्वा व्यासो महायशाः ।
ब्रह्मरुद्रादिदेवेषु मनुष्यपितृपक्षिषु ।
ज्ञानं संस्थाप्य भगवान् क्रीडते पुरुषोत्तमः ।' इत्यादि ।

तत्वप्रकाशिका—

उक्तमेवार्थं प्रमाणेन स्थापयति ॥ तच्चेति ॥ स्थितं यथोत्पन्नं तथैव । अन्यथाजातमिदमदो वेति संदिग्धमन्यदेवेति मिथ्यादृष्टिदुष्टं च । अखिलमन्यथाजातम् । कालतो भागद्वयस्यान्यथात्वं युक्तं न सर्वस्येत्यतो विशेषकारणं चाह । ॥ गौतमस्येति ॥ अज्ञानताम् अज्ञानमिति प्रतीतिविषयतां संदेहगोचरतां च । ब्रह्मादिबुद्धिसंकीर्णता नाम सज्जनानुक्रोशयुक्ततैव नाज्ञानादिमिश्रत्वम् । गौतमशापस्य स्वहृतगोनिर्मातृमात्रविषयत्वात् । कालाभिभवशून्यत्वाच्च तेषाम् । लोकस्य च संप्रदायप्रवर्तकाभावेन कालतश्चाज्ञानप्राप्तिः । तदुक्तमन्यत्र । 'नष्टधर्मज्ञानलोककृपालुभिर्ब्रह्मरुद्रेन्द्रादिभि' रित्यादि । तस्य वेदस्य । बहुवचनप्रयोगेऽपि नार्थभेदः शङ्कनीय इतिभावेनैकवचनम् । वेदनिर्णयाय सूत्रान्तरैरलं किमेभिरित्यत आह ॥ येषामिति ॥ किंतत्सूत्रत्वं यदाञ्जस्यं ब्रह्मसूत्राणामित्यत आह । ॥ अल्पेति ॥ यावदक्षरतां विना विवक्षितार्थासिद्धिस्तदल्पाक्षरत्वम् । एवं च भवितुमर्हतीत्यवचनमसंदिग्धत्वम् । विशिष्टार्थता सारवत्त्वम् । बहुशाखानिर्णायकत्वं विश्वतोमुखत्वम् । व्यर्थाक्षरादिराहित्यमस्तोभवत्वम् । अपशब्दादिवैधुर्यमनवद्यत्वम् । एतच्च सूत्रत्वं कुतो ब्रह्मसूत्राणामाञ्जस्येनेत्यत आह ॥ निर्विशेषितेति ॥ यतो ब्रह्मसूत्राणां मुख्यसूत्रत्वमत एव हि निर्विशेषितसूत्रत्वमप्यस्ति पुराणादावन्यथा तन्न स्यादित्यर्थः । यद्यत्र निर्विशेषितं

तत्तत्र मुख्यं यदमुख्यं तद्विशेषितमित्येतत्कुत्र दृष्टमित्यत आह ॥ यथेति ॥ यथा कृष्णस्य निर्विशेषितव्यासत्वमत एव तन्मुख्यमन्ये द्रौण्यादयोऽमुख्यास्तत्तश्च विशेषणाद्व्यासास्तथा निर्विशेषितत्वान्मुख्यसूत्रत्वं ब्रह्मसूत्राणामित्यर्थः। अन्यसूत्राणामपि मुख्यसूत्रत्वात्किं विशिष्याभिधीयते ब्रह्मसूत्राणामेवेत्यत आह ॥ सविशेषणेति ॥ अन्यसूत्राणां सविशेषणत्वान्नमुख्यत्वमिति भावः। एतदुपपादनायैवान्ये विशेषणादिति प्रागेव दृष्टान्त उक्तः। निर्विशेषणसविशेषणत्वाभ्यां कुतो मुख्यामुख्यत्वे दृष्टान्ते कारणान्तरसंभवादित्यत आह ॥ मुख्यस्येति ॥ मुख्यस्य मुख्यस्यैव। अस्त्वेतत्सूत्रत्वमञ्जसा ब्रह्मसूत्राणां तथापि वेदार्थनिर्णयाय सूत्रान्तरैरलं किमेभिरित्यस्य कथमनेन परिहार इत्यत आह ॥ सूत्रेष्विति ॥ यत्सूत्रधर्मतयोक्तं विश्वतोमुखत्वं तद्यदा ब्रह्मसूत्राणामेवाञ्जसा भवति तदा तेषामेव सर्वशाखानिर्णायकत्वं भवेदतोऽन्यसूत्रेभ्योऽतिशयेन निर्णायकत्वात्तद्वचनं युक्तमितिभावः। अन्येषामपि द्वित्रशाखानिर्णायकत्वात्कथमेषां सर्वनिर्णायकत्वमन्यथा तद्वैयर्थ्यमित्यत आह ॥ शब्देति ॥ सर्वस्य शब्दजातस्य ॥ निर्णय इति ॥ सर्वैः शब्दसमूहैः क्रियमाणो निर्णयो यत्प्रमाणो यन्मूलकः। अन्येषां निर्णायकत्वेऽपि ब्रह्मसूत्राणामस्त्येव सर्वशाखानिर्णायकत्वम्। तन्निर्णयस्य ब्रह्मसूत्रमूलत्वेन व्याख्यानरूपत्वात्। श्रुतिमूलकस्मृतिवदवैयर्थ्योपपत्तेरिति भावः। एवंविधानीत्युपसंहार। सूत्रेष्वित्यादेरेवंविधानीत्यनेनान्वयः। ब्रह्मरुद्रादिदेवेषु ज्ञानं संस्थाप्येत्यनेन पूर्वस्थितस्यैव विशषयुक्तत्वादिभिर्दृढीकरणं किंचिदप्राप्तलाभश्चोच्यते। 'जानन्तोऽपि विशेषार्थज्ञानाय स्थापनाय वा। पृच्छन्ति साधव' इत्यादेः। 'एवं ज्ञानं पुनः प्रापुः'। इत्यादेश्चायमेवार्थः। विरिञ्चेतरेषां तिरोहितलाभो वा। यत आहुर्ब्रह्मणस्तु प्रायो नाऽप्रतिभासितमित्यादि। तदेवमत्युपादेयत्वाद् व्याख्येयानि ब्रह्मसूत्राणीति स्थितम्।

भावदीपः—

॥ उक्तमेवेति ॥ द्वापरमात्रस्य कथं सार्वत्रिकपुंगतज्ञानाकुलीभावहेतुता। किंच तथापि ब्रह्मादीनां प्रार्थनं निर्बीजं। न हि ते ज्ञानहानिं प्राप्ताः। कालशापानभिभूतत्वात्। अपि च वेदार्थनिर्णयाय जैमिनिसूत्रादिभिरेव पूर्तौ किमभिनवसूत्ररचनेन। नह्येतेषु तेभ्यः कोप्यतिशयोस्तीत्याशंक्येति आदौ योज्यं। तत्समाधिस्तु गौतमस्येति। ॥ संकीर्णबुद्धय इति ॥ येषां सूत्रत्वमंजसेत्यादिनेति विवेक्तव्यं। एतेन सूत्रार्थो वर्ण्यते

यत्र पदैः सूत्रानुकारिभिः । स्वपदानि च वर्ण्यंते भाष्यं भाष्यविदो विदुरित्युक्तेः स्वपदवर्णनाभावान्नेदं भाष्यमिति कस्यचिदुक्तिरपास्ता। प्रमाणेन स्वपदवाक्यानां विशदीकरणात् । एवं सर्वत्र ध्येयं । तदुक्तं । उक्तमुक्तमभिधेयमुत्तमं वेदवाक्यमनुवादयन्मुहुः । व्यंजयत्स्मृतिवचोभिरञ्जसा तस्य चार्थमतियुक्तयुक्तिमदिति । स्मृतिप्रामाण्यं तु द्वितीयपद्य एव समर्थितं । स्थितौ प्रकारानुवर्तेराह ॥ यथेति ॥ अन्यथेत्युत्तरत्रोक्तेरेतल्लाभः। ज्ञानमन्यथाजातमित्ययुक्तम् । नहि प्रमा केनापि हेतुना भ्रांतिर्भवतीत्यत आह ॥ इदमिति ॥ दृष्टं विषयीकृतं। एतेनाज्ञानतामित्येतद् व्याख्यानमुक्तबीजं ॥ विशेषकारणंचेति ॥ भाष्ये ज्ञानेत्विति तु शब्दः शापाच्चेति समुच्चायक इत्युक्तं भवति। भाष्ये प्राग्द्वापर इत्युपलक्षणमिति भावः। दुर्भिक्षोपप्लुता ऋषयो गौतमतपःप्रभावसमृद्धं तदाश्रममाप्य चिरकालं तेन संमानितास्तत्र सुखमुषित्वा कालेन सुभिक्षं स्वदेशं यियासवस्तदनुज्ञां याचमाना अपि गौतमेनालब्धानुज्ञाः शिवशिरस्स्थां सुरसरितं सपत्नीं निष्कासयंत्या भवान्या चोदितेन विघ्नेश्वरेणोपदिष्टोपायाः ज्ञानादितपोबलेन कांचन गां तदाश्रमस्थसस्यग्रासिनीं विदधुः। गौतमस्तामपक्रामयितुं स्वप्रयत्नमात्रेण सहसा निपतितां गामवलोक्य परितप्तमना बभूव । तदेव लब्धांतरा विप्रा नायं गौतमो भोज्यान्न इत्युक्त्वा प्रतस्थिरे । ततो गौतमश्चिरकालचीर्णतपःप्रभावेन परितोषितहरशिरसोऽवतारितया सुरसरिता गां परिषिच्योज्जीवयामास । ततः किमेतदिति विचिंत्य विप्रकृतमक्रमादिसर्वं निश्चित्य तान् ज्ञानहीनाभवेयुरेत इति शशापेति शापक्रमस्य तत्वप्रदीपे उक्तत्वान्नात्र तदुक्तिः ॥अन्यत्र॥ गीताभाष्ये इत्यर्थः । भाष्ये महायोगीत्यस्य महाशक्तिरित्यर्थः । उत्सन्नानित्यादि तु अपपाठादिना तिरोहितान् प्रागेव ऋङ्निगदादिरूपेण विभक्तान्महावेदानुज्जहार । तांश्च महावेदान् तदंशानित्यर्थः । तेभ्य उद्धृत्य ऋगादिरूपेण चतुर्धा व्यभजत् । एकैकं चावांतरवेदं चतुर्विंशत्यादिभेदेन व्यभजदिति पूर्वोक्तदिशा व्याख्येयमिति भावः ॥ बहुवचनेति ॥ पूर्वश्लोक इति योज्यं ॥ किमेभिरित्यत आहेति ॥ सूत्रेषु येष्वित्यनेन परिहारं वक्तुमुपोद्घातमाहेत्यर्थः ॥ तदल्पाक्षरत्वमिति ॥ यावदक्षरतां विना विवक्षितार्थासिद्धिस्तदर्थप्रतिपादनाय ततोऽधिकाक्षरानुपादानमल्पाक्षरत्वमित्यर्थः । विशिष्टार्थता अनन्यलभ्यार्थता ॥ बहुशाखेति ॥ सद्व्याकरणसूत्रादेरपि बहुशाखागतपदार्थनिर्णायकत्वान्नाव्याप्तिरिति भावः ॥ व्यर्थेति ॥ अर्थाप्रतिपादकत्वेपि साम्निस्तोभाक्षराणां ऋगक्षराव्याप्तगानभागपूरणायेव प्रयोजनांतरायाक्षराप्रयोग इत्यर्थः। तेन नाल्पाक्षरत्वे सांकर्यं । अत्र च भाष्यस्य निर्णयहेतुरहितवाक्यस्य कुशलपुरुषोक्तलोकवार्तादिवाक्यस्य भगवन्ना-

ममंत्रादेर्व्यर्थाक्षरोपेततादृशवाक्यविशेषस्य अपशब्दोपेततादृशवाक्यविशेषस्य च सूत्रत्वव्यावृत्त्यर्थं क्रमेण षड् विशेषणानीति तत्वप्रदीपे व्यक्तं ।। चाप्यत इत्यत्र चोऽवधारणार्थ इत्युपेत्य तस्यापिशब्दस्य चान्वयमाह ।। अत एव निर्विशेषितसूत्रत्वमपीति ।। केवलसूत्रपदेनोक्तिरित्यर्थः । निर्विशेषितं निरुपपदं । विशेषितं सोपपदं ।। विशेषणाद्व्यासा इति ।। द्रौणिव्यास इत्यादिसोपपदव्यासशब्दवाच्या इत्यर्थः । सविशेषणेति भाष्ये हिशब्दो हेत्वर्थः । अपराणीत्यस्यान्यानि सूत्राणि अमुख्यानीति चार्थ इति भावः । ।। एतदिति ।। विशेषितशब्दवाच्यानाममुख्यत्वमित्येतत् दृष्टांतनिष्ठतया दर्शनायैवेत्यर्थः । अन्यथा मुख्यतोपपादनस्यैव प्रकृतत्वेन यथा व्यासत्वमेकस्य कृष्णस्येत्येव वाच्यं स्यादित्यर्थः ।। मुख्यस्यैवेति ।। अन्येषामेवामुख्यानामेवेत्यपि योज्यं । अन्यथा मुख्यामुख्यत्वयोर्निर्विशेषणत्वसविशेषणत्वे प्रयोजके न स्यातामिति भावः । मुख्यामुख्ययोर्निर्विशेषणसविशेषणशब्दवाच्यत्वरूपेर्थे इति वेदविदः प्राहुरित्यनेन वेदस्य वृद्धव्यवहारस्य च प्रमाणीकरणान्निर्विशेषितत्वाद्येव मुख्यत्वादौ प्रयोजकं न तु कारणांतरं शंक्यमिति भावः ।। अनेनेति ।। येषां सूत्रत्वमंजसेत्यादिनांऽजसा सूत्रत्वकथनेनेत्यर्थः । प्राक्कथितस्योपयोगं वदन्नेव तात्पर्यमाह ।। यत्सूत्रेति ।। कथमेषामिति ।। द्वित्रशाखाभिन्नशाखानिर्णायकत्वस्य वाच्यत्वादिति भावः ।। शब्दसमूहैरिति ।। शब्दजातस्येति षष्ठी कर्तरि न कर्मणीति भावः । एतेन पूर्वतंत्रेण गतार्थतामाशंक्य कर्मकांड ब्रह्मकांडभेदेन परिहारं वदंतो निरस्ताः । अन्यार्थं तु जैमिनिरित्यादिनोक्तस्यैव कर्मतंत्रे प्रपंचनात् । ।। उपसंहार इति ।। तेन चकारेत्यनेनापुनरुक्तिरिति भावः । येषु यत् इति यच्छब्दान्वयाप्रतीतेराह ।। सूत्रेष्वित्यादेरिति ।। जानंतोपीति ।। चतुर्थगीतातात्पर्योक्तमाग्नेयवचनं । पृच्छन्ति साधवो लोके तेन पृच्छसि पार्थिवेति वाक्यशेषः ।। ।। एवमिति ।। एवं ज्ञानं पुनःप्रापुर्देवाश्च ऋषयस्तथेति तात्पर्यनिर्णयदशमाध्यायस्थवाक्य इत्यर्थः ।। यत आहुरिति ।। उपास्यैव तु पश्यंति नान्यथा तु कथंचन । ऋषीन्राज्ञस्तथारभ्य प्रतिभाऽभ्यधिका क्रमात् । यावद्ब्रह्मा ब्रह्मणस्तु प्रायो नाप्रतिभासितं ।। विष्णोः प्रीत्यर्थमेवास्य श्रोतव्यं प्रायशो भवेदिति गीतातात्पर्यत्रयोदशाध्याये आहुराचार्या इत्यर्थः ।।

## ॥ ॐ ॐ अथातो ब्रह्मजिज्ञासा ॐ ॥ १ ॥

सूत्रभाष्यम्----

अथशब्दो मङ्गलार्थोऽधिकारानन्तर्यार्थश्च। अतःशब्दो हेत्वर्थः।

तत्वप्रकाशिका---

तत्रादिसूत्रस्येदं संगत्यादि। अत्र ब्रह्मजिज्ञासायाः कर्तव्यत्वसमर्थनादस्ति शास्त्रसंगतिः। अन्यथा शास्त्रस्यानारम्भणीयत्वप्रसंगादेतत्समर्थनीयम्। अध्याय पादसंगतिस्त्वानन्दमयाधिकरणमारभ्यैव गवेषणीया। ततोऽर्वाक्तनानामधिकरणानामध्यायपादपीठत्वात्। प्रथमाधिकरणत्वाच्छ्रुतिविचारस्याद्याप्यनारब्धत्वान्नाधिकरणश्रुतिसंगती च। प्रारिप्सिततया चित्तसंगतशास्त्रे प्रवर्तनीया ब्रह्मजिज्ञासा विषयः। कर्तव्या न वेति संदेहः। उभयविधव्यापारदर्शनं संदेहबीजम्। न कर्तव्येति पूर्वः पक्षः। अधिकारिविषयप्रयोजनसंबन्धशून्यत्वात्। न तावद् ब्रह्म विषयः। असंदिग्धत्वात्प्रमाणाभावेन जीवव्यतिरिक्तस्य ब्रह्मणोऽभावात्। जीवस्य च स्वप्रकाशत्वात्। न हि कश्चित्प्रकाशमानेऽर्थे संदिग्धे। न चात्मनः स्वप्रकाशत्वे विवदितव्यम्। अहमित्यनुभवात्। न चायं मानसोऽनुभवः। तस्यापि ज्ञायमानत्वे नानुभवान्तरान्वेषणेऽनवस्थानात्। कस्यचिदनुभवस्य स्वप्रकाशत्वेऽस्त्वात्मन एव तत्। जिज्ञासायामेवानुभवोऽनुभूयत इति न वाच्यम्। अनुभवविरोधात्। न ह्यज्ञायमानज्ञानसद्भावे किंचिन्मानम्। न च स्वप्रकाशसंविदाश्रयतयाऽऽत्माऽवभासत इति युक्तम्। औत्तरिकानुस्मृतिसिद्धसौषुप्तिकानुभवाभावप्रसंगात्। न हि सुषुप्तावात्मातिरिक्ता संविदस्तीति संभवति। संविदात्मकत्वाच्चात्मनो न संविद इव संविदाश्रयतया प्रतीतिः। अतः स्वप्रकाशात्मानतिरिक्तस्य ब्रह्मणोऽसंदिग्धत्वान्न विषयत्वं संभवति। न च जिज्ञासायाः प्रयोजनमस्ति। ज्ञायमानेऽपि ब्रह्मणि तदनुपलम्भात्। विषयप्रयोजनाभावान्न ब्रह्मजिज्ञासायामधिकारी विद्यते। अत एव न संबन्धः। अतो न ब्रह्मजिज्ञासा कर्तव्येति नैतच्छास्त्रमारम्भणीयमिति। एवं प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्यति ॥ अथेति ॥ ग्रन्थादौ मङ्गलाचरणस्यावश्यकर्तव्यत्वात्तत्परतयाऽथशब्दं व्याचष्टे ॥ अथेति ॥ मुक्तचर्थिमात्रस्य ब्रह्मजिज्ञासायां प्रवृत्तिनिरसनपरतयापि तं व्याचक्षाणस्तस्याभिधेयमर्थमाह ॥ अधिकारेति ॥ अथ शब्दस्यानन्तर्यमात्रार्थत्वेऽप्यधिकारस्य योग्यतया संबन्धः। ब्रह्मजिज्ञासायाः प्रयोजनशून्यताशङ्कानिवर्तकतयाऽतःशब्दं व्याचष्टे ॥ अत इति ॥

भावदीपः—

॥ तत्रेति ॥ सूत्रेष्वपि वा अत्युपादेयत्वे सतीति वाऽर्थः। इदमित्युक्त्या-परोक्तं हेयमिति सूचितं। तद्विवृतं चंद्रिकायां। अधिकरणानां हि संगतिस्तावद् द्वेधा। अंतर्भावरूपा आनंतर्यरूपा चेति। तत्राऽऽद्या शास्त्रांतर्भावाध्यायांतर्भावपादांतर्भाव-भेदेन त्रेधा। द्वितीयाऽपि आक्षेपिकी आतिदेशिकी औपोद्घातिकी आपवादिकी-त्यादिरूपेणानेकविधा। एवमनेकविधाऽऽनंतर्यरूपा संगतिः। पूर्वाधिकरणेनोत्तरा-धिकरणस्येव पूर्वाधिकरणविषयवाक्येनोत्तराधिकरणविषयवाक्यस्याप्यस्ति सा श्रुतिसंगतिरित्युच्यते। उक्तं हि चंद्रिकायां। शास्त्रेऽध्याये तथा पादे श्रुत्याऽधिकरणेन च। संगतिः पंचधा प्रोक्ता सर्वाधिकरणेष्वपीत्यादि। तथा विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरः॥ प्रयोजनं च पंचैतांस्तंत्रे (प्रांचो) ऽधिकरणं विदु रित्युक्तेर्विषयादिकं च वाच्यं। तत् परैरन्यथा वर्णितमिति तद्व्युदासायेदं संग-त्यादीति प्रतिज्ञातं विवृण्वन् संगतिं तावद् व्यनक्ति॥ अत्रेति॥ आद्याधिकरण इत्यर्थः। तद्विजिज्ञासस्वेति श्रुत्युक्ताया जिज्ञासायास्सविषयत्वादिन्यायबलेन कर्तव्यतासमर्थ-नेन ब्रह्मविचारपरे शास्त्रेऽतर्भावरूपा संगतिरित्यर्थः। उक्तं च सुधायां अत एवाऽस्य न शास्त्रबहिर्भाव इति॥ व्वर्थमेतत्समर्थनमत्रेत्यत आह॥ अन्यथेति॥ न्यायानु संधानादिरूपजिज्ञासाया अकर्तव्यत्वे न्यायग्रथनात्मकसूत्रसंदर्भरूपशास्त्रस्यानारंभणी-यत्वं स्यात्। न्यायानुसंधानार्थत्वात्तस्य। तदारंभणीयं चावश्यं। अन्यथा परम पुरुषार्थहेतुश्रुत्यर्थनिर्णयानापत्तेरिति भावः। चंद्रिकायां तु ब्रह्मविचारपरशास्त्र कर्तव्यतोपयोगितया जिज्ञासाकर्तव्यतासाधनादस्ति शास्त्रादिनौपोद्घातिकी संगतिः। अन्यथा शास्त्रानारंभापत्तेरित्यर्थ उक्त :॥ एतदिति॥ जिज्ञासाकर्तव्यत्वमित्यर्थः। ॥ अध्यायेति॥ अध्यायपादयोरंतर्भाव इत्यर्थः। पंचाधिकरण्याः पदानां हरौ शक्ति तात्पर्यावधारणरूपसमन्वयाप्रतिपादकत्वादिति भावः। संगती इति वक्तव्ये संगति-स्त्वित्येकवचनकृत्यं चंद्रिकायां व्यक्तं। तर्हि पंचाधिकरण्याः पूर्वं निवेशे किं बीजमित्यत आह॥ तत इति॥ पंचाधिकरण्यास्समन्वयविशेषाप्रतिपादकत्वेनाध्या-यांतर्भावासंभवेपि जिज्ञासाकर्तव्यतायाः प्रथमप्रतिपाद्यत्वात्तत्प्रतिपादनायाद्यसूत्रे ब्रह्म-शब्देन जीवादिव्यावर्तकगुणपूर्तिलक्षणत्वेन सूचयित्वा, जन्माद्यस्येति सूत्रेण गुणसर्वं स्वसिद्धये। ब्रह्मणो लक्षणं प्रोक्तं शास्त्रमूलं यतस्ततः। इत्यनुव्याख्यानोक्तदिशा द्वितीये तस्य गुणपूर्तिवाचितासिद्धये जीवपरतानिरासाय विश्वकारणतां जिज्ञास्यब्रह्म लक्षणत्वेनोक्त्वा तृतीये पूर्तिकारणतयोरतिव्याप्तिनिरासाय तत्र शास्त्रं प्रमाणीकृत्य

चतुर्थे तयोर्विष्ण्वेकनिष्ठत्वाय शास्त्रस्यान्यपरतां निषिध्य सर्वशास्त्रस्थसर्वशब्दप्रवृत्ति निमित्तसर्वगुणपूर्तिसिद्धये वचनवृत्त्या सर्वशास्त्रतात्पर्यविषयतायां चोक्तायां संशब्दार्थस्य वाच्यत्वस्य कात्स्न्र्यस्य च समर्थनार्थं पंचममिति पंचाधिकरण्या बद्धक्रमत्वात्तदनंतरमेव समन्वये आकांक्षोदयात्तदाकांक्षोत्थापकतया समन्वयाध्यायस्य तदादिनामपादस्य चादौ निवेशो युक्त इत्यर्थः ॥ नाधिकरणेति ॥ पूर्वाधिकरणतद्विषयवाक्याभ्यां संगतिर्नेत्यर्थः। उत्तराधिकरणस्य पूर्वाधिकरणेन संगतेः पूर्वाधिकरणविषयवाक्यभूत श्रुतिसंगत्या अविनाभाव एव नत्वभेद इति सा पृथगिति सूचनाय द्विवचनप्रयोगः ॥

एवं संगतिमुक्त्वा विषयाद्याह प्रारिप्सिततयेत्यादिना ॥ ब्रह्मजिज्ञासेति ॥ ब्रह्मजिज्ञासा नाम ब्रह्मज्ञानाय सर्ववेदादिविषया वक्ष्यमाणदिशा श्रवणमनननिदिध्यासनरूपा वा सुधारीत्या वेदाद्यर्थनिर्णायकन्यायानुसंधानापरपर्यायमननमात्ररूपा वा चित्तवृत्तिरित्यर्थः। अन्यथेत्यादिपूर्ववाक्योक्तजिज्ञासाविषयकचिंतासाफल्य द्योतनाय शास्त्रे प्रवर्तनीयेत्युक्तं ॥ जन्माद्यस्येत्यादौ शास्त्र इत्यर्थः। क्वास्ति शास्त्रमित्यत उक्तं प्रारिप्सिततया चित्तसंगतेति। एतेन शास्त्रमारभ्यं वा न वेति प्रधानसंदेहः। तदर्थं ब्रह्मजिज्ञासा कर्तव्या न वेति संदेह इति सूचितं। यद्यप्ययमत्र संदेहो न ग्रंथकर्तुः सर्वज्ञत्वात्तस्य। नापि परस्य शास्त्रस्यैवानुपलब्ध्या जिज्ञासाया अनुपस्थितेः। तथापि शास्त्रप्रणयनानंतरं एतत्सूत्राभाव एतद् दृष्ट्वा परस्संदिहीतेति तदीयसंदेहप्रदर्शनमेतदिति सुधायामेव व्यक्तं। वादिविप्रतिपत्तिरेव विचारांगसंदेहबीजमित्यत्र हेत्वभावाद्विप्रतिपत्तेरपि साधारणधर्म एवांतर्भावस्य पद्धत्यादावुक्तत्वात्साधारणधर्ममेव संदेहबीजमाह ॥ उभयेति ॥ लोके निर्विषयादि क्रियाया आकाशरोमंथनादेरकर्तव्यत्वदृष्टिः सविषयादिक्रियाया अन्नभोजनादेः कर्तव्यत्वदृष्टिरित्यर्थः। अत्र तदर्थचिंतासूत्रक्रमविशेषचर्चादिकं चंद्रिकातोऽवसेयं। संगम्यंते गुरोर्गिर इति स्वप्रतिज्ञामनुरुध्य सौत्रब्रह्मपदव्यावर्त्योक्तिपरं जीवव्यतिरिक्तेश्वराभावात्तस्य च स्वप्रकाशत्वान्न जिज्ञास्यतेति न्यायविवरणं विवृण्वन् पूर्वपक्षमाह ॥ न कर्तव्येति ॥ अधिकारीति ॥ यद्यपि न्यायविवरणे जीवव्यतिरिक्तेत्यादिना विषयशून्यत्वमेको हेतुरुक्तो भाति न तु हेतुचतुष्टयमपि। तथापि विषयशून्यत्वोक्त्यैव तदन्यत्रितयशून्यत्वमपि लभ्यत इति भावेन विषयशून्यत्वं तावद्वक्ति ॥ न तावद् ब्रह्म विषय इति ॥ ब्रह्मरूपो विषयस्तावन्नास्ति। प्रयोजनादि च नास्तीति वक्ष्याम इति तावच्छब्दः। श्रुतौ ब्रह्मेति श्रवणान्निष्कृष्योक्तिः। असंदिग्धत्वादित्येतदेव व्यनक्ति ॥ प्रमाणाभावेनेत्यादिना स्वप्रकाशत्वादित्यंतेन ॥

दिति ॥ निरवकाशानेकलिंगसत्वात् परपक्षे बाधकभावाच्चेति सूत्रत्रयहेत्वंशार्थः। अदृश्यत्वादिगुणकस्तत्त्विति प्रतिज्ञार्थः। विष्णोरेवेत्यादि नेतरावित्युक्तप्रधानादयो नेत्यस्यार्थः। एवेति अद्रेश्यवाक्योक्तं अदृश्यवाक्योक्तं चादृश्यत्वादिकमित्यर्थः। यत्त्वत्र केनचिदुक्तं पंचकोटिकसंशयो नेतराविति सूत्रोक्तकोटिद्वयविरुद्ध इति। तन्न। चंद्रिकायामेव समाधानात्। यदपि प्रथमदृष्टांतमुल्लंघ्य द्वितीयदृष्टांतानुरोधेन प्रधान-पूर्वपक्षोक्तिरयुक्तेति तदपि न। प्रथमदृष्टांतस्यापि मायावादिरीत्या उपादानत्व एव संभवात्। स्पष्टत्वार्थं टीकादौ द्वितीयोक्तेः। ईशश्रुत्या रुद्रप्राप्तिरप्ययुक्ता। ब्रह्मयोनित्वादिलिंगविरोधित्वादित्यपि न। ब्रह्मयोनित्वादेर्बहुव्रीह्याश्रयणेन साव-काशत्वोपपत्तेः। रुद्रप्राप्तेश्चंद्रिकायामुपपादनाच्च। एवमन्यदपि तदीयं दुर्वचनं निरस्यम् ॥ २३ ॥ अ० ६ ॥

सूत्रभाष्यम्—

अदृश्यत्वादिगुणेषु सर्वगतत्वं 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' (छां. उ. ५-१८-१) इति वैश्वानरस्योक्तमित्यत आह—

॥ ॐ वैश्वानरः साधारणशब्दविशेषात् ॐ ॥ २४ ॥

अग्न्यादिविष्ण्वोः साधारणस्य वैश्वानरशब्दस्य विष्णावेव प्रसिद्धात्मशब्देन विशेषणाद्वैश्वानरो विष्णुरेव ॥ २४ ॥

तत्वप्रकाशिका—

अत्र लोकतोऽन्यत्रप्रसिद्धवैश्वानरनाम्नः पाचकत्वाद्यनेकलिंगसमन्वयसिद्धये ब्रह्मणि समन्वयप्रतिपादनादस्ति शास्त्रादिसंगतिः। श्रुत्यादिसंगतिं विषयवाक्यो-दाहरणपूर्वकं विषयादिकं च सूचयति ॥ अदृश्यत्वादीति ॥ गताधिकरणेऽदृश्यत्वादि-गुणा विष्णोरुक्तास्तेषु सर्वगतत्वं चोक्तं 'नित्यं विभुं सर्वगतमि'ति। तददृश्य-त्वादिगुणेषूक्तं सर्वगतत्वं च छन्दोगश्रुतावभिविमानपदेन वैश्वानरस्योक्तम्। अभितो विगतं मानं मर्यादा यस्येति। 'मानं ज्ञानं लयश्चैव मर्यादा चैव (चापि) कथ्यते' इत्यभिधानात्। तस्य च वैश्वानरस्य विष्णोरितरत्वे सर्वगतत्वमप्यन्यस्य प्रसज्येतेत्यवश्यनिर्णेयत्वम्। स वैश्वानरो विषयः। किं विष्णुरन्यो वेति संशयः। सर्वगतत्वमन्यत्र प्रसिद्धिश्च संदेहबीजम्। नायं वैश्वा-नरो विष्णुः किंत्वग्निदेवता तेजोभूतं वा स्यादिति पूर्वः पक्षः। वैश्वानरश्रुतेः।

न च वाच्यं सर्वगतत्वलिंगाद्वैश्वानरो विष्णुरिति। लिंगस्य श्रुतितो दुर्बलत्वात्। न च लिंगस्य निरवकाशत्वेन प्राबल्याच्छ्रुतिबाधकत्वमिति मन्तव्यम्। श्रुतेरपि प्रसिद्धितो निरवकाशत्वात्। श्रुतेः विष्णुविषयत्वेऽन्यादिविषयतया लोकप्रसिद्धिबाधाद्वैदिकविद्याभेदव्यवहारविरोधाच्च। न हि वैश्वानरश्रुतेरग्न्यादिविषयत्वाभावे व्यवहारस्य गत्यन्तरमस्ति। अतः प्रसिद्धिलिंगयोरुभयोरपि निरवकाशत्वेन वैश्वानरश्रुतेरग्नाविष्ण्वोः साधारण्यमेव स्यान्न तु लिंगेन विष्णुपरतानिश्चयः। अतो न वैश्वानरो विष्णुरिति न सर्वगतत्वं तस्येति भावः। सिद्धांतयत्सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ अयं वैश्वानरो विष्णुरेव। आत्मानं वैश्वानरमित्यात्मशब्दात्। न चोक्तरीत्या साधारणवैश्वानरश्रुतिसद्भावादनिर्णय इति वाच्यम्। साधारणस्यापि वैश्वानरशब्दस्य 'आत्मशब्दः परे विष्णौ नान्यत्र क्वचिदिष्यते।' इत्यादौ विष्णावेव प्रसिद्धत्वेनान्यत्रानवकाशात्मशब्दसामानाधिकरण्येन विष्णुपरत्वस्य संभवात्। प्रसिद्ध्यादेरन्यथापि सिद्ध्या सावकाशत्वस्य वक्ष्यमाणत्वादिति भावः ॥ २४ ॥

भावदीपः—

॥ ॐ वैश्वानरः साधारणशब्दविशेषात् ॐ ॥ २४ ॥ नाम्न इति ॥ श्रुतिलिङ्गाधिका परेत्यनुभाष्योक्तेः। आपाततोऽन्यत्र रूढत्वात्। विश्वजीवांतरत्वाद्यैरित्यणुभाष्योक्तिस्तु सिद्धांतदिशा ब्रह्मणि यौगिकत्वाभिप्रायेणेति भावः। कथं तर्ह्यत्र पादे निवेश इत्यतः फलतः पादसंगतिरंतर्नय इवेत्याह ॥ पाचकत्वेति ॥ तद्यद् भक्तं प्रथममागच्छेत् तद्धोमीयमिति वैश्वानरे तद्हुतं भवतीत्यादिना पाचकत्वहोमाधारत्वगार्हपत्याद्यंगकत्वादिश्रवणादिति भावः। यद्यपि पाचकत्वं कर्मेति वक्ष्यति। तथापि लिङ्गत्वमप्यस्तीति वा तदन्यलिङ्गापेक्षया वा एवमुक्तिः। अधिकं चंद्रिकायाम्। इत्यंतं भाष्यं संगतिपरत्वेन तावद्व्याकर्तुं परिष्करोति ॥ गतेति ॥ भाष्यं व्याचष्टे ॥ अदृश्यत्वादिगुणेपूक्तमिति ॥ यत्त्वेतमित्यादेरर्थः ॥ छंदोगेति ॥ पंचमे वैश्वानरविद्यायामित्यर्थः। प्रथमबृहद्भाष्योक्तमाह ॥ मानमिति ॥ भावमाह॥ तस्येति ॥ वक्ष्यमाणन्यायेनेतरत्व इत्यर्थः। इतिसंगतिसंभवादिति हेत्वर्थोऽत्रेतिशब्दः ॥ किं विष्णुरिति ॥ किं विष्णुरेव वाऽन्योऽपि वा इत्यर्थः। विष्णुरेव वेति सिद्धांतकोटेः शेषो वा तदेव भाष्यं पूर्वपक्षतद्युक्तितत्फलोक्तिपरत्वेन व्याचष्टे ॥ नायमिति ॥ विष्णुरित्यस्य विष्णुरेवेत्यर्थः। देवताभूतं चेति सूत्रमनुरुध्याऽऽह ॥ किं त्विति ॥

विष्णुरित्यप्यनुकर्षः। वैश्वानरस्येति भाष्यसूचितं तावदाह ॥ वैश्वानरेति ॥ अग्नाविष्ण्वोः साधारणस्येति भाष्योक्तं साधारण्यमग्नाविष्ण्वोः विवरिष्यन् श्रुतिलिङ्गयोस्तुल्यबलत्वं वक्तुमाह ॥ न चेति ॥ प्राबल्यादिति ॥ अंतरादिनयन्यायेनेति भावः। श्रुतेरपीत्युक्तमेव साक्षादपीति सूत्रव्यावर्त्यं व्यनक्ति ॥ श्रुतेरिति ॥ ॥ लोकप्रसिद्धीति ॥ लोकव्यवहाराभावापातादित्यर्थः। नैष्फल्यं स्यादिति भावः। एतेनांतरादिनयेऽपि निरवकाशलिङ्गेनोक्तेः श्रुतिबाधो न संमत इति पूर्वोक्तसर्वाक्षेपो दर्शितः। अभिव्यक्तेरित्यादिसूत्राणां व्यावर्त्यचोद्यमाह ॥ वैदिकेति ॥ अग्न्यादिसर्वशब्दानां विष्णौ मुख्यत्वे सर्वस्य विष्णुविद्यात्वेनेयमग्निविद्या इयमात्मविद्येति भेदव्यवहारो न स्यात्। अस्ति च व्यवहारः। तेन तेषामग्न्यादिवाचित्वं सिद्धमिति तद्विरोधान्न वैश्वानरादिशब्दानां विष्णुविषयत्वमित्यर्थः। व्यवहारस्य निरवकाशत्वं व्यनक्ति ॥ न हीति ॥ एवं च सिद्धं साधारण्यमित्याह ॥ अत इति ॥ व्यवहारस्याग्न्यादिविषयत्वं विना गत्यंतराभावादित्यर्थः। अग्नाविष्ण्वोरिति देवताद्वंद्वे चेत्यानङादेशः। अंतर्नय इवोभयबाधेनैक्यं तु नाऽऽशंक्यम्। भूतसाधारणश्रुत्या प्राप्तं जडेनाभेदायोगात्। कथं तर्हि वैश्वानरस्योक्तमिति भाष्यमित्यतो भावमाह ॥ अत इति ॥ श्रुतेः साधारण्यादित्यर्थः। सर्वगतत्वमित्यंतवाक्यस्य तात्पर्यं न सर्वेति। विष्णुरितीत्यनंतरं तस्येतीत्यनन्तरं च निश्चय इत्यनुषंगः ॥ छ ॥ व्युत्क्रमेण भाष्यं व्याचष्टे ॥ अयमिति ॥ श्रुतिसाधारण्ये विशेषश्रुत्यादेः निश्चय इति न्यायविवरणदिशा हेत्वंशं व्याचष्टे ॥ आत्मानमिति ॥ विशेषणपदकृत्यं व्यावर्त्यपूर्वमाह ॥ न चेति ॥ ॥ वक्ष्यमाणत्वात् साक्षादपीत्यादि सूत्रेष्विति भावः ॥ २४ ॥

सूत्रभाष्यम्—

**॥ ॐ स्मर्यमाणमनुमानं स्यादिति ॐ ॥ २५ ॥**

'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रित' (भ. गी. १५–१४) इति स्मर्यमाणमत्रापि स एवोच्यत इत्यस्यानुमापकम्। समाख्यानात्। इति शब्दः समाख्याप्रदर्शकः ॥ २५ ॥

तत्वप्रकाशिका—

नन्वात्मशब्दस्यामुख्यवृत्तिमभ्युपेत्याग्न्यादीनामेव वैश्वानरत्वं किं न स्यादित्याशंकां परिहर्तुं हेत्वन्तरेण वैश्वानरस्य विष्णुत्वं निश्चाययत्सूत्रमुपन्यस्य व्याचष्टे ॥ स्मर्यमाणमिति ॥ 'अहं वैश्वानरो भूत्वा' इति स्मृत्युक्तं विष्णोः वैश्वा-

नरत्वमत्र वैश्वानरविद्यायामपि स गीतोक्तो भगवानेव वैश्वानरपदेनोच्यत इत्य-स्यार्थस्यानुमापकं भवति। स्मृतौ विष्णोर्वैश्वानरत्वोक्तेर्वैश्वानरविद्यायामप्य-सावुच्यत इति भावः। स्मृत्युक्तवैश्वानरस्य विष्णुत्वेऽप्यत्रोक्तस्य कुतो विष्णुत्वं इत्यत आह॥ समाख्यानादिति॥ समाख्यानयुक्तिर्न सूत्रितेत्यत आह॥ इतीति॥ अनेनेतिस्मर्यमाणमित्यन्वयः सूचितो भवति॥ २५॥

भावदीपः—

॥ ॐ स्मर्यमाणमनुमानं स्यादिति ॐ॥ २५॥ सूत्रे चशब्दाभावाच्छंकानिवर्तकत्वेन सूत्रमवतारयति॥ नन्विति॥ अग्न्यादीनामेवेति॥ अग्निदेवतातेजोभूतविष्णूनां त्रयाणामेवेत्यर्थः। यद्वोपलक्षितविद्यान्तराभिप्रायेण बहुवचनोक्तिः। वैश्वानरत्वमित्युपलक्षणम्। इन्द्राकाशप्राणगायत्रीत्यादिकमित्यर्थः। स्मृतिसमाख्याप्युपलक्षणं 'यो देवानां नामधा एक एव' 'नामानि सर्वाणी'त्यादेरिति भावः। क्रमेण भाष्यपदानामर्थमाह॥ अहमिति॥ इत्यन्वय इति सूत्र इति योज्यम्। भाष्ये अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रित इति स्मर्यमाणमित्युक्तेरिति भावः। तथा च वैश्वानरो विष्णुरेव। अहं वैश्वानर इति गीतायां स्मर्यमाणत्वादिति भावः। एतेन न्यायविवरणोक्तस्य विशेषश्रुत्यादेरित्यादिपदस्य समाख्यानमित्यर्थः। तत्कृत्यं च दर्शितं भवति॥ २५॥

सूत्रभाष्यम्—

॥ ॐ शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात्पुरुषविधमपि चैनमधीयते ॐ॥ २६॥

'अयमग्निर्वैश्वानरः' (बृ. उ. ७–९–१) 'वैश्वानरमृत आजातमग्निमि' (ऋ. सं. ६–७–१) त्यादि(:)शब्दः। 'वैश्वानरे तद्धुतं भवति' (छां. उ. ५–२४–४) हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः' छां. (उ. ५–१८–२) इत्याद्यग्निलिङ्गमादिशब्दोक्तम्। 'येनेदमन्नं पच्यते' (बृ. उ. ७–९–१) 'तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयमि' (छां. उ. ५–१९–१) त्यादिना पाचकत्वेनान्तःप्रतिष्ठानं च प्रतीयते। तस्मान्न विष्णुरिति चेन्न। 'अथ हेममात्मानमणोरणीयांसं परतः परं विश्वं हरिमुपासीतेति। सर्वनामा सर्वकर्मा सर्वलिङ्गः सर्वगुणः सर्वकामः सर्वधर्मः सर्वरूप

इति'। 'स य एतमेवमात्मानं विश्वं हरिमादरमुपास्ते तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेषु देवेषु सर्वेषु वेदेषु कामचारो भवती'ति तत्तन्नामलिङ्गादिना तस्यैव दृष्ट्युपदेशान्महोपनिषदि ॥

अनात्तत्वादनात्मान उत्तत्वाद्गुणराशितः।
अब्रह्माणः परे सर्वे ब्रह्मात्मा विष्णुरेव हि' ॥

इत्यादिना 'को न आत्मा किं ब्रह्म' (छां. उ. ५-११-१) त्यारम्भाच्च अन्येषामसम्भवाद्विष्णुरेव वैश्वानरः। 'चन्द्रमा मनसो जातश्चक्षोस्सूर्यो अजायते'—(तै. आ. ३-१२)त्यादिना यः पुरुषाख्यो विष्णुरभिहितस्तद्विधमेवात्र 'मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मे'(छां. उ. ५-१८-२) त्यादिनैनं वैश्वानरमधीयते। चशब्देन सकलवेदतन्त्रपुराणादिषु विष्णुपरत्वं पुरुषसूक्तस्य दर्शयति। तथा च ब्राह्मे—

'यथैव पौरुषं सूक्तं नित्यं विष्णुपरायणम्।
तथैव मे मनो नित्यं भूयाद्विष्णुपरायणम्' इति ॥

चतुर्वेदशिखायां च 'सहस्रशीर्षा पुरुषस्सहस्राक्षस्सहस्रपात् इति। एष ह्येवाचिन्त्यः परः परमो हरिरादिरनादिरनन्तोऽनन्तशीर्षोऽनन्ताक्षोऽनन्तबाहुरनन्तगुणोऽनन्तरूप' इति। बृहत्संहितायां च—

'यथा हि पौरुषं सूक्तं विष्णोरेवाभिधायकम्।
न तथा सर्ववेदाश्च वेदाङ्गानि च नारद' इत्यादि ॥
'यस्माद्यज्जायते चाङ्गाल्लोकवेदादिकं हरेः।
तन्नामवाच्यमङ्गं तद्यथा ब्रह्मादिकं मुखम्' ॥

इति नारदीयवचनान्नाभेदोक्तिविरोधः ॥ २६ ॥

तत्वप्रकाशिका—

वैश्वानरस्य विष्णुत्वमाक्षिप्य समादधत्सूत्रमुपन्यस्याऽऽक्षेपांशं तावद्व्याचष्टे ॥ शब्दादिभ्य इति ॥ यदुक्तमात्मशब्दविशेषणात् समाख्यानाच्च वैश्वानरस्य विष्णुत्वनिश्चय इति तदयुक्तम्। यथा खलु वैश्वानरस्य विष्णुत्वनिश्चायकात्मशब्दादि विद्यते तथाऽग्नित्वनिश्चायकस्यापि विद्यमानत्वात्। तथाहि। वैश्वानरशब्दस्याऽऽ-

त्मशब्दसमानाधिकृतत्ववदग्निशब्दसमानाधिकृतत्वं च श्रूयते 'अयमग्निः' इति बृहदारण्यके 'वैश्वानरम्' इत्यस्यामृचि च। तथाऽग्निर्लिंगं च वैश्वानरे होमाधिकरणत्वं गार्हपत्याद्यंगत्वं च श्रूयते 'वैश्वानरे तद्धुतम्' इत्यादौ। तथा वैश्वानरे पाचकत्वाख्यमग्निकर्म च श्रूयते। 'अयमग्निर्वैश्वानरो योऽयमन्तःपुरुषे येनेदमन्नं पच्यते यदिदमद्यते' इति बृहदारण्यके। 'तद्यद्भक्तम्' इति छांदोग्ये च। तस्माद्वैश्वानरस्य विष्णुत्वज्ञापकवदग्नित्वज्ञापकस्यापि सत्वान्न विष्णुरेवायमिति निश्चयो युज्यत इत्यर्थः। अत्र सर्ववैश्वानरविद्यानां विचार्यत्वात्तत्तद्वाक्योद्धारो युक्त एव समाख्यारूपेण वा। मूर्धानं दिव इति मन्त्रार्थः। दिवः कारणभूतं मूर्धानं पृथिव्याः कारणभूतं पादं जनानां सम्यग्ज्ञानायाभिव्यक्तं सर्वज्ञमखंडेशमत्यन्नं जनानां पातारं वैश्वानरमग्निं देवाः स्वारयतयाऽकुर्वन् इति। गतिसाधनत्वादरतिः पादः। 'ऋताय जातम्' इति समाख्यानात्सप्तमी तादर्थ्ये। 'अन्नं थम्' इति हि श्रुतिः। 'अग्निर्देवानां मुखम्' इति च। वैश्वानरे तद्धुतं भवतीति वाक्यार्थ। एवंविद्यद्यपि चाण्डालायोच्छिष्टं प्रयच्छेदात्मनि हैवास्य तद्वैश्वानरे हुतं स्यादिति वाक्यादवगन्तव्यः। भक्तमन्नम्। परिहारसूत्रांशं व्याचष्टे ॥ नेति ॥ उभयत्र श्रुत्यादिसाम्याद्वैश्वानरस्य विष्णुत्वनिश्चयायोग इति न युक्तम्। उभयत्र श्रुत्यादिसाम्येऽपि सावकाशत्वनिरवकाशत्वबलान्निश्चयोपपत्तेः। तत्र यदग्निनाम लिंगं कर्म च वैश्वानरे श्रूयते तद्विष्णौ सावकाशम्। 'अथ हेममात्मानम्' इत्यग्न्यादिनामलिंगकर्मत्वेन विष्णोरुपासनोपदेशात्। न चात्मशब्दादेरन्यत्रास्त्यवकाशः। अतो निरवकाशेन सावकाशबाधोपपत्तेः युज्यते वैश्वानरस्य विष्णुत्वनिश्चय इति भावः। न च वाच्यमुपासनार्थमुक्तत्वादेव 'योषितमग्निं ध्यायीत' इत्यादाविवाऽसत्वम्। नाविद्यमानं ब्रुवते वेदा ध्यातुं न वैदिका इत्यादिवचनात्। वाक्यान्तरस्याविरोधेन योऽर्थः स्थाप्यते तदर्थत्वाच्च। विश्वं पूर्णम्। आरात् समीपे स्वहृदये। प्रथमेतिशब्दो विधिसमाप्तौ। द्वितीयस्येत्युपासीतेत्यन्वयः। प्रकरणबलाच्च वैश्वानरस्य विष्णुत्वनिश्चयो भवतीत्याह ॥ अनात्तत्वादिति ॥ 'को न आत्मा किं ब्रह्म' इति विचारपूर्वकं वैश्वानरविद्याया आरभ्याधीतत्वेन विष्णुप्रकरणत्वाच्च वैश्वानरो विष्णुरेवेति निश्चयो भवति। 'अनात्तत्वात्' इति वचनेन विष्णोरन्येषां आत्मत्वाद्यसंभवादित्यर्थः। श्रुतिसमाख्यया च वैश्वानरस्य विष्णुत्वमुपपादयति ॥ चन्द्रमा इति ॥ यः पुरुषाख्यो विष्णुः पुरुषसूक्ते "शीर्ष्णो द्यौः समवर्तत' 'चक्षोः सूर्यो अजायत' 'प्राणाद्वायुरजायत' 'पद्भ्यां भूमिरजायत' इत्यादिना

वाक्येन द्युभ्वादिजनकशीर्षादिमानभिहितस्तद्विधमेवात्र वैश्वानरं चाधीयते छन्दोगाः 'मूर्धेव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मा पृथिव्येव पादौ' इत्यादिना वाक्येन। अतः पुरुषसूक्तसमाख्ययाऽपि विष्णुरेव वैश्वानर इत्यर्थः। ननु पुरुषसूक्तस्य विष्णुपरत्वे भवेत्तत्समाख्ययैतद्विद्याया विष्णुपरत्वं तदेव कुत इत्यत आह ॥ चशब्देनेति ॥ विष्णुपरत्वं पुरुषसूक्तस्य (प्र)सिद्धमिति सूचयतीत्यर्थः। अपिपदेनैवोभयसमुच्चयसिद्धेर्नान्यत्रोपक्षीणश्चशब्दः। किं तद्वेदादीत्यतस्तदुदाहरति ॥ तथा चेति ॥ श्रुतेः प्रथमप्रतिज्ञानेऽपि तस्याः पुरुषसूक्तमुपन्यस्य विष्णुपरतया व्याख्यात्याः साक्षात्प्रतिज्ञातार्थसाधकत्वान्न प्रथममुदाहरणम्। प्रतिज्ञा त्वाधिक्यक्रमाभिप्राया। परो विलक्षणः। आदिपदेन 'सर्वतः पौरुषे सूक्ते गुणा विष्णोरुदीरिताः' इति ब्रह्मतर्कादिग्रहणम्। ननु पुरुषसूक्ते द्युभ्वादिजनकशीर्षादिमत्वं पुरुषस्योच्यते वैश्वानरविद्यायां पुनर्वैश्वानरस्य तदभेदोऽतो विरुद्धार्थत्वान्नेयं समाख्येत्यत आह ॥ यस्मादिति ॥ वैश्वानराङ्गानां सूर्याद्यभेदोक्तावपि न पुरुषसूक्तवैश्वानरविद्ययोर्विरोधोऽभेदोक्तेरपि तज्जन्यजनकभावविवक्षावत्त्वादिति भावः ॥२६॥

भावदीपः—

॥ ॐ शब्दादिभ्योऽन्तःप्रतिष्ठानात्० ॐ ॥ २६ ॥ उभयत्र विशेषश्रुत्यादौ पुनः सावकाशत्वनिरवकाशत्वप्राबल्यान्निश्चय इति न्यायविवरणोक्तमुभयत्र विशेषश्रुत्यादिकं व्यंजयन् तदनुरोधेन भाष्यं व्याचष्टे ॥ यदुक्तमित्यादिना ॥ समाख्यानाच्चेति ॥ विशेषश्रुत्यादावित्यत्रादिपदार्थोक्तिः। छांदोग्ये अग्निपदाभावादाह ॥ बृहदारण्यक इति ॥ सप्तमाध्याय इत्यर्थः। तस्याप्यत्र विषयत्वमित्यग्रे व्यक्तं भाष्ये। नामलिंगादिनेत्यादिपदात्सर्वकर्मेत्यग्रेतनस्मृत्यनुरोधादाह ॥ कर्मेति ॥ तथा चास्य क्रियारूपत्वाल्लिंगसंग्राहकादिपदेनैवानुक्त्वांऽतःप्रतिष्ठानादिति सूत्रे पृथगुक्तिर्युक्तेति भावः। तत्वप्रदीपे तु प्रधानलिङ्गत्वात्पृथगुक्तिरित्युक्तम्। अंतःप्रतिष्ठानव्यक्त्यर्थं पूर्वशेषमाह ॥ अयमिति ॥ आगच्छेदास्यं छांदोग्ये च पचनरूपाग्निकर्म श्रूयत इत्यर्थः। तस्मादिति भाष्यपदमनूद्यार्थमाह ॥ तस्मादिति ॥ उक्तहेत्वन्वयाय न विष्णुरित्येतत् सावधारणं व्याचष्टे ॥ न विष्णुरेवेति ॥ समाख्येति ॥ तत्तद्वाक्योद्धार इत्यनुषंगः। सिद्धांते अहं वैश्वानरो भूत्वेति यथा समाख्या तथा वैश्वानरोऽग्निरित्यत्राप्यस्ति। अयमग्निरिति समाख्येति वक्तुमित्यर्थः ॥ इतिमंत्रेति ॥ मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आजातमग्निम्। कविं सम्राजमतिथिं

जनानामासन्ना पात्रं जनयंत देवाः। इति मंत्रस्यार्थ उच्यत इत्यर्थः। पुरुसूक्तेनैकार्थत्वायार्थोक्तिः। ऋते सम्यग्ज्ञानाय। सम्यगित्याङोऽर्थः। जनानामित्यत्राप्याकर्षः। जातं जनीप्रादुर्भावे अभिव्यक्तमित्यर्थः। कविमित्यादेरर्थः सर्वज्ञमित्यादि। पात्रं पातारं। आसन् आस्ये। आस्यतयेति यावत्। आजनयंत आकुर्वन् ॥ गतीति ॥ लोके गमनेनारतिदर्शनाद्रतिविरुद्धगतिसाधनत्वात् पादोऽरतिशब्दार्थ इत्यर्थः ॥ तादर्थ्य इति ॥ चर्मणि द्वीपिनं हंति दंतयोर्हंति कुंजरमित्यादाविवेति भावः ॥ छ ॥ एवंविदिति ॥ वैश्वानरज्ञानी। यद्यपि यदि। तस्मान्न विष्णुरितीत्यंतभाष्यमनुवर्त्य तेन नञोऽन्वयमुपेत्यार्थमाह ॥ उभयत्रेति ॥ कुत इत्याकांक्षायां तस्यैव दृष्ट्युपदेशादिति भाष्यस्य साक्षादनन्वयान्न्यायविवरणोक्तं हेतुं संयोज्य तदुपपादकत्वेन भाष्यं योजयति ॥ उभयत्रेति ॥ एवं च गायत्रीनये तथा चेतोऽर्पणेत्यनेन गायत्र्याद्यप्रसिद्धशब्दस्य विष्णौ प्रयोगे प्रयोजनोक्तिरिह तु वैश्वानरनामादेः सावकाशत्वोक्तिरित्यपौनरुक्त्यमिति भावः ॥ न चेति ॥ अनात्तत्वादनात्मान इत्यादेरिति भावः। बलादित्युक्तिलब्धमाह ॥ अत इति ॥ उपासना हि ज्ञानादन्या अर्थहीनाऽपि स्यादित्याशंकापनुत्तये सूत्रभाष्ययोः दृष्टीत्युक्तं तद्व्यनक्ति ॥ न च वाच्यमिति ॥ नाविद्यमानमिति तैत्तिरीयभाष्योक्तस्मृतिः। आदिपदेन न च रमंत्यहो असदुपासनयेत्यादि गृह्यते ॥ वाक्यांतरस्येति ॥ अहं वैश्वानरो भूत्वेति समाख्यात्वेनोक्तवाक्यांतरस्याविरोधेन योऽर्थः स्थाप्यते तदर्थत्वाच्चास्य वाक्यस्य नासदर्थकत्वमित्यर्थः। यद्वा ननु मूर्धैव सुतेजा इत्यादिना द्युव्यादितादात्म्यमविद्यमानमुच्यत इत्यत आह ॥ वाक्यांतरस्येति ॥ शीर्ष्णो द्यौः समवर्ततेत्यस्य। विवरिष्यते चैतदग्रे। यद्वा हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन इत्यादिना वैश्वानरांगानां गार्हपत्याद्यैक्यमविद्यमानमेवोच्यत इत्यत आह ॥ वाक्यांतरस्येति ॥ मूर्धैव सुतेजा इत्यादेरविरोधेन यस्तादात्म्यादन्योऽर्थः यस्माद्यज्जायते चांगादित्यादिना स्थाप्यते तदर्थत्वाच्च हृदयमित्यादेरिति नासदर्थकत्वमित्यर्थः। कोऽर्थस्तर्हि योषितमग्निमित्यस्येत्यतोऽपि ॥ वाक्यांतरस्येति ॥ तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वतीति वाक्यांतरस्य योऽर्थः रेतोरूपाहुत्याधारत्वं तदर्थत्वाच्च योषितमिति वाक्यस्येति प्रकृतश्रुत्यैक्यार्थाय स्वहृदय इत्युक्तिः। श्रुतौ सर्वकर्मा न ऋते त्वत्क्रियत इत्यादेः। वज्रधरत्वादीनि सर्वाणि लिङ्गानि चास्यैवेति सर्वलिङ्गः। तदिच्छयैव सर्वमिति सर्वकामः। गुणाः ज्ञानादयः। धर्माः सर्वज्ञत्वादयः। संयोगवियोगादिधर्माः तदधीना इति वा सर्वधर्मः। सर्वत्र रूपमस्येति वा सर्वमस्य रूपं प्रतिमेति वा सर्वरूपः। अलं

सम्यगिति अवशिष्टपदार्थस्तत्वप्रदीपोक्तः। शब्दादेवेत्यत्र श्रुत्यादेरुपक्रमोपसंहारयोः श्रुतत्वे तन्निश्चायकतया लिङ्गत्वमिति वक्ष्यमाणदिशा अंतरनय इवात्मब्रह्मशब्दयोरुपक्रमे श्रुतत्वेन तस्य वैष्णवत्वं निश्चाययदात्मादिशब्दद्वयं प्रकरणस्य वैष्णवत्वं निर्धार्य तत्रस्थवैश्वानरनाम्नो विष्ण्वर्थत्वमवधारयतीति भावेनासंभवादिति सूत्रखंडभाष्यं व्यनक्ति ॥ प्रकरणबलाच्चेति ॥ न केवलमात्मशब्दस्मृतिसमाख्याभ्यामिति चार्थः। भाष्ये इत्यादिनेत्यस्यान्येषामसंभवादित्यनेनान्वयः। आरंभाच्चेत्यस्य विष्णुरित्यादिनाऽन्वयमुपेत्य व्याचष्टे ॥ को न इति ॥ आरंभाच्चेत्यस्यार्थः आरभ्य उपक्रम्याधीतत्वेन ॥ प्रकरणत्वाच्चेति ॥ तेन सूत्रे अग्रेतनापिपदमसंभवीत्यत्राप्याकृष्यत इति सूचितम्। वचनेनेत्यनेनेत्यादिना वचनेनेत्यस्य भाष्यस्यार्थः सूचितः ॥ श्रुतीति ॥ तथा च न स्मर्यमाणमित्यनेन पौनरुक्त्यमिति भावः। समाख्या चात्रार्थतः। न तु जिज्ञासानयोक्तपरो दिवेति समाख्यावच्छब्दत इति ज्ञेयम्। चंद्रमा इति भाष्यं वाक्यप्रतीकमिति मत्वाऽनुरूपवाक्यानि पठति ॥ शीर्ष्णं इति ॥ सुतेजा इत्यादेर्द्व्यादिरर्थो बोध्यः। भावार्थमाह ॥ अत इति ॥ समाख्ययाऽपीत्यनेन सूत्रे पुरुषविधमपीत्यपिशब्दः असंभवादित्युक्तप्रकरणसमुच्चय इति दर्शितम्। अनन्वयादाह ॥ प्रसिद्धमितीति ॥ उक्तसमुच्चयार्थोऽयमेतमर्थं कथं सूचयेदित्यत आह ॥ अपीति ॥ प्रकरणसमाख्यारूपोभयेत्यर्थः। दृष्टचुपदेशादित्यस्य तु श्रुत्यादिसावकाशत्वरूपहेतुसाधकत्वेन साक्षात्प्रकृतसाध्ये हेतुत्वाभावादुभयेत्युक्तम्। परः परम इत्यनयोरपौनरुक्त्यायाऽऽह ॥ पर इति ॥ पुराणादिष्विति भाष्यस्थादिपदार्थमाह ॥ आदिपदेनेति ॥ ॥ ब्रह्मतर्केति ॥ तृतीये पुरुषविद्यायामित्यत्र भाष्योक्तमेतद्वाक्यं स्मृतौ तत्तज्जनकत्वेन तत्तन्नामवत्वोक्तावपि श्रुतावभेदोक्तेः कस्समाधिरुक्त इत्यतोऽभिप्रायमाह ॥ वैश्वानरांगानामिति ॥ तज्जन्येति ॥ सुतेजःप्रभृतिशब्दोक्तद्युप्रभृतिजनकत्वं वक्तुं तदभेदः श्रुतावुच्यते। तथा चैकार्थ्यं श्रुत्योरित्यर्थः। छांदोग्यभाष्ये तु क्रीडात्मकत्वाद् द्व्याख्यं च सुतेजाश्चातितेजसा। स्वर्गाधारं शिरो विष्णोः सर्वरूपातिदर्शनात्। चक्षुस्तु विश्वरूपाख्यमित्यादिना स्वर्गाद्याधारांगविशेषस्यातितेजस्त्वादिनिमित्तेन सुतेजःप्रभृतिशब्दवाच्यत्वमुक्तम्। तत्राधाराधेयभावविवक्षा जन्यजनकभावविवक्षाया अप्युपलक्षणम्। यतो जनिस्तत्रैव स्थितिलयाविति प्रसिद्धेः। अत एवात्र तत्वप्रदीपे यस्मादंगाद्यज्जायते तदाश्रित्य तिष्ठति लीयते चेत्यादिनाऽप्याधाराधेयभावादिविवक्षाऽप्युपलक्षिता ॥ २६ ॥

सूत्रभाष्यम्—

॥ ॐ अत एव न देवता भूतं च ॐ ॥ २७ ॥

अग्निवैश्वानरादिशब्दस्तेजसि भूते अग्निदेवतायां च प्रसिद्धोऽप्यतः पूर्वोक्तहेतुत एवात्र न सा तच्चाभिधीयते ॥ २७ ॥

तत्वप्रकाशिका—

ननु वैश्वानरशब्दस्य देवताभूतयोः प्रसिद्धत्वादत्राप्यसौ तत्परः किं न स्यादित्याशंङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ अत एवेति ॥ यद्यपि वैश्वानरशब्दोऽन्यत्र प्रसिद्धस्तथापि नात्र तेनान्यदभिधीयते । आत्मशब्दादिहेतोरेव तस्य चान्यत्र निरवकाशत्वादिति भावः । अत्राग्न्यादिग्रहणं विद्यान्तरोपलक्षणार्थम् ॥ २७ ॥

भावदीपः—

॥ ॐ अत एव न देवता भूतं च ॐ ॥ २७ ॥ प्रसिद्धोऽपीति भाष्यस्थापिपदार्थं व्यनक्ति ॥ यद्यपीति ॥ तेजसीत्यादेरर्थोऽन्यत्रेति । अत्र न सेत्यादेरर्थो नात्रेति । तेनेति शेषोक्तिः । अत इत्यादेरर्थ आत्मेति । अत एव प्राण इत्यत्रेव शब्दादेवेत्यत्रेव चैवकारो निरवकाशत्ववाचीत्युपेत्याह ॥ तस्य चेति ॥ अत्राग्न्यादीति ॥ अग्निवैश्वानरादीति भाष्यस्थाग्निशब्दादिशब्दयोर्ग्रहणं वि मे कर्णा पतयतो विचक्षुरिति अग्निसावित्रबार्हस्पत्यैंद्रवरुणगायत्रीप्राणाकाशाक्षरादिविद्यास्वप्यग्न्यादिशब्दानामप्यन्यत्रप्रसिद्धिविद्याभेदव्यवहारविरोधमाशंक्य तत्र तत्र स्थितनिरवकाशविष्णुश्रुत्यादिना देवताभूतादिपरत्वं निरसनीयं वक्ष्यमाणन्यायैश्च सूक्तभेदो विद्याभेदश्च समर्थनीय इति सूचनार्थमित्यर्थः ॥ २७ ॥

सूत्रभाष्यम्—

॥ ॐ साक्षादप्यविरोधं जैमिनिः ॐ ॥ २८ ॥

नाग्न्यादयः शब्दा अग्न्यादिवाचकास्तथापि साक्षाद्वानन्ययोगेन ब्रह्मवाचकैश्शब्दैः व्यवहारार्थमनभिज्ञानाच्चान्यत्र व्यवहरन्तीत्यभ्युपगमेऽविरोधं जैमिनिर्वक्ति ।

'व्यासचित्तस्थिताकाशादवच्छिन्नानि कानिचित् ।
अन्ये व्यवहरन्त्येतान्यूरीकृत्य गृहादिवत् ॥' इति

स्कान्दवचनान्न मतानां परस्परविरोधः ॥ २८ ॥

तत्वप्रकाशिका— ननु अग्न्यादिशब्दानामग्न्यादिवाचित्वाभावे ब्रह्मैकवाचित्वे च प्रसिद्धिविरोधः स्यात् । तस्याः कारणान्तराभावात् । अतः प्रसिद्ध्यन्यथानुपपत्त्याऽन्येषां वाचित्वमित्याशंकां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ साक्षादिति ॥ यद्यपि अग्न्यादिशब्दा नाग्न्यादिवाचकाः किंतु ब्रह्मवाचका एव तथापि न प्रसिद्धिविरोधः । अनन्ययोगेन ब्रह्मवाचकैरपि तैर्ज्ञानिनो हानादिसिध्द्यर्थमन्यत्राग्न्यादौ व्यवहरन्ति । तदन्ये तु ज्ञानाभावादेवेत्यभ्युपगमात् । एवमभ्युपगमे च प्रसिद्धेरन्यथोपपत्तिसिद्धेर्न तद्विरोध इति जैमिनिराचार्यो वक्तीत्यर्थः । ननु जैमिन्यादिमतानां भगवन्मताविरोधित्वे जैमिन्यादिग्रहणवैयर्थ्याद्विरोधित्वे च कथं विरुद्धराद्धांतेन परिहार इत्यत आह ॥ व्यासेति ॥ जैमिन्यादिमतानां न व्यासमतविरोधस्तथापि तन्मतैकदेशोररीकाराभिप्रायेण जैमिन्यादिग्रहणोपपत्तिरिति भावः । चित्तस्थिताकाशादिति चित्तस्थितज्ञानाख्याकाशात् । बहुवचनं वक्ष्यमाणमतविवक्षया ॥ २८ ॥

भावदीपः—

॥ ॐ साक्षादप्यविरोधं जैमिनिः ॐ ॥ २८ ॥ प्रसिद्धीति ॥ व्यवहारविरोधः स्यादित्यर्थः । कांक्षितपूर्त्या भाष्यं व्याचष्टे ॥ यद्यपीति ॥ सौत्रसाक्षात्पदार्थोऽनन्ययोगेनेति । वाच्यार्थधीव्यवहितलक्षणादिकं विना मुख्यवृत्त्येत्यर्थः । यद्यपीत्यादिना विवृतं सौत्रापिपदमनुवदति ॥ ब्रह्मवाचकैरपीति ॥ ज्ञानिन इति तदन्य इति च भाष्यशेषोक्तिः । व्यवहारार्थमित्यस्यार्थो हानादीति । अनभिज्ञानाच्चेत्यस्यार्थो ज्ञानाभावादेवेति । चस्त्ववधारण इति भावः । हानादिसिद्ध्यर्थमग्न्यादौ व्यवहरन्तीत्यनुषंगः ॥ अन्यथेति ॥ ज्ञानिनां हानादिप्रयोजनोपाधिनाऽन्येषां तु विष्णौ मुख्यत्वाज्ञानेनेत्यर्थः ॥ बहुवचनमिति ॥ मतानामिति अन्ये इति च बहुवचनमित्यर्थः ॥ २८ ॥

सूत्रभाष्यम्—

॥ ॐ अभिव्यक्तेरित्याश्मरथ्यः ॐ ॥ २९ ॥

तत्र तत्र प्रसिद्धावप्यग्न्यादिषु ब्रह्मणोऽभिव्यक्तेरग्न्यादिसूक्तनियम इत्याश्मरथ्यः ॥ २९ ॥

तत्वप्रकाशिका—

ननु लौकिकप्रसिद्धेरज्ञानादिमूलत्वेनान्यथोपपत्तावपि वैदिकाग्न्यादिसूक्तविद्यादिप्रसिध्द्यन्यथानुपपत्त्याऽग्न्यादीनां वाच्यत्वं स्यात् । तत्राज्ञानादिमूलत्वकल्पनाऽयो-

गेनान्यथोपपत्त्यभावात्। नापि व्यवहारार्थत्वेनान्यथोपपत्तिरनादित्वादित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ अभिव्यक्तेरिति ॥ न वैदिकाग्न्यादिसूक्तादिप्रसिद्धचन्यथानुपपत्त्याऽन्येषां सूक्तादिप्रतिपाद्यत्वम्। तत्र तत्र सूक्तादौ परब्रह्मण एव प्रतिपाद्यत्वेऽग्न्यादीनामप्रतिपाद्यत्वेऽप्यग्न्यादिसूक्तादिभिर्ब्रह्मोपास्तावग्न्यादिष्वेव स्वेच्छयाब्रह्मणोऽभिव्यक्तिनियमात्तदभिप्रायेण प्रसिद्धेरुपपत्तेरित्याश्मरथ्याचार्यो वक्तीत्यर्थः ॥ २९ ॥

भावदीपः—

॥ ॐ अभिव्यक्तेरित्याश्मरथ्यः ॐ ॥ २९ ॥ अज्ञानादीति ॥ अन्यत्र मुख्यत्वभ्रांतिरादिपदार्थः ॥ व्यवहारेति ॥ इदं सूक्तमत्रोपादेयं इदमत्र हेयमित्यादिव्यवहारार्थत्वेनेत्यर्थः। तत्र तत्र प्रसिद्धावपीत्युक्तिलब्धमाह ॥ वैदिकेति ॥ तत्र तत्रेत्यादिभाष्यस्योत्तरवाक्येन साक्षादन्वयायापिपदसमुच्चयं वदन्नर्थमाह ॥ तत्र तत्रेति ॥ कर्माधीनत्वं वा अन्यत्राभिव्यक्तावशक्तत्वं वा निराह ॥ स्वेच्छयेति ॥ वक्तीति पदमनुवृत्त्यान्वयमाह ॥ वक्तीत्यर्थ इति ॥

सूत्रभाष्यम्—

## ॥ ॐ अनुस्मृतेर्बादरिः ॐ ॥ ३० ॥

तत्र तत्रोक्तस्य विष्णोरग्न्यादिष्वनुस्मर्यमाणत्वात्तन्नियम इति बादरिः ॥ ३० ॥

तत्वप्रकाशिका—

प्रकारान्तरेण सूक्तादिनियमस्यान्यथोपपत्तिं वदत्सूत्रमुपन्यस्य व्याचष्टे ॥ अनुस्मृतेरिति ॥ विष्णोरेव अग्न्यादिविद्याप्रतिपाद्यत्वेऽपि तस्य तत्तत्सू(क्तोपास)क्ताद्युपासकैरग्न्यादिष्वेव प्रतिपत्तव्यत्वाभिप्रायेणाग्न्यादिसूक्तादिनियमोपपत्तेर्न तदन्यथानुपपत्त्याऽन्येषां वाच्यत्वं वाच्यमिति बादरिराचार्यो वक्तीत्यर्थः ॥ ३० ॥

भावदीपः—

॥ ॐ अनुस्मृतेर्बादरिः ॐ ॥ ३० ॥ तत्र तत्रोक्तस्य विष्णोरित्यस्यार्थः ॥ विष्णोरेवेति ॥ अग्न्यादीनामप्रतिपाद्यत्वेऽपीत्येवार्थः ॥ ३० ॥

सूत्रभाष्यम्—

॥ ॐ सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ॐ ॥३१॥

साक्षाद्प्यविरोधं वदन् जैमिनिः सूक्तादिनियममग्न्यादिसम्प्राप्त्या मन्यते। 'तं यथा यथोपासते तदेव भवती'ति दर्शयति ॥ ३१ ॥

तत्वप्रकाशिका— रीत्यन्तरेण सूक्तादिनियमस्यान्यथोपपत्तिं कथयत्सूत्रमुपन्यस्य व्याचष्टे ॥ संपत्तेरिति ॥ अग्न्यादिसूक्तादिषु परब्रह्मण एव प्रतिपाद्यत्वेऽप्यग्न्यादिसूक्तादिभिरग्न्यादौ भगवदुपास्तावग्न्यादिप्राप्त्यभिप्रायेण सूक्तादिनियमोपपत्तेर्न तदन्यथानुपपत्त्याऽन्येषां वाच्यत्वं मन्तव्यमिति जैमिनिराचार्यो मन्यत इत्यर्थः। जैमिनिमतं किमर्थं पुनरुच्यते इति मन्दाशङ्कानिवृत्त्यर्थं लौकिकव्यवहारे साक्षाद्ब्रह्मवाचकत्वेऽपि शब्दानामविरोधं वदञ्जैमिनिः सूक्तादिव्यवहारस्याग्न्यादिप्राप्त्याऽन्यथोपपत्तिं वर्णयतीत्युक्तम्। नन्वग्न्यादिषु भगवदुपास्तावग्न्यादिप्राप्तिर्भवतीत्येतत् कुत इत्यतः सूत्रसूचितां श्रुतिमुदाहरति ॥ तमिति ॥ तदेव भवति प्राप्नुवन्ति। अत्र व्यवहारस्योपचरितत्वाङ्गीकारे प्रागुक्तैवानुपपत्तिः ॥ ३१ ॥

भावदीपः—

॥ ॐ संपत्तेरितिजैमिनिः ॐ ॥ ३१ ॥ तत्र तत्रोक्तस्य विष्णोरित्यतदनुवृत्त्यार्थमाह ॥ अग्न्यादीति ॥ परब्रह्मण एवेति ॥ अग्न्यादीनामप्रतिपाद्यत्वेऽपीत्यर्थंतयाऽवधारणोक्तिः। अर्थभेदस्य स्पष्टत्वान्मंदाशंकेत्युक्तम् ॥ प्राप्नुवंतीति ॥ भू-प्राप्ताविति धातोः परस्मैपदमेकवचनं च छांदसमिति भावः। ननु मंचक्रोशनमिति व्यवहारस्य क्रोशनवत्पुरुषसंबंधादुपचरितत्वमिव अग्निसूक्तमित्यादिव्यवहारस्य सूक्तवत्पुरुषाभिव्यक्त्यनुस्मृतिसंपत्त्यधिष्ठानत्वादुपचरितत्वमुक्तं तदयुक्तं निर्बीजत्वात्। अग्न्यादिप्रतिपादकत्वरूपमुख्यार्थेऽनुपपत्त्यभावादित्यत आह ॥ अत्रेति ॥ यथाहि वामनशब्दादिरूपनिरवकाशश्रुत्यादेरन्यत्रानुपपत्त्या अन्यत्यागेन विष्णुमेवोपेत्यांगुष्ठमात्रत्वमंगुष्ठपरिमितहृदयाकाशे स्थितत्वेन हेतुनोपचरितमिति हृद्यपेक्षया तु मनुष्याधिकारत्वादित्यत्र वक्ष्यते तथा तत्र तत्र सूक्तेषु अग्न्यादेरेव प्रतिपाद्यत्वे निरवकाशविष्णुश्रुतिर्लिंगादेः सर्वनामा सर्वकर्मेत्यादिश्रुत्यादेश्चानुपपत्तिरेव सूक्तस्य विष्णुपरत्वं मुख्यमुपेत्य व्यवहारस्योपचरतत्वांगीकारे बीजमित्यर्थः। यत्तु ऋग्भाष्ये पृथग्रूपाणि विष्णोस्तु देवतांतरगाणि च। अग्न्यादिसूक्तवाच्यानि नाम्ना

सूक्तभिधा भवेत्। इत्यग्न्यादिशब्दयोगः सूक्तादिव्यवस्थापक इत्युक्तं। तत्तु सौरसाविन्नविष्णुवामनादिसूक्तव्यवस्थार्थमपीति ज्ञेयम्॥ ३१॥

सूत्रभाष्यम्—

न ह्यन्योपासकोऽन्यं प्राप्नुत इति युज्यत इत्यत आह—

॥ ॐ आमनन्ति चैनमस्मिन् ॐ॥ ३२॥

एनं विष्णुमस्मिन्नग्न्यादावामनन्ति। 'योऽग्नौ तिष्ठन्' (बृ.उ. ५-७-५) 'य एष एतास्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुष' (बृ. उ. ४-५-३) इत्यादिना॥ ३२॥ इति वैश्वानराधिकरणम्॥ ७॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये प्रथमाध्यायस्य द्वितीयः पादः॥

तत्वप्रकाशिका—

यदुक्तं अग्न्यादिसूक्तादिभिर्ब्रह्मोपासकस्याग्न्यादिप्राप्तिरिति तच्छ्रुत्युक्तमपि न युक्तम्। 'मद्भक्ता यान्ति मामपि' इत्यादेरन्योपासकस्यान्यप्राप्तेरयोगात्। 'श्रुतोपनिषत्कगत्यभिधानाच्च' इत्यादौ तदनभ्युपगमाच्चेति भावेनाऽऽशङ्क्य तत्परिहाराय (रतया) सूत्रमवतार्य व्याचष्टे॥ न हीति॥ न विष्णूपासकस्याग्न्यादिप्राप्त्युक्तिरयुक्ता। अग्न्यादिप्राप्तिपदेन तदन्तर्गतभगवत्प्राप्तेर्विवक्षिततत्वात्। यतोऽग्न्यादावपि विष्णुमामनन्ति श्रुतय इति भावः। चशब्दः शङ्काव्यावर्तकः। अतोऽयं वैश्वानरो विष्णुरेवेति तस्यैव सर्वगततत्वमिति सिद्धम्॥ ३२॥ अ० ७॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्रभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां श्रीमत्तत्वप्रकाशिकायां प्रथमाध्यायस्य द्वितीयः पादः।

॥ श्रीरस्तु॥

भावदीपः—

॥ ॐ आमनन्ति चैनमस्मिन् ॐ॥ ३२॥ तदनभ्युपगमाच्चेति॥ न ह्यन्यविद्ययाऽन्यगतिर्युक्तेति कगत्यन्यथानुपपत्त्या कशब्दितब्रह्मण एव प्रकरणित्वाभ्युपगमादिति भावः। सौत्रचशब्दार्थमाह॥ न विष्ण्वित्यादिना॥ उपपादकत्वेन सूत्रखंडभाष्यं व्याचष्टे॥ यत इति॥ आमनन्ति नामनन्ति चेति भ्रान्तिनिरासायाऽऽह

॥ चशब्द इति ॥ यद्वा समुच्चेयाभावाद्व्यर्थोऽयं चशब्द इत्यत आह ॥ चशब्द इति ॥ तत्प्रकारः प्राग्विवृत इति भावः। तत्त्वप्रदीपे तु नैकत्रैवामनंति वाजसनेयिनः। चकारादन्यत्र च यश्चायमस्मिन्नित्यादौ अन्ये चामनंति एतमस्यां एतं दिवीत्यादि अन्यत्र तत्सृष्ट्वा तदेवानुप्राविशदित्यादि स्मरंति च यच्चंद्रमसि यच्चाग्नौ इत्यादीत्युक्तम्॥ अत इति ॥आत्मशब्दश्रुतिस्मृतिसमाख्याप्रकरणरूपसाधकभावात्। परकीयश्रुतिलिंगविद्याभेदव्यवहारविरोधादिबाधकाभावाच्चेति सर्वसौत्रहेतुभागार्थः। वैश्वानरो विष्णुरिति साध्यभागार्थः। एवेति अत एव न देवताभूतं चेति सूत्रार्थः। वाजसनेयेत्यादिवाक्यस्याप्यत्र प्रागुक्तत्वात्तत्रत्यस्य विष्णुत्वोपसंहारे तत्र तत्र सर्वगतत्वाभावेन सर्वगतत्वाक्षेपसमाध्ययोगादयमित्युक्तम्। छांदोग्यस्थ इत्यर्थः। सर्वगतत्वमिति फलोक्तिः। अत्राभिविमानपदोक्तं पूर्वत्र ततमपदोक्तं सर्वगतत्वमित्यर्थः। प्रादेशमात्रत्वं तु सर्वगतस्याप्यंगुष्ठमात्रत्वमिव अधिकार्यद्यपेक्षया हृद्यपेक्षया त्वित्यत्र समाहितं भविष्यति। केचित्स्वदेहांतर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसंतमित्यादिस्मृतेरिति भावः। यत्त्वत्र केनचिद्वैश्वानरो भूत्वेत्यत्र वैश्वानराग्न्यभेदादिविकल्पपूर्वं दूषणमुक्तं तन्न। वैश्वानरनामको वैश्वानररूपविशेषो भूत्वेत्यर्थोक्तौ दोषाभावात्। यच्च तृतीये प्रकरणादित्येव वाच्ये असंभवादित्युक्तिरयुक्तेति तच्च न। प्रकरणस्य निरवकाशत्वोक्त्यर्थत्वात्तथोक्तेः। यच्च पुरुषसूक्तवैश्वानरविद्ययोर्भिन्नार्थत्वेन वैश्वानरस्य पुरुषविधत्वायोग इति। तन्न। टीकायामेव पूर्वं समाधानात्। यदपि शब्दानां ब्रह्मणि समन्वयेऽप्यन्यत्रवृत्तेः सूत्रे प्रतिषिद्धत्वाभावेनान्यत्र(विषय) व्यवहारविरोधशंकानुदयात्तत्समाधानार्थं साक्षादित्यादिपंचसूत्री व्यर्थेत्यादि। तदप्यसारम्। प्रतिनयं तत्त्वित्यध्याहारेणान्यत्रवृत्तेः प्रतिषिद्धत्वात्। अतो यथाभाष्यटीकमुक्त एव सूत्रार्थः समंजस इति ॥ ३२ ॥ अ० ७ ॥

इति श्रीमद्भाष्यटीकाभावदीपे
राघवेंद्रयतिकृते
प्रथमाध्यायस्य
द्वितीयः पादः।
॥ श्रीरस्तु ॥

॥ श्रीः ॥

## ॥ अथ तृतीयः पादः ॥

सूत्रभाष्यम्—

॥ ॐ तत्र चान्यत्र च प्रसिद्धानां शब्दानां विष्णौ समन्वयं प्रायेणास्मिन्पादे दर्शयति । विष्णोः परविद्याविषयत्वमुक्तम् । तत्र 'यस्मिन्द्यौः पृथिवी चांतरिक्षमोतं मनः सह प्राणैश्च सर्वैस्तमेवैकं जानथ आत्मानमि' (मुं. उ. २–२–५)त्यत्र 'प्राणानां ग्रन्थिरसि रुद्रो माऽऽविशान्तकः' (म. ना. उ. ३५) 'प्राणेश्वरः कृत्तिवासाः पिनाकी' (घृतसूक्त) त्यादिना रुद्रस्य प्राणाधारत्वप्रतीतेः। 'स एषोऽन्तश्चरते बहुधा जायमानः' (मुं. उ. २–२–६) इति जीवलिङ्गाच्च तयोः प्राप्तिरित्यत उच्यते (आह. पा.)

॥ ॐ द्युभ्वाद्यायतनं स्वशब्दात् ॐ ॥ १ ॥

'तमेवैकं जानथ आत्मानमि' (मुं. उ. २–२–५)त्यात्मशब्दात् द्युभ्वाद्याश्रयो विष्णुरेव।

'आत्मब्रह्मादयः शब्दास्तमृते विष्णुमव्ययम् ।
न सम्भवन्ति यस्मात्तैर्नैवाप्ता गुणपूर्णते' ति ब्रह्मवैवर्ते ॥ १ ॥

तत्वप्रकाशिका—

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥ॐ॥ एतत्पादप्रतिपाद्यं दर्शयति ॥ तत्र चेति ॥ हरौ तदितरत्र च श्रुत्यादिप्रसिद्धनामलिङ्गात्मकशब्दानां विष्णवेकवाचित्वं प्रबलहेतुभिः प्रतिपादयत्यस्मिन्पादे सूत्रकार इत्यर्थः । चशब्दौ मिथःसमुच्चयार्थौ । देवताद्यधिकरणव्यावृत्त्यर्थं प्रायेणेति । (अ) तत्र रुद्रो वाव लोकाधारः वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि भूतानि संदृब्धानि भवन्ति आकाश एव तदोतं च प्रोतं च सर्वे वा एते प्राणाश्च प्राणिनश्च देवाश्च दिव्यानि च लोकाश्च लोकिनश्च अलोकाश्चालोकिनश्च विष्णावेवोताश्च प्रोताश्चेत्यादिनोभयत्र प्रासद्धद्युभ्वाद्यायतनत्वलिंगस्य भगवति समन्वयप्रतिपादनादस्ति शास्त्रादिसंगतिः । श्रुत्यादिसंगतिं विषयवाक्यमुदाहृत्य विषयसंशयसयुक्तिकपूर्वपक्षान् दर्शयति ॥ विष्णोरिति ॥ अदृश्यत्वादिगुणकाक्षरस्य विष्णोः परविद्याविषयत्वमुक्तम् । तत्परविद्याविषयत्वमाथर्वणे यस्मिन्द्यौरित्युक्तस्य द्युभ्वाद्यायतनस्योच्यते । तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतु-

रिति। स च यदि विष्णोरितरः स्यात्तदा परविद्याविषयत्वमन्यस्य प्रसज्येतेत्यवश्यं निर्णयः। तद्द्युभ्वाद्यायतनत्वं विषयः। तत्किं विष्णोरन्येषां वेति संदेहः। उक्त-साधारण्यमेव संदेहबीजम्। द्युभ्वाद्यायतनत्वं रुद्रप्रधानजीववायूनामिति पूर्वः पक्षः। अत्रोक्तप्राणाधारत्वस्य 'प्राणानां ग्रन्थिरसि' 'प्राणेश्वर' इत्यादिना रुद्रे प्रतीतेः। तथा द्युभ्वंतरिक्षायतनत्वस्य च 'रुद्रो वाव लोकाधार' इति तस्मिन्नुक्तत्वात्। मनआयतनत्वं च तस्मिन् 'मनो वै रुद्र ओतं च प्रोतं चेति' प्रतीयते। न चैतछ्रु-तीनां विष्णुविषयत्वं। अन्तकः कृत्तिवासाः पिनाकीत्यादिरुद्रलिंगात्। दृष्टफल-विधायकरुद्रवाक्यदृष्टान्तेन तत्सर्वाश्रयत्वप्रतिपादकवाक्यप्रामाण्यानुमानेन च तस्य सर्वाश्रयत्वसिद्धेः। द्युभ्वादीनां प्रकृतिकार्यत्वात्तदाश्रयत्वं प्रकृतेर्युक्तम्। 'यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते आकाश एव तदोतं च प्रोतं च' इति श्रुतेश्च पूर्ववत्प्रकृतेः सर्वाश्रयत्वाभिधायककापिलागमप्रामाण्यानुमानाच्च। 'अरा इव रथ-नाभौ संहता यत्र नाड्यः स एषोऽन्तश्चरते बहुधा जायमान' इति द्युभ्वाद्यायतने जीवलिङ्गश्रवणाज्जीवस्य तद्युक्तम्। तस्य जीवत्वादेव प्राणित्वप्रसिद्धेश्च। विषय-भूतलोकाधारत्वस्य 'वायुना वै गौतम सूत्रेण' इति वायौ श्रुतिसिद्धत्वात्तस्य द्युभ्वा-द्यायतनत्वं युक्तम्। तस्य प्राणाधारत्वप्रसिद्धेश्च। विष्णोर्द्युभ्वाद्यायतनत्वप्रसिद्धा-वपि नासावत्रोच्यते। बहुधा जन्मबाधात्। परविद्याविषयत्वलिङ्गाद्विष्णुरिति चेन्न। जीवेशाभेदेन ब्रह्मगतलिङ्गस्यापि जीवे संभवात्। न च तथा बहुधा जन्म संभवति। कारणगतस्यैव कार्ये संभवात्। अतः परविद्याविषयो द्युभ्वाद्याश्रयो विष्णोरितर एवेति तस्यैवादृश्यत्वादिगुणकत्वमिति भावः। सिद्धांतयत्सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ द्युभ्वाद्यायतने स्वशब्दपर्यायात्मशब्दश्रवणाद्द्युभ्वाद्यायतनं विष्णुरेवेत्यर्थः। आत्मशब्दादपि कुतो विष्णुरित्यत आह ॥ आत्मेति ॥ १ ॥

भावदीपः—

श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः।
॥ ॐ द्युभ्वाद्यायतनं स्वशब्दात् ॐ ॥ १ ॥ पूर्वोक्तदिशा पादार्थत्वाप्रतीतेराह ॥ एतदिति ॥ हराविति ॥ एषां शब्दानां लोके हराविवान्यत्राप्रयोगात् व्यक्तिविशेष-निर्णयाय श्रुत्यंतरान्वेषणे श्रुत्यंतरेऽन्यत्रेव हरावपि प्रयोगात् श्रुतिसाधारण्येन वा आदिपदोक्तेन भूमाक्षरादिनये वक्ष्यमाणदिशा प्रक्रमसमाख्यासाधारण्येन वा प्रवृत्ति-निमित्तसाधारण्येन वा पूर्वोक्तन्यायलोकप्रयोगाभ्यां वा प्रसिद्धानामेकोपस्थापन-दशायामन्यस्याप्युपस्थापकानामिति यावत् साक्षाद्धर्मिवाचिनां धर्मद्वारा धर्मिवाचिनां

च शब्दानामित्यर्थः। पूर्वं नामलिंगानां प्राधान्याप्राधान्याभ्यां पौर्वापर्यात्पादभेदेन समन्वयोक्तावपि इह नाम्नां प्राधान्यात् लिंगानां समन्वितत्वेन बुद्धिस्थत्वात् उभयानुरोधेनोभयेषामप्येकत्रैव समन्वयोक्तिरिति भावः। प्रागेव विष्णौ दत्तपदत्वात् किमत्र कार्यमित्यतः समन्वयपदार्थं व्यनक्ति ॥ विष्ण्वेकवाचित्वमिति ॥ तत्रान्यत्र प्रसिद्धानां लिंगनाम्नां पुनर्हरिः। विशेषान्मुख्यतो वृत्तिं स्वस्मिन्नेवात्र वक्त्यज इत्यनुव्याख्यानोक्तेः। अन्यथा तन्नित्यत्वधारणायोग इति भावः। श्रुत्यादिप्रसिद्धेत्युक्तं श्रुतिसाधारण्येनोभयत्रप्रसिद्धत्वं न्यायविवरणोक्तश्रुत्युक्त्या व्यंजयन्नस्य पादांतर्भावमाह ॥ तत्रेति ॥ एवं पादार्थे सतीत्यर्थः। अत्रेति पाठे अधिकरण इत्यर्थः। साधारण्योक्तिपरन्यायविवरणे रुद्रो वै लोकायतनमिति वाक्योक्तावपि पूर्वपक्षन्यायविवरणे रुद्रो वाव लोकाधार इति वाक्यदर्शनात्तस्यैवात्रोक्तिः स्यूतमस्मिन् जगदिति सूत्रम्। संदृब्धानि संगतान्येव। तदाधारतया स्थितान्येवेति। न्यायविवरणस्थादिपदोपात्तां श्रुतिमाह ॥ आकाश इति ॥ प्रकृतावित्यर्थः। आकाशशब्दः प्रकृतिपर इत्यक्षरनये स्पष्टमिति भावः। विष्णुपरत्वेन साक्षादुपात्तश्रुतिमाह ॥ सर्वे वा इति ॥ प्राणा इंद्रियाणि। प्राणिनो देहिनः। प्राणिग्रहणेन गृहीतानामपि देवानां प्राधान्यज्ञापनाय पुनर्ग्रहणम्। दिवि भवानि दिव्यानि कल्पतरुप्रभृतीनि वस्तूनि। लोका भूरादयः। तदभिमानिनो लोकिनः। पूर्ववत्पुनर्ग्रहणम्। भूरादिभ्योऽन्ये वैकुण्ठादयोऽलोकाः। तद्गता मुक्ता अलोकिनः ॥ ओताश्च प्रोताश्चेति ॥ अत्यंतमाश्रिता इत्यर्थः इत्यन्यत्र टीकाकृद्व्याख्यातेयं श्रुतिः ॥ उभयत्रेति ॥ हरौ तदितरत्र चेत्यर्थः। विष्ण्वितरकोटेरनेकत्वेऽपि विष्ण्वितरत्वेनैकीकरणादुभयत्रेत्युक्तिः। जीवस्यापीतरकोटित्वेनात्राभिमतत्वेऽपि जीवपरसमाख्याभावेन तत्साधारण्याभावेऽपि पूर्वपक्षकोटिषु रुद्रवायुप्रकृतिषु क्वचित्प्रसिद्धिमात्रेणोभयत्रप्रसिद्धिसंभवादिति भावः। यद्वा इत्यादिनेत्यादिपदेन जायमानत्वलिंगग्रहः। अधिकं चंद्रिकायां बोध्यम्। भाष्ये प्रकृतिकोटेरनुक्तावपि तत्वनिर्णये न प्रकृतिजीवावित्युक्त्या भाष्येऽपि सा उपलक्ष्येति भावः। तथा च वक्ष्यत्यभाषितमित्यादिना स्वयमेव ॥ शास्त्रादीति ॥ भगवतीत्युक्त्या शास्त्रे समन्वयेत्युक्त्याऽध्याये उभयत्रप्रसिद्धेरित्युक्त्या पादे अंतर्भावसंगतिरुपपादितेति व्यक्तम्। एवमग्रेऽपि। इत्यंतभाष्यं संगतिपरत्वेन तावद्व्याचष्टे ॥ अदृश्यत्वादीति ॥ उक्तमित्यंतभाष्यस्यायमर्थः। आत्मानमित्यत्रेत्यंतवाक्यार्थस्तत्परविद्याविषयत्वमित्यादि। अत्र भाष्यानुक्तवाक्यशेषोक्तिः सिद्धांतोपयोगाय वा मुक्तिहेतुज्ञानस्यैव परविद्यात्वात् जानथ इत्युक्तज्ञानस्यामृतपदलब्धमुक्तिहेतुत्वसूचनाय वेति भावः। तत्वप्रदीपे तु

अनन्ययोगेन प्रधानज्ञेयत्वं ह्यत्रोच्यते। तदेव च परविद्याविषयत्वमिति यथाश्रुतभाष्येणैव परविद्याविषयत्वलाभो व्याख्यातः। प्राणानां ग्रंथिरसीत्यादिकृत्स्नभाष्यशेषस्य तात्पर्यम्॥ स चेति॥ द्युभ्वाद्यायतनभूत आत्मेत्यर्थः। द्युभ्वाद्यायतनस्योच्यत इत्युक्तस्य तच्चेति पदेन परामर्शे कार्येऽपि स चेति तादृशात्मपरामर्शस्तु परविद्याविषयत्वाक्षेपसौकर्याय॥ इतरस्स्यादिति॥ रुद्रादिसमाख्याबलात् रुद्रादिरित्यर्थः। उक्तमित्यंतभाष्यस्य भावमाह॥ तदेति॥ इतिसंगतिसंभवादित्यर्थः। सूत्रे धर्मिनिर्देशेऽपि तयोरिति भाष्यानुरोधात् द्युभ्वाद्यायतनत्वं विषय इत्युक्तम्। आदिपदेनांतरिक्षप्राणमनसां संग्रहः। भाष्ये तयोरिति द्विवचनोक्तावपि अग्रे वायुश्च इत्युक्तेरन्येषामित्युक्तम्। तदेव भाष्यं पूर्वपक्षतद्युक्तितत्फलोक्तिपरतया व्याकुर्वन् तयोः प्राप्तिरिति प्रतिज्ञांशं व्याचष्टे॥ द्युभ्वादीति॥ तयोरित्युपलक्षणमिति भावः। एतत्कोटिचतुष्टयं द्विशो द्विशः क्रमेण नानुमानं प्राणभृच्चेति सूत्रद्वयव्यावर्त्यं बोध्यम्। अत एवैवं निर्देशः। यस्मिन्नित्यादेः प्रतीतेरित्यंतस्यार्थः अत्रेत्यादि। यस्मिन् द्यौरित्यादिवाक्योक्तेत्यर्थः। अत्र श्रुतौ जानथ आत्मानमिति विवृतिः सर्ववैलक्षण्यप्रदर्शनायेति तत्वप्रदीपोक्तिः। अतच्छब्दादिति सौत्रखंडव्यावर्त्योक्तिपरं प्राणानामित्यादिभाष्यं व्याकुर्वन् प्राणाधारत्वप्रत्यायकांशमाह॥ प्राणानामिति॥ श्रुत्यर्थस्तु तदभिध्यानादेव तु तल्लिंगात्स इत्यत्राग्रे टीकायां व्यक्तः। न्यायविवरणे यस्मिन्द्यौरित्यत्रोक्तानां लिंगानामन्यत्र रुद्रादिविषयत्वे शब्दबाहुल्यमित्युक्तलिंगत्रये समाख्यात्रयमुक्तम्। तत्रैकत्र प्राणाधारत्वलिंगे वाक्यद्वयोक्त्या एका समाख्या भाष्ये प्रकटिता। शिष्टं द्वयं स्वयमाह॥ तथेति॥ लोकाधार इति समाख्यया ऐकार्थ्याय द्युभ्वंतरिक्षेत्येतावदंशोक्तिः। यद्वा द्युभ्वाद्यायतनस्येत्युक्ते पूर्वत्रेवाऽऽदिपदेन प्राणमनसोरपि ग्रहणशंका स्यादित्यतो द्युभ्वंतरिक्षेत्युक्तिः। तस्मिन्निति स्ववचनम्। प्रतीयत इत्यन्वयः। मनो वै रुद्र इति तु समाख्याश्रुतिः। भाष्ये श्रुतिशेषोक्तेरुपयोगं शंकापूर्वमाह॥ न चेति॥ अंतर्नये आधिदैविकसर्वशब्दानां महायोगविद्वद्रूढिभ्यां विष्णुनिष्ठत्वोक्तेरिति भावः। अनेकश्रुत्युक्तिर्लिंगबाहुल्योक्त्यर्थेति मत्वोक्तमित्यादीति। एतेनान्यत्रोक्तसमाख्यात्रये प्राणाधारत्वसमाख्याया एव भाष्ये पाठः श्रुत्युज्जीवकलिंगोक्त्यर्थः। बाहुल्यं लिंगशब्दानामित्यनुव्याख्याने लिंगोक्तिः शब्दोज्जीवनायेति च दर्शितम्। तथा चात्र समाख्याश्रुतौ विष्णुलिंगाभावात् प्रत्युतान्यलिंगानामेव श्रवणेनांतर्नयन्यायाविषयत्वात् श्रुतयोऽपि निरवकाशा इति भावः। नानुमानात्मकागमपरिकल्पितरुद्रोऽत्र वाच्य

इति भाष्योक्तां सौत्रानुमानपदलब्धां युक्तिमाह ॥ दृष्टफलेति ॥ रुद्रवाक्येति ॥ पाशुपतादिरूपेत्यर्थः ॥ अनुमानेन चेति ॥ न केवलं श्रुतिलिंगबाहुल्येन रुद्रपरत्वेन सिद्धसमाख्यानादिति चार्थः । तथा च नैव शास्त्रं कुवर्त्म तदिति पूर्वं तदप्रामाण्यमुक्तमिति न शंक्यमिति भावः । यद्यपि शैवाद्यागमसंप्राप्तदृष्टगेन फलेन च । तद्वाक्योपमयान्यच्च प्रमाणत्वेऽनुमीयते । ईशवाक्यत्वत इति चेत्तद्गव्यभिचारिणा । अप्रामाण्यानुमा च स्यात् इति शास्त्रयोनिनयानुव्याख्याने एवैषा युक्तिराशंक्य निरस्ता । तथापीह श्रुतिलिंगबाहुल्येन प्रबलसमाख्यारूपहेत्वंतरेण पूर्वपक्षे तद्बलेनेयमभ्युच्चयत्वेनोक्ता । यथा सर्वत्रप्रसिद्धेत्यत्रार्भकौकस्त्वेन सिद्धे चोद्येऽभ्युच्चयत्वेन चक्षुर्मयत्वाद्युक्तिस्तद्वत् । अत एवात्र सूत्रादावतच्छब्दादिति रुद्रश्रुतिलिंगासत्त्वोक्त्या समाख्यायाः सावकाशत्वमेवोच्यते न त्वागमाप्रामाण्यमिति भावः । यद्वा रुद्रो वाव लोकाधार इत्यादिश्रुत्या रुद्रादेः सर्वाधारत्वप्राप्तौ तद्बलेन तादृशागमस्यापि प्रामाण्यसंभवेनाप्रामाण्यानुमानस्य बाधितत्वात्तदवष्टंभेन पूर्वपक्षो युक्तः । समाधिस्तु समाख्याया विष्णुपरत्वसाधनेनैव सेत्स्यतीति भावः । तत्वनिर्णयोक्तप्रकृतिकोटिमपि सोपपत्तिकमुपपादयति ॥ द्युभ्वादीनामिति ॥ खंडितं रूपमेवात्र विकारोऽपि विकारिण इत्युक्त्या भेदस्यापि भावेनाश्रयाश्रयिभावो न विरुद्ध इत्युपेत्य युक्तमित्युक्तम् । यत्किंच जगत्यां जगदिति निर्देशवदिति भावः ॥ पूर्ववदिति ॥ दृष्टफलेत्यादिपूर्वोक्तदिशेत्यर्थः । स एषोंऽतरिति भाष्यं सर्वनामपरामर्शं दर्शयन् व्याचष्टे ॥ अरा इवेति ॥ प्राणभृच्चेति सौत्रपदसूचितां युक्तिमाह ॥ तस्येति ॥ जीवप्राणधारण इति धातोरिति भावेन जीवत्वादेवेत्युक्तिः । प्राणभृच्चेति चशब्दसूचितकोटिं सयुक्तिकं व्यनक्ति ॥ विषयेति ॥ प्रसिद्धेश्चेति ॥ एवमेवैष प्राण इतरान् प्राणान् पृथक्पृथगेव सन्निधत्त इत्यादावित्यर्थः ॥ विष्णोरिति ॥ प्रागुक्तश्रुताविति भावः । ॥ बहुधा जन्मेति ॥ जीवे तु ज्ञोऽत एवेत्यत्रत्यन्यायेन देहाभिप्रायेण जन्मनो योगेऽपि देहतोऽप्यजायमाने हरौ जन्मायोगादिति भावः । प्रागुक्तदिशा निरवकाशत्वेन प्रबलरुद्रसमाख्याबाधाच्चेत्यपि ज्ञेयम् । भेदसूत्रव्यावर्त्यमाह ॥ जीवेशेति ॥ ब्रह्मगतेति ॥ तथा च प्रागुक्तहेयत्वावचनादिकं जीवे संभवतीति न तेनापि विष्णोरवकाश इति भावः ॥ अत इति ॥ उक्तरीत्या निरवकाशसमाख्याऽऽगमप्रामाण्यानुमानजायमानत्वप्राणाधारत्वलिंगरूपाणामितरप्रापकाणां विष्णौ बाधकानां सत्त्वात् । अभेदेन परविद्याविषयत्वादिब्रह्मलिंगानां जीवे संभवाच्चेत्यर्थः । तयोरित्युपलक्षणं

मत्वा चतुर्णामुपसंहारो विष्ण्वितर इति। एवेत्युक्तिस्तु चतुर्णां मध्येऽन्यतमानिर्णयेऽपि पूर्वपक्षस्य न संदेहादविशेषः। विष्ण्वितर एवेत्यवधारणसंभवादिति दर्शयितुम्। उक्तमित्यंतभाष्यतात्पर्यमाह ॥ तस्यैवेति ॥ छ ॥ तमेवेति भाष्यं हेतुसाध्ययोर्वैयधिकरण्यनिरासाय व्याचष्टे ॥ द्युभ्वादीति ॥ सूत्रविसंवादनिरासाय स्वशब्दपर्यायात्मशब्दाच्च न प्रकृतिजीवावभिधीयेते इति तत्वनिर्णयोक्तमर्थमाह ॥ स्वशब्देति ॥ श्रुतौ स्वशब्दाभावाद्वाचकशब्दांतरस्याप्यदर्शनादिति तट्टीकोक्तं तात्पर्यं ध्येयम्। अधिकं चंद्रिकायाम्। तत्त्वित्यनुवृत्तस्यार्थो विष्णुरेवेति ॥ १ ॥

सूत्रभाष्यम्—

॥ ॐ मुक्तोपसृप्यव्यपदेशात् ॐ ॥ २ ॥

'अमृतस्यैष सेतुरि'(मुं. उ. २–२–५) ति 'ब्रह्मविदाप्नोति परम्', (तै. उ. २–१) 'नारायणं महाज्ञेयं विश्वात्मानं परायणम्' (म. ना. उ. ११) 'मुक्तानां परमा गतिः' (विष्णुसहस्र०) 'एतमानन्दमयमात्मानमुपसङ्क्रामती' (तै.उ.२–८) त्यादिना तस्यैव मुक्तप्राप्यत्वव्यपदेशात्।

'बहुनाऽत्र किमुक्तेन यावच्छ्वेतं न गच्छति।
योगी तावन्न मुक्तस्स्यादेष शास्त्रविनिर्णयः' ॥ इत्यादित्यपुराणे ॥ २ ॥

तत्वप्रकाशिका—

ननु विष्णौ मुख्योऽप्यात्मशब्दो जीवलिङ्गबलादमुख्यार्थः किं न स्यात्। तथा च न विष्णोर्द्युभ्वाद्यायतनत्वमित्याशङ्कां परिहरत्सूत्रमुपन्यस्य तदुपात्तश्रुतिमेवोदाहरति ॥ मुक्तेति ॥ नाऽऽत्मशब्दस्यामुख्यार्थत्वं परिकल्प्य द्युभ्वाद्यायतनत्वमन्यत्र नेतुं शक्यम्। द्युभ्वाद्यायतनस्य मुक्तप्राप्यत्वोक्तेर्विष्णुत्वनिश्चयादित्यर्थः। अमृतस्येति जातावेकवचनम्। मुक्तप्राप्यत्वं कुतो विष्णुत्वनिश्चायकमित्यत आह ॥ ब्रह्मविदिति ॥ पराणां मुक्तानामयनमाश्रयः। एतद्वाक्यैरस्तु विष्णोर्मुक्तप्राप्यत्वं तदन्यस्यापि किं न स्यादित्यत आह ॥ बहुनेति ॥ २ ॥

भावदीपः—

॥ ॐ मुक्तोपसृप्यव्यपदेशात् ॐ ॥ २ ॥ सूत्रे चशब्दाभावात् पूर्वहेतोरन्यथोपपत्तिनिरासकत्वेनावतारयति ॥ नन्विति ॥ इत्यंतभाष्यस्य सूत्रेणान्वयमुपेत्य

च शब्दानामित्यर्थः। पूर्वं नामलिंगानां प्राधान्याप्राधान्याभ्यां पौर्वापर्यात्पादभेदेन समन्वयोक्तावपि इह नाम्नां प्राधान्यात् लिंगानां समन्वितत्वेन बुद्धिस्थत्वात् उभयानुरोधेनोभयेषामप्येकत्रैव समन्वयोक्तिरिति भावः। प्रागेव विष्णौ दत्तपदत्वात् किमत्र कार्यमित्यतः समन्वयपदार्थं व्यनक्ति ॥ विष्ण्वेकवाचित्वमिति ॥ तत्रान्यत्र प्रसिद्धानां लिंगनाम्नां पुनर्हरिः। विशेषान्मुख्यतो वृत्तिं स्वस्मिन्नेवात्र वक्त्यज इत्यनुव्याख्यानोक्तेः। अन्यथा तदिवत्यवधारणायोग इति भावः। श्रुत्यादिप्रसिद्धेत्युक्तं श्रुतिसाधारण्येनोभयत्रप्रसिद्धत्वं न्यायविवरणोक्तश्रुत्युक्त्या व्यंजयन्नस्य पादांतर्भावमाह ॥ तत्रेति ॥ एवं पादार्थे सतीत्यर्थः। अत्रेति पाठे अधिकरण इत्यर्थः। साधारण्योक्तिपरन्यायविवरणे रुद्रो वै लोकायतनमिति वाक्योक्तावपि पूर्वपक्षन्यायविवरणे रुद्रो वाव लोकाधार इति वाक्यदर्शनात्तस्यैवात्रोक्तिः स्यूतमस्मिन् जगदिति सूत्रम्। संदृब्धानि संगतान्येव। तदाधारतया स्थितान्येवेति। न्यायविवरणस्थादिपदोपात्तां श्रुतिमाह ॥ आकाश इति ॥ प्रकृतावित्यर्थः। आकाशशब्दः प्रकृतिपर इत्यक्षरनये स्पष्टमिति भावः। विष्णुपरत्वेन साक्षादुपात्तश्रुतिमाह ॥ सर्वे वा इति ॥ प्राणा इंद्रियाणि। प्राणिनो देहिनः। प्राणिग्रहणेन गृहीतानामपि देवानां प्राधान्यज्ञापनाय पुनर्ग्रहणम्। दिवि भवानि दिव्यानि कल्पतरुप्रभृतीनि वस्तूनि। लोका भूरादयः। तदभिमानिनो लोकिनः। पूर्ववत्पुनर्ग्रहणम्। भूरादिभ्योऽन्ये वैकुण्ठादयोऽलोकाः। तद्गता मुक्ता अलोकिनः ॥ ओताश्च प्रोताश्चेति ॥ अत्यंतमाश्रिता इत्यर्थः इत्यन्यत्र टीकाकृद्व्याख्यातेयं श्रुतिः ॥ उभयत्रेति ॥ हरौ तदितरत्र चेत्यर्थः। विष्ण्वतरकोटेरनेकत्वेऽपि विष्ण्वतरत्वेनैकीकरणादुभयत्रेत्युक्तिः। जीवस्यापीतरकोटित्वेनात्राभिमतत्वेऽपि जीवपरसमाख्याभावेन तत्साधारण्याभावेऽपि पूर्वपक्षकोटिषु रुद्रवायुप्रकृतिषु क्वचित्प्रसिद्धिमात्रेणोभयत्रप्रसिद्धिसंभवादिति भावः। यद्वा इत्यादिनेत्यादिपदेन जायमानत्वलिंगग्रहः। अधिकं चंद्रिकायां बोध्यम्। भाष्ये प्रकृतिकोटेरनुक्तावपि तत्वनिर्णये न प्रकृतिजीवावित्युक्त्या भाष्येऽपि सा उपलक्ष्येति भावः। तथा च वक्ष्यत्यभाषितमित्यादिना स्वयमेव ॥ शास्त्रादीति ॥ भगवतीत्युक्त्या शास्त्रे समन्वयेत्युक्त्याऽध्याये उभयत्रप्रसिद्धेरित्युक्त्या पादे अंतर्भावसंगतिरुपपादितेति व्यक्तम्। एवमग्रेऽपि। इत्यंतभाष्यं संगतिपरत्वेन तावद्व्याचष्टे ॥ अदृश्यत्वादीति ॥ उक्तमित्यंतभाष्यस्यायमर्थः। आत्मानमित्यत्रेत्यंतवाक्यार्थस्तत्परविद्याविषयत्वमित्यादि। अत्र भाष्यानुक्तवाक्यशेषोक्तिः सिद्धांतोपयोगाय वा मुक्तिहेतुज्ञानस्यैव परविद्यात्वात् जानथ इत्युक्तज्ञानस्यामृतपदलब्धमुक्तिहेतुत्वसूचनाय वेति भावः। तत्वप्रदीपे तु

अनन्ययोगेन प्रधानज्ञेयत्वं ह्यत्रोच्यते। तदेव च परविद्याविषयत्वमिति यथाश्रुतभाष्येणैव परविद्याविषयत्वलाभो व्याख्यातः। प्राणानां ग्रंथिरसीत्यादिकृत्स्नभाष्यशेषस्य तात्पर्यम्॥ स चेति॥ द्युभ्वाद्यायतनभूत आत्मेत्यर्थः। द्युभ्वाद्यायतनस्योच्यत इत्युक्तस्य तच्चेति पदेन परामर्शे कार्येऽपि स चेति तादृशात्मपरामर्शस्तु परविद्याविषयत्वाक्षेपसौकर्याय॥ इतरस्स्यादिति॥ रुद्रादिसमाख्याबलात् रुद्रादिरित्यर्थः। उक्तमित्यंतभाष्यस्य भावमाह॥ तदेति॥ इतिसंगतिसंभवादित्यर्थः। सूत्रे धर्मिनिर्देशेऽपि तयोरिति भाष्यानुरोधात् द्युभ्वाद्यायतनत्वं विषय इत्युक्तम्। आदिपदेनांतरिक्षप्राणमनसां संग्रहः। भाष्ये तयोरिति द्विवचनोक्तावपि अग्रे वायुश्च इत्युक्तेरन्येषामित्युक्तम्। तदेव भाष्यं पूर्वपक्षतद्युक्तितत्फलोक्तिपरतया व्याकुर्वन् तयोः प्राप्तिरिति प्रतिज्ञांशं व्याचष्टे॥ द्युभ्वादीति॥ तयोरित्युपलक्षणमिति भावः। एतत्कोटिचतुष्टयं द्विशो द्विशः क्रमेण नानुमानं प्राणभृच्चेति सूत्रद्वयव्यावर्त्यं बोध्यम्। अत एवैवं निर्देशः। यस्मिन्नित्यादेः प्रतीतेरित्यंतस्यार्थः अत्रेत्यादि। यस्मिन् द्यौरित्यादिवाक्योक्तेत्यर्थः। अत्र श्रुतौ जानथ आत्मानमिति विवृतिः सर्ववैलक्षण्यप्रदर्शनायेति तत्वप्रदीपोक्तिः। अतच्छब्दादिति सौत्रखंडव्यावर्त्योक्तिपरं प्राणानामित्यादिभाष्यं व्याकुर्वन् प्राणाधारत्वप्रत्यायकांशमाह॥ प्राणानामिति॥ श्रुत्यर्थस्तु तदभिध्यानादेव तु तल्लिंगात्स इत्यत्राग्रे टीकायां व्यक्तः। न्यायविवरणे यस्मिन्द्यौरित्यत्रोक्तानां लिंगानामन्यत्र रुद्रादिविषयत्वे शब्दबाहुल्यमित्युक्तलिंगत्रये समाख्यात्रयमुक्तम्। तत्रैकत्र प्राणाधारत्वलिंगे वाक्यद्वयोक्त्या एका समाख्या भाष्ये प्रकटिता। शिष्टं द्वयं स्वयमाह॥ तथेति॥ लोकाधार इति समाख्यया ऐकार्थ्याय द्युभ्वंतरिक्षेत्येतावदंशोक्तिः। यद्वा द्युभ्वाद्यायतनस्येत्युक्ते पूर्वत्रेवाऽऽदिपदेन प्राणमनसोरपि ग्रहणशंका स्यादित्यतो द्युभ्वंतरिक्षेत्युक्तिः। तस्मिन्निति स्ववचनम्। प्रतीयत इत्यन्वयः। मनो वै रुद्र इति तु समाख्याश्रुतिः। भाष्ये श्रुतिशेषोक्तेरुपयोगं शंकापूर्वमाह॥ न चेति॥ अंतर्नये आधिदैविकसर्वशब्दानां महायोगविद्वद्रूढिभ्यां विष्णुनिष्ठत्वोक्तेरिति भावः। अनेकश्रुत्युक्तिर्लिंगबाहुल्योक्त्यर्थेति मत्वोक्तमित्यादीति। एतेनान्यत्रोक्तसमाख्यात्रये प्राणाधारत्वसमाख्याया एव भाष्ये पाठः श्रुत्युज्जीवकलिंगोक्त्यर्थः। बाहुल्यं लिंगशब्दानामित्यनुव्याख्याने लिंगोक्तिः शब्दोज्जीवनायेति च दर्शितम्। तथा चात्र समाख्याश्रुतौ विष्णुलिंगाभावात् प्रत्युतान्यलिंगानामेव श्रवणेनांतर्नयन्यायाविषयत्वात् श्रुतयोऽपि निरवकाशा इति भावः। नानुमानात्मकागमपरिकल्पितरुद्रोऽत्र वाच्य

इति भाष्योक्तां सौत्रानुमानपदलब्धां युक्तिमाह ॥ दृष्टफलेति ॥ रुद्रवाक्येति ॥ पाशुपतादिरूपेत्यर्थः ॥ अनुमानेन चेति ॥ न केवलं श्रुतिलिंगबाहुल्येन रुद्रपरत्वेन सिद्धसमाख्यानादिति चार्थः। तथा च नैव शास्त्रं कुवर्त्म तदिति पूर्वं तदप्रामाण्यमुक्तमिति न शंक्यमिति भावः। यद्यपि शैवाद्यागमसंप्राप्तदृष्टगेन फलेन च। तद्वाक्योपमयान्यच्च प्रमाणत्वेऽनुमीयते। ईशवाक्यत्वत इति चेत्तद्गव्यभिचारिणा। अप्रामाण्यानुमा च स्यात् इति शास्त्रयोनिनयानुव्याख्याने एवैषा युक्तिराशंक्य निरस्ता। तथापीह श्रुतिलिंगबाहुल्येन प्रबलसमाख्यारूपहेत्वंतरेण पूर्वपक्षे तद्बलेनेयमभ्युच्चयत्वेनोक्ता। यथा सर्वत्रप्रसिद्धेत्यत्रार्भकौकस्त्वेन सिद्धे चोद्येऽभ्युच्चयत्वेन चक्षुर्मयत्वाद्युक्तिस्तद्वत्। अत एवात्र सूत्रादावतच्छब्दादिति रुद्रश्रुतिलिंगासत्त्वोक्त्या समाख्यायाः सावकाशत्वमेवोच्यते न त्वागमाप्रामाण्यमिति भावः। यद्वा रुद्रो वाव लोकाधार इत्यादिश्रुत्या रुद्रादेः सर्वाधारत्वप्राप्तौ तद्बलेन तादृशागमस्यापि प्रामाण्यसंभवेनाप्रामाण्यानुमानस्य बाधितत्वात्तदवष्टंभेन पूर्वपक्षो युक्तः। समाधिस्तु समाख्याया विष्णुपरत्वसाधनेनैव सेत्स्यतीति भावः। तत्वनिर्णयोक्तप्रकृतिकोटिमपि सोपपत्तिकमुपपादयति ॥ द्युभ्वादीनामिति ॥ खंडितं रूपमेवात्र विकारोऽपि विकारिण इत्युक्त्या भेदस्यापि भावेनाश्रयाश्रयिभावो न विरुद्ध इत्युपेत्य युक्तमित्युक्तम्। यत्किंच जगत्यां जगदिति निर्देशवदिति भावः ॥ पूर्ववदिति ॥ दृष्टफलेत्यादिपूर्वोक्तदिशेत्यर्थः। स एषोंऽतररिति भाष्यं सर्वनामपरामर्शं दर्शयन् व्याचष्टे ॥ अरा इवेति ॥ प्राणभृच्चेति सौत्रपदसूचितां युक्तिमाह ॥ तस्येति ॥ जीवप्राणधारण इति धातोरिति भावेन जीवत्वादेवेत्युक्तिः। प्राणभृच्चेति चशब्दसूचितकोटिं सयुक्तिकं व्यनक्ति ॥ विषयेति ॥ प्रसिद्धेश्चेति ॥ एवमेवैष प्राण इतरान् प्राणान् पृथक्पृथगेव सन्निधत्त इत्यादावित्यर्थः ॥ विष्णोरिति ॥ प्रागुक्तश्रुताविति भावः। ॥ बहुधा जन्मेति ॥ जीवे तु ज्ञोऽत एवेत्यत्रत्यन्यायेन देहाभिप्रायेण जन्मनो योगेऽपि देहतोऽप्यजायमाने हरौ जन्मायोगादिति भावः। प्रागुक्तदिशा निरवकाशत्वेन प्रबलरुद्रसमाख्याबाधाच्चेत्यपि ज्ञेयम्। भेदसूत्रव्यावर्त्यमाह ॥ जीवेशेति ॥ ब्रह्मगतेति ॥ तथा च प्रागुक्तहेयत्वावचनादिकं जीवे संभवतीति न तेनापि विष्णोरवकाश इति भावः ॥ अत इति ॥ उक्तरीत्या निरवकाशसमाख्याऽऽगमप्रामाण्यानुमानजायमानत्वप्राणाधारत्वलिंगरूपाणामितरप्रापकाणां विष्णौ बाधकानां सत्त्वात्। अभेदेन परविद्याविषयत्वादिब्रह्मलिंगानां जीवे संभवाच्चेत्यर्थः। तयोरित्युपलक्षणं

मत्वा चतुर्णामुपसंहारो विष्ण्वतर इति। एवेत्युक्तिस्तु चतुर्णां मध्येऽन्यतमानिर्णयेऽपि पूर्वपक्षस्य न संदेहादविशेषः। विष्ण्वतर एवेत्यवधारणसंभवादिति दर्शयितुम्। उक्तमित्यंतभाष्यतात्पर्यमाह ॥ तस्यैवेति ॥ छ ॥ तमेवेति भाष्यं हेतुसाध्ययोर्वैयधिकरण्यनिरासाय व्याचष्टे ॥ द्युभ्वादीति ॥ सूत्रविसंवादनिरासाय स्वशब्दपर्यायात्मशब्दाच्च न प्रकृतिजीवावभिधीयेते इति तत्वनिर्णयोक्तमर्थमाह ॥ स्वशब्देति ॥ श्रुतौ स्वशब्दाभावाद्वाचकशब्दांतरस्याप्यदर्शनादिति तट्टीकोक्तं तात्पर्यं ध्येयम्। अधिकं चंद्रिकायाम्। तत्त्वित्यनुवृत्तस्यार्थो विष्णुरेवेति ॥ १ ॥

सूत्रभाष्यम्—

॥ ॐ मुक्तोपसृप्यव्यपदेशात् ॐ ॥ २ ॥

'अमृतस्यैष सेतुरि'(मुं. उ. २–२–५) ति 'ब्रह्मविदाप्नोति परम्', (तै. उ. २–१) 'नारायणं महाज्ञेयं विश्वात्मानं परायणम्' (म. ना. उ. ११) 'मुक्तानां परमा गतिः' (विष्णुसहस्र०) 'एतमानन्दमयमात्मानमुपसङ्क्रामती' (तै.उ.२–८) त्यादिना तस्यैव मुक्तप्राप्यत्वव्यपदेशात्।

'बहुनाऽत्र किमुक्तेन यावच्छ्वेतं न गच्छति।
योगी तावन्न मुक्तस्स्यादेष शास्त्रविनिर्णयः' ॥ इत्यादित्यपुराणे ॥ २ ॥

तत्वप्रकाशिका—

ननु विष्णौ मुख्योऽप्यात्मशब्दो जीवलिङ्गबलादमुख्यार्थः किं न स्यात्। तथा च न विष्णोर्द्युभ्वाद्यायतनत्वमित्याशङ्कां परिहरत्सूत्रमुपन्यस्य तदुपात्तश्रुतिमेवोदाहरति ॥ मुक्तेति ॥ नाऽऽत्मशब्दस्यामुख्यार्थत्वं परिकल्प्य द्युभ्वाद्यायतनत्वमन्यत्र नेतुं शक्यम्। द्युभ्वाद्यायतनस्य मुक्तप्राप्यत्वोक्तेर्विष्णुत्वनिश्चयादित्यर्थः। अमृतस्येति जातावेकवचनम्। मुक्तप्राप्यत्वं कुतो विष्णुत्वनिश्चायकमित्यत आह ॥ ब्रह्मविदिति ॥ पराणां मुक्तानामयनमाश्रयः। एतद्वाक्यैरस्तु विष्णोर्मुक्तप्राप्यत्वं तदन्यस्यापि किं न स्यादित्यत आह ॥ बहुनेति ॥ २ ॥

भावदीपः—

॥ ॐ मुक्तोपसृप्यव्यपदेशात् ॐ ॥ २ ॥ सूत्रे चशब्दाभावात् पूर्वहेतोरन्यथोपपत्तिनिरासकत्वेनावतारयति ॥ नन्विति ॥ इत्यंतभाष्यस्य सूत्रेणान्वयमुपेत्य

भावप्राधान्येन योग्यसाध्याध्याहारपूर्वं सूत्रार्थमाह ॥नाऽऽत्मशब्दस्येति॥ मुक्तानामिति वाक्यमनुरुध्याऽऽह ॥ जाताविति ॥ भाष्ये तस्यैवेत्यस्य विष्णोरेवेत्यर्थमुपेत्यावतारयति ॥ मुक्तप्राप्यत्वमिति ॥ प्रकृतोपयोगायार्थमाह ॥ पराणामिति ॥ विश्वात्मानं विश्वस्वामिनम्। द्वितीयांतानां तद्विश्वमुपजीवतीति पूर्वोक्तकर्तृक्रियाभ्यामन्वयः ॥ २ ॥

सूत्रभाष्यम्— ॥ ॐ **नानुमानमतच्छब्दात्** ॐ ॥ ३ ॥

नानुमानात्मकागमपरिकल्पितरुद्रोऽत्र वाच्यः। भस्मधरोग्रत्वादितच्छब्दाभावात्। 'सोऽन्तकः स रुद्रः स प्राणभृत्स प्राणनायकः स ईशो यो हरिर्योऽनन्तो यो विष्णुर्यः परः परोवरीयानि'त्यादिना प्राणग्रन्थिरुद्रत्वादेर्विष्णोरेवोक्तत्वात्। ब्रह्माण्डे च–

'रुजं द्रावयते यस्माद्रुद्रस्तस्माज्जनार्दनः।
ईशनादेव चेशानो महादेवो महत्त्वतः॥
पिबन्ति ये नरा नाकं मुक्तास्संसारसागरात्।
तदाधारो यतो विष्णुः पिनाकीति ततः स्मृतः॥
शिवः सुखात्मकत्वेन शर्वः शंरोधनाद्धरिः।
कृत्यात्मकमिदं देहं यतो वस्ते प्रवर्तयन्॥
कृत्तिवासास्ततो देवो विरिञ्चिश्च विरेचनात्।
बृंहणाद्ब्रह्मनामाऽसावैश्वर्यादिन्द्र उच्यते॥
एवं नानाविधैश्शब्दैरेक एव त्रिविक्रमः।
वेदेषु सपुराणेषु गीयते पुरुषोत्तम'॥ इति। वामने च–
'न तु नारायणादीनां नाम्नामन्यत्र सम्भवः।
अन्यनाम्नां गतिर्विष्णुरेक एव प्रकीर्तित'॥ इति। स्कान्दे च–
'ऋते नारायणादीनि नामानि पुरुषोत्तमः।
प्रादादन्यत्र भगवान् राजेवर्ते स्वकं पुरम्'॥ इति।
'चतुर्मुखश्शतानन्दो ब्रह्मणः पद्मभूरिति।
उग्रो भस्मधरो नग्नः कपालीति शिवस्य च।
विशेषनामानि ददौ स्वकीयान्यपि केशव'॥ इति (च) ब्राह्मे ॥ ३ ॥

तत्वप्रकाशिका—

ननु प्रागुक्तरीत्या रुद्रप्रकृत्योः किं न स्याद्द्युभ्वाद्यायतनत्वमित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ नानुमानमिति ॥ प्रागुक्तानुमानसिद्धप्रामाण्ये पाशुपताद्यागमे सर्वाश्रयत्वेन (परिकल्पिते) कल्पिते रुद्रप्रधाने अत्र प्रकरणे सर्वाधारतया प्रतिपाद्ये न भवतः। तच्छ्रुतिलिङ्गाद्यभावादिति भावः। आगमप्रामाण्यसाधकानुमानं तु फलविसंवादिरुद्रादिवाक्यदृष्टान्तेन विप्रतिपन्नवाक्याप्रामाण्यसाधनसंभवात् प्रतिपक्षग्रस्तमतिप्रसङ्गदुष्टं चेत्युपेक्ष्यम्। अभाषितं प्रधानं किं संयोज्यत इति चेन्न। न प्रकृतिजीवावभिधीयेते इत्यन्यत्रोक्तत्वात्। न च प्रकृतिपदेनापि रुद्रः। पृथगुभयग्रहणे बाधकाभावात्। नन्वत्र रुद्रादिज्ञापकाभावेऽपि श्रुत्यन्तरे प्राणानां ग्रंथिरसि रुद्र इत्याद्युक्तेर्द्युभ्वाद्यायतनत्वं रुद्रादेः किं न स्यादित्यत आह ॥ स इति ॥ श्रुत्यन्तरोक्तमपि द्युभ्वाद्यायतनत्वं विष्णोरेव। न च रुद्रादिश्रुतिलिंगविरोधः। श्रुतिबलेन रुद्रादिश्रुतेरन्तकत्वादिलिंगस्य च विष्ण्वेकनिष्ठत्वादिति भावः। ननु रुद्रादिशब्दानां विष्णुपरत्वं किं योगेन रूढ्या वा। नाद्यः। योगस्य दौर्बल्यात्। न द्वितीयः। तदभावात्। उभयत्र रूढिसद्भावे पुनर्निश्चयायोगात्। न हि श्रुत्यंतरे विष्णुलिङ्गाद्यस्तीत्यत आह ॥ ब्रह्माण्डे चेति ॥ रुद्रादिशब्दानां विष्णौ योगमुक्त्वा 'वेदेषु सपुराणेषु गीयते' इति विद्वद्रूढिकथनाद्रूढिमात्रान्महायोगविद्वद्रूढ्योः प्राबल्याद्युक्तः श्रुत्यन्तरेऽपि विष्णोः प्रतिपाद्यत्वनिश्चय इति भावः। ननु यदि रुद्रादिशब्दानां विष्णुपरत्वमुक्त्वा श्रुतीनामनिर्णायकत्वमुच्यते तर्हि नारायणादिनाम्नां रुद्रादिपरत्वे 'नारायणं महाज्ञेयम्' इत्यादिश्रुतीनामनिर्णायकत्वं स्यादित्यत आह ॥ वामने चेति ॥ भगवन्नामत्वाविशेषाद्रुद्रादिनामवन्नारायणादिनाम्नामपि रुद्रादौ वृत्तिः किं न स्यादित्यत आह ॥ स्कान्दे चेति ॥ यद्येवं रुद्रादिशब्दा विष्ण्वेकपरास्तर्हि किमुच्यते भस्मधरोग्रत्वादीनां तच्छब्दत्वम्। विष्णुदत्तत्वाभिप्रायेणेति चेत्तर्हि रुद्रादिशब्दा अपि तादृशा इति न कथं तैर्निर्णय इत्यत आह ॥ चतुर्मुख इति ॥ ३ ॥

भावदीपः—

॥ ॐ नानुमानमतच्छब्दात् ॐ ॥ ३ ॥ भाष्ये रुद्रपदमुपलक्षणं मत्वा रुद्रप्रकृत्यानुगुण्येन भाष्यं व्याचष्टे ॥ प्रागुक्तेति ॥ अत्रेत्यनुवादः। भस्मधरेत्यत्रापि त्रिगुणत्वादेर्ग्रहणं मत्वाऽऽह ॥ तच्छ्रुतीति ॥ आदिपदेन समाख्याग्रहः। अतद्धर्माभि-

लापादिलिवदर्य निर्देशः। तद्गव्यभिचारिणा। अप्रामाण्यानुमा च स्यादिति। अतिप्रसङ्गोऽनुमेयदृशेति च शास्त्रयोनिसूत्रानुभाष्यमनुरुध्याऽऽह ॥ फलविसंवादीति ॥ ॥ अतिप्रसंगेति ॥ बौद्धागमेऽपि किंचित्फलोपलंभदर्शनेन तत्रापि विप्रतिपन्नभागप्रामाण्यानुमानसंभवादिति भावः। तत्वप्रदीपादिप्राचीनटीकारीत्या शंकते ॥ अभाषितमिति ॥ भाष्यकृदनुक्तमित्यर्थः। अन्यत्र विष्णुतत्वनिर्णये ॥ पृथगिति ॥ तत्र प्रकृतिपदेन प्रकृतेः अत्र रुद्रपदेन रुद्रस्येति पृथगुभयग्रहण इत्यर्थः ॥ श्रुतिबलेनेति ॥ सोऽतक इत्यादिश्रुतिबलेनेत्यर्थः। नन्वंतर्नयन्यायेन निर्णयः स्यादित्यत आह ॥ नहीति ॥ ॥ श्रुत्यंतर इति ॥ रुद्रसमाख्यारूपश्रुत्यंतर इत्यर्थः। येन निर्णयः स्यादिति भावः। तेषामेव लिङ्गशब्दानां प्राणानां ग्रंथिरसि इत्यादीनां विष्णौ मुख्यवृत्तिरिति बलवत्त्वं तस्य हि रुद्रावणादिकर्तृत्वं मुख्यमिति न्यायविवरणविवरणपरतयोक्तस्मृतेस्तात्पर्यमाह ॥ रुद्रादीति ॥ समाख्या सावकाशेति सूचितम्। वामने चेत्यादिभाष्यं विष्णुसमाख्याया निरवकाशत्वोक्तिपरमिति व्यंजयन्नाह ॥ यदि रुद्रादीति ॥ ३ ॥

सूत्रभाष्यम्—

॥ ॐ प्राणभृच्च ॐ ॥ ४ ॥

एतैरेव हेतुभिर्न जीवो वायुश्च। 'अजायमानो बहुधा विजायत' (तै. आ. ३–१३–१) इति तस्यैव बहुधा जन्मोक्तेः ॥ ४ ॥

तत्वप्रकाशिका—

उक्तप्राप्त्या जीववायू किमत्र वाच्यौ न स्यातामित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ प्राणभृच्चेति ॥ चशब्दात् प्रागुक्तहेतूनां नञश्च समाकर्षः। आत्मशब्दो मुक्तोपसृप्यत्वमतच्छब्दस्तत्प्रापकश्रुतीनां विष्णुपरत्वमित्युक्तहेतवः। ननु 'वायुना वै गोतम' इत्यादिश्रुतेरविष्णुपरत्वेन वायुसाधकत्वाभावेऽपि बहुधा जन्मलिङ्गेन जीवोऽत्र वाच्यः किं न स्यादित्यत आह ॥ अजायमान इति ॥ ४ ॥

भावदीपः—

॥ ॐ प्राणभृच्च ॐ ॥ ४ ॥ उक्तप्राप्त्येति ॥ लिङ्गसमाख्याभ्यामुक्तप्राप्त्येत्यर्थः। भाष्ये चशब्दस्य वायुसमुच्चायकत्वमात्रभ्रमं वारयति ॥ चशब्दादिति ॥ न केवलं वायोः समुच्चयः। किंतु प्रागुक्त हेतूनां नञश्च समाकर्ष इत्यर्थः। तथैव

चंद्रिकोक्तेः। हेतुभिरिति बहुवचनार्थं व्यनक्ति ॥ आत्मशब्द इति ॥ विष्णावेवाऽऽत्मशब्दस्य रूढत्वान्न शिवादिगान्। श्रुतिर्वक्ति इति एतदधिकरणानुव्याख्याने। तथा आत्मशब्दं यतो हेतुं कृत्वा जीवं न्यवारयत्। स्वशब्दात् प्राणभृच्चैव नोक्त इत्येव वेदराट्। इति फलाध्यायाद्यपादीयानुव्याख्याने। तथा स्वशब्दपर्यायात्मशब्दादिति तत्वनिर्णये। आत्मशब्दादिति हेतोश्चानुकर्षणार्थं इति सुधायां चाऽऽत्मशब्दमात्रानुकर्षोक्तिस्तु तत्र तन्मात्रोपयोगाद्वा वर्णकांतराभिप्रायेण वेति ध्येयम्। ॥ तत्प्रापकेति ॥ अतच्छब्दादित्यस्य रुद्रप्रधानवाचिशब्दाभावादित्यर्थोक्त्या तत्प्रापकरुद्रादिशब्दानां विष्णुपरत्वस्यार्थसिद्धत्वात् सोऽपि सौत्रो हेतुः। अत एवातच्छब्दात् प्राणभृच्चेत्येतद्भाष्य एव रुद्रादिशब्दानां विष्णुपरत्वमुक्तमिति भावः ॥ इत्यादि श्रुतेरिति ॥ वायुसमाख्यायाः एवं नानाविधैः शब्दैरिति अन्यनाम्नां गतिर्विष्णुरिति चोक्तदिशा महायोगविद्वद्रूढिभ्यां विष्णुपरत्वेनेत्यर्थः। यद्यपि बृहदारण्यके पंचमे तच्चेत्त्वं याज्ञवल्क्य सूत्रमविद्वान् तं चांतर्यामिणं ब्रह्म गवीरुदजसे इति। वेद वा अहं गोतम सूत्रं तं चांतर्यामिणमिति च सूत्रांतर्यामिणोर्द्वयोरप्युक्त्या स्यूतं जगदिदं यस्मिन् सूत्रं वायुरसौ स्मृत इति तद्भाष्योक्त्या च वायुशब्दो वायुपर इति प्रतीयते। तथापि तं चापि यमयेद्यस्मादंतर्यामी हरिः स्मृत इति तद्भाष्योक्त्यैव पादांत्यप्राणनयन्यायेन वाय्वंतर्यामिविवक्षया विष्णुपरत्वेनेत्युक्तम्। यथोत्तरनये प्राणपदस्य विष्णुपरत्वं वक्ष्यति। न चैतदर्थद्वयं विरुद्धं अंतर्यामिविवक्षयेत्यादि। वक्ष्यते च जीवमुख्यप्राणलिंगादिति चेत्तद्व्याख्यातमिति सूत्रेऽपि। आकाश एव तदोतं चेति श्रुतेस्तु आकाशस्य प्रकृतित्वेऽपि अंबरांतधृतेरिति अक्षरनये पृथिव्यादिप्रकृत्यंतमिति स्मृत्या प्रकृतिद्वारा सर्वस्याक्षराख्यविष्ण्वाश्रितत्वस्यैवाग्रेऽभिधानाद्विष्णोर्द्युभ्वाद्यायतनत्वपरत्वेन सावकाशत्वं स्पष्टमिति भावः ॥ इत्यत आहेति ॥ अजायमान इति वाक्यं च विष्णुपरं पुरुषसूक्तस्थत्वात्तस्य च वैष्णवत्वं प्रागेव साधितमिति भाव. ॥ ४ ॥

सूत्रभाष्यम्—

॥ ॐ भेदव्यपदेशात् ॐ ॥ ५ ॥

न चैक्यं वाच्यम्। 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमि' (मुं. उ. ३-१-२) ति भेदव्यपदेशात् ॥ ५ ॥

भावप्राधान्येन योग्यसाध्याध्याहारपूर्वं सूत्रार्थमाह ॥नाऽऽत्मशब्दस्येति॥ मुक्तानामिति वाक्यमनुरुध्याऽऽह ॥ जाताविति ॥ भाष्ये तस्यैवेत्यस्य विष्णोरेवेत्यर्थमुपेत्यावतारयति ॥ मुक्तप्राप्यत्वमिति ॥ प्रकृतोपयोगायार्थमाह ॥ पराणामिति ॥ विश्वात्मानं विश्वस्वामिनम्। द्वितीयांतानां तद्विश्वमुपजीवतीति पूर्वोक्तकर्तृक्रियाभ्यामन्वयः ॥ २ ॥

सूत्रभाष्यम्— ॥ ॐ **नानुमानमतच्छब्दात्** ॐ ॥ ३ ॥

नानुमानात्मकागमपरिकल्पितरुद्रोऽत्र वाच्यः। भस्मधरोग्रत्वादितच्छब्दाभावात्। 'सोऽन्तकः स रुद्रः स प्राणभृत्स प्राणनायकः स ईशो यो हरिर्योऽनन्तो यो विष्णुर्यः परः परोवरीयानि'त्यादिना प्राणग्रन्थिरुद्रत्वादेर्विष्णोरेवोक्तत्वात्। ब्रह्माण्डे च–

'रुजं द्रावयते यस्माद्रुद्रस्तस्माज्जनार्दनः।
ईशनादेव चेशानो महादेवो महत्त्वतः॥
पिबन्ति ये नरा नाकं मुक्तास्संसारसागरात्।
तदाधारो यतो विष्णुः पिनाकीति ततः स्मृतः॥
शिवः सुखात्मकत्वेन शर्वः शंरोधनाद्धरिः।
कृत्यात्मकमिदं देहं यतो वस्ते प्रवर्तयन्॥
कृत्तिवासास्ततो देवो विरिञ्चिश्च विरेचनात्।
बृंहणाद्ब्रह्मनामाऽसावैश्वर्यादिन्द्र उच्यते॥
एवं नानाविधैश्शब्दैरेक एव त्रिविक्रमः।
वेदेषु सपुराणेषु गीयते पुरुषोत्तम'॥ इति। वामने च–
'न तु नारायणादीनां नाम्नामन्यत्र सम्भवः।
अन्यनाम्नां गतिर्विष्णुरेक एव प्रकीर्तित'॥ इति। स्कान्दे च–
'ऋते नारायणादीनि नामानि पुरुषोत्तमः।
प्रादादन्यत्र भगवान् राजेवर्तें स्वकं पुरम्'॥ इति।
'चतुर्मुखश्शतानन्दो ब्रह्मणः पद्मभूरिति।
उग्रो भस्मधरो नग्नः कपालीति शिवस्य च।
विशेषनामानि ददौ स्वकीयान्यपि केशव'॥ इति (च) ब्राह्मे ॥ ३ ॥

तत्वप्रकाशिका—

ननु प्रागुक्तरीत्या रुद्रप्रकृत्योः किं न स्याद्द्युभ्वाद्यायतनत्वमित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ नानुमानमिति ॥ प्रागुक्तानुमानसिद्धप्रामाण्ये पाशुपताद्यागमे सर्वाश्रयत्वेन (परिकल्पिते) कल्पिते रुद्रप्रधाने अत्र प्रकरणे सर्वाधारतया प्रतिपाद्ये न भवतः। तच्छ्रुतिलिङ्गाद्यभावादिति भावः। आगमप्रामाण्यसाधकानुमानं तु फलविसंवादिरुद्रादिवाक्यदृष्टान्तेन विप्रलिपन्नवाक्याप्रामाण्यसाधनसंभवात् प्रतिपक्षग्रस्तमतिप्रसङ्गदुष्टं चेत्युपेक्ष्यम्। अभाषितं प्रधानं किं संयोज्यत इति चेन्न। न प्रकृतिजीवावभिधीयेते इत्यन्यत्रोक्तत्वात्। न च प्रकृतिपदेनापि रुद्रः। पृथगुभयग्रहणे बाधकाभावात्। नन्वत्र रुद्रादिज्ञापकाभावेऽपि श्रुत्यन्तरे प्राणानां ग्रंथिरसि रुद्र इत्याद्युक्तेर्द्युभ्वाद्यायतनत्वं रुद्रादेः किं न स्यादित्यत आह ॥ स इति ॥ श्रुत्यन्तरोक्तमपि द्युभ्वाद्यायतनत्वं विष्णोरेव। न च रुद्रादिश्रुतिलिंगविरोधः। श्रुतिबलेन रुद्रादिश्रुतेरन्नकत्वादिलिंगस्य च विष्ण्वेकनिष्ठत्वादिति भावः। ननु रुद्रादिशब्दानां विष्णुपरत्वं किं योगेन रूढ्या वा। नाद्यः। योगस्य दौर्बल्यात्। न द्वितीयः। तदभावात्। उभयत्र रूढिसद्भावे पुनर्निश्चयायोगात्। न हि श्रुत्यंतरे विष्णुलिङ्गाद्यस्तीत्यत आह ॥ ब्रह्माण्डे चेति ॥ रुद्रादिशब्दानां विष्णौ योगमुक्त्वा 'वेदेषु सपुराणेषु गीयते' इति विद्वद्रूढिकथनाद्रूढिमात्रान्महायोगविद्वद्रूढ्योः प्राबल्याद्युक्तः श्रुत्यन्तरेऽपि विष्णोः प्रतिपाद्यत्वनिश्चय इति भावः। ननु यदि रुद्रादिशब्दानां विष्णुपरत्वमुक्त्वा श्रुतीनामनिर्णायकत्वमुच्यते तर्हि नारायणादिनाम्नां रुद्रादिपरत्वे 'नारायणं महाज्ञेयम्' इत्यादिश्रुतीनामनिर्णायकत्वं स्यादित्यत आह ॥ वामने चेति ॥ भगवन्नामत्वाविशेषाद्रुद्रादिनामवन्नारायणादिनाम्नामपि रुद्रादौ वृत्तिः किं न स्यादित्यत आह ॥ स्कान्दे चेति ॥ यद्येवं रुद्रादिशब्दा विष्ण्वेकपरास्तर्हि किमुच्यते भस्मधरोग्रत्वादीनां तच्छब्दत्वम्। विष्णुदत्तत्वाभिप्रायेणेति चेत्तर्हि रुद्रादिशब्दा अपि तादृशा इति न कथं तैर्निर्णय इत्यत आह ॥ चतुर्मुख इति ॥ ३ ॥

भावदीपः—

॥ ॐ नानुमानमतच्छब्दात् ॐ ॥ ३ ॥ भाष्ये रुद्रपदमुपलक्षणं मत्वा रुद्रप्रकृत्यानुगुण्येन भाष्यं व्याचष्टे ॥ प्रागुक्तेति ॥ अत्रेत्यनुवादः। भस्मधरेत्यत्रापि त्रिगुणत्वादेर्ग्रहणं मत्वाऽऽह ॥ तच्छ्रुतीति ॥ आदिपदेन समाख्याग्रहः। अतद्धर्माभि-

लापादितिवदयं निर्देशः । तद्गव्यभिचारिणा । अप्रामाण्यानुमा च स्यादिति । अतिप्रसङ्गोऽनुमेयदृशेति च शास्त्रयोनिसूत्रानुभाष्यमनुरुध्याऽऽह ॥ फलविसंवादीति ॥ ॥ अतिप्रसंगेति ॥ बौद्धागमेऽपि किंचित्फलोपलंभदर्शनेन तत्रापि विप्रतिपन्नभाग-प्रामाण्यानुमानसंभवादिति भावः । तत्वप्रदीपादिप्राचीनटीकारीत्या शंकते ॥ अभा-षितमिति ॥ भाष्यकृदनुक्तमित्यर्थः। अन्यत्र विष्णुतत्वनिर्णये ॥ पृथगिति ॥ तत्र प्रकृति-पदेन प्रकृतेः अत्र रुद्रपदेन रुद्रस्येति पृथगुभयग्रहण इत्यर्थः ॥ श्रुतिबलेनेति ॥ सोऽन्तक इत्यादिश्रुतिबलेनेत्यर्थः । नन्वंतर्नयन्यायेन निर्णयः स्यादित्यत आह ॥ नहीति ॥ ॥ श्रुत्यंतर इति ॥ रुद्रसमाख्यारूपश्रुत्यंतर इत्यर्थः। येन निर्णयः स्यादिति भावः। तेषामेव लिङ्गशब्दानां प्राणानां ग्रंथिरसि इत्यादीनां विष्णौ मुख्यवृत्तिरिति बलवत्त्वं तस्य हि रुद्रावणादिकर्तृत्वं मुख्यमिति न्यायविवरणविवरणपरतयोक्तस्मृतेस्तात्पर्य-माह ॥ रुद्रादीति ॥ समाख्या सावकाशेति सूचितम् । वासनें चेत्यादिभाष्यं विष्णु-समाख्याया निरवकाशत्वोक्तिपरमिति व्यंजयन्नाह ॥ यदि रुद्रादीति ॥ ३ ॥

सूत्रभाष्यम्—

**॥ ॐ प्राणभृच्च ॐ ॥ ४ ॥**

एतैरेव हेतुभिर्न जीवो वायुश्च । 'अजायमानो बहुधा विजायत '(तै. आ. ३-१३-१) इति तस्यैव बहुधा जन्मोक्तेः ॥ ४ ॥

तत्वप्रकाशिका—

उक्तप्राप्त्या जीववायू किमत्र वाच्यौ न स्यातामित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ प्राणभृच्चेति ॥ चशब्दात् प्रागुक्तहेतूनां नञश्च समाकर्षः । आत्मशब्दो मुक्तोपसृप्यत्वमतच्छब्दस्तत्प्रापकश्रुतीनां विष्णुपरत्वमित्युक्तहेतवः । ननु 'वायुना वै गोतम' इत्यादिश्रुतेर्विष्णुपरत्वेन वायुसाधकत्वाभावेऽपि बहुधा जन्मलिङ्गेन जीवोऽत्र वाच्यः किं न स्यादित्यत आह ॥ अजायमान इति ॥ ४ ॥

भावदीपः—

॥ ॐ प्राणभृच्च ॐ ॥ ४ ॥ उक्तप्राप्त्येति ॥ लिङ्गसमाख्याभ्यामुक्तप्राप्त्ये-त्यर्थः । भाष्ये चशब्दस्य वायुसमुच्चायकत्वमात्रभ्रमं वारयति ॥ चशब्दादिति ॥ न केवलं वायोः समुच्चयः। किंतु प्रागुक्त हेतूनां नञश्च समाकर्ष इत्यर्थः। तथैव

चंद्रिकोक्तेः। हेतुभिरिति बहुवचनार्थं व्यनक्ति ॥ आत्मशब्द इति ॥ विष्णावेवाऽऽत्मशब्दस्य रूढत्वान्न शिवादिकम्। श्रुतिर्वक्ति इति एतदधिकरणानुव्याख्याने। तथा आत्मशब्दं यतो हेतुं कृत्वा जीवं न्यवारयत्। स्वशब्दात् प्राणभृच्चैव नोक्त इत्येव वेदराट्। इति फलाध्यायाद्यपादीयानुव्याख्याने। तथा स्वशब्दपर्यायात्मशब्दादिति तत्वनिर्णये। आत्मशब्दादिति हेतोश्चानुकर्षणार्थ इति सुधायां चाऽऽत्मशब्दमात्रानुकर्षोक्तिस्तु तत्र तन्मात्रोपयोगाद्वा वर्णकांतराभिप्रायेण वेति ध्येयम्। ॥ तत्प्रापकेति ॥ अतच्छब्दादित्यस्य रुद्रप्रधानवाचिशब्दाभावादित्यर्थोक्त्या तत्प्रापकरुद्रादिशब्दानां विष्णुपरत्वस्यार्थसिद्धत्वात् सोऽपि सौत्रो हेतुः। अत एवातच्छब्दात् प्राणभृच्चेत्येतद्भाष्य एव रुद्रादिशब्दानां विष्णुपरत्वमुक्तमिति भावः ॥ इत्यादि श्रुतेरिति ॥ वायुसमाख्यायाः एवं नानाविधैः शब्दैरिति अन्यनाम्नां गतिर्विष्णुरिति चोक्तदिशा महायोगविद्वद्रूढिभ्यां विष्णुपरत्वेनेत्यर्थः। यद्यपि बृहदारण्यके पंचमे तच्चेत्त्वं याज्ञवल्क्य सूत्रमविद्वान् तं चांतर्यामिणं ब्रह्म गवीरुदजसे इति। वेद वा अहं गोतम सूत्रं तं चांतर्यामिणमिति च सूत्रांतर्यामिणोर्द्वयोरप्युक्त्या स्यूतं जगदिदं यस्मिन् सूत्रं वायुरसौ स्मृत इति तद्भाष्योक्त्या च वायुशब्दो वायुपर इति प्रतीयते। तथापि तं चापि यमयेद्यस्मादंतर्यामी हरिः स्मृत इति तद्भाष्योक्त्यैव पादांत्यप्राणनयन्यायेन वाय्वंतर्यामिविवक्षया विष्णुपरत्वेनेत्युक्तम्। यथोत्तरनये प्राणपदस्य विष्णुपरत्वं वक्ष्यति। न चैतदर्थद्वयं विरुद्धं अंतर्यामिविवक्षयेत्यादि। वक्ष्यते च जीवमुख्यप्राणलिंगादिति चेत्तद्व्याख्यातमिति सूत्रेऽपि। आकाश एव तदोतं चेति श्रुतेस्तु आकाशस्य प्रकृतित्वेऽपि अंबरांतधृतेरिति अक्षरनये पृथिव्यादिप्रकृत्यंतमिति स्मृत्या प्रकृतिद्वारा सर्वस्याक्षराख्यविष्णवाश्रितत्वस्यैवाग्रेऽभिधानाद्विष्णोर्द्युभ्वाद्यायतनत्वपरत्वेन सावकाशत्वं स्पष्टमिति भावः ॥ इत्यत आहेति ॥ अजायमान इति वाक्यं च विष्णुपरं पुरुषसूक्तस्थत्वात्तस्य च वैष्णवत्वं प्रागेव साधितमिति भावः ॥ ४ ॥

सूत्रभाष्यम्—

॥ ॐ भेदव्यपदेशात् ॐ ॥ ५ ॥

न चैक्यं वाच्यम्। 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमि' (मुं. उ. ३–१–२) ति भेदव्यपदेशात् ॥ ५ ॥

तत्वप्रकाशिका—

ननु किं जीवलिङ्गस्य विष्णुपरत्वप्रतिपादनायासेन जीवस्यैव द्युभ्वाद्यायतनत्वं किं न स्यात्। न चोक्तहेतुविरोधः। जीवेशाभेदाभिप्रायेण जीवेऽप्यात्मशब्दाद्युक्तिसंभवादित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे॥ भेदेति॥ नैक्याभिप्रायेण जीव एवाऽऽत्मशब्दादिप्रयोगोऽत्रेति वाच्यम्। अत्रैवान्यमीशमिति जीवेशभेदव्यपदेशादित्यर्थः॥ ५॥

भावदीपः—

॥ ॐ भेदव्यपदेशात् ॐ ॥ ५॥ उक्तहेतूनां सत्त्वात् तद्विरोधेन शंकानर्हमेकत्वं कथमाशंक्य निरस्यत इत्यतो न चैकत्वमिति भाष्यं व्याचष्टे॥ नैक्येति॥ अत्रैवेति॥ एतत्प्रकरण एवेत्यर्थः॥ अन्यमीशमिति जविशेभेदेति॥ पश्यतीति सन्निहितो जीव एव यदिन्यायेनान्यत्वप्रतियोगितयाऽन्वेति। जीवादन्यः स्वतंत्रो य इत्याथर्वणभाष्योक्तेरिति भावः। श्रुत्यर्थस्तु सर्वसेव्यं जीवादन्यं तदेतत्सत्यमित्यादि प्रागुक्तप्रकारेणास्य महिमानं च यदा पश्यति तदा मुक्तो भवतीत्यानन्दमयनय एवोक्त इति भावः। विशेषणभेदेति सूत्रे तु अर्थांतरमुपेत्य रुद्रादन्यत्वपरत्वेन व्याख्यानं कृतम्॥ ५॥

सूत्रभाष्यम्—

॥ ॐ प्रकरणात्॥ ६॥

'द्वे विद्ये वेदितव्ये' (मुं. उ. १-१-४) इति तस्य ह्येतत्प्रकरणम्॥ ६॥

तत्वप्रकाशिका—

नन्वत्र जीवस्य कस्माच्चिदीशादन्यत्वमुच्यते न परमात्मनोऽतो न तयोर्भेद इत्याशङ्कां परिहरत् सूत्रमुपन्यस्य व्याचष्टे॥ प्रकरणादिति॥ नात्र जीवपरमात्मभेदोक्त्यभावः। ईशशब्देनैव परमात्मोक्तेः। तदेव कुतः। द्वे विद्ये वेदितव्ये इति परविद्याविषयवस्तुनोऽत्रारभ्याधीतत्वेनास्य विष्णुप्रकरणत्वादिति भावः॥ ६॥

भावदीपः—

॥ ॐ प्रकरणात् ॐ ॥ ६॥ ईशादन्यत्वमिति॥ जीवादन्यत्वस्योक्त्या तदन्यत्वं जीवेऽर्थात् सिद्धमित्येवमुक्तिः। एकप्रमेयतात्पर्यकानेकवाक्यात्मक-

प्रकरणस्य स्वांतर्गतवाक्यं स्वतात्पर्यविषयपरमित्यनुमितिद्वारा तदंतर्गतविप्रतिपन्नशब्दार्थनिर्णायकत्वेन साक्षाज्जीवपरमात्मभेदासाधकत्वात् योग्यसाध्योक्तिपूर्वं परंपरया प्रकरणादिति हेतुं योजयति ॥ नात्रेति ॥ तदेवेति ॥ परमात्मार्थकत्वमेवेत्यर्थः । श्रुतिलिंगादेरुपक्रमादौ श्रुतत्वे तन्निर्णायकत्वेन लिंगत्वस्य वक्ष्यमाणत्वात् । इह च परविद्याविषयत्वलिंगस्योपक्रमे श्रवणेनोपक्रमस्य वैष्णवत्वात्तदादिवाक्यसंदर्भस्योपक्रांतार्थविष्णुतात्पर्यकत्वरूपं तत्प्रकरणत्वमवधार्यत इति भावेन भाष्यं व्याचष्टे ॥ द्वे विद्ये इति ॥ प्रतीकग्रहणमेतत् । अथ परा यया तदक्षरमधिगम्यत इत्यनेनेत्यर्थः । आरभ्य उपक्रम्य । परविद्याविषयवस्तूपक्रम्य तस्यैतद्वाक्यसंदर्भे पठितत्वादस्य वाक्यसंदर्भस्य तत्प्रकरणत्वमित्यर्थः । प्राणो ब्रह्मेत्यादौ प्राणस्योपक्रमेऽपि तदुत्तरत्र विष्णुश्रुतिलिंगादिना प्राणस्याधीतत्वाभावेन तत्प्रकरणत्वं नेति व्यभिचाराद्वुपक्रमादित्यनुक्त्वा उपक्रम्याधीतत्वादित्युक्तम् । जायमानत्वादेर्बाधकस्य निरासेन साधकानामुक्त्या चोपक्रांतविष्णोरेव सर्वत्राधीतत्वस्योक्तत्वान्नासिद्धिरिति भावः ॥ ६ ॥

सूत्रभाष्यम्—

॥ ॐ स्थित्यदनाभ्यां च ॐ ॥ ७ ॥

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।

तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्यो अभिचाकशीती' (मुं. उ. ३-१-१)

ति ईशजीवयोः स्थित्यदनोक्तेः ॥ ७ ॥ इति द्युभ्वाधिकरणम् ॥ १ ॥

तत्वप्रकाशिका—

न जीवेशाभेदोऽत्र प्रकरणे विवक्षित इत्येतमर्थं हेत्वंतरेण साधयत् सूत्रमुपन्यस्य व्याचष्टे ॥ स्थितीति ॥ संयुक्तौ सखायौ द्वौ सुपर्णरूपौ जीवेशौ देहाख्यं पिप्पलमालिलिङ्गतुः । तयोः सुपर्णयोर्मध्येऽन्यो जीवोऽश्वत्थफलरूपं देहजनितकर्मफलमस्वाद्वेव स्वादुत्वेनात्ति । अन्य ईश्वरस्तदनश्नन्नभितः प्रकाशते । न तु स्वस्थित्यै तदपेक्षत इति जीवेशयोः कर्मफलोपजीवनतद्रहितावस्थानाभ्यामुक्ताभ्यां च नैक्यं वाच्यमित्यर्थः । अत्र श्रुतिक्रमोल्लङ्घनमीश्वरस्य प्राधान्यज्ञापनार्थम् । स्थितिपदस्याल्पाक्षरत्वाच्च । व्यावहारिकभेदः श्रुत्योच्यत इति चेत् । व्यावहारिक इति सत्यो मिथ्या वा । आद्ये किमनिष्टम् । न द्वितीयः । मिथ्याभिधायकत्वेऽतत्त्वावेदकत्वेन श्रुतेरप्रामाण्यापातात् । तत्त्वावेदकत्वलक्षणप्रामाण्याभावेऽपि व्यावहारिकं

तदस्तीति चेन्न। तत्त्वाविषयत्वे प्रामाण्यवाचोयुक्तेरयुक्तत्वात्। मिथ्याभेदानुवादित्वान्न दोष इति चेन्न। वैयर्थ्यात्। निषेधायेति चेन्न। तदभावात्। तत्त्वमसीत्यादिनिषेधोऽस्तीति चेत्। तदनुवादेनायमेव निषेधः किं न स्यात्। अद्वैतस्य प्रमाणान्तरेणासिद्धेर्न तदनुवाद इति चेत्। तर्तिक निषेधाय प्रमाणप्राप्त्या भाव्यं प्राप्ति मात्रेण वा। आद्ये निषेधायोगः। द्वितीयेऽस्त्यद्वैतेऽपि तादृशी प्राप्तिः। जीवेशयोः प्रमाणं विनाऽसिद्धेः कथं तदभेदस्य कथंचित् प्राप्तिरिति चेत् समं भेदेऽपि। कुतश्चैतच्छ्रुतेर्मिथ्याभेदवादित्वं सिद्धम्। जीवेशभेदस्य मिथ्यात्वादेवेति चेत्। तदेव कुतः। न हि भेदमिथ्यात्वे प्रत्यक्षमस्ति। न चानुमानं श्रुतिसिद्धार्थबाधकम्। स्वस्यैव तद्विरोधेनाऽप्रामाण्यात्। श्रुतेर्भेदमात्रपरत्वादनुमानस्य च तद्भेदस्यैव मिथ्यात्वे प्रवृत्तत्वेन भिन्नविषयत्वान्न विरोध इति चेत्तर्हि प्रत्यक्षस्यौष्ण्यमात्रविषयत्वादनुमानस्य च तदौष्ण्यस्यैव मिथ्यात्वसाधकत्वेन भिन्नविषयत्वमिति बाधोच्छेदः स्यात्। न चागमेन भेदमिथ्यात्वसिद्धिः। तदभावादेव। न च तत्सत्यत्वे मानाभावः। स्वरूपाभिधायकस्यैव सत्यत्वे प्रामाण्यात्। अन्यथा तस्य वैयर्थ्यात्। अतो न मिथ्याभेदपरत्वं श्रुतेरित्यलम्। तस्माद्विष्णुरेव द्युभ्वाद्यायतनं परविद्याविषयश्चेति सिद्धम्॥ ७॥ अ० १॥

भावदीपः—

॥ ॐ स्थित्यदनाभ्यां च ॐ॥ ७॥ सूत्रे चशब्दादाह ॥ हेत्वंतरेणेति॥ कर्मफलोपजीवनतद्रहितावस्थानलक्षणभेदकोक्तिरूपहेत्वंतरेणेत्यर्थः॥ पिप्पलमिति॥ अश्वत्थमित्यर्थः। तस्येदाहुरिति वाक्यशेषविरोधनिरासायाह ॥ अस्वाद्वेति॥ एकस्तयोः खादति पिप्पलान्नमन्यो निरन्नोऽपि बलेन भूयानित्येकादशस्कंधवाक्ये अत्ति विनाप्यदौर्बल्यादिति तात्पर्योक्तिमनुरुध्यार्थमाह ॥ अन्य ईश्वर इत्यादिना॥ गुहानये शुभं पिबतीति वाक्यानुरोधादर्थांतरमुक्तम्। भाष्योक्तं सूत्रारूढं दर्शयति कर्मेत्यादिना। अत्र श्रुतेर्बुद्धिजीवपरत्वं चंद्रिकायां निरस्तम्। विस्तृतं च गुरुपादैः श्रुतितात्पर्यकौमुद्याम्। अत्र श्रुतावदनस्यादित्वेन सूत्रेऽप्यदनस्थितिभ्यामित्युक्त्या भाव्यं अत आह॥ श्रुतीति॥ सूत्रे श्रुत्युक्तक्रमोल्लंघनमित्यर्थः। अभ्यर्हितं पूर्वं अल्पाच्तरं पूर्वमिति व्याकरणस्मृतेरिति भावः। श्रुतेर्व्यावहारिकभेदपरत्वेन वा व्यावहारिक प्रामाण्येन मिथ्याभेदपरत्वेन वा मिथ्याभेदानुवादित्वेन वाऽन्यथोपपत्तिमाशंक्य निराकरोति ॥ व्यावहारिक इत्यादिना॥ व्यावहारिकं अतत्वावेदकत्वरूपम्। वाचोयुक्ते-

रित्येकं पदम् । वाक्प्रयोगस्येत्यर्थः । वाग्दिक्पश्यद्भ्यो युक्तिदंडहरेष्वित्यलुक्समासः ॥ वैयर्थ्यादिति ॥ अप्राप्ते शास्त्रमर्थवदिति न्यायादिति भावः । यद्वा अनुवादो ह्यर्थवादवत् स्तुत्यर्थं वा दध्ना जुहोति इतिवत् क्वचिद्विधानार्थं वा नेह नानास्ति किंचन इत्यत्र किंचनेतिवन्निषेधार्थं वा । न पक्षत्रयमपि । अदर्शनादित्यर्थः । शंककः स्वाशयं व्यनक्ति ॥ निषेधायेति ॥ तादृशी प्राप्तिरिति ॥ आनंदमयनये उक्तदिशेति भावः । अंगीकृत्य चेदमुक्तम् । वस्तुतो भेदमिथ्यात्वमेव न सिध्दं येन तदनुवाद इत्याह ॥ कुतश्चेति ॥ नानुमानमतच्छब्दादिति सूत्रमत्रानुवर्त्य तस्यानुमानं भेदमिथ्यात्वे मानं न । कुतः अतच्छब्दात् । मिथ्यात्वविरुद्धभेदसत्यत्वबोधकशब्दादिति वृत्त्यंतरं मनसि निधायाह ॥ न चेति ॥ अनुमानं भेदो मिथ्या भेदत्वादित्यनुमानमित्यर्थः । एतेन सर्वत्रप्रसिद्धेतिनयोक्तं द्वा सुपर्णेत्यादिश्रुतिविरोधाच्चेत्युक्तं विवृतं ध्येयम् । अतच्छब्दादित्यस्य अनुमानमूलभूतभेदमिथ्यात्वबोधकशब्दस्याभावादित्यप्यर्थांतरमुपेत्याह ॥ तदभावादेवेति ॥ अत इति ॥ श्रुतेरप्रामाण्यापत्तेर्मिथ्यात्वसाधकाभावात् स्वतःप्रामाण्येन स्वबोध्यस्य सत्यत्वप्राप्तेश्चेत्यर्थः ॥ तस्मादिति ॥ आत्मश्रुत्यमृतसेतुत्वलिंगरूपसाधकभावात् तच्छब्दरूपबाधकाभावात् परपक्षे साधकाभावात् भेदभेदकयोरुक्त्याऽभेदायोगाच्चेति सर्वसूत्रहेत्वंशार्थः । विष्णुरेवेत्यादि प्रतिज्ञार्थः । परविद्येति भाष्योपसंहारः । अत्र सूत्राक्षरस्वारस्यादिकं चंद्रिकायां व्यक्तमुक्तम् । तेन कस्यचिन्नूतनस्य दूषणावकाशो नेति ज्ञेयम् ॥ ७ ॥ अ० ॥ १ ॥

सूत्रभाष्यम्—

'प्राणो वा आशाया भूयान्' 'इत्युक्त्वा यो वै भूमा तत्सुखमि'(छां. उ. ७-२३) त्युक्तेस्तस्यैव भूमत्वप्राप्तिः। 'उत्क्रान्तप्राणानि' (छां. उ. ७–१५–३) त्यादितल्लिङ्गात्प्राणशब्दश्च वायुवाचीत्यतो वक्ति—

॥ ॐ भूमा सम्प्रसादादध्युपदेशात् ॐ ॥ ८ ॥

'सम्प्रसादात्' पूर्णसुखरूपत्वात् 'अध्युपदेशात्' सर्वेषामुपर्युपदेशाच्च विष्णुरेव भूमा।

'सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम् ।
विश्वं नारायणं देवमक्षरं परमं पदम् ॥

विश्वतः परमां नित्यमि' (म. ना. उ. ११) ति हि श्रुतिः। 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामती' (बृ. उ. ६–४–२) त्यादिना नोत्क्रमणादिलिङ्गविरोधोऽपि॥ ८॥

तत्वप्रकाशिका—

'अत्र प्राणो वा आशाया भूयान्' इत्युपक्रमेण 'विष्णुर्वै देवेभ्यो भूयांस्तस्माद्भूयान्नाम' इति श्रुत्या च वायुविष्णुसाधारणभूमनाम्नो विष्णौ समन्वयप्रतिपादनादस्ति शास्त्रादिसंगतिः श्रुत्यादिसंगतिं विषयादिकं च सूचयन् सयुक्तिकं पूर्वपक्षं दर्शयति ॥ प्राण इति ॥ आनन्दमयाधिकरणे पूर्णानंदत्वं विष्णोरुक्तं तच्छंदोगश्रुतौ भूम्नः प्रतीयते। 'यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखम्' इति। तस्य च भूम्नो विष्णोरितरत्वे प्रागुक्तानन्दमयत्वं चेतरस्यैव प्रसज्येतेत्यवश्यं निर्णेयत्वम्। स भूमाऽत्र विषयः। किं विष्णुरुत वायुरिति संदेहः। पूर्वोक्तसाधारण्यं संदेहबीजम्। मुख्यप्राणोऽयं भूमेति पूर्वः पक्षः। अत्र नामवागादितारतम्यमाशावसानमुक्त्वा 'प्राणो वा आशाया भूयान् इति प्राणस्याशोत्तमत्वं चाभिधाय तदुत्तममनुक्त्वा भूम्न आम्नातत्वात्। न च विष्णोरपि भूमत्वस्य श्रुत्यन्तरे प्रसिद्धत्वादत्र वाच्यत्वमिति वाच्यम्। उपक्रमात्समाख्याया दुर्बलत्वात्। अतो वायोरेव भूमत्वात्तस्यैवानंदमयत्वमिति भावः। ननु प्राणो वा आशाया भूयानित्युक्तप्राणशब्दस्यात एव प्राण इत्युक्तरीत्या विष्णुपरत्वाद्विष्णोरेव भूमत्वमित्यत आह ॥ उत्क्रान्तेति ॥ नायं प्राणशब्दो विष्णुवाची किंतु वायुवाच्येव। तत्र 'उत्क्रान्तप्राणान् शूलेन समासं व्यतिषंदहेत्' इत्यादौ प्राणस्योत्क्रमणादिश्रवणात्। तस्य वायावेव संभवात्। सर्वगते हरावसंभवादित्यर्थः। सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ विष्णुरेवायं भूमा। 'यो वै भूमा तत्सुखम्' इति भूम्नः पूर्णसुखरूपत्वाभिधानात्। नामादीनां सर्वेषामुपरि तदुत्तमत्वेन व्यपदेशाच्चेत्यर्थः। न च वाच्यमत्र भूम्नः सुखरूपत्वमेवोच्यते न तु पूर्णसुखत्वमिति। निरुपपदसुखशब्दमात्रस्यापि पूर्णसुखार्थत्वात्। पूर्णसुखत्वादिकं च कुतो विष्णुत्वनिश्चायकमित्यत आह ॥ सहस्रेति ॥ विश्वशंभुवं पूर्णसुखाश्रयम्। विश्वतः परमां सर्वतः परममकारवाच्यमित्यर्थः। न च सर्वोत्तमत्वं वायोरपि। विरोधादेव। नापि पूर्णानन्दत्वम्। 'अव्यक्तादि तृणान्तास्तु वि(प्रु)प्लुडानंदभागिनः'। इत्युक्तत्वात्। उपक्रमे प्राणशब्दश्रवणात् कथं भूमा विष्णुरिति चेन्न। प्राणशब्देनापि विष्णोरेवोक्तत्वात्। अनन्तरमन्यमनुक्त्वोक्तभूम्नोऽपि विष्णुत्वसंभवात्। अत्र प्राणशब्देन विष्ण्वंगीकारे प्रागुक्तोत्क्र-

मणादिविरोध इति तत्राह ॥ तमिति ॥ सर्वगतस्यापि विष्णो रूपान्तरविवक्षयो-त्क्रमणस्य श्रुतिसिद्धत्वात् प्राणपदेन विष्णवङ्गीकारेऽपि न लिंगविरोध इति भावः। अस्तु वाऽयं प्राणो वायुरेव तथापि न तस्य भूमत्वप्राप्तिः। 'एष तु वा अतिवदति' इत्यादिना प्रश्नाद्यध्याहारेण प्राणाद्विष्णोर्भूयस्त्वमुक्त्वा भूम्न आम्नानात्। न चैतदर्थद्वयं विरुद्धम्। अन्तर्यामिविवक्षया प्राणपदेन विष्णोरुक्तेः 'आत्मन आकाशः संभूत' इत्यादिवत् ॥ ८ ॥

भावदीपः--

॥ ॐ भूमा संप्रसादादध्युपदेशात् ॐ ॥ ८ ॥ न्यायविवरणोक्तरीत्या साधारण्यं व्यनक्ति ॥ प्राणो वा इति ॥ तस्मात् देवेभ्यो भूयस्त्वादित्यर्थः। समाख्यायाः प्रक्र-माद्दौर्बल्येऽपि साभ्यासत्वेन सोपपत्तिकत्वेन च प्राबल्यात्साधारण्यमविरुद्धम्। अत एव तस्माद्भूयान्नामेत्यंतोक्तिः। भूनभूयश्शब्दयोरैकार्थ्यादिति भावः। न्यायविवरणे भूमशब्दोऽज्ञानां साधारण इत्यज्ञपदप्रयोगेऽपि तस्य पूर्वोत्तरपक्षन्यायानुसंधानहीनानां इत्यर्थत्वात् तस्य सर्वनयसाधारण्यादिहाज्ञानामिति नोक्तम्। भूमशब्दस्य अध्यात्म-संबंधभूमा भूम्नः क्रतुवज्ज्यायस्त्वमित्यादौ बाहुल्यरूपधर्मवाचित्वेन प्रयोगेऽपीह धर्मधर्मिणोरभेदविवक्षया पूर्णरूपधर्मिपरत्वमिति मत्वोक्तम् ॥ भूमनाम्नो विष्णाविति ॥ अधिकं चंद्रिकायाम्। इत्यंतभाष्यं संगतिपरत्वेन तावद्व्याकुर्वन् यो वै भूमा तत्सुख-मित्युक्तेरित्येतस्य भावार्थमाह ॥ आनंदस्येति ॥ छंदोगेति ॥ सप्तमेऽध्याये यो वै भूमा तत्सुखमिति सुखपदेनोक्तं पूर्णं सुखमिति। जडे अप्रसक्त्या निषेधायोगात्। अल्पेऽपूर्णे चेतने सुखं नेति वक्तव्ये तत्र स्वरूपसुखनिषेधे बाधाद्धर्मांतरेण वाक्यशेषा-दिति न्यायेनासंकुचितपूर्णसुखनिषेध एव वाच्य इति तदन्यथानुपपत्त्या तत्सुखमित्यु-क्तस्य पूर्णसुखत्वलाभ इत्युपेत्य टीकायां शेषोक्तिः। अवशिष्टकृत्स्नभाष्यभावमाह ॥ तस्य चेति ॥ वक्ष्यमाणदिशोत्क्रमणलिंगेन निरवकाशप्राणश्रुतिसामानाधिकरण्यात् विष्णोरितरत्वे प्राणत्वे सतीत्यर्थः। यो वै भूमा तत्सुखमित्युक्तेरित्यस्य तात्पर्यम् ॥ प्रागुक्तेत्यादि ॥ इतिसंगतिसंभवादित्यर्थः। तदेव भाष्यं पूर्वपक्षतद्युक्तितत्फ-लोक्तिपरत्वेन व्याकुर्वन् तस्यैव भूमत्वप्राप्तिरिति प्रतिज्ञांशार्थमाह ॥ मुख्येति ॥ प्राणपदस्य हरावपि भावात् मुख्येत्युक्तिः। कुत इत्यतः तत्र हेतुत्वेनाध्युपदेशादित्ये-तद्व्यावर्त्योक्तिपरमुक्त्वेत्यंतभाष्यं व्याचष्टे ॥ नामेति ॥ नामवाङ्मनस्संकल्पचित्तध्या-नविज्ञानबलान्नाप्तेजआकाशस्मराशाशब्दितान् उषःस्वाहापर्जन्यमित्राग्निवरुणविधु-

प्रवहानिरुद्धप्राणेंद्रोमारुद्रवाणीरूपदेवान् नारदसनत्कुमारप्रश्नोत्तराभ्यां उत्तरोत्तरातिशयितत्वेनोक्त्वेत्यर्थः। एतच्च तदुत्तममनुक्त्वेतिवक्ष्यमाणानुक्तिरूपयुक्तेर्निरवकाशत्वायोक्तम्। तथा च विवरिष्यामः। इत्युक्त्वेत्यस्य कर्मकारकं निष्कृष्याह ॥ प्राणस्येति ॥ एतच्च प्राणस्य मुख्यप्राणत्वेनानुक्तिर्बाधिकेति वक्तुम्। ननु मध्येऽन्योक्त्यापि भूम्न उक्तिसंभवान्नेदं भूम्नः प्राणत्वसाधकमित्यतः प्राणो वा आशाया भूयानित्युक्त्वा प्राणाद्भूयसोऽनुक्तिरिति न्यायविवरणोक्तं संयोजयति ॥ तदुत्तममिति ॥ यदीह नामादिभ्यो वागादिवत् प्राणाद्भूमाऽन्यः स्यात्तदाऽस्ति भगवो नाम्नो भूय इत्यादिप्रश्नवत् वाग्वा नाम्नो भूयसीत्यादिप्रतिवचनवच्च अस्ति भगवः प्राणाद्भूय इति प्रश्नः भूमा वाव प्राणाद्भूयानिति प्रतिवचनं च स्यात्। भूम्नः सर्वोत्तमत्वार्थमेव नामवागादितारतम्यस्य प्रक्रांतत्वात्। न च यदर्थमन्यत्प्रक्रांतं तदनुक्तिर्युक्तेति भावः। निरवकाशानुक्तिबलात् भूमा प्राण एव। भूम्नः प्राणत्वे तु नानुक्तिर्बाधिका। प्राणो वा आशाया भूयानित्युक्तत्वादिति भावः। भूमप्राणयोर्मध्ये सत्यं त्वेव विजिज्ञासितव्यमित्यादिना सत्यविज्ञानमतिश्रद्धानिष्ठाकृतिसुखानां वस्तूनामुक्तत्वेऽपि तेषां सैव हि सत्यादय इत्यग्रे वक्ष्यमाणादिशा भूमाऽभिन्नत्वात्तदुत्तममनुक्त्वे (त्युक्तं) ति युक्तम्। श्रुत्यंतरे विष्णुर्वै देवेभ्य इत्यत्र॥ उपक्रमादिति ॥ न च समाख्यापि साभ्यासत्वेन सोपपत्तिकत्वेन च प्रबलेति शंक्यम्। निरवकाशानुक्तिसचिवस्य बलवत्त्वादिति तात्पर्यार्थः ॥ अत इति ॥ निरवकाशानुक्तिसहितोपक्रमादित्यर्थः। यो वै भूमेति वाक्यतात्पर्यम् ॥ तस्यैवेति ॥ एवं प्राणाद्भूम्नोऽन्यत्वे तदुत्तमानुक्तिरूपं बाधकमुक्त्वा भूम्नः प्राणत्वमुक्तम्। इदानीमस्तु प्राणभूम्नोरेकप्रकरणत्वं अथापि भूमा विष्णुः स्यादित्याशंकापूर्वं उत्क्रांतेत्यादिभाष्यं व्याचष्टे ॥ नन्विति ॥ इत्युक्तरीत्येति ॥ यद्यपि तत्र निरवकाशलिंगबलेन प्राणश्रुतेर्वैष्णवत्वं निर्णीतं इह च तन्नास्ति। तथापि जीवनहेतुत्वादिप्राणपदप्रवृत्तिनिमित्तस्य हरौ पुष्कलत्वेन अन्यगतस्य तदधीनत्वाल्पत्वाभ्यां विष्णौ महायोगविद्रूढयुक्त्या विष्णौ मुख्यत्वस्योक्तत्वात् तत्त्याजकस्येहाभावादत्रापि प्राणपदस्य वैष्णवत्वमिति शंकाशयः। भाष्ये चोऽवधारणे भिन्नक्रम इति मत्वा तदर्थं व्यनक्ति ॥ नायमिति ॥ उत्क्रांतेति ॥ उत्क्रांतः प्राणो येषां तान् उत्क्रांतप्राणान् मातापित्रादीन् साकल्येनैकदेशेन (समासं समासेन संकोचेन व्यतिषं विलुंठ्य सामस्त्येनेति यावत्) शूलेन दहेत्। नैनं ब्रूयुः पितृहासीति न मातृहासीत्यादौ वाक्ये इत्यर्थः ॥ सर्वगत इति ॥ अदृश्यत्वादिनये सर्वगतं सुसूक्ष्ममिति सर्वगतत्वगुणस्य समन्वितत्वादिति भावः ॥ छ ॥ आकांक्षाक्रमेण

भाष्यं व्याचष्टे ॥ विष्णुरेवेति ॥ तत्त्वित्यनुवृत्तस्यार्थोऽयम् । सम्यक्प्रसीदत्यनेन पुरुष इति तत्वप्रदीपदर्शितव्युत्पत्तिं हृदि कृत्वा भाष्ये संप्रसादादित्येतत् पूर्णसुखरूपत्वादिति व्याख्यातम् । तच्छ्रुतौ केन लब्धमित्यत आह ॥ तत्सुखमितीति ॥ तस्य भूमनिष्ठत्वद्योतनाय यो वै भूमेत्यंशोक्तिः । अर्थोक्तिपूर्वं भाष्यपदमनुवदति ॥ नामादीनां सर्वेषामिति ॥ उपरीत्यनूद्यार्थमाह ॥ तदुत्तमत्वेनेति ॥ प्राणभूम्नोर्द्वयोरपि विष्णुत्वमिति भाष्यपक्षे प्राणांतर्यामित्वेनैव प्राणपदेन विष्णोर्गृहीतेर्नामादिप्राणांतात् सर्वस्मादुत्तमत्वम् । यदा तु प्राणस्य वायुत्वं भूम्न एव तु विष्णुत्वमिति न्यायविवरणादिपक्षस्तदापि प्रश्नाद्यध्याहारेण सर्वस्मादुत्तमत्वं प्राप्तमिति नासिद्धो हेतुरिति भावः । उत्तरसूत्रस्थचकारोऽत्राप्याकर्षणीय इति भावेनाह ॥ व्यपदेशाच्चेति ॥ तथा च संप्रसादात् प्राणादधि उपरि उपदेशादिति पररीत्या एक एवायं सौत्रो हेतुरिति न भ्रमितव्यमिति भावः ॥ पूर्णसुखार्थत्वादिति ॥ मुख्यामुख्ययोर्मुख्ये संप्रत्यय इति न्यायात्। मुख्यस्य निर्विशेषेण शब्द इति स्मृतेर्नाल्पे सुखमस्तीति वाक्यशेषबलाच्च संकोचकापवादकस्याभावे पूर्णसुखलाभादिति भावः । पूर्वपक्षिणाऽऽक्षिप्तोऽप्ययं हेतुस्तत्प्रापकखंडनेन स्थिरीभविष्यतीति भावः । यद्वा नामादिप्राणांतेभ्यः सर्वेभ्योऽप्युत्तमत्वेनोपदेशादिति निरवकाशहेतुसाहित्यान्नैतदन्यशंकार्हमिति भावेन संप्रसादादित्युक्तिः । अत एव भाष्ये चशब्दः ॥ सर्वतः परममकारवाच्यमिति ॥ परमश्चासावश्चेति विग्रह इति भावः । अनेन सर्वोत्तमत्वमुक्तम् । परममिति द्राविडपाठेऽपि आंध्रपाठानुरोधात्परमामित्युक्तिः । शिष्टश्रौतवदार्थस्तु विश्वतो दर्शनादिकमस्येति विश्वाक्षम् । विश्वं प्रविष्टत्वेन वर्तमानम्। नारायणं मुक्तसंघाश्रयम् । देवं प्रकाशरूपम् । विश्वं गुणैः पूर्णमिति तत्वप्रदीपे व्यक्तः । द्वितीयांतस्य तद्विश्वमुपजीवतीति कर्तृक्रियाभ्यामग्रे श्रुताभ्यामन्वयः । ननु श्रुत्यंतराद्विष्णोरिव निरवकाशलिंगोपेतप्राणोपक्रमात् प्राणस्याप्यस्तु सर्वोत्तमत्वं पूर्णानंदत्वं चेत्याशंक्याऽऽह ॥ न चेति ॥ विरोधादिति ॥ अन्योन्यापेक्षयाऽन्योन्यस्य परावरत्वप्राप्तेरिति भावः ॥ इत्युक्तत्वादिति ॥ अंतरनये सुखविशिष्टेति सूत्रभाष्य इत्यर्थः । अनुक्तिसहितस्यैवोपक्रमस्य भूम्नः प्राणसाधकत्वादाह ॥ अनंतरमिति रूपांतरेति ॥ सर्वरूपाणां सर्वगतत्वेऽप्युत्तरनये वक्ष्यमाणरीत्याऽगुत्वस्यापि सर्वरूपेषु सत्वेऽपि यस्मिन् देहस्थादिरूपे महत्वं शक्त्यात्मनाऽस्ति तादृशरूपे क्रियावत्त्वस्यापि संभवात् श्रुतिसिद्धत्वाच्चेत्यर्थः । स्पष्टमुपपादितमेतच्चंद्रिकायाम् । नन्वेवमत्र भाष्ये प्राण-

भूम्नोरेकत्वमुपेत्य उत्क्रमणं कथंचित्समाधाय द्वयोर्विष्णुतोक्तौ एष तु वा अतिवदतीति तुशब्दयोगः आशाशब्दोक्तसरस्वतीतो मुख्यवायोरुत्तमत्वमनुक्त्वा विष्णोरेव तदुक्त्ययोगश्च । इयदामननादित्यादिनयैः आशा सरस्वती प्रोक्ता तत्प्रकृष्टसुखत्वतः । प्राण इत्युच्यते वायुः सर्वे त्वेते दशोत्तरा इत्यादिछांदोग्यभाष्येण च विरोध इत्यतः एष तु वा अतिवदति यः सत्येनातिवदतीति प्राणाद्विष्णोर्भूयस्त्वोक्तिश्चेति न्यायविवरणानुरोधेन प्राणभूम्नोर्भेदमुपेत्याह ॥ अस्तु वेति ॥ अन्यथा प्राणपक्ष एव प्राणस्य विष्णोः सकाशाद् भूयस्त्वोक्तिर्न्यायविवरणोक्ता बाधिका । अध्याहारस्यापि कल्पकाभावेनानवकाशाच्चेति भावः ॥ इत्यादिनेति ॥ ज्ञापकेनेति शेषः । पूर्वत्र प्राणवादिनोऽतिशयितवस्तुवादित्वमुक्त्वा एष तु वा अतिवदति यस्सत्येनातिवदतीति सत्याख्यवस्तुवादिनः प्राणवादिनोऽप्यतिशयितवस्तुवादित्वोक्त्या तुशब्देनाध्याहारो ज्ञाप्यते। सत्यभूम्नोरभेदश्च सैव हीत्यादावग्रे व्यक्त इति भावः ॥ प्रश्नादीति ॥ व्यक्तमेतत्तृतीये व्यतिहारो विशिंषंति हीतरवदित्यत्र। तेनास्यापौनरुक्त्यमपि चंद्रिकायां व्यक्तम्। भाष्योक्तेरभिप्रायं वक्तुमाह ॥ न चैतदिति ॥ अंतर्यामीति ॥ प्राणशब्दस्य वायुपरत्वेऽपि आत्मन आकाशः संभूत इत्यादावाकाशादिशब्दैरिवांतर्यामिविवक्षया भाष्ये प्राणपदेन विष्णोरुक्तेरित्यर्थः । वक्ष्यते च कारणत्वेनेत्यत्राकाशादिशब्दानामन्यपरत्वेऽपि विष्णुपरत्वम् ॥ ८ ॥

सूत्रभाष्यम्—

॥ ॐ धर्मोपपत्तेश्च ॐ ॥ ९ ॥

सर्वगतत्वादिधर्मोपपत्तेश्च ॥ ९ ॥ इति भूमाधिकरणम् ॥ २ ॥

तत्वप्रकाशिका—

युक्त्यन्तरेण विष्णोर्भूमत्वप्रतिपादकं सूत्रमुपन्यस्य व्याचष्टे ॥ धर्मेति ॥ 'स एवाधस्तात् स उपरिष्टात् स पश्चात् स पुरस्तात् स दक्षिणतः स उत्तरतः । स एवेदं सर्वम् । यत्र नान्यत्पश्यति नान्यत्श्रृणोति नान्यद्विजानाति स भूमा स भगवः कस्मिन् प्रतिष्ठितः स्वे महिम्नि' इत्यादिना भूम्नि सर्वगतत्वादिधर्मश्रवणाच्चासौ विष्णुरेव । तेषां विष्णावेवोपपत्तेरित्यर्थः । अतो विष्णुरेव भूमेति तस्यैवानंदमयत्वमिति सिद्धम् ॥ ९ ॥ अ० २ ॥

भावदीपः—

॥ ॐ धर्मोपपत्तेश्च ॐ ॥ ९ ॥ भाष्यस्थादिपदोक्तलिंगद्योतनाय यत्र नान्यदित्यादिशेषोक्तिः। यत्र यस्मिन् दृष्टे श्रुते विज्ञाते सतीत्यर्थः। उपपत्तिशब्दः सूत्रे लिंगानां निरवकाशत्वोक्तिपर इति भावेन धर्मश्रवणाच्च विष्णावेवोपपत्तेरिति विच्छिद्य व्याख्यातम् ॥ अत इति ॥ पूर्णसुखत्वादिहेतूनां भावात्। उत्क्रमणानुक्त्योश्च रूपविशेषविवक्षाध्याहाराभ्यामुपपत्त्या बाधकाभावाच्च भाष्यदिशा प्राणपदेनांतर्याम्युक्त्या प्राणभूम्नोरेकत्वेन वा न्यायविवरणरीत्या प्राणभूम्नोर्भेदेन प्राणस्य वायुमात्रत्वेन वा भूमा विष्णुरेवेति सर्वसूत्रार्थः। तमेव हेतूकृत्य यो वै भूमा तत्सुखमित्युक्तेरिति पूर्वाक्षेपकभाष्यार्थमुपसंहरति ॥ इति तस्यैवाऽऽनंदमयत्वमिति ॥ तत्सुखमित्युक्तपूर्णसुखत्वद्वारेत्यर्थः ॥ ९ ॥ अ० २ ॥

सूत्रभाष्यम्—

अदृश्यत्वादिगुणा विष्णोरुक्ताः (विष्णोरुक्ताः इति क्वचिन्नास्ति)। अदृष्टं द्रष्टृश्रुतं श्रोत्रि (बृ. उ. ५–८–११) त्यादिना। 'अहं सोममाहनसं बिभर्मी' (ऋ. सं. १०–१२५–२) त्यादेस्तस्यापि सम्भवान्मध्यमाक्षरस्योक्ता इत्यतो ब्रूते—

॥ ॐ अक्षरमम्बरान्तधृतेः ॐ ॥ १० ॥

'एतास्मिन् (न्नु) खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चे' (बृ. उ. ५–८–११) त्यम्बरान्तस्य सर्वस्य धृतेर्ब्रह्मैवाक्षरम्। 'य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा' (ऋ. सं. १–१५४–४) 'भर्ता सन्भ्रियमाणो बिभर्ति। एको देवो बहुधा निविष्टः। (सन्निविष्टः पा.) यदा भारं तन्द्रयते स भर्तुम्। परास्य (निधाय, पा.) भारं पुनरस्तमेति' (तै. आ. ३–१४)। 'यस्मिन्निदं सञ्च विचैधि सर्वं यस्मिन्देवा अधि विश्वे निषेदुरि' (म. ना. उ. १–२) त्यादिश्रुतेः।

'पृथिव्यादिप्रकृत्यन्तं भूतं भव्यं भवच्च यत्।
विष्णुरेको बिभर्तीदं नान्यस्तस्मात्क्षमो धृतावि' ति (च) स्कान्दे ॥ १० ॥

तत्वप्रकाशिका—

अत्राविनाशित्वसाम्यात् चित्प्रकृतौ हरौ च साधारणस्याक्षरनाम्नो ब्रह्मणि समन्वयप्रतिपादनादस्ति शास्त्रादिसंगतिः। श्रुत्यादिसंगतिं विषयवाक्यमुदाहृत्य

विषयादिकं च सूचयन् सयुक्तिकं पूर्वपक्षं च दर्शयति ॥ अदृश्यत्वादीति ॥ अदृश्यत्वादिगुणाः पूर्वं विष्णोरुक्तास्ते च वाजसनेयके अक्षरस्योक्ताः। 'तद्वा एतदक्षरं गार्गि अदृष्टं द्रष्टृश्रुतं श्रोत्रमतं मन्त्रविज्ञातं विज्ञातृ नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोऽस्ति मन्तृ नान्यदतोऽस्ति विज्ञात्रेतस्मिन्खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' इति। तस्याक्षरस्य विष्णोरन्यत्वेऽदृश्यत्वादिकं चान्यस्यैव प्रसज्ज्येत इत्यवश्यं निर्णेयत्वम्। तदक्षरं विषयः। किं विष्णुरुत चेतनप्रकृतिरिति संदेहः। उक्तसाधारण्यं च संदेहबीजम्। द्रष्टृत्वादिश्रवणात् जडप्रकृतेरोंकारस्य(राकाशस्य) च न संदेहनिविष्टत्वम्। उत्तराधिकरणे त्वीक्षणस्य प्रथम प्रतीतेरस्त्यवकाशः। एतदक्षरं मध्यमं श्रीतत्त्वमेवेति पूर्वः पक्षः। तत्राक्षरशब्दस्य प्रसिद्धेः। 'एतस्य वाऽक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' इत्यादिनाऽक्षरस्य चन्द्रसूर्याद्याधारत्वप्रतीतेश्च। चन्द्राद्याधारत्वस्य च 'अहं सोमम्' इत्यादेस्तद्धर्मत्वात्। न च वाच्यमदृश्यत्वादिविष्णुधर्मश्रवणात् तस्याक्षरत्वमिति। अदृश्यत्वादिगुणानां मध्यमाक्षरेऽपि संभवात्। तथा च स्मृतिः। 'ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते। सर्वत्रगमचिंत्यं च कूटस्थमचलं ध्रुवम्'। 'आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्। अप्रतर्क्यमनिर्देश्यं प्रसुप्तमिव सर्वतः' इत्यादि। अथापि स्यात्। अक्षरश्रुतेरदृश्यत्वादिलिङ्गानां च मध्यमोत्तमाक्षरयोः साम्येऽत्र मध्यमैवोच्यत इति निर्बन्धे को हेतुरिति। मैवम्। 'न तदश्नाति किंचन' इत्यक्षरस्यानशनोक्तेः तच्च विष्णोर्विरुद्धम्। 'अत्ता चराचरग्रहणात्' इत्युक्तत्वात्। न च मध्यमाक्षरस्यानशनाङ्गीकारे विरोधोऽस्ति। अतो मध्यमाक्षरमेवैतदक्षरमिति तस्यैवादृश्यत्वादिगुणकत्वमिति भावः। आहनसं यज्ञेष्वभिषूयमाणम्। लताभिमानित्वेनेयमुक्तिः। 'सोमं राजानं जुव्हति। तं देवा भक्षयन्ति' इत्यादिवत्। सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ इदमक्षरं ब्रह्मैव। 'यदूर्ध्वं गार्गि दिवो यदर्वाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते। आकाश एव तदोतं च प्रोतं चे'त्याकाशाख्यप्रकृतेः सर्वाधारत्वमुक्त्वा 'एतस्मिन्खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' इत्यक्षरस्य तदाधारत्वश्रवणादित्यर्थः। सर्वाधारत्वं कुतो विष्णुत्वनिश्चायकमित्यत आह ॥ य इति ॥ एको देवो भर्तृत्वेन बहुधा निविष्टो जगता भ्रियमाणस्तद्विर्भाति। स च यदा तं भारं भर्तुं नेच्छति तदासौ नश्यतीत्यर्थः। एतच्च तद्वे त्वं प्राण इत्युक्तप्राणस्योच्यते। यस्मिन्निदं सम्यग्विविधं चैधि तदेव ब्रह्मेत्यर्थः। विष्णुवदन्यस्यापि सर्वाधारत्वं किं न स्यादित्यत आह ॥ पृथिव्यादीति ॥ १० ॥

भावदीपः—

॥ ॐ अक्षरमंबरांतधृतेः ॐ ॥ १० ॥ विष्णोश्चेतनप्रकृतेश्चाविनाशित्वसाम्यादक्षरशब्दः साधारण इति न्यायविवरणोक्तं साधारण्यमाह ॥ अविनाशित्वेति ॥ अक्षरशब्दप्रवृत्तिनिमित्तेति योज्यम्। उपलक्षणमेतत्। अक्षरशब्दस्य रूढ्या चेत्यपि ध्येयम्। अविनाशित्वयोगमात्रस्यातिप्रसंगात्। देहतोऽविनाशित्वसाम्यादिति वाऽर्थः। विशेषस्तु चंद्रिकायाम्। इत्यंतभाष्यं संगतिपरत्वेन तावद्व्याकुर्वन् अदृश्यत्वादिगुणा अक्षरस्योक्ता इत्येतावदंशं व्याचष्टे ॥ अदृश्यत्वादिगुणा इति ॥ अदृश्यत्वनये उक्ता इत्यर्थः। वाजसनेयके पंचमाध्याये अदृष्टं द्रष्ट्रश्रुतं श्रोत्रित्यादिनेत्यर्थः ॥ तद्वा एतदिति ॥ अंबराधारत्वद्योतनायादिपदोपात्तपरशेषोक्तिः। अदृश्यत्वादेरक्षरस्थताद्योतनाय पूर्वशेषोक्तिः ॥ इतीति ॥ इत्युक्ता इत्यन्वयः। अहं सोममित्यादेर्भावमाह ॥ तस्येति ॥ वक्ष्यमाणदिशा चंद्राद्याधारत्वलिङ्गाच्चित्प्रकृतित्व इत्यर्थः। गुणा इत्येतस्य तात्पर्यमदृश्यत्वादिकं चेति ॥ इतीति ॥ इति संगतिसंभवादवश्यनिर्णयत्वमक्षरस्येत्यर्थः। ॥ उक्तेति ॥ देहाक्षरणरूपाविनाशित्वाख्यप्रवृत्तिनिमित्तसाधारण्यमित्यर्थः। नन्वक्षरत्रयमीरितमित्यदृश्यत्वनयोक्तस्मृत्या जडप्रकृतौ तथा यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीतेत्योंकारेऽप्यक्षरपदप्रयोगदर्शनात् प्रवृत्तिनिमित्तस्यापि तत्साम्येनैव वाच्यत्वात्तयोः कुतो न संशयकोटित्वमित्यत आह ॥ द्रष्टृत्वादिश्रवणाज्जडप्रकृतेरोंकारस्य चेति ॥ एतेन ॐकारेण सर्वा वाक् संतृण्णेत्यादिश्रुत्या सर्ववर्णात्मकोंकारस्य संदेहकोटित्वं वदंतो निरस्ताः। क्वचित्तु जडप्रकृतेराकाशस्य चेति पाठ। स च न साधुरेव तत्राक्षरशब्दाप्रवृत्तेः। अविनाशित्वरूपप्रवृत्तिनिमित्तस्य भूताकाशेऽभावात्। अव्याकृते भावेऽपि कालात्मादावपि भावेनाऽऽकाशस्य चेति विशिष्योक्त्ययोगादित्याहुः। तर्हि उत्तरनयेऽपि तदैक्षतेति श्रवणाज्जडप्रकृतिसंशयो न स्यादित्यत आह ॥ उत्तरेति ॥ सदेवेत्यत्राप्रतीतेरित्यर्थः। एतेनांतर्यामिनयेऽपि प्रकृतेः संशयकोटित्वं समाहितं ध्येयम्। तदेव भाष्यं पूर्वपक्षादिपरत्वेनापि व्याकुर्वन् मध्यमाक्षरस्योक्ता इत्येतावदंशं प्रतिज्ञापरत्वेन व्याचष्टे ॥ एतदिति ॥ अदृष्टत्वादिगुणकमित्यर्थः। श्रीतत्वस्येत्यनुक्त्वा मध्यमाक्षरस्येत्युक्तिलब्धां युक्तिमाह। ॥ तत्रेति ॥ ये त्वक्षरमनिर्देश्यमिति गीतादौ श्रीतत्वे प्रसिद्धेरित्यर्थः। अक्षरत्रयमीरितमिति स्मृत्या विष्णावपि प्रसिद्धिरस्ति। अत एव भाष्ये मध्यमपदम्। अन्यथाऽक्षरस्येत्येव ब्रूयादित्यतो भाष्ये इत्यादिनेत्यनेन न केवलं प्राक्टीकोक्तवाक्य-

शेषो ग्राह्यः। किंतु एतस्य वा इत्यादिलिंगोक्तिपरवाक्यं च। गुणा इत्यनेन चंद्राद्याधारत्वगुणोऽपि ग्राह्य इति भावेन तद्वाक्योक्तिपूर्वं लिंगमाह ॥ एतस्येति ॥ लिंगस्य श्रीतत्वधर्मतोक्तिपरत्वेनाहमित्यादिभाष्यं योजयति ॥ चंद्रेति ॥ अंभ्रिणी-पर्यायश्रीवाक्यत्वादहमित्यादेरिति भावः। द्युभ्वादिनयन्यायेन विष्णावपि संभवा-द्भाष्यस्थादिपदानुरोधेन तद्धर्मत्वादित्येवोक्तम्। न तु तस्यैव धर्मत्वादिति। भाष्ये इत्यादेरित्यादिपदेनाहं त्वष्टारमुतपूषणं भगमिति वाक्यशेष इव ये त्वक्षर-मितिगीतास्मृतिरपि गृह्यत इति भावेन तद्व्यावर्त्यशंकामाह ॥ न च वाच्यमिति ॥ आकांक्षितपूर्त्या तस्यापि संभवादिति वाक्यार्थमाह ॥ अदृश्यत्वादीति ॥ न केवलं अदृश्यत्वनयरीत्या विष्णावित्यपेरर्थः। इत्यादेरित्यादिपदोक्तां स्मृतिमाह ॥ तथा चेति ॥ अक्षरमविनाशि सूक्ष्मत्वादनिर्देश्यम्। अप्रसिद्धत्वादव्यक्तम्। सर्वगं देशतो व्याप्तम्। गुणबाहुल्यादचिंत्यम्। कूटे, आकाशे अभिमानितया स्थितं कूटस्थम्। अचलं कदापि स्वपदादभ्रष्टम्। ध्रुवं निर्विकारमित्यर्थः। इयं चित्प्रकृतिपरेति तात्पर्ये व्यक्तम्। आसीदिति द्वादशगीताभाष्योक्तस्मृतिः। इदं प्रसिद्धं तमः मायाख्यं प्रलये प्रसुप्तमिव निर्व्यापारमासीत्। अभूतमजातम्। अप्रज्ञातमित्यादिना प्रत्यक्षाद्य-वेद्यत्वमुच्यते। अत्तेत्युक्त्वा न तदश्नाति किंचनेति विरुद्धतेति न्यायविवरणमत्र योजयितुं तद्व्यावर्त्यशंकामाह ॥ अथापीति ॥ आदिपदेन सूर्याद्याधारत्वलिंगग्रहः। न्यायविवरणवाक्यस्य खंडशोऽर्थमाह ॥ न तदिति ॥ अयमक्षरवाक्यशेष इत्यग्रे स्पष्टम्। अत्र न तदश्नातीत्येव पूर्तौ किंचनेत्युक्तिः सामान्याभावसूचनाय। तेन गुहानयोक्त-रीत्याऽशुभानशनपरं तदिति प्रत्युक्तं ध्येयम् ॥ न चेति ॥ तस्य प्रागत्तृत्वस्य क्वाप्यनुक्तेः अत्तृत्वेऽपि वा धर्मांतरेण वाक्यशेषादिति न्यायेन नान्यत्किंचन मिषदिति श्रुताविव स्वतंत्राशनाभावपरतोपपत्तेरिति भावः ॥ अत इति ॥ श्रुतिलिंगरूपप्रापकभावात् विष्णुत्वेऽनशनोक्तिविरोधाच्चेत्यर्थः। अक्षरमित्यनंतरं अत इत्यनुषंगः। इतीति पाठे तु नानुषंगः। अत्रोक्तं प्रागुक्तं चादृश्यत्वादिगुणकत्वमित्यर्थः। आङ्पूर्वस्य हंतेः कर्मणि रूपं मत्वाऽऽह ॥ अभिषूयमाणामिति ॥ कथं चंद्रस्यभिषूयमाणत्वमत आह ॥ लतेति ॥ सोममिति ॥ सोमं राजानमित्यादौ हूयमानभक्ष्यमाणसोमलताभिमानत्वा-च्चचंद्रेऽभिषूयमाणत्वोक्तिरित्यर्थः ॥ छ ॥ यत्र क्व चाक्षरस्य ब्रह्मत्वमुच्यते इति भ्रम-निरासाय भाष्यस्थप्रतिज्ञार्थमाह ॥ इदमिति ॥ भाष्योक्तवाक्यांदबरधृतेरेव प्रतीत्या तदंतसर्वधृतेरप्रतीतेः सर्वाधारप्रकृत्याधारत्वं विष्णोरन्यस्य विरुद्धमिति न्यायवि-

चरणोक्तिमनुरुध्य वाक्यशेषं वदन् हेतूक्तिपरं भाष्यं व्यनक्ति ॥ यदूर्ध्वमिति ॥ ॥ आकाशाख्यप्रकृतेरिति ॥ चित्प्रकृतेरित्यर्थः। अत्र श्रुतावाकाशस्य सर्वाधारत्वमुक्त्वाऽस्यैकाक्षराश्रितत्वमुच्यते। तच्च अव्यक्तात् पुरुषः परः। अक्षरात्परतः परः। मम योनिरप्स्वां१तःसमुद्र इत्यादिना श्रौतत्वलिंगमिति आकाशस्तल्लिंगादिति न्यायसाम्येन दीप्तेराकाशशब्दोक्ता श्रीर्हि सर्वाश्रया मता। तदाश्रयः परो विष्णुः सोऽस्थूलादिगुणो मत इति बृहद्भाष्योक्तस्मृत्या चाकाशश्चित्प्रकृतिरिति भावः। अधिकं चंद्रिकायाम्। य एव एकप्रकृतिपुरुषकालाधारः पृथिवीं द्यां सर्वभुवनानि च दधारेति जन्मादिनये य इति श्रुतेर्व्याख्यानात् भर्तेत्यादेरर्थमाह ॥ एक इति ॥ भर्ता सन्नित्यस्यार्थो भर्तृत्वेनेति ॥ भ्रियमाणो बिभर्तीत्युक्त्या प्राप्तं जगदीश्वरयोराधाराधेयभावसाम्यं निरसितुं यदा भारं तंद्रयते स भर्तुं (निधाय) परास्य भारं पुनरस्तमेतीति शेषार्थमाह ॥ स चेति ॥ अत्र विष्णुश्रुत्यादेरभावात् कथं विष्णौ समाख्येयं श्रुतिरित्यतस्तत्शब्दपरामृष्टमाह ॥ एतच्चेति ॥ स च प्राणोऽत एव प्राण इत्यत्र लक्ष्मीपतित्वादिलिंगेन विष्णुरिति निर्णीत इति भावः। एधि अस्तीत्यर्थः। ध्वसोरेध्दावभ्यासलोपश्चेति अस्तेर्मध्यमपुरुषप्रयोगः छांदस इत्येके। एधीत्यस्यावर्धतेति चंद्रिकोक्तिः। यष्मिन्निति श्रौतयच्छब्दस्य विष्ण्वर्थत्वद्योतनाय तदेव ब्रह्म परमं कवीनामित्युत्तरवाक्यस्थतत्पदेनान्वयमाह ॥ तदेव ब्रह्मेत्यर्थ इति ॥ विष्णुवदन्यस्यापीति ॥ य उ त्विति श्रुतेर्जन्मादिनयोक्तरीत्या भर्तेति श्रुतेश्च यदा भारमिति वाक्यशेषार्थोक्तिरीत्याऽन्वयव्यतिरेकाभ्यां विष्ण्वेकपरत्वप्रतीतेस्तथैव श्रुतीनां व्याख्यातुं शक्यत्वेऽपि स्मृत्यवैयर्थ्याय श्रुतीः सर्वाधारप्रकृत्याधारत्वं विष्णोरिति न्यायविवरणैकदेशविवरणपरतया व्याख्यायान्यस्य विरुद्धमित्येतदंशविवरणपरतया स्मृतिर्व्याख्यातेति ध्येयम् ॥ १० ॥

सूत्रभाष्यम्--

॥ ॐ सा च प्राशासनात् ॐ ॥ ११ ॥

सा च धृतिः प्रशासनादुच्यते 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत' (बृ. वि. ५-८-९) इत्यादिना। तच्च प्रशासनं विष्णोरेव।

सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि'

(ऋ. सं. १-१६४-३६)।

'चतुर्भिः साकं नवतिं च नामभिश्चक्रं न वृत्तं व्यतींरवीविपदि'
(ऋ. सं. १–१५५–६) त्यादिश्रुतेः।
'एकः शास्ता न द्वितीयोऽस्ति शास्ता' (भारते)।
'यो हृच्छयस्तमहमिह ब्रवीमि' (ग्रन्थोऽयं क्वचिन्न पठितः)।
'न केवलं मे भवतश्च राजन्स वै बलं बलिनां चापरेषामि' (भागवते)।
त्यादेश्च ॥ ११ ॥

तत्वप्रकाशिका—

युक्त्यन्तरेण विष्णोरेवाक्षरत्वं प्रतिपादयत्सूत्रमुपन्यस्य व्याचष्टे ॥ सा चेति ॥ यदा सर्वधारत्वमेवाक्षरस्य विष्णुत्वं निश्चाययति तदा सुतरामाज्ञामात्रेण सर्वाधारत्वं विष्णुत्वनिश्चायकमित्याशयः। कुतोऽनेन विष्णुत्वनिश्चय इत्यत आह ॥ तच्चेति ॥ सर्वधृतिकारणं प्रशासनं विष्णोरेव तत्कुत इति तत्राह॥ सप्तेति ॥ महदहंकारपञ्च-महाभूताख्यसप्तदेवता ब्रह्माण्डाख्यातिसमृद्धगर्भास्तदावरणभूता भुवनस्य रतिप्रदाः सारभूता वा भुवनरतिप्रदस्य विष्णोराज्ञया विविधविश्वधारणे तिष्ठंतीत्यर्थः। सर्व-धृतिहेतुप्रशासनं विष्णोरिवान्यस्यापि किं न स्यादित्यत आह ॥ एक इति ॥ बलं बलप्रदो धृतिहेतुः ॥ ११ ॥

भावदीपः—

॥ ॐ सा च प्रशासनात् ॥ ॐ ॥ ११ ॥ सूत्रे चशब्दादाह ॥ युक्त्यंतरेणे-त्यादि ॥ धृतेरक्षराज्ञाधीनत्वोक्तावप्यक्षरस्य कथं विष्णुत्वसिद्धिरित्यतोऽभिप्रायमाह ॥ यदेति ॥ आज्ञामात्रेण सर्वाधारत्वाच्चेत्यर्थ उक्तो भवति। तच्छब्दार्थं व्यनक्ति ॥ सर्वधृतीति ॥ अर्धपदार्थोऽतिसमृद्धेति ॥ तदावरणेति फलितोक्तिः। रेतो रेतस इति व्यत्ययेन बहुवचनस्यैकवचनं मत्वाऽर्थद्वयमाह ॥ रतीति ॥ षष्ठचर्थं मत्वाऽर्थ-माह ॥ भुवनेति ॥ चतुर्भिरिति श्रुतिर्जन्मादिनय एव व्याख्याता। स वै बलमित्यस्य प्रकृतोपयोगायाऽर्थमाह ॥ बलमिति ॥ ११ ॥

सूत्रभाष्यम्—

॥ ॐ अन्यभावव्यावृत्तेश्च ॐ ॥ १२ ॥

अस्थूलमनण्वि' (बृ. उ. ५–८–८) त्यादिना स्थूलाण्वादीनामन्यवस्तुस्वभावानां

व्यावृत्तेश्च। 'अस्थूलोऽनणुरमध्यमो मध्यमोऽव्यापको व्यापको योऽसौ हरिरादिरनादिर-विश्वो विश्वः सगुणो निर्गुण' इत्यादेर्विष्णोरेव (हि) ते धर्माः।

'अस्थूलोऽनणुरूपाऽसावविश्वो (स विश्वोऽविश्व. पा.) विश्व एव च।
विरुद्धधर्मरूपोऽसावैश्वर्यात्पुरुषोत्तम'।

इति च (आदि पा.) ब्राह्मे ॥ १२ ॥ इति अक्षराधिकरणम् ॥ ३ ॥

तत्वप्रकाशिका—

हेत्वन्तरेण विष्णोरेवाक्षरत्वं प्रतिपादयत् सूत्रं पठित्वा व्याचष्टे ॥ अन्येति ॥ 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्य अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहम-च्छायमतमोऽवाय्वनाकाशमसङ्गमरसगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणम-मुखममात्रमनंतरबाह्यं' 'न तदश्नाति किंचन' इति सकलवस्तुस्वभावानां स्थूलत्वा-दीनामक्षरे व्यावृत्तिकथनाच्च ब्रह्मैवाक्षरमित्यर्थः। लौकिकस्थौल्यादिराहित्यं कथं विष्णुत्व निश्चायकमित्यत आह ॥ अस्थूल इति ॥ लौकिकस्थौल्यादिराहित्येऽपि अलौकिकपरिमाणादिसद्भावात् न विष्णोरस्वभावत्वमिति भाननोपलक्षणतया मध्यम इत्याद्युक्तम्। तमो वाय्वादीनां सर्वात्मना निवृत्तिरदुःखमसुखमित्यादिवत्। लौकिकपरिमाणादिराहित्यं कथं विष्णोर्युक्तम्। सर्वपदार्थानां प्राकृतपरिमाणस्यैव दर्शनादित्यत आह॥ अस्थूलेति॥ मध्यमाक्षरस्याप्राकृतविग्रहत्वेऽपि भगवदपेक्षयैव। अनेनैव 'न तदत्येश्नाति किंचन' इत्वेतदपि जीवस्वभावभूतोपजीवनार्थाशनव्यावृत्त्य-र्थमिति सूचितं भवति। अस्थूलत्वादिसमभिव्याहारात्। अक्षरश्रुत्यादीनां तु विष्णावेव मुख्यता तस्यादक्षरं विष्णुरेवेति तस्यैवादृश्यत्वादि इति स्थितम्॥ १२॥ ॥ अ० ३ ॥

भावदीपः—

॥ ॐ अन्यभावव्यावृत्तेश्च ॐ॥ १२॥ सौत्र चशब्दांशं प्रागुक्त हेतुसमुच्चा-यकं मत्वाऽऽह ॥हेत्वंतरेणेति॥ सूत्रे अन्यभावेत्युक्तिलब्धोक्तिरन्यवस्तुस्वभावानामिति। तदर्थः ॥ सकलेति ॥ प्राकृतानामित्यर्थः। भाष्ये भावप्रधानं मत्वोक्तम् ॥ स्थूल-त्वेति ॥ भाष्योक्तश्रुतौ मध्यमव्यापकपदयोरुक्तेरुपयोगमाह ॥ अलौकिकेति ॥ उपलक्षणतया स्थौल्यादेरुपलक्षणतयेत्यर्थः। विस्तृतमेतन्महतोऽल्पस्वमपि हि व्योमवत् प्राह वेदराडित्यादिना वैशेषिकाधिकरणानुव्याख्याने भगवतोऽणुत्वमहत्त्वादिव्युत्पा-

दनेन। नन्वस्थूलमित्यादिना प्राकृतस्थौल्यादिनिरासे तत्प्रायपठितानामपि तथा स्यादित्यत आह ॥ तम इति ॥ अदुःखमसुखमिति श्रुतावसुखमित्यनेन बाह्यसुखनिषेधेऽपि अदुःखमित्यनेन दुःखमात्रनिषेधो यथा तथाऽत्राप्यस्थूलमित्यादौ लौकिकस्थौल्यादिनिषेधेऽपि अतमोऽवाय्वित्यादौ सर्वात्मना तमःप्रभृतेरेव निरासः। आदित्यवर्ण तमसः परस्तादित्यादिवाक्यबलादित्यर्थः। प्राकृतस्थौल्यादिराहित्यरूपहेतोर्व्यभिचारमाशंक्य दहरनयभाष्ये वक्ष्यमाणपरिहारं स्वयमाह ॥ मध्यमेति ॥ तथा च सापेक्षनिरपेक्षयोर्निरपेक्षं स्वीकर्तव्यमित्यग्रे भाष्योक्तेरस्थूलमित्यादिश्रुतौ निरपेक्ष स्थौल्यादिराहित्यस्यैव ग्राह्यत्वात्तस्यैव च सूत्रकृता विवक्षितत्वान्न व्यभिचार इत्यर्थः। प्रागुक्तानशनोक्तिविरोधं परिहर्तुं अनशनोक्तिस्त्वनुपजीवनार्थत्वेनैव सावकाशेति न्यायविवरणं सूत्रारूढं दर्शयितुं सयुक्तिकं व्याख्याति ॥ अनेनैवेति ॥ सूत्रे लौकिकस्थौल्यादिराहित्यस्य श्रुत्यर्थतया कथनेनैवेत्यर्थः। साशनानशनत्वेन नरदेवौ यथोदितौ। अत्ति विनाऽप्यदौर्बल्यात्तदानत्तिर्हरेर्भुज इत्येकादशस्कंधतात्पर्योक्तेरिति भावः। कुत एवं सामान्योक्तेर्विशेषपरत्वमित्यतो धर्मांतरेण वाक्यशेषादिति न्यायादिति भावेन न्यायविवरणोक्तसमाधौ युक्तिमाह ॥ अस्थूलत्वादीति ॥ लौकिकस्थौल्यादिराहित्यादिसमभि व्याहारादित्यर्थः ॥ अक्षरेति ॥ अक्षरश्रुतितत्प्रवृत्तिनिमित्तसूर्यचंद्राद्याधारत्वलिंगरूपपूर्वपक्षप्रापकाणामित्यर्थः ॥ मुख्यतेति ॥ अनित्यत्वं देहहानिः दुःखप्राप्तिरपूर्णता। नाशश्चतुर्विध प्रोक्तस्तदभावो हरेः सदेति स्मृतेः। तस्मादक्षरमित्याचक्षत एतमेव संतमित्यादि श्रुतेः। अक्षरं ब्रह्म परममित्यादि स्मृतेः। द्युभ्वादिनयोक्तदिशा अत्र भाष्योक्तश्रुत्यादिना च सूर्याद्याधारत्वादेर्हरावेव युक्तत्वादिति भावः ॥ तस्मादिति ॥ तस्मात् प्रकृतिद्वारा सर्वाधारत्वाज्ञामात्रेण सर्वाधारत्वनिरपेक्षलौकिकस्थौल्यादिराहित्यरूपनिरवकाशप्रापकभावात्। अनशनोक्तिरूपबाधकाभावाच्चेति सर्वहेत्वंशार्थः। अक्षरं तत्त्विति प्रतिज्ञार्थोऽक्षरंविष्णुरेवेति ॥ इतीति ॥ हेतोरित्यर्थः। शेषेण फलोक्त्या भाष्योपसंहारः। यत्तु कश्चिदाह। सूत्रे श्रुत्यनुसारायाऽऽकाशधृतेरित्येव वाच्यं अंतपदं व्यर्थमिति तन्न। तवाप्यंबरपदास्वारस्यात्। मम तु अं विष्णुं बिभर्तीत्यादिव्युत्पत्त्या श्रौतत्वमेव आकाशशब्दार्थं इति सूचनेन स्वारस्योपपत्तेश्च चंद्रिकोक्तदिशा पृथिव्यादिप्रकृत्यंतसर्वाधारत्वोक्त्यर्थतयांऽतपदस्यापिसार्थक्यात् ॥ १२ ॥ अ० ३ ॥

सूत्रभाष्यम्——

'सदेव सोम्येदमग्र आसीदि' (छां. उ. ६–२–१) त्यादिना सतः स्रष्टृत्वमुच्यते। तच्च सत् 'बहु स्यां प्रजायेये' (छां. उ. ६–२–३) ति परिणामप्रतीतेर्न विष्णुः। स 'ह्यविकारस्सदा शुद्धो नित्य आत्मा सदा हरिरि' त्यादिनाऽविकारः प्रसिद्ध इत्यतो ब्रवीति ॥

॥ ॐ ईक्षतिकर्मव्यपदेशात्सः ॐ ॥ १३ ॥

तदैक्षते' तीक्षतिकर्मव्यपदेशात्स एव विष्णुरत्रोच्यते। 'नान्योऽतोऽस्ति द्रष्टा' (बृ. उ. ५–७–२३) 'नान्यदतोऽस्ति द्रष्ट्रि' (बृ. उ. ५–८–११) त्यादिना तस्यैव हि तल्लक्षणम्। बहुत्वं चाविकारेणैवोक्तं 'अजायमानो बहुधा विजायत' (तै. आ. ३–१३–१) इति ॥ १३ ॥ इति सदधिकरणम् ॥ ४ ॥

तत्वप्रकाशिका——

अत्र 'सदेव सोम्ये'त्यादिसृष्टिप्रतिपादकस्थानगतसन्नाम्नो ब्रह्मप्रधानयोः कारणत्वसाम्येन साधारणस्य भगवति समन्वयप्रतिपादनादस्ति शास्त्रादिसंगतिः। श्रुत्यादिसंगतिं विषयवाक्यमुदाहृत्य विषयादिकं च सूचयति ॥ सदिति ॥ 'जन्माद्यस्य यत' इति जगत्स्रष्टृत्वं विष्णोरुक्तं तच्छन्दोगश्रुतौ सतः प्रतीयते तत्तेजो असृजतेत्यादिना। तस्य च विष्णोरन्यत्वे अन्यस्यैव स्रष्टृत्वप्रसङ्गादवश्यं निर्णेयत्वम्। तत्सदत्र विषयः। किं ब्रह्म उत प्रधानमिति संदेहः। कारणत्वसाम्यं संदेहबीजमिति भावः। सयुक्तिकं पूर्वपक्षयति ॥ तच्चेति ॥ एतत्सत् प्रधानमेव भवेन्न तु विष्णुः। 'बहुस्यां प्रजायेय' इति सतो बहुभावाख्यविकारित्वश्रवणादित्यर्थः। विकारित्वप्रतीतावपि कुतोऽयं न विष्णुरित्यत आह ॥ स हीति ॥ विष्णोः प्रमाणैरविकारित्वप्रसिद्धेस्तस्मिंस्तदसंभवात् प्रधाने च तत्संभवात् तदेव सदिति तस्यैव जगत्कारणत्वमिति भावः। नन्वेतत्स्थाने प्रधानस्य प्रतिपाद्यत्वेऽपि तस्योपादानकारणताऽभ्युपगमेनानिष्टाभावाद्व्यर्थमेवेदमधिकरणं प्रतीयत इति। मैवम्। भवेदेतद्यद्येतत्प्रकरणे विकारिकारणमेवोच्येत। नैतदस्ति। 'एकमेवाद्वितीयम्' 'तत्तेजोऽसृजत' 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' 'सता सोम्य तदा संपन्नो भवति' इत्यादिब्रह्मलक्षणानां श्रवणात्। सिद्धान्तयत् सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ सदेवेत्यादिस्थाने सच्छब्देन विष्णुरेवोच्यते। सतस्तदैक्षतेतीक्षत्याख्यक्या-

पारश्रवणात् । जडप्रधानस्येक्षणासंभवादित्यर्थः । अपि च विष्णवन्यस्य कस्यापीक्षतिर्मुख्यतो न विद्यते किमु जडस्येत्याशयेनाऽऽह ॥ नेति ॥ एतेन 'सोमो वै राजा गन्धर्वेष्वासीत् इत्यादिवत् अभिमानिविवक्षयेक्षत्युक्तिरिति परास्तम् । ननु निरवकाशविकारित्वलिंगेनेक्षतिव्यपदेशो गौणः किं न स्यात् । 'सत्वात्संजायते ज्ञानम्' इत्यादेः प्रधानस्य ज्ञानोपादानत्वादित्यत आह ॥ बहुत्वं चेति ॥ बहुभावस्य विकारित्वं विनैव स्वरूपबहुत्वेन सावकाशत्वान्न तद्बलेनेक्षतेर्गौणत्वं कल्प्यमिति भावः ॥ अजायमानोऽविकुर्वाणः । अतः परं ब्रह्मैवैतत्स्थानप्रतिपाद्यं सदितितस्यैवैतत्स्रष्टृत्वं इति सिद्धम् ॥ १३ ॥ अ० ४ ॥

भावदीपः—

॥ ॐ ईक्षतिकर्मव्यपदेशात् सः ॐ ॥ १३ ॥ अत्र न्यायविवरणे कारणत्वसाम्याद्विष्णोरचेतनप्रकृतेश्च 'सदेव सोम्य' इत्यादिसृष्टिस्थानं साधारणमिति अनेकप्रकरणजातरूपस्थानं समन्वेतव्यमुक्तम् । तच्च न साक्षात् । किंतु तत्स्थसन्नामसमन्वये तद्युक्तानेकप्रकरणसम(न्वयद्वा)न्वयो भवतीति सच्छब्दसमन्वयद्वारेत्यभिप्रेत्य भाष्ये तच्च सदिति सन्नाम समन्वेतव्यं प्रदर्शितमिति भावेनान्यत्रोक्तमेव साधारण्यं व्यनक्ति ॥ अत्र सदेवेति ॥ सष्टीत्युपलक्षणम् । सदेव सोम्य । सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः । सता सोम्य तदा संपन्नो भवति सति संपद्य न विदुः । सत आगत्य न विदुरित्यादिसृष्टिसुप्तिसर्वाश्रयत्वादिप्रतिपादकानेकप्रकरणजातरूपस्थानगतस्येत्यर्थः ॥ कारणत्वेति ॥ सदेवेति वाक्ये विश्वस्मात् पूर्व सत्वोक्त्या प्रतीतकारणत्वसाम्येनेति वा तत्तेजोऽसृजतेति वाक्यप्रतीतकारणत्वसाम्येनेति वाऽर्थः । अधिकं चंद्रिकायाम् । संगतिपरत्वेन तावद्भाष्यं व्याकुर्वन् सतः स्रष्टृत्वमुच्यत इति स्रष्टृपदसूचितमाक्षेप्यं दर्शयति ॥ जन्मादीति ॥ अत्र भाष्यटीकयोः स्रष्टृत्वशब्दः कारणत्वमात्रपरः स च गुणान्तरोपलक्षक इत्यग्रे व्यक्तीभविष्यति । उच्यत इत्यस्यार्थः ॥ प्रतीयत इति ॥ सदेवेत्यादि तु वाक्यप्रतीकं सन्नामप्रदर्शनार्थमिति दर्शयन् व्याचष्टे ॥ छांदोग्यश्रुतौ सत इति ॥ षष्ठेऽध्याय इत्यर्थः । 'इत्यादिनेत्यनेनोपात्तं वाक्यमाह ॥ तत्तेज इति ॥ एतेन जन्मादिनयोक्तं स्रष्टृत्वमित्यादिना सत उच्यत इति भाष्ययोजना दर्शिता । तच्च सदित्यादिभाष्यतात्पर्यमाह ॥ तस्य चेति ॥ विष्णावयुक्तविकाररूपपरिणामोक्तेर्विष्णोरन्यत्व इत्यर्थः । स्रष्टृत्वमित्युक्तितात्पर्यमाह ॥ अन्यस्यैवेति ॥ इति संगतिसंभवान्निर्णेयत्वम् । सत इत्यनुषंगः ।

भाष्ये न विष्णुरित्युक्तावपि न्यायविवरणोक्तिमनुरुध्य उत प्रधानमित्युक्तम्। तदैक्षतेतीक्षणश्रवणेऽप्यदृष्टं द्रष्टृत्यक्षरवाक्य इव प्रतमत एवाप्रतीतेरस्ति संदेहनिविष्टत्वं प्रधानस्येति पूर्वमेवोक्तमिति भावः। पूर्वपक्षादिपरत्वेनापि व्याख्यातुमवतारयति ॥ सयुक्तिकमिति ॥ तच्च सन्न विष्णुरिति प्रतिज्ञाभाष्यं फलितार्थपरं मत्वा व्यख्याति ॥ प्रधानमेवेति ॥ हेत्वंशार्थमाह ॥ बहु स्यामिति ॥ बहुभावेति ॥ तेजःप्रभृत्यात्मना। न तु स्वरूपबहुभावेनेत्यर्थः। इत्यादिनेत्यस्यार्थः ॥ प्रमाणैरिति ॥ भाष्ये हिर्हेताविति भावः। अस्त्वविकारित्वं विष्णोः परिणामोऽप्यस्त्वित्यतः बहु स्यां प्रजायेयेत्यन्यस्यान्यभावादृष्टिरिति न्यायविवरणोक्तं हृदि कृत्वाऽऽह॥ तस्मिन्निति ॥ निर्विकारे हरौ। तस्य तेजःप्रभृत्यात्मना बहुभवनरूपविकारस्य क्वाप्येवमदृष्टयाऽसंभवादित्यर्थः ॥ प्रधाने चेति ॥ तस्य विकारित्वादिति भावः ॥ जगत्कारणत्वमिति ॥ एतेन भाष्ये स्रष्टृत्वपदं अनन्याधीनकारणत्वमात्रपरमिति दर्शितम्। ईक्षणं त्वभिमानिद्वारा वा ज्ञानहेतुत्वाद्वा युक्तमिति भावः ॥ नन्विति ॥ उक्तदिशाऽनन्याधीनकारणत्वरूपब्रह्मलक्षणाक्षेपासंभवेऽपि गुणांतराक्षेपप्रदर्शनायेयमाशंकेति ज्ञेयम्। प्रधानस्य सत्पदवाच्यत्वेऽपीत्येतावति वाच्ये स्थान इत्युक्तिर्वक्ष्यमाणनेकप्रकरणगतबहुगुणाक्षेपोक्तिसौकर्याय ॥ उच्येत ॥ प्रतीयेत। यद्वा तेजःप्रभृतेरग्रे त्रिवृत्करणोक्त्योपादानभूतत्वमप्यस्तीत्येवमुक्तिः ॥ एकमेवेति ॥ तेन समाभ्यधिकराहित्योक्त्या सदेवेत्युक्तकारणत्वस्यानन्याधीनतोक्तेः कारणत्वं ब्रह्मलक्षणमिति वा समाभ्यधिकराहित्यादिकं पृथगेकं लक्षणमिति वा एतदुक्तिः। एतच्च जन्मादिसूत्रेऽर्थात्सिद्धम्। सृष्टिः स्थितिश्च संहारो नियतिर्ज्ञानमावृतिः। बंधमोक्षौ च कथ्यंते तस्योत्कर्षप्रसिद्धय इत्युक्तेः ॥ सन्मूला इति ॥ प्रजाः प्रति निमित्तत्वस्थितिहेतुत्वसुप्तगम्यत्वादीनां श्रवणात्तेषामतिव्याप्तिः स्यादिति भावः। प्रतिष्ठापकत्वं च मुक्तिदत्वम्। तत्प्रतिष्ठाश्च मोक्षगा इति तद्भाष्योक्तेः ॥ सता सोम्येति ॥ लयकर्तृत्वं च लब्धम्। प्रजास्तद्वत् प्रजालय इति तद्भाष्योक्तेरेवेति ध्येयम् ॥ छ ॥ किंचित् शेषोक्त्या प्रतिज्ञाहेतूक्तिपरं भाष्यं व्याचष्टे ॥ सदेवेति ॥ अत्रेत्यस्यार्थः स्थान इति। कर्मशब्दार्थो व्यापारेति। तत्कृत्यं चंद्रिकायां व्यक्तम्। तत्वप्रदीपे तु न कर्तृत्वं न कर्माणीति गीतावाक्य इव कर्मेति सृष्टिरुच्यते। ईक्षतिसृष्टयोरुपदेशादित्यर्थ इत्युक्तम्। विष्णुरेवेत्युक्त्या न प्रधानमिति दर्शितम्। तत्र हेत्वाकांक्षायामचेतनस्येक्षणादृष्टिरित्यन्यत्रोक्तमीक्षणस्य निरवकाशत्वमाह ॥जडेति॥

तत्तेज ऐक्षतेत्युक्तं तेजःप्रभृत्यपि चेतनमेवेत्यभिमानिनये वक्ष्यत इति भावः। श्रुत्यर्थं वदन्नेवावतारयति ॥ अपि च विष्ण्विति ॥ एतेनेति ॥ श्रुतौ विष्णवन्यस्य मुख्येक्षणनिषेधेनेत्यर्थः। यथा सोमो वै राजा गंधर्वेष्वासीत्तं देवा ऋषयश्चाभ्यध्यायन्नित्यादौ सोमलताभिमानिचेतनविवक्षया गंधर्वेष्वासीदित्युक्तिस्तथेत्यर्थः। भाष्ये बहुत्वं चाविकारेणोक्तं श्रुताविति्युक्तम्। तावता कथमुक्तशंकाव्युदास इत्यतो बहुभावश्रुतिस्त्वन्यभावं विना तत्तन्नियामकतया स्वरूपबहुत्वार्थतयैव युज्यत इत्यन्यत्रोक्तमत्रसंयोज्य भाष्यभावमाह ॥ बहुभावस्येति ॥ स्वरूपेति ॥ अत्र श्रुतौ स्वरूपबहुभवनमेवोच्यते न तु तेजःप्रभृत्यात्मना बहुभवनम्। बहु स्यामित्युक्त्वा 'तत्तेजोऽसृजते'त्युक्तिस्तु सृष्ट्वा जगदिदं सर्व नियामकतयाऽस्य तु। बहुरूपो भवानीति स्याज्जगच्चेत्यचिंतयदिति तैत्तिरीयभाष्योक्तदिशा तत्तन्नियामकतया स्वरूपबहुभावसंकल्पानंतरं नियम्यं तेजःप्रभृति सृष्टवानित्युपपन्नेति। तदुक्तं चतुर्थपादीयानुव्याख्याने। बहु स्यामिति तस्यैव ह्युक्तमार्गेण युज्यते। तत्तद्गतेन रूपेण तदर्थं ह्यसृजज्जगदिति। न्यायविवरणे चोक्तं बहुभावश्रुतिस्त्वित्यादि। विवृतमेतच्चंद्रिकायाम्। 'बहु स्यामिति संकल्प्य तेजः प्रभृतिसर्जनम्। गुरुः स्यामिति संकल्प्य शिष्यसंपादनादिवत्' इति। सूत्रार्थं विवृण्वन्नेव फलोक्त्योपसंहरति ॥ अत इति ॥ निरवकाशनिर्बाधमुख्येक्षणरूपसाधकभावादित्यर्थः। सदिति सूत्रे शेषोक्तिः। सदिति नपुंसकानुरोधात् ब्रह्मेत्युक्तिः। मम योनिर्महद्ब्रह्मेति प्रधानेऽपि ब्रह्मशब्दोऽस्तीति परंब्रह्मेवेत्युक्तम्। अयं च तस्त्वित्यनुवृत्ततुशब्दस्य स इत्यनेनान्वयेन लब्धोऽर्थः। इतिशब्दो हेत्वर्थः। तस्यैवेति पूर्वाक्षेपकभाष्यस्य विपर्ययेणोपसंहारः ॥स्रष्टृत्वमिति॥ अनन्याधीनकारणत्वादिकं अत्र श्रुतं प्रागुक्तं चेत्यर्थः। यद्वा ईक्षणेन सच्छब्दितस्य चेतनत्वे निश्चिते तत्तेजोऽसृजतेत्यादेः सृष्टिपरत्वस्यैव संभवेन कारणत्वमात्रपरत्वस्याकल्प्यत्वात् स्रष्टृत्वमित्युक्तम्। यत्तु कश्चिदाह। व्यापारपरस्य कर्मपदस्य धातुनिर्देशरूपेक्षतिपदेन सामानाधिकरण्यायोगः कर्मपदवैयर्थ्यम्। स इत्यस्य साध्यनिर्देशरूपत्वे पक्षनिर्देशाभावेन पूर्वोत्तराधिकरणवैरूप्यं चेत्यादि। तन्न। धातु निर्देशेन तदर्थस्येक्षणस्यात्रलक्ष्यत्वात्। अत एव टीकायां प्रधानस्येक्षणासंभावादित्युक्तम्। न्यायविवरणे चाचेतनस्येक्षणादृष्टिरिति। तथा चेक्षणाख्यव्यापारेत्यर्थोपपत्तेः। कर्मपदसार्थक्यस्य पक्षविशेषानुक्तिकृत्यस्य च चंद्रिकायां व्यक्तत्वात् ॥ १३ ॥

अ० ४ ॥

सूत्रभाष्यम्—

चन्द्रादित्याद्याधारत्वं विष्णोरुक्तम्। तच्च 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशः . . . . किं तदत्र विद्यते . . . .' (छां. उ. ८–१–२) 'उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते। उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ। विद्युन्नक्षत्राणी' (छां. उ. ८–१–३) त्यादिनाऽऽकाशस्य प्रतीयते। स चाऽऽकाशो न विष्णुः।

'तस्यान्ते सुषिरꣳ सूक्ष्मं तस्मिन् सर्वं प्रतिष्ठितमि' (म. ना. उ. ११) ति श्रुतेरित्यत आह॥

॥ ॐ दहर उत्तरेभ्य ॐ ॥ १४ ॥

'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामस्सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्य' (छां. उ. ८–७–३) इत्यादिभ्य उत्तरेभ्यो गुणेभ्यो दहरे विष्णुरेव। 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति' (बृ. उ. ५–५) 'स एष सर्वेभ्यः पाप्मभ्य उदित' (छां. उ. १–६–७) इत्यादिना विष्णोरेव हि ते गुणाः।

'नित्यतीर्णाशनायादिरेक एव हरिः स्वतः।
अशनायादिकानन्ये तत्प्रसादात्तरन्ति ही' ति पाद्मे।
सापेक्षनिरपेक्षयोश्च निरपेक्षं स्वीकर्तव्यम्॥
'सत्यकामः परो (कामोऽपरो पा.) नास्ति तमृते विष्णुमव्ययम्।
सत्यकामत्वमन्येषां भवेत्तत्काम्यकामिते' ति स्कान्दे॥ १४॥

तत्वप्रकाशिका—

अत्र 'यो वेद निहितं गुहायाम्'। 'तस्यान्ते सुषिरं सूक्ष्मम्'। 'हृदि ह्येष आत्मा' इत्यादिश्रुतिभिर्ब्रह्माकाशजीवेषु साधारणस्य हृत्पद्मस्थत्वलिंगस्य भगवति समन्वयप्रतिपादनादस्ति शास्त्रादिसंगतिः। श्रुत्यादिसंगतिं विषयवाक्यमुदाहृत्य विषयादिकं च सूचयन् सयुक्तिकं पूर्वपक्षं सूचयति॥ चन्द्रेति॥ एतस्य वाऽक्षरस्ये त्यादिना विष्णोश्चन्द्रादित्याधारत्वमुक्तं तच्छन्दोगश्रुतौ हृत्पद्मस्थस्योच्यते। 'एत-

स्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमिति तं चेद् ब्रूयुः किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमिति । स ब्रूयाद्यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन् द्यावापृथिवी' इत्यादिना । तस्य च विष्णोरन्यत्वेऽक्षरस्य विष्णुत्वसाधकसर्वाधारत्वं चान्यस्य प्रसज्ज्येतेत्यवश्यं निर्णेयता । तद्धृदयपद्मस्थत्वं विषयः । किं विष्णोरथाकाशस्योत जीवस्येति संशयः । उक्तसाधारण्यं संदेहबीजम् । सर्वाधारतया हृत्पद्मस्थत्वमाकाशस्येति तावत्पूर्वः पक्षः । दहरोऽस्मिन्नन्तर आकाश इति हृत्पद्मे दहराकाशस्थितिश्रवणात् तस्यैवोभे अस्मिन्निति सर्वाधारत्वोक्तेरित्यर्थः । नन्वस्त्वाकाशस्य सर्वाधारतया हृदयपद्मस्थत्वम् । तस्य चाऽऽकाशस्तल्लिङ्गादिति न्यायेन विष्णुत्वे तस्यैव हृत्पद्मस्थत्वसिद्धिरित्यत आह ॥ स चेति ॥ नात्रोक्ताऽऽकाशो विष्णुः। तस्यान्ते सुषिरमिति प्रसिद्धाकाशस्यैव सर्वाधारतया हृत्पद्मस्थत्वोक्तेः तत्समाख्यानादित्यर्थः । न च वाच्यं अस्तु आकाशशब्देन सुषिरमेव । तस्मिन् यदन्तरिति हृत्पद्मस्थाकाशगतो विष्णुः सर्वाधारतयोच्यत इति । तथा सति वाक्यान्वयानुपपत्तेः । तथा हि । तस्मिन्नित्यत्र विष्णुत्वाभिप्राये किं तदत्र विद्यत इति प्रश्नस्य ब्रह्म विद्यत इति परिहारं विना यावान्वा इत्यादेरभिप्रायासंगतिः । आकाशपक्षे त्वस्त्यन्वयः । हृदयाकाशस्थमुपास्यमित्युक्ते किं तत्र स्थितमिति प्रश्ने यावान्वा अयमाकाश इति प्रागुक्ताकाशमेव विशिष्योभे अस्मिन्नित्यादिपरिहारसंश्लेषात् । न च यावानित्यादिनाऽऽकाशाख्यो विष्णुः सर्वाधारतया परिहारे कथ्यत इत्यन्वयोपपत्तिः । तस्मिन् सर्वं प्रतिष्ठितमिति साक्षात्सुषिरस्यैव सर्वाधारत्वोक्तिविरोधात् । तस्मादाकाशस्यैव सर्वाधारतया हृत्पद्मस्थत्वम् । जीवस्य वैतद्भवेत् । उत्तरत्र 'परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाच' इति जीवस्य य आत्माऽपहतपाप्मा इत्युक्तहृत्पद्मस्थात्मतया परामर्शात् दहरस्थत्वलिङ्गाच्च । तद्धि अणोर्जीवस्यैव युक्तं न सर्वगतस्य हरेः । न चान्वयाभावदोषः । विष्णुपक्षेऽपि साम्यात् । अतो भगवदितरदेव चन्द्रादित्याद्याधाराक्षरमिति । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ दहरपद्मस्थो विष्णुरेव भवेत् । य आत्माऽपहतपाप्मेत्यादिनोत्तरवाक्ये हृत्पद्मस्थस्यापहतपाप्मत्वादिगुणश्रवणादिति भावः । अपहतपाप्मत्वादिकं कथं विष्णुत्वनिश्चायकमित्यत आह ॥ य इति ॥ अत्येति अतिक्रम्य वर्तते। न चाकाशस्यापि पापाद्यभावेनैते गुणा युक्ता इति वाच्यम्। तस्याचेतनस्य तत्प्राप्त्यभावेन निषेधायोगात् । किं तु चेतनत्वादस्ति प्राप्तिः ।

सत्यकामत्वाद्ययोगाच्च। तथापि नैते गुणा विष्णोरेव रमादिष्वपि संभवादित्यत आह ॥ नित्येति ॥ ननु यथाकथंचिदपि तेऽन्यत्र गुणाः सन्त्येव अतः कथं तैर्विष्णुत्वनिश्चय इत्यत आह ॥ सापेक्षेति ॥ अपहतपाप्मत्वादीनां कथंचिदन्यत्र वृत्तावपि न कथंचिदन्यत्र सत्यकामत्वादि इत्याशयेनाऽऽह ॥ सत्यकाम इति ॥ अनेनाऽऽकाशाभिमानिविषयतयाऽपहतपाप्मत्वाद्युपपत्तिरिति परास्तम् ॥ १४ ॥

भावदीपः—

॥ ॐ दहर उत्तरेभ्यः ॐ ॥ १४ ॥ अत्र न्यायविवरणे स्पष्टत्वाच्छ्रुतीरनुदाहृत्य हृत्पद्मस्थितत्वं साधारणमित्युक्तम्। तदुदाहरणपूर्वकं साधारण्यं व्यञ्जयन्नस्य पादांतर्भावमाह ॥ अत्र यो वेदेति ॥ एतच्चानंदमयनये ब्रह्मपरत्वेन निर्णीतम्। यद्यपि परमे व्योमन्निति हृदयगुहास्थाकाशस्थत्वमेव तत्रोक्तं मंदिरे मणिमालेतिवत् सामान्येन गुहास्थत्वमविरुद्धम्। अत एव गुहायामित्याधारसप्तमीति भावः ॥ तस्येति ॥ तैत्तिरीये पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुखम्। अधोनिष्ठ्या वितस्त्यांते नाभ्यामुपरि तिष्ठति। ज्वालमालाकुलं भाति विश्वस्यायतनं महत्। संततꣳशिलाभिस्तु लंबत्याकोशसन्निभम्। तस्यांत इति प्रकृतहृत्पद्मं तस्येति परामृश्य तदंतस्थत्वमाकाशस्योच्यते ॥ हृदीति ॥ षट्प्रश्ने मध्ये तु समानः एष ह्येतद्धुतमन्नं समं नयति तस्मादेताः सप्तार्चिषो भवंतीति पूर्वत्र तस्मात्समानेनान्नस्य समीकरणादेताः सप्तार्चिषो भवंतीत्युक्तौ आत्मैव विषयसंसर्गेणताननुभविष्यति किमिंद्रियवृत्तिभिरिति शंकायां अणुत्वात्तस्य नैवं युक्तमिति भावेन हृदि ह्येष आत्मा जीवः स्वरूपेण वर्तत इत्युक्तेः। अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हीति सूत्रकृता जीवपरत्वेन वक्ष्यमाणत्वाच्चेति भावः ॥ हृत्पद्मस्थत्वेति ॥ साक्षात्परंपरासाधारणहृत्पद्मगतत्वलिंगस्येत्यर्थः। आकाशस्येति भाष्यं तु पूर्वपक्षहेत्वाभिप्रायं न तु समन्वेतव्यनामाशयमिति भावः। इत्यंतभाष्यं संगतिसूचकत्वेन व्याकुर्वन्नुक्तमित्यंतं व्याचष्टे ॥ एतस्य वा इति ॥ उक्तमक्षरनय इत्यर्थः। आकाशस्य प्रतीयत इत्यत्र हृत्पद्मस्थस्येत्याकाशविशेषणमुपेत्य तात्पर्यमाह ॥ तच्छंदोगश्रुताविति ॥ उच्यते अष्टम इत्यर्थः। केनेत्यत एतस्मिन्नित्यादिभाष्यमिति भावेन भाष्ये पूर्वपक्षयुक्तिद्योतनाय समग्रानुक्तावपि वक्ष्यमाणानन्वययुक्तिसौकर्याय तद्वाक्यं समग्रं पठति ॥ एतस्मिन्निति ॥ ब्रह्मपुरे देहे। दहरं दभ्रमल्पमित्यर्थः। अस्मिन्पुंडरीके। तस्मिन्नाकाशे। कथं तस्यान्वेषणमित्यत उक्तम् विजिज्ञासितव्य-

मिति तमेवमुक्तवंतं गुरुं शिष्याश्चेद्ब्रूयुः किं तदाह ॥ किं तदत्रेति ॥ यदन्वेष्टव्यत्वादिनोक्तं तदत्र किं विद्यते कुतश्च तदन्वेष्टव्यं कीदृशं च तद्विद्यत इति प्रश्नार्थः । स गुरुः शिष्यान् प्रति ब्रूयात् । किं तदाह ॥ यावानिति ॥ हृद्यन्त इति हृदये हृत्स्थदहराकाशे । आकाशः आकाशनाम ब्रह्म विद्यते । अयं बाह्याकाशः आकाशनामा विष्णुर्यावान् व्याप्त्या तावानिति किमित्यस्य । अस्मिन् द्यावाभूम्यादि सर्वं समाहितं यतोऽतो द्यावापृथिव्याद्याधारत्वाज्जिज्ञास्यमिति कुतश्चेति प्रश्नस्योत्तरम् । कीदृशमित्यस्यापि यद्ब्रह्म कीदृशमस्तीति पृष्टं तस्य हृदये यावान्बाह्याकाशः तावान् द्यावाभूम्यादिकं च सर्वं विद्यते सर्वाधारभूतं तदिति इदमेवोत्तरमिति सिद्धांतीयोऽर्थः । पूर्वपक्षीयस्तु हृदये आकाश इति प्रागुक्तदहराकाशमनूद्य यावानिति बाह्याकाशतुल्यतया तं विशेष्यान्वेष्टव्यतया तत्र द्यावाभूम्यादिकमुच्यत इत्यर्थः । आकाशस्येत्यादेर्भावस्तस्य चेति ॥ चंद्राद्याधारहृत्पद्मस्थस्येत्यर्थः ॥ अन्यत्व इति ॥ सुषिरश्रुतिसमाख्यासहिताकाशश्रुत्या आकाशत्वे वक्ष्यमाणदिशा जीवत्वे वेत्यर्थः । उक्तमित्यंतस्य तात्पर्यं अक्षरस्येति ॥ इतीति ॥ इति संगतिसंभवादित्यर्थः ॥ तदिति ॥ यस्मिन् हृत्पद्मस्थे सर्वाधारत्वं श्रुतं तद्गतः साक्षात्परंपरासाधारण्येन पूर्वोत्तरवाक्यस्थहृत्पद्मस्थत्वसामान्यरूपो धर्म इत्यर्थः । तेन साक्षाच्चेद्दहरे विष्णुरेवेति विष्णोर्दहराकाशस्थत्वोक्तिः सिद्धान्ते न युक्ता । परंपरा चेदाकाशस्थेति पूर्वपक्षायोग इति शंकानवकाशः । अस्मिन्पक्षे पूर्वोत्तरपक्षसामंजस्यमग्रे विवरिष्यते । जीवपरामर्शादित्युत्तरभाष्यानुरोधादाह ॥ उत जीवस्येति ॥ पूर्वपक्षादिपरत्वेनापि व्याकुर्वन् हृत्पद्मस्थत्वं साक्षाद्व्यवधानेन वा द्वेधा संभवति । तत्राद्ये तच्चाकाशस्य प्रतीयत इति प्रतिज्ञाभाष्यं विवृणोति॥ सर्वेति ॥ दहरोऽस्मिन्नंतररिति पूर्ववाक्ये य एषोंऽतर्हृदय इत्युत्तरस्मिन्सर्वाधारवाक्ये च श्रुतहृत्पद्मस्थत्वमित्यर्थः ॥ तावदिति ॥ जीवस्येति पश्चाद्वक्ष्याम इत्यर्थः । पूर्वाक्षेपरूपफलोक्तिसौकर्याय वा सुषिरश्रुत्यैकार्थ्याय वा तदुक्त्यै शंकोत्थानाय वा सिद्धांतिन इष्टापत्तिनिरासाय वा सर्वाधारतयेति विशेषणम् । तेन तच्चेत्येतदर्थो विवृतः । कुत इत्यतो दहरोऽस्मिन्नंतर आकाश इत्यंतवाक्योक्तेर्भावमाह ॥ दहर इति ॥ इदमुपलक्षणम् । य एषोंऽतर्हृदय आकाश इति चेत्यपि बोध्यम् ॥ स्थितीति ॥ हृत्पद्मस्थे आकाशशब्दश्रवणादित्यर्थः । किं तदत्रेत्याद्युक्तेर्भावमाह ॥ तस्यैवेति ॥ अन्यथा किं तदत्रेति प्रश्नानानुगुण्यमिति भावः ॥ तस्यांत इति ॥ विवृतमेतत्पूर्वम् । तस्मिन् सर्वं प्रति-

ष्ठितमिति वाक्यशेषार्थमाह ॥ सर्वेति ॥ तत्रापि सुषिरस्य विष्णुत्वं तु न युक्तम् । तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थित इति सुषिरमध्येऽग्निशिखामुक्त्वा तस्याः शिखाया मध्ये परमात्मा व्यवस्थित इति विष्णोः शिखामध्यस्थत्वोक्तेरिति भावेनोक्तमाकाशस्यैवेति । एवं साक्षाद्धृत्पद्मस्थत्वपक्षे भाष्यं योजयित्वा व्यवधानेन हृत्पद्मस्थत्वपक्षं शंकते ॥ न च वाच्यमिति ॥ अस्मिन् पक्षे न्यायविवरणोक्तं दहरोऽस्मिन्नंतर आकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यमित्यनेन यावान्वा अयमाकाशस्तावानेषोऽतर्हृदय इत्यस्यान्वयाभाव इति दोषं व्यंजयन् द्यावाभूम्यादेरेवान्वेष्टव्यत्वं न विष्णोरित्याह ॥ तथा सतीति ॥ एतेन भाष्ये आकाशो न विष्णुः सुषिरश्रुतेरित्युपलक्षणम् । आकाशो न विष्णुः वाक्यान्वयानुपपत्तेरित्यपि बोध्यमिति दर्शितम् । यावान्वा अयमाकाश इति वाक्यस्थाकाशः किं प्रसिद्ध एवोत ब्रह्मेति विकल्पौ हृदि कृत्वा आद्ये अन्वयाभावदोषमाह ॥ तस्मिन्नित्यत्रेति ॥ अन्वेष्टव्यवाक्ये अन्वेष्टव्यतयोक्तस्य दहराकाशस्थस्येत्यर्थः । अयं च दोषो न पूर्वपक्ष इत्याह ॥ आकाशेति ॥ आकाशांतर्ब्रह्मास्तीत्यनुपेत्य साक्षाद् हृत्पद्मस्थमाकाशं व्यवहितं तु द्यावाभूम्यादिकमिति पक्षे त्वित्यर्थः । अस्त्यन्वय इत्युक्तं तदुपपादकत्वेनापि एतस्मिन् ब्रह्मपुर इत्यादिभाष्यं योजयति ॥ हृदयेति ॥ इत्युक्त इति ॥ तस्मिन्यदंतरिति वाक्य इत्यर्थः । किं तदत्रेत्यादि प्रतीयत इत्यतंभाष्यभावमाह ॥ किमिति ॥ आधेयप्रश्न इत्यर्थः । विशिष्य द्यावाभूम्याद्याधारत्वयोग्यत्वाय बाह्याकाशतुल्यतया विशिष्येत्यर्थः । यावान्वा इति वाक्यस्थाकाशो ब्रह्मेति द्वितीयपक्षशंकोत्तरत्वेन स चाकाश इत्यादिभाष्यं व्याचष्टे ॥ न चेति ॥ परिहारे परिहारवाक्ये । एतेन सः यावानिति वाक्योक्ताकाशो विष्णुरिति न च वाच्यमिति भाष्यार्थो दर्शितः । वाक्यशेषोक्तिपूर्वं तस्यांत इत्युक्तसमाख्याविरोधं व्यनक्ति ॥ तस्मिन्निति ॥ तस्मादिति ॥ सुषिरश्रुतिसमाख्यावाक्यान्वयसामंजस्याभ्यां सहितस्याऽऽकाशशब्दस्य साधकस्य भावात् । विष्णुत्वपक्षे वाक्यान्वयाभावसुषिरश्रुतिविरोधरूपबाधकभावाच्चेत्यर्थः । अपहतपाप्मत्वादिकं तु जडे आकाशे पापास्पृष्टचा वा अभिमानिद्वारा वा युक्तमिति भावः । बाधवारणाय सर्वाधारतयेत्युक्तम् । इतरपरामर्शात् स इति चेदिति सूत्रतद्भाष्याभ्यामुक्तं व्यनक्ति ॥ जीवस्य वेति ॥ परामर्शादिति ॥ प्रकृतं जीवं एष इति परामृश्य आत्मेत्यात्मपदेन य आत्मा अपहतपाप्मेत्यादिवाक्येऽपहतपाप्मत्वादिनोक्तहृत्पद्मस्थात्मत्वस्य विधानादित्यर्थः । अल्पश्रुतेरिति चेदिति सूत्रतद्भाष्याभ्यामुक्तमाह ॥ दहरस्थत्वेति ॥

अर्भकौकस्त्वादिति सूत्रे व्योमवद्विष्णावपि युक्तमित्यतोऽस्य निरवकाशत्वमाह ॥ तद्ध्यणोरिति ॥ उत्क्रांतिगत्यागतीनामिति वक्ष्यमाणन्यायेनाणोरित्यर्थः ॥ सर्वगतस्येति ॥ अंशतोऽपीति योऽयम् । व्योम्नोंऽशेनैकत्राल्पदेशेऽवस्थितिसंभवेऽपि हरेरंशस्याप्यपरिच्छिन्नत्वेनाल्पौकस्त्वस्य निरवकाशत्वादिति भावः । विवरिष्यते चैतदग्रे । अपहृतपाप्मत्वादिकं तु जीवे मुक्तौ भावात् भाव्यपेक्षया युक्तमिति भावः । ननु हृत्पद्मस्थाकाशस्थो जीवश्चेद्यावानित्या इति वाक्यानन्वय इत्यत आह ॥ न चेति ॥ हृत्पद्मस्थ आकाश एवेति वा जीव एवेति वा निर्णयाभावात् पूर्वपक्षस्य संदेहादविशेषः स्यादित्यतो विष्ण्वितरत्वेन निश्चयः स्यादिति भावेन द्विविधपूर्वपक्षफलत्वेनोक्तमित्यंतभाष्यतात्पर्यमाह ॥ अत इति ॥ साक्षाद्व्यवधानाभ्यां क्रमादाकाशजीवयोरेव सर्वाधारतया हृत्पद्मस्थत्वात् विष्णोश्चैकेनापि रूपेण सर्वाधारतया हृत्पद्मस्थत्वाभावाच्चेत्यर्थः ॥ छ ॥ विष्णोः साक्षाद्हृत्पद्मस्थत्वाभावेऽपि हृत्पद्मस्थदहराकाशस्थतया व्यवधानेन हृत्पद्मस्थत्वं स्यादेवेति भावेनाऽऽकांक्षाक्रमेण भाष्यं व्याचष्टे ॥ दहरेति ॥ परंपरया दहरहृत्पद्मस्थ इत्यर्थः । अत्येति अतिशयेन प्राप्नोतीति भ्रांतिं निराह ॥ अतिक्रम्येति ॥ सर्वदा शोकादिहीन एवास्त इत्यर्थः ॥ विष्णोरिति ॥ सजातीये जीवे दर्शनेनात्रापि तत्प्राप्तिभ्रांतौ निषेधसंभवादित्यर्थः । अभिमानिद्वाराऽऽकाशेऽप्यस्त्वपहतपाप्मत्वमित्यत आह ॥ सत्यकामत्वेति ॥ तत्तु निरवकाशमित्यग्रे व्यक्तमिति भावः । कथंचित् अभिमान्यादिद्वारेत्यर्थः ॥ अनेनेति ॥ क्वापि निरपेक्षधर्माभावकथनेनेत्यर्थः । ननु तर्कताण्डवे पाकसापेक्षस्यापि पृथिवीशौक्ल्यस्य तन्निरपेक्षाबादिशौक्ल्यस्येव शुक्लशब्दमुख्यार्थत्वेन तुल्यतया प्रतीतेः व्याप्तिसंगतिज्ञानादिसापेक्षयोरप्यनुमानशब्दयोस्तन्निरपेक्षप्रत्यक्षवत् प्रमाणशब्दमुख्यार्थत्वेन तुल्यतया प्रतीतेश्चेत्यादिनोपक्रमप्राबल्यभंगे सापेक्षस्यापि शब्दमुख्यार्थत्वोक्तेः सत्यकामः सत्यसंकल्प इति श्रुतौ सापेक्षधर्मस्यापि धीरस्तीति चेन्न । प्रतीतस्यापि तस्य त्यागोपपत्तेरिति भावः ॥ १४ ॥

सूत्रभाष्यम्––

॥ ॐ गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ॐ ॥ १५ ॥

'अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ती' (छां. उ. ८–३–२) ति सुप्तस्य तद्गतिर्ब्रह्मशब्दश्चोच्यते। 'सता सोम्य तदा सम्पन्नो भवती' (छां. उ. ६–८–१) ति

श्रुतेस्तं हि सुप्तो गच्छति । 'अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके' (छां. उ. ८-५-३) इति लिङ्गं च तथा(हि) दृष्टम् । 'अरश्च वै ण्यश्च सुधासमुद्रौ तत्रैव सर्वाभिमतप्रदौ द्वा'वित्यादिना तस्यैव हि तल्लक्षणत्वेनोच्यते ॥ १५ ॥

तत्वप्रकाशिका——

युक्त्यन्तरेण हृत्पद्मस्थत्वं विष्णोः प्रतिपादयत्सूत्रमुपन्यस्य व्याचष्टे ॥ गतीति ॥ अत्र हृत्पद्मस्थस्याहरहर्गच्छन्त्य एनमिति सुप्तप्रजाप्राप्यत्वव्यपदेशात् हृत्पद्मस्य ब्रह्मलोकत्वोक्त्या तदन्तर्गते ब्रह्मशब्दश्रवणाच्च विष्णुरेवायमित्यर्थः । ब्रह्मैव सर्वाश्रयत्वादिना लोकपदोक्तं वा । सुप्तप्राप्यत्वं कुतो विष्णुत्वनिश्चायकमित्यत आह ॥ सतेति ॥ संपन्नः संगतः । ब्रह्मशब्दस्तु विष्ण्वेकपर इति प्रागेवोक्तम् । किं च हृत्पद्मस्थस्यारण्याख्यसुधासमुद्राश्रयलोकवत्त्वलिङ्गश्रवणाच्च तदन्तर्गतो विष्णुरिति सूत्रशेषं व्याचष्टे ॥ अरश्चेति ॥ हृत्पद्मस्थस्यारण्याश्रयलोकवत्वलिङ्गश्रवणेऽपि कुतोऽयं विष्णुरिति चेत् । तस्य च विष्णुलोकैकलिङ्गत्वादिति हिशब्दाभिप्रायमाह ॥ अरश्चेति ॥ अनेनारण्याश्रयत्वं सत्यलोकलिङ्गमित्यप्यपास्तम् । क्षीराब्धिमध्ये इति तत्प्रसङ्गात् । अरण्याश्रयलोकवत्त्वं हृत्पद्मस्थस्य नोच्यत इति शंकापनोदाय तथेत्युक्तम् । यथाऽहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्तीत्येतत् हृत्पद्मस्थविषयं तथैतदपि लिङ्गं तन्निष्ठम् । ब्रह्मलोकशब्दश्रवणादेवेति भावः । अथवा ब्रह्मलोकमिति हृत्पद्मस्य विष्णुलोकत्वोक्तेस्तदन्तर्गतो विष्णुरित्युक्तम् । ब्रह्मलोकपदं कुतो विष्णुलोकवाचीत्यत आह ॥ अरश्चेति ॥ ब्रह्मलोकपदस्य विष्णुलोके अरश्चेति प्रयोगादत्रापि तत्परत्वमेव । तत्रापि तत्कुतः । अरण्याश्रयता(त्व) लिङ्गादित्यर्थः । तस्य भगवल्लोकलिङ्गत्वं कुत इत्यत आह ॥ अरश्चेति ॥ ॥ १५ ॥

भावदीपः——

॥ ॐ गतिशब्दाभ्यां तथा हि दृष्टं लिंगं च ॐ ॥ १५ ॥ युक्त्यंतरेणेति ॥ जातावेकवचनम् । भाष्यं व्याकुर्वन् सूत्रार्थमाह ॥ अत्रेति ॥ इमाः प्रजा अहरहर्गच्छंत्य इति पूर्वोक्तप्रजापेक्षया गच्छंत्य इति स्त्रीलिंगमित्युपेत्योक्तम् ॥ सुप्तप्रजेति ॥ परं ब्रह्मैव लोकनात् । ब्रह्मलोक इति प्रोक्तस्तस्य लोकोऽपि कथ्यत इति तद्भाष्योक्तेः षष्ठ्यर्थत्वमुपेत्यार्थमाह ॥ हृत्पद्मस्येति ॥ अयं सर्वाधारतया हृत्पद्मस्थ इत्यर्थः । अर्थांतरं चाऽऽह ॥ ब्रह्मैवेति ॥ ब्रह्म चासौ लोकश्चेति व्युत्पत्त्येति भावः । अस्मिन्पक्षे

साक्षादेव हृत्पद्मस्थस्य गतिशब्दौ । पूर्वव्याख्याने त्वार्थिकौ । तद्व्याख्यानं तूत्तरलिंगोक्तिसौकर्यायेति भावः । तादात्म्यं प्राप्त इति भ्रांतिं निराह ॥ संगत इति ॥ लिंगं चेति चार्थं वदन् भाष्यं भावार्थोक्तिपूर्वमवतारयति ॥ किं चेति ॥ लोकवत्त्वलिंगेति ॥ अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवीत्युत्तरवाक्ये अरण्याख्यसुधासमुद्राश्रयलोके प्रयुक्तब्रह्मलोकपदस्य हृत्पद्मे प्रयोगात् हृत्पद्मस्थस्य तादृशलोकवत्वं लभ्यत इति भावः ॥ हिशब्देति ॥ पूर्व भाष्ये लिंगं च तथाहि दृष्टमिति हिशब्दः केवलमनूदित एवेति भावः ॥ अनेनेति ॥ हिशब्दसूचितस्मृतिकथनेनेत्यर्थः ॥ तत्प्रसंगादिति ॥ विष्णुलोकप्रसंगादित्यर्थः । अरश्च वै ण्यश्च इति भाष्योक्तवाक्ये पूर्वत्र क्षीराब्धिमध्य इत्युपक्रम्योक्तविष्णुलोकप्रस्तावे अरश्चेति पाठादित्यर्थः । यद्वा वराहादिपुराणांतरे चतुर्दशाध्यायादौ पूर्वत्र क्षीराब्धिमुक्त्वा तन्मध्ये मम लोकस्तु परितो वलयाकृतिरित्युक्त्वा अरण्याख्यसुधांभोधिरित्याद्युक्तेरिति भावः । भाष्ये हिशब्दार्थमात्रविवरणात् सौत्रतथाशब्दकृत्यं स्वयमाह ॥ अरण्येति ॥ ब्रह्मलोकेति ॥ सुधासमुद्राश्रयलोके प्रयुक्तब्रह्मलोकपदस्य हृत्पद्मे श्रवणादित्यर्थः । एतेनास्य लिंगस्य विष्णुनिष्ठताया अस्पष्टत्वेनोपपादनसापेक्षत्वात् गतिशब्दलिंगेभ्य इत्यनुक्त्वा पृथगुक्तिरिति दर्शितम् । पूर्वं हृत्पद्मस्थस्य ब्रह्मत्वे हेत्वंतरोक्त्यर्थं सौत्रं लिङ्गपदमित्येवं परतया अरश्चेत्यादिभाष्यं व्याख्यातम् । अधुना ब्रह्मलोकशब्दस्य प्रसिद्धसत्यलोकपरत्वशंकानिरासार्थं तदित्येवंपरतया अरश्चेत्यादिभाष्यांशं व्याचष्टे ॥ अथवेति ॥ भाष्ये इतिशब्दानंतरं हेतुसाध्ये अध्याहृत्य वा इति (यथा) विष्णुलोके ब्रह्मलोकपदप्रयोगः तथा ब्रह्मलोकमित्यत्रापि विष्णुलोकत्वे लिङ्गमनुमापकं दृष्टमित्यर्थमुपेत्य वा अरश्चेत्यादिवाक्यं व्याचष्टे ॥ ब्रह्मलोकेति ॥ अरश्चेति ॥ वाक्ये इत्यर्थः । अत्रापि ब्रह्मलोकं न विदन्तीत्यत्रापि विष्णुलोकपरत्वमेवेत्यर्थः । तथा अरश्चेत्यादिवाक्येऽपि ब्रह्मलोकशब्दस्य विष्णुलोकवाचित्वेऽपि लिङ्गं सुधासमुद्राश्रयत्वादिरूपविष्णुलोकलिङ्गं दृष्टमित्यर्थमुपेत्य लिङ्गं चेत्यादिभाष्यमवतार्य व्याचष्टे ॥ तत्रापीति ॥ अरश्चेत्यादिवाक्येऽपीत्यर्थः ॥ तस्येति ॥ समुद्राश्रयत्वस्येत्यर्थः । भाष्ये तस्यैव विष्णुलोकस्यैव तत् समुद्राश्रयत्वमित्यर्थः ॥ १५ ॥

सूत्रभाष्यम्—

॥ ॐ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॐ ॥ १६ ॥

'एष सेतुर्विधृतिरि'(छां. उ. ८–४–१) ति धृतेः, '(एष सर्वेश्वर) एष भूताधिपतिरेष भूतपाल' (बृ. उ. ६–४–२१) इत्याद्यस्य महिम्नोऽस्मिन्नुपलब्धेः । 'एतस्मिन् (न्नु) खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' (बृ. उ. ५–८–११) 'एतस्य वा अक्षरस्य प्रशासने गार्गि' (बृ. उ. ५–८–९) 'स हि सर्वाधिपतिः स हि सर्वपालः स ईशः स विष्णुः' 'पतिं विश्वस्याऽऽत्मेश्वरसि' (म. ना. उ. ११) त्यादिश्रुतिभ्यस्तस्य ह्येष महिमा । 'सर्वे(भ्यो)शो विष्णुरेवैको नान्योऽस्ति जगतः पतिरि' ति (च) स्कान्दे ॥ १६ ॥

तत्वप्रकाशिका—

हेत्वन्तरेण विष्णोः हृत्पद्मस्थत्वं प्रतिपादयत् सूत्रमुपन्यस्य व्याचष्टे ॥ धृतेश्चेति ॥ 'अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय' इति हृत्पद्मस्थस्य सर्वाधारत्वश्रवणाच्च विष्णुरेवासावित्यर्थः । अत्र स सेतुरिति वक्तव्ये एष सेतुरित्युक्तिः शाखान्तराणामप्यत्रोपसंग्रहार्थम् । एवमन्यत्रापीति संप्रदायविदः । विधृतिः सेतुरिति धारणसमर्थ आश्रयः । न च वाच्यमयं न हृत्पद्मस्थ इति । 'य आत्मा' इति प्रागुक्तात्मपरामर्शात् 'सर्वे पाप्मानोऽतो निवर्तन्त' इति तल्लक्षणत्वोक्तेश्च । समाख्ययाऽप्येतमर्थं साधयति ॥ एष इति ॥ वाजसनेयके 'य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी' त्याद्युक्त्वा 'एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरणः' 'एषां लोकानामसंभेदाय' इत्यादिना हृदये विष्णोरुक्तत्वेन तत्समाख्यानादत्राप्युक्तो विष्णुरेव । न च वाच्यं समाख्याश्रुत्युक्तोऽपि कुतो विष्णुरिति । अस्मिन्सर्वेश्वरत्वादिविष्णुमहिम्नः श्रवणादेवेति भावः । यदुक्तं हृत्पद्मस्थस्य सर्वाधारत्वश्रवणात् विष्णुरसाविति तत्र सर्वाधारत्वं कुतो विष्णुत्वनिश्चायकमित्यत आह ॥ एतस्मिन्निति ॥ एतस्येति प्रतीकग्रहणेन बहुवाक्यानि सूचयति । ननु समाख्याश्रुत्युक्तः सर्वेश्वरत्वादिमहिमा कुतो विष्णोरित्यत आह ॥ स हीति ॥ विश्वमचेतनम् । विष्णोरिव अन्यस्याप्ययं महिमा किं न स्यादित्यत आह ॥ सर्वेश इति ॥ १६ ॥

भावदीपः—

॥ॐ धृतेश्च महिम्नोस्य० ॐ ॥ १६ ॥ हेत्वन्तरेणेति ॥ सूत्रे चशब्दादिति भावः । भाष्ये वाजसनेयवाक्यप्रतीकपूर्वं अत्रत्यवाक्यस्योक्तेर्भावमग्रे विवृण्वानः

स्वयमेतत्प्रकरणस्थछांदोग्यवाक्यमुदाहृत्य धृतेरित्यंतभाष्यं व्याकुर्वन् धृतेश्चेति सूत्रांशार्थमाह ॥ अथ य इति ॥ भाष्यभावमाह ॥ अत्रेति ॥ उपसंग्रहार्थमिति ॥ विवरिष्यते चैतदग्रे ॥ एवमन्यत्रापीति ॥ अत एव प्राण इत्यत्र ह्रीश्च त इति वक्तव्ये श्रीश्च त इत्युक्तिः । तथा पत्यादिशब्देभ्यः इत्यत्र सर्वस्य वशी सर्वस्येशान इत्येव वक्तव्ये सर्वस्याधिपतिरित्युक्तिः । अत्रैव अस्मिन् ब्रह्मपुर इति वाच्येऽप्येतस्मिन्निति वाक्योक्तिः । समानजातीयानां श्रुत्यंतराणां संग्रहोपलक्षणार्थमेतदित्यादितत्व-प्रदीपोक्तेः संप्रदायविद इत्युक्तम् । अपौनरुक्त्यायाऽऽह ॥ धारणसमर्थ इति ॥ सूत्रखंडमवतार्य व्याचष्टे ॥ न चेति ॥ अस्य हृत्पद्मस्थस्य अस्मिन्स सेतुरिति वाक्ये-ऽपहतपाप्मत्वरूपमहिम्न उपलब्धेरित्यर्थमुपेत्याऽऽह ॥ य आत्मेति ॥ भाष्ये एष भूते-त्यादिवाजसनेयवाक्यशेषोक्तिः सर्वे पाप्मान इति छांदोग्यवाक्यशेषस्याप्युपलक्षण-मिति भावः । इदानीं सूत्रस्यार्थांतरोक्तिपरतया भाष्यमवतार्य धृतेरित्यंतं तात्पर्यतो व्याचष्टे ॥ समाख्ययेति ॥ वाजसनेयक इति ॥ षष्ठेऽध्याये । भाष्ये एष सेतुरिति प्रतीकमात्रोक्तेः स्वयं समग्रं पठति ॥ य एष इति ॥ हृत्पद्मस्थत्वस्य तत्स्थाकाशस्थ-त्वेनैवेहाभिमतत्वाद्हृदये विष्णोरुक्तत्वेनेत्युक्तम् । एष भूतेत्यादिभाष्यशेषमवतार्य व्याचष्टे ॥ न च वाच्यमिति ॥ भाष्ये इत्यादीति क्रियाविशेषणम् । सांतमहत इत्यादाविवाविभक्तिकनिर्देशो वेति भावः ॥ यदुक्तमिति॥ स सेतुर्विधृतिरिति वाक्य-ग्राहिणा धृतेश्चेति सूत्रखंडेनेत्यर्थः ॥ एतस्मिन्नितीति ॥ भाष्ये आकाश इति सर्वा-धारतयोक्तचित्प्रकृतिरित्यर्थः ॥ प्रतीकेति ॥ एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ इत्यादीनि बहु-वाक्यानि सूचयतीत्यर्थः । आत्मेश्वरमित्यस्यावैयर्थ्यायाऽऽह ॥ विश्वमचेतनमिति ॥ आत्मा चेतन इति भावः । नारायणं महाज्ञेयमित्यग्रे नारायणपदसामानाधिकरण्या-द्वैष्णवत्वमस्य सिद्धमिति भावः ॥ १६ ॥

सूत्रभाष्यम्—

॥ ॐ प्रसिद्धेश्च ॐ ॥ १७ ॥

'तत्रापि दह्रं(हरं)गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यमि (म. ना. उ. १०–७)ति प्रसिद्धेश्च । तदन्तःस्थत्वापेक्षत्वान्न सुषिरश्रुतिविरोधः ॥ १७ ॥

तत्वप्रकाशिका—

युक्त्यन्तरेण विष्णोः हृत्पद्मस्थत्वसाधकं सूत्रं पठित्वा व्याचष्टे ॥ प्रसिद्धेश्चेति ॥ 'दहरं विपापं परवेश्मभूतं यत्पुंडरीकं पुरमध्यसंस्थम्। तत्रापि दहरम्' इति विष्णोः हृत्पद्मस्थत्वप्रसिद्धेश्च स एव हृत्पद्मस्थ इत्यर्थः। 'दहरोऽस्मिन्नन्तर आकाशः' इति हृत्पद्मस्थाकाशो विष्णुरित्यभ्युपगमे सुषिरश्रुतिविरोध इत्येतदनेनैव निरस्तं भवति। पुण्डरीके दहरं गगनं तस्मिन् विशोकं ब्रह्मेत्यभ्युपगमात्। 'दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा संप्रनिष्ठितः'। 'य एषोऽन्तर्हृदय आकाशस्तस्मिन्नयं पुरुषः' इत्यादेश्च। अन्वयाभावस्तर्हि भवेदिति च न वाच्यम्। तथा हि। तस्मिन्यदन्तरित्यत्र हृत्पद्मस्थाकाशगतं ब्रह्मान्वेष्टव्यमित्युच्यते। ब्रह्मपुरपदेनैव ब्रह्मस्थितिसिद्धेः। तथा च कीदृशं तदिति भावेन किं तदत्र विद्यत इति प्रश्ने तत्स्वरूपनिरूपणपरतया यावान्वाऽयमाकाश इत्यादिवाक्यान्वयः। यद् ब्रह्मान्वेष्टव्यतयोक्तं तस्यान्तर्हृदये यावानेष आकाशस्तावान् सर्वोऽपि विद्यते। तदाधारतया पृथिव्यादिकं च समाहितम्। नष्टेऽपि देहे न नश्यति। अपहतपाप्मत्वादिगुणं चेति। अथवा हृत्पद्मगताकाशस्थमन्वेष्टव्यमिति सामान्येनोक्ते किं तदत्र विद्यत इति प्रश्ने यावान् बहिः परमात्माऽऽकाशाख्यस्तिष्ठति तावान् हृदयपद्माकाशे विद्यते। स च पृथिव्याद्याश्रयत्वात् शरीरनाशेनाप्यनाश्यत्वाद् अपहतपाप्मत्वादेश्च अन्वेष्टव्य इत्यन्वयोपपत्तेः। न च ब्रह्मपुरपदप्रयोगादात्मा न विष्णुः। ब्रह्मैव पूर्णत्वात् पुरमित्युपपत्तेः। एतच्छब्देन शरीरस्य प्रकृतत्वान्नेति चेन्न। शरीरनाशेनास्याविनाशोक्तेः। न चाऽऽकाशपक्षेऽन्वयोऽस्ति। दहराकाशस्थमुपास्यमित्युक्ते किं तदत्र विद्यत इति प्रश्ने यावान्वेत्यस्यान्वयादर्शनात्। न हि दहराकाशस्थो व्याप्ताकाशोऽन्वेष्टव्य इत्युपपद्यते। तदभावादयोगाच्च। नापि दहराकाशमेव विशिष्योभे अस्मिन्नित्यादिपरिहार इति युक्तम्। दहरस्य व्याप्तत्वायोगान्मुख्यतः पृथिव्यादीनामनुपास्यत्वाच्च। नन्वेवं हृत्पद्मगताकाशस्थो विष्णुरित्यभ्युपेत्य तस्य सर्वाधारत्वाङ्गीकारेऽपि सुषिरश्रुतिविरोधः स्यात्। तत्र साक्षात्सुषिरस्य सर्वाधारत्वोक्तेरित्यत आह ॥ तदिति ॥ न चैवमङ्गीकारेऽपि सुषिरश्रुतिविरोधः। मन्दिरे मणिमालेत्यत्र मन्दिरपदेन तदन्तःस्थमञ्जूषाविवक्षावत् सुषिरश्रुतेरपि तदन्तःस्थभगवदपेक्षया प्रवृत्तत्वादित्यर्थः ॥ १७ ॥

भावदीपः—

॥ ॐ प्रसिद्धेश्च ॐ ॥ १७ ॥ भाष्योक्तश्रुतौ तत्रापीति तच्छब्दपरामृश्य दर्शयन्भाष्यं व्याचष्टे ॥ दहरमिति ॥ विष्णोरिति ॥ सहस्रशीर्षं देवमिति तस्यैव

प्रकृतत्वादिति भावः। न सुषिरश्रुतिविरोध इति भाष्यं व्याचष्टे ॥ दहर इति ॥ इत्यभ्युपगम इति ॥ आकाशपदेन तल्लिगादिति न्यायेन विष्णुमुपादाय तस्य हृत्पद्मस्थत्वाभ्युपगमे पूर्वोक्तदिशा सुषिरस्य सर्वाधारतया हृत्पद्मस्थत्वश्रुतिविरोध इत्यर्थः ॥ अनेनैवेति ॥ तत्रापि दहरस्मिति श्रुतिग्राहिणा प्रसिद्धेश्चेति सूत्रेणैवेत्यर्थः। न केवलं तस्य हृत्पद्मस्थत्वसामान्यस्य प्रसिद्धेश्चेति सूत्रार्थः। किंतु हृत्पद्मस्थाकाशस्थत्वप्रसिद्धेश्चेत्यप्यर्थ इति भावेन इति प्रसिद्धेश्चेत्यस्य श्रुतिषु दहराकाशस्थत्वप्रसिद्धेश्चेत्यर्थकतया उत्तरभाष्येऽन्वयमुपेत्य तदंतःस्थेति तच्छब्दार्थमाह ॥ तस्मिन्निति ॥ श्रुतौ लिंगव्यत्ययं मत्वोक्तम् ॥ विशोकमिति ॥ भाष्ये हृत्पद्मस्थत्वोक्तेरिति शेषः। दहराकाशस्थत्वावेदकश्रुत्यंतराणि भाष्योपलक्षितान्याह। दिव्य इति आथर्वणे। य एष इति तैत्तिरीये। आदिपदेन य एषोंऽतर्हृदय आकास्तस्मिन् शेते यो वेद निहितं गुहायां परमे व्योमन्निति पूर्वोक्तश्रुत्यादिग्रहः। भाष्ये श्रुतिविरोध इत्युपलक्षणं मत्वा प्रागुक्तानन्वयदोषं निराह ॥ अन्वयाभाव इति ॥ योऽन्वेष्टव्यो भगवांस्तस्यांतर्हृदये यावान्वा अयमाकाशस्तावानेषोंऽतर्हृदय आकाशस्तस्मिन् द्यावापृथिवी अंतरेव समाहिते। स भगवानपहतपाप्मेत्यन्वय इत्यन्यत्रोक्तं समाधिं व्यनक्ति ॥ तस्मिन्नित्यादिना ॥ अप्रकृतब्रह्मणः कथमुक्तिरित्यत आह ॥ ब्रह्मपुरेति ॥ देहस्य ब्रह्म प्रति पुरत्वोक्त्या तथा पुंडरीकं वेश्मेत्यत्रापि ब्रह्मपदान्वयावश्यंभावे ब्रह्म प्रति पुंडरीकस्य वेश्मत्वोक्त्या ब्रह्म वेश्मपदेन चेत्युपलक्ष्यम्। तथा च यद्ब्रह्मांतस्तदन्वेष्टव्यमिति सिद्धेरित्यर्थः। तस्यांतर्हृदय इति समानविभक्तिकत्वाभावेऽपि समानविषयत्वमात्रेणापि प्रश्नोत्तरभावो युक्त इति भावः। उभे अस्मिन् द्यावापृथिवी इत्यादेरर्थः ॥ तदाधारतयेति ॥ ब्रह्महृदयस्थाकाशाभिमान्याधारतया पृथिव्याद्यभिमान्यादिकमित्यर्थः। नास्य जरयैतज्जीर्यते। न वधेनास्य हन्यते। तदेतत्सत्यं ब्रह्मपुरमस्मिन्कामाः समाहिताः। एष आत्माऽपहतपाप्मा इत्यादेरर्थमाह ॥ नष्टेऽपीति ॥ अस्मिन् भूताकाशे ब्रह्माख्याकाशो वर्तते। स च यावान् बहिः परमात्मा व्याप्तोऽस्ति तावानेव विद्यत इति छांदोग्यभाष्योक्तं पक्षांतरं व्यनक्ति ॥ अथवेति ॥ अस्मिन्पक्षे प्रश्नोत्तरयोस्तुल्यविभक्तिकत्वं चास्तीति भावः। एतद्व्याख्यानोक्तिश्चाल्पश्रुतेरित्यधिकाशंकोत्थानाय। संगस्यंते गुरोर्गिर इति स्वप्रतिज्ञानुरोधाय चेति ज्ञेयम्। देहादेर्ब्रह्म प्रति पुरत्वाद्युक्तावपि स्पष्टं तत्र ब्रह्मस्थितेरप्राप्तेरन्यपुरादावन्यस्यापि स्थितिसंभवादित्यभिप्रेत्य सामान्येनोक्त इत्युक्तम्। तस्यैत-

देव निरुक्तं हृदयमित्युत्तरवाक्योक्तरीत्या हृद्यत इति व्युत्पत्त्या हृदयपदेन हृत्पुंडरीकस्थदहरभूताकाशं गृह्यत इति भावेनाह ॥ हृदयपद्माकाश इति ॥ तर्हि किं तदत्रेति प्रश्नस्य यावानित्यनेनोत्तरितत्वात्। उभे अस्मिन् द्यावापृथिवी इत्यादि व्यर्थमित्यतः तत्तु विजिज्ञासितव्यत्वे हेतुत्वेन सामर्थ्यकथनमेवेति छांदोग्यभाष्यानुरोधेन वाक्यशेषस्यान्वयमाह ॥ स चेति ॥ न चेति ॥ तदेतत्सत्यं ब्रह्मपुरमिति हृत्पद्मस्थाकाशस्थे ब्रह्मपुरपदप्रयोगादित्यर्थः। ब्रह्माख्यं पुरं पूर्णत्वात् पुरमिति तद्भाष्योक्तमेवाह ॥ ब्रह्मैवेति ॥ एतच्छब्देन ॥ यदिदमस्मिन् ब्रह्मपुर इति ब्रह्मपुरशब्देनेत्यर्थः ॥ अस्याविनाशेति ॥ तथा च नाशाभावरूपलिंगेन शरीरेऽनुपपन्नेन बाधकेन प्रकृतशरीरत्यागेन विष्णुग्रहणं युक्तम्। यथा अदृश्यत्वनये अक्षरात्संभवतीह विश्वमित्यत्राक्षरशब्देन ब्रह्मणः प्रकृतत्वेऽपि अक्षरात्परतः पर इत्यत्र परत्वावधित्वबाधकेन तत्राक्षरपदेन प्रकृतिग्रहणं तद्वदिति भावः। एतच्चोपलक्षणम्। बृहत्वात्पूर्णकामत्वाद्विष्णुर्ब्रह्मपुराभिधः। तस्मिस्तस्य पुरं देहस्तस्मिन् हृदयमास्थितमित्युक्तदिशा पूर्वमपि ब्रह्मपुरपदेन विष्णोरपि प्रकृतत्वात् द्वयोः प्रकृतत्वेऽपि बहूनां सह निर्देश इत्यानंदमयनयटीकोक्तरीत्या सत्यं ब्रह्मपुरमित्यत्र विष्णुमात्रग्रहणं युक्तमित्यपि ज्ञेयम्। तर्हि उभयत्र वाक्यान्वयसामंजस्ये विष्णुरेवेति निर्बंधे को हेतुरित्यत आकाशपक्ष एवान्वयाभाव इति न्यायविवरणोक्तमन्वयाभावं व्यनक्ति ॥ न चेत्यादिना ॥ तत्र किं यावानिति वाक्ये पूर्वोक्तहृत्पुंडरीकस्थदहराकाशस्यैव हृदयेऽवस्थानमुच्यते। अथ आकाशपदं सप्तम्यंतमुपेत्य हृदये हृत्स्थे आकाशे व्याप्ताकाशोऽस्तीत्युच्यते। किं वा हृदये आकाश इति दहरमनूद्य यावानिति बाह्याकाशतुल्यतया तदेव विशेष्यत इति विकल्पान् हृदि कृत्वा आद्यं निराह ॥ यावान्वा इत्यस्येति ॥ हृदये आकाश इत्येतावता पूर्तेरिति भावः। द्वितीयं निराह ॥ न हीति ॥ तदभावादिति ॥ ईश्वरवदचिंत्यशक्त्यभावेन व्याप्ताकाशस्य दहराकाशस्थत्वाभावात्। छांदोग्यभाष्योक्तदिशा तमेवैकं जानथेति ब्रह्मण एवान्वेष्टव्यत्वोक्त्या आकाशे अन्वेष्टव्यत्वायोगाच्चेत्यर्थः। तृतीयं निराह ॥ नापीति ॥ व्याप्तत्वेति ॥ ईश्वरवदचिंत्यशक्त्यभावादिति भावः। न हि द्यावापृथिव्यादेर्जिज्ञास्यत्वं तमेवैकं जानथ आत्मानं अन्या वाचो विमुंचथ इति हि श्रुतिरिति छांदोग्यभाष्योक्तं दोषमाह ॥ मुख्यत इति ॥ तदाधारतयेति प्रागुक्तदिशा ब्रह्मणि प्रकारतया जिज्ञास्यत्वमस्तीत्यतो मुख्यत इत्युक्तम्। वक्ष्यति च अवस्थितेरिति काशकृत्स्न इति सूत्रेऽमुख्यतो

जिज्ञास्यत्वमिति भावः। पूर्वोक्तशंकापरिहारकत्वेनापि तदित्यादिभाष्यमवतार्य व्याचष्टे ॥ नन्वेवमिति ॥ अंगीकारेऽपीति ॥ यथा साक्षात् हृत्पद्मस्थत्वे विरोधस्तथैवमंगीकारेऽपीत्यपेरर्थः। भाष्येऽपेक्षितं पूरयति ॥ न चैवमंगीकारेऽपीति ॥ १७ ॥

सूत्रभाष्यम्—

॥ ॐ इतरपरामर्शात्स इति चेन्नासम्भवात् ॐ ॥ १८ ॥

'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' (छां. उ. ८-१२-३) 'एष आत्मेति होवाचे'ति (छां. उ. ४-१५-१) जीवपरामर्शात्स इति चेन्न। तस्य स्वतोऽपहतपाप्मत्वाद्यसम्भवात् ॥ १८ ॥

तत्वप्रकाशिका—

भगवतो हृत्पद्मस्थत्वमाक्षिप्य समादधत्सूत्रमुपन्यस्याऽऽक्षेपांशं तावद्व्याचष्टे ॥ इतरेति ॥ 'परं ज्योतिरुपसंपद्य स्वेन रूपेण अभिनिष्पद्यते' इत्युक्तस्य जीवस्य 'एष आत्मेति होवाच' इति हृत्पद्मस्थात्मतया परामर्शाज्जीव एव हृत्पद्मस्थ इत्यर्थः। परिहारांशं व्याचष्टे ॥ नेति ॥ न जीवो हृत्पद्मस्थः। हृत्पद्मस्थेऽपहतपाप्मत्वादिगुणश्रवणात्तेषां जीवेऽसंभवात्। न च वाच्यं मुक्तजीवे तत्संभवात् जीव एव भाविभावेनोच्यत इति मुक्तस्याप्यस्वातंत्र्येण तदसंभवात्। अतः स्वातन्त्र्येणापहतपाप्मत्वादिगुणो हरिरेव हृत्पद्मगत इति भावः ॥ १८ ॥

भावदीपः—

॥ ॐ इतरपरामर्शात्स इति चेन्नासंभवात् ॐ ॥ १८ ॥ परामर्शादिति। एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरिति पूर्ववाक्ये संप्रसादपदेन प्रकृतस्य अभिनिष्पद्यत इति च कर्तृत्वेनोक्तस्य जीवस्यैष इति परामृश्य आत्मपदेन य आत्माऽपहतपाप्मा विजरो विमृत्युरित्युक्तहृत्पद्मस्थात्मत्वविधानादित्यर्थः। शेषपूर्त्या स इति प्रतिज्ञार्थमाह ॥ जीव एवेति ॥ नेत्यस्य पूर्वतनप्रतिज्ञयाऽन्वयं दर्शयन् हेतुसाध्ययोरवैयधिकरण्याय भाष्यं व्याचष्टे ॥ न जीव इति ॥ स्वत इति पदं शंकापूर्वं व्यनक्ति ॥ न चेति ॥ स्वातन्त्र्येणेति ॥ सापेक्षनिरपेक्षयोर्निरपेक्षमेव श्रुतौ स्वीकर्तव्यमिति भावः ॥ १८ ॥

सूत्रभाष्यम्—

॥ ॐ उत्तराच्चेदाविर्भूतस्वरूपस्तु ॐ ॥ १९ ॥

'स तत्र पर्येति जक्षन् क्रीडन् रममाण' (छां.उ.८-१२-३) इत्याद्युत्तरवचनाज्जीव एवेति चेन्न। तत्र हि परमेश्वरप्रसादादाविर्भूतस्वरूपो मुक्त उच्यते। यत्प्रसादात्स मुक्तो भवति स भगवान्पूर्वोक्तः ॥ १९ ॥

तत्वप्रकाशिका—

जीवस्यापहतपाप्मत्वाद्यसंभवमाक्षिप्य समादधत्सूत्रं पठित्वाऽऽक्षेपांशं तावद् व्याचष्टे ॥ उत्तरादिति ॥ 'एष संप्रसादोऽस्माच्छरीरात् समुत्थाय' इत्युक्तजीवस्य 'स तत्र पर्येति' इत्यादिना सत्यकामत्वप्रतीतेस्तत एव विशोकत्वादिसिद्धेः उक्त गुणासंभवाभावात्स एव हृत्पद्मस्थ इत्यर्थः। नञध्याहारेण परिहारांशं व्याचष्टे ॥ नेति ॥ नैतद्वाक्यबलेन जीवस्य गुणान् संभाव्य हृत्पद्मस्थत्वं वाच्यम्। तद्वाक्ये मुक्तजीवस्योच्यमानत्वात्। 'स्वेन रूपेणाभिनिष्पद्यते' इत्युक्तेः। हृत्पद्मस्थस्य च देहान्तर्वर्तितया मुक्तत्वायोगात्। न च वक्तव्यं मुक्तविषयत्वेऽप्येतद्वाक्यस्य मुक्तस्यापि जीवत्वेनास्त्येव जीवेऽपहतपाप्मत्वादिसंभवोऽतो जीव एव अपहतपाप्मत्वादिगुणो हृत्पद्मगततया भाविभावेनोच्यत इति। मुक्तस्यापि परमेश्वरप्रसादादेव तद्गुणाविर्भावेन स्वतोऽपहतपाप्मत्वाद्यसंभवादिति भावः। नन्वत्र मुक्तस्य तद्गुणत्वमेवोच्यते न तु परमेश्वराधीनत्वं अतस्तत्स्वत एवेत्यत आह ॥ यदिति ॥ नात्र मुक्तगुणप्राप्तेः परमेश्वराधीनत्वोक्त्यभावः। परमेश्वरस्य गुणप्रदातृतया 'परं ज्योतिरुपसपद्य' इति पूर्ववाक्योक्तत्वादिति भावः। ननु परमेश्वरप्रसादादपि जीवस्यास्त्येव तद्गुणजातमतः स एवापहतपाप्मत्वादिगुणो हृत्पद्मस्थोऽस्त्वित्यतो वाऽऽह ॥ यदिति ॥ न परमेश्वरप्रसादलब्धगुणो जीवः पूर्ववाक्येऽपहतपाप्मत्वादिनोक्तः। किं तु यत्प्रसादात्स मुक्तो भूत्वाऽपहतपाप्मत्वादिगुणो भवति स भगवानेव। दातृप्रतिग्रहीत्रोर्दातुरेव मुख्यत्वात् मुख्यस्यैव ग्राह्यत्वादिति भावः ॥ १९ ॥

भावदीपः—

॥ ॐ उत्तराच्चेत्० ॐ ॥ १९ ॥ शेषोक्त्या भाष्यं व्याचष्टे ॥ नैतदिति ॥ आविर्भूतस्वरूप इत्यस्यार्थो मुक्तजीवस्येति ॥ परमेश्वरप्रसादादित्येतच्छंकापूर्वं

व्यनक्ति ॥ न च वक्तव्यमित्यादिना ॥ मुक्तस्यापि जीवत्वेनेति ॥ हृत्पद्मस्थत्वापहतपाप्मत्वयोर्भिन्नकालत्वेऽप्यैकाधिकरण्यादपहतपाप्मेत्याद्युक्तिर्युक्तेत्यर्थः ॥ १९ ॥

सूत्रभाष्यम्—

॥ ॐ अन्यार्थश्च परामर्शः ॐ ॥ २० ॥

यं प्राप्य स्वेन रूपेण जीवोऽभिनिष्पद्यते स एष आत्मेति परमात्मार्थश्च परामर्शः ॥२०॥

तत्वप्रकाशिका—

अमुख्यापहतपाप्मत्वादिगुणोऽपि जीवः परामर्शबलेन हृत्पद्मस्थात्मा किं न स्यादित्याशंकां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ अन्येति ॥ भवेदेतद्यद्येष इति जीवं परामृश्य तस्य हृत्पद्मस्थत्वं विधीयेत। नैतदस्ति। यं परं ज्योतिराख्यं भगवन्तमभिसंपद्य जीवः स्वेन रूपेणाऽभिनिष्पद्यते स एष आत्मेति परमात्मानमेवैष इति परामृश्य तस्यात्मत्वोक्तेः। अतो जीवेऽपहतपाप्मत्वाद्यसंभवात्परामर्शस्य चेश्वरार्थत्वात् स एवापहतपाप्मत्वादिगुणो हृत्पद्मस्थ इति भावः। न च मन्तव्यमुभयथापि संभवे कुतः परमात्मार्थता परामर्शस्येति। निरवकाशोक्तानेकहेतुबलादेव ॥ २० ॥

भावदीपः—

॥ ॐ अन्यार्थश्च परामर्शः ॥ २० ॥ भगवंतमिति ॥ ज्योतिश्शब्दश्चाऽऽत्मा प्रकरणादिति चतुर्थे भगवत्परो वक्ष्यत इति भावः ॥ एष इति परामृश्येति ॥ पुल्लिंगं तु शैत्यं हि यत्सा प्रकृतिर्जलस्येत्यादाविव विधेयात्मापेक्षया युक्तमिति भावः। स एवेत्येवकारतात्पर्यं हेतूक्त्या व्यनक्ति ॥ न च मंतव्यमिति ॥ २० ॥

सूत्रभाष्यम्—

॥ ॐ अल्पश्रुतेरिति चेत्तदुक्तम् ॐ ॥ २१ ॥

'दहर' (छां. उ. ८-१-१) इत्यल्पश्रुतेर्नेति चेन्न। 'निचाय्यत्वादेवं व्योमवच्चे'त्युक्तत्वात्। 'एष म आत्माऽन्तर्हृदये ज्यायानि'ति (छां. उ. ३-१४-३) श्रुत्युक्तत्वाच्च ॥ २१ ॥ इति दहराधिकरणम् ॥ ५ ॥

तत्वप्रकाशिका—

उक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्याऽऽक्षेपांशं तावद्व्याचष्टे ॥ अल्पेति ॥ यदुक्तं जीवेऽसंभावितगुणश्रवणाद्विष्णुरेव हृदयपद्मस्थो न जीव इति तदयुक्तम्।

'दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तः' इति परमात्मन्यसंभाव्यमानजीवलिंगस्याल्पस्थानस्थितत्वस्य श्रुतत्वादित्यर्थः। नञध्याहारेण परिहारांशं व्याचष्टे ॥ नेति ॥ नाल्पस्थानस्थितिश्रुतिः विष्णावनुपपन्ना। 'निचाय्यत्वादेवं व्योमवत्' इत्यत्र सर्वगतस्यापि विष्णोः व्योमवदल्पस्थानस्थितेः उक्तत्वादित्यर्थः। न व्योमवदीश्वरस्य अल्पस्थानस्थितिः युक्ता। सर्वगतस्यापि व्योम्नोंऽशतोऽल्पस्थानस्थित्युपपत्तेः। न च तथा विष्णोरुपपत्तिः। तस्यांशतोऽपि सर्वगतत्वात् 'यावान्वा' इत्युक्तेश्चेत्यतः सूत्रशेषं प्रकारान्तरेण व्याचष्टे ॥ एष इति ॥ सर्वगततयैव विष्णोरल्पस्थानस्थितिरुपपन्ना ॥ 'एष म आत्मा' इति श्रुतौ सर्वज्यायस्त्वेनैव हृदयस्थत्वोक्तेरित्यर्थः। न च एतद्युक्तिविरुद्धम्। 'यस्मिन्विरुद्धगतयोऽप्यनिशं पतन्ति' इत्यादेः। अतो विष्णुरेव हृत्पद्मस्थः सर्वाधारश्चेति सिद्धम् ॥ २१ ॥ अ० ५ ॥

भावदीपः—

॥ ॐ अल्पश्रुतेरिति चेत्० ॐ ॥ २१ ॥ व्योमवदित्यनेनास्यागतार्थत्वाय विशेषाशंकोक्तिपूर्वं भाष्यं व्याचष्टे ॥ न व्योमवदिति ॥ यावान्वा इति ॥ पूर्वमथवेति द्वितीयव्याख्याने यावान्वा अयमाकाशस्तावानेषोंऽतर्हृदय आकाश इति हृत्पद्मस्थदहराकाशस्थस्याऽऽकाशनाम्नो विष्णोर्व्याप्तबाह्यरूपतौल्येन व्याप्तत्वोक्तेरित्यर्थः। इति श्रुतौ छंदोगश्रुतौ तृतीय इत्यर्थः। ज्यायस्त्वेन वृद्धतमत्वेन व्याप्तत्वेनेति यावत्। वृद्धशब्दात् वृद्धस्य चेति सूत्रेण ईयसुन्प्रत्यये ज्यादेशे च रूपमेतत्। छांदोग्यभाष्यस्थं सर्वमत्रानुसंधेयमिति भावेन किंचित्प्रदर्शयति ॥ यस्मिन्निति ॥ उक्तं हि तद्भाष्ये अल्पपरिमाणस्यापि महत्परिमाणं युज्यते। अचिंत्यशक्तित्वात्। यस्मिन् विरुद्धगतयोऽप्यनिशं पतंति विद्यादयो विविधशक्तय आनुपूर्व्येति वचनात्। आनुपूर्व्येति श्रुतिप्रामाण्यादित्यर्थ इत्यादि। उपपादितमेतन्निपुणतरं वैशेषिकनयानुव्याख्यान इति भावः। सर्वसूत्रार्थं फलोक्त्योपसंहरति ॥ अत इति ॥ आत्मशब्दब्रह्मशब्दापहतपाप्मत्वसुप्तगम्यत्वारण्याख्यसुधासमुद्राश्रयलोकवत्त्वसर्वधारकत्वरूपलिंगवाजसनेयतैत्तिरीयसमाख्यारूपसाधकभावात् सुषिरश्रुतिविरोधवाक्यानन्वयेतरपरामर्शाल्पस्थानस्थत्वादिबाधकाभावाच्चेत्यर्थः। दहरे तस्त्वित्यस्यार्थो विष्णुरेवेति ॥ सर्वेति भाष्यलब्धफलोपसंहारः। अत्र पूर्वत्र च श्रुतसर्वाधारश्चेत्यर्थः। यत्त्वत्र केनचिद्दूषणमुत्प्रेक्षितं तत्तु चंद्रिकार्थविमर्शिनां न दुरुद्धरमिति ग्रंथगौरवभयान्नात्र प्रपंच्यते ॥ २१ ॥ अ० ५ ॥

सूत्रभाष्यम्—

अदृश्यत्वाद्यः परमेश्वरगुणा उक्ताः। 'तेषां सुखं शाश्वतं नेतरेषाम्। तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखमि' (क. उ. ५-१२, १४) त्यादिना ज्ञानिसुखस्याप्यनिर्देश्यत्वमज्ञेयत्वं चोच्यत इत्यतो वक्ति —

॥ ॐ अनुकृतेस्तस्य च ॐ ॥ २२ ॥

'तमेव भान्तमनुभाति सर्वमि' (क. उ. ५-१५) त्यनुकृतेः, 'तस्य भासा सर्वमिदं विभाती'ति (क. उ. ५-१५) वचनाच्च परमात्मैवानिर्देश्यसुखरूपः। न हि ज्ञानिसुखमनुभाति सर्वम्। न च तद्भासा। 'अहं तत्तेजो रश्मीदि'ति नारायणभासा हि सर्वं भाति ॥ २२ ॥

तत्वप्रकाशिका—

अत्राऽऽनुकूल्येन गृह्यमाणत्वलिंगस्य भगवति ज्ञानिसुखे च सुखशब्दवृत्त्या साधारणस्य विष्णौ समन्वयप्रतिपादनादस्ति शास्त्रादिसंगतिः। श्रुत्यादिसंगतिं विषयादिकं च सूचयन् सयुक्तिकं पूर्वपक्षं च दर्शयति ॥ अदृश्यत्वाद्य इति ॥ पूर्वमदृश्यत्वादिगुणाः परमेश्वरस्योक्ताः। तेषामदृश्यत्वाज्ञेयत्वे कस्यचिदानुकूल्येन गृह्यमाणस्य काठके कथ्येते। 'तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम्। कथं नु तद्विजानीयां किमु भाति न भाति वा' इति। आनुकूल्येन गृह्यमाणत्वं नाम कथं नु तद्विजानीयामिति ज्ञानार्थं प्रार्थितत्वम्। तस्य चान्यनिष्ठत्वेऽनिर्देश्यत्वं न भवतीत्युक्ताज्ञेयत्वं चान्यस्यैव प्रसज्ज्येतेत्यवश्यं निर्णेतव्यत्वम्। तदानुकूल्येन गृह्यमाणत्वमत्र विषयः। विष्णोरन्यस्य वेति संदेहः। प्रागुक्तसाधारण्यं संदेहबीजम्। ज्ञानिसुखस्यैतल्लिङ्गमिति पूर्वः पक्षः। परमं सुखमिति सुखोक्तेः। न च सुखश्रुतिर्विष्णावपि सावकाशेति तद्ग्रहः 'एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति। तमात्मस्थं येऽनुपश्यन्ति धीराः तेषां सुखं शाश्वतं नेतरेषाम्' इति ज्ञानिसुखस्य प्रकृतत्वात्। तस्यैव तदेतदिति मन्यन्त इति परामर्शात्। न च वाच्यं भगवतोऽपि प्रकृतत्वात्तत्परामर्शोऽयमस्त्विति। तस्य नपुंसकसुखशब्देनाप्रकृतस्य तदित्यादिपरामर्शायोगात्। संभवत्समीपस्थपरामर्शं विहाय दूरस्थपरामर्शग्रहणे कारणाभावाच्च। अतो ज्ञानिसुखस्यैवाऽऽनुकूल्येन गृह्यमाणत्वात् तस्यैवानिर्देश्यत्वादीत्यर्थः। सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ कथं

नु तद्विजानीयामित्यानुकूल्येन गृह्यमाणो विष्णुरेव। न च सुखश्रुतिविरोधः। परमं सुखमिति सुखश्रुतेरपि तत्परत्वात्। तेषां सुखमिति ज्ञानिसुखस्य प्रकृतत्वात्तस्यैव तदेतदिति परामर्शान्नेति चेन्न। चेतनश्चेतनानामित्यादौ परमात्मनोऽपि प्रकृतत्वात्। न च परमात्मनो नपुंसकसुखशब्देनाप्रकृतत्वात्तदेतदिति परामर्शायोग इति वाच्यम्। यदनिर्देश्यं परमं सुखं कथं नु तद्विजानीयामित्यानुकूल्येन गृह्णन्ति तदनिर्देश्यं सुखमेतत्प्रकृतपरमात्मनो रूपमिति मन्यन्त इति वाक्ययोजनोपपत्तेः। न च वक्तव्यं समीपस्थपरामर्शं विहाय कथंचिदेव दूरस्थग्रहणे कारणाभाव इति। 'तमेव भान्तमनुभाति सर्वम्' इति वाक्यशेषे सूर्यादीनामेतदधीनप्रकाशश्रवणात् 'तस्य भासा' इति सर्वजगतः तत्प्रभाप्रकाश्यत्वप्रतीतेश्च। अतः समीपोक्तपरित्यागे कारणसद्भावेन दूरोक्तपरमात्मग्रहणोपपत्तेस्तस्य च सुखरूपत्वातिशयेन नपुंसकसुखश्रुत्युपपत्तेः विष्णुरेव आनुकूल्येन गृह्यमाण इति तस्यैव अनिर्देश्यत्वादीति भावः। नन्वेतदधीनतया सूर्यादीनां भानोक्तावेतस्य सर्वजगत्प्रकाशकत्वोक्तौ च कुतः समीपोक्तज्ञानिसुखपरामर्शपरित्याग इत्यत आह ॥ न हीति ॥ सर्वं सूर्यादिजगत् भातीति शेषः। अस्त्वेतदुभयं ज्ञानिसुखेऽनुपपन्नं तथापि कुतोऽनेन परमात्मग्रहणमित्यत आह ॥ अहमिति ॥ एतदुभयस्य ज्ञानिसुखेऽसंभवात्परमात्मनि संभवाद् दूरोक्तस्यापि समीपोक्तपरित्यागेन ग्रहणमिति भावः। तदुक्तं 'व्यवधानेनान्वयोऽपि योग्यतापेक्षया भवेदिति'। इति श्रुतेरिति शेषः। रश्मीदिति सूर्यादितेजसां नारायणाधीनत्वमुच्यते। तेज इति सर्वजगत्प्रकाशकत्वं नारायणभासा तदधीनभासा तदीयभासा च सर्वं सूर्यादिजगच्च भाति प्रकाशते प्रकाश्यते च ॥ २२ ॥

भावदीपः—

॥ ॐ अनुकृतेस्तस्य च ॐ ॥ २२ ॥ अत्र न्यायविवरणे कथं नु तद्विजानीयमित्यानुकूल्येन ग्रहणं कस्येति विचार्यमित्युक्तम्। तत्र पूर्वस्माल्लिगं साधारणमिति पदानुवृत्तिं सूचयन् आनुकूल्येन ग्रहणं कस्येत्युक्त्यैव लब्धसाधारण्यं व्यनक्ति ॥ अत्रानुकूल्येनेति ॥ भगवति ज्ञानिसुखे च साधारणस्येत्यन्वयः। सुखे तावदुक्तलिंगं प्रसिद्धमेव। अनुकूलवेदनीयत्वं सुखत्वमिति सर्वसिद्धत्वात्। भगवतोऽपि ज्ञानिनं प्रति प्रियो हि ज्ञानिनोऽत्यर्थमहमित्युक्तनिरुपाधीष्टत्वात्। ज्ञानिनं प्रति स्वसुख इव भगवत्यपि तल्लिगं सिद्धमिति भगवति ज्ञानिसुखे च साधारणस्येत्युक्तम्। परमात्मैवानिर्देश्यसुखरूप इति भाष्योक्तिसूचितं साधारण्यमाह ॥ सुखशब्दवृत्त्येति ॥

प्राक्तनचशब्दोऽत्राप्यन्वेति। परमं सुखमित्युक्तसुखशब्दस्य तेषां सुखं शाश्वतमिति पूर्वत्र ज्ञानिसुखे यो वै भूमा तत्सुखमिति भगवति च प्रयोगेण चेत्यर्थः। भाष्यं संगतिपरत्वेन तावद्व्याचष्टे ॥ पूर्वमिति॥ अदृश्यत्वनये ॥ तेषामदृश्यत्वाज्ञेयत्वे इति ॥ तेषां मध्ये अद्रेश्याग्राह्यपदोक्ते इत्यर्थः। ज्ञानिसुखस्योच्यत इत्यस्यार्थः ॥ कस्यचिदिति ॥ केनेत्यतः तदेतदिति पूर्वभाष्यमिति मत्वाऽऽह ॥ तदेतदिति ॥ भाष्ये पूर्वपक्षयुक्तिसूचनाय एकदेशमात्रोक्तावपि आदिपदोपात्तलिंगार्पकांशमाह ॥ कथं नु तदिति ॥ पूर्वार्धेनानिर्देश्यत्वस्य उत्तरार्धेन न भातीत्यज्ञेयत्वस्य चोक्तेरिति भावः। अत्र भाष्ये परमात्मैवानिर्देश्यसुखरूप इत्युक्त्याऽऽनुकूल्येन गृह्यमाणत्वं सुखत्वरूपलिंगमिति भाति। तथात्वे न्यायविवरणे कथं नु तद्विजानीयामित्यानुकूल्येन ग्रहणमित्युक्तिर्न युक्ता तद्वाक्ये सुखत्वलिंगाप्रतीतेरित्यतो लिंगस्वरूपं विविच्याऽऽह॥ आनुकूल्येनेति ॥ विधिनिमंत्रणामंत्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङिति स्मरणात्। विजानीयामिति लिङ्ज्ञानार्थं ज्ञेयस्य प्रार्थना प्रतीतेरिति वा। कथं पुत्रं पश्येयं आयाति न वेत्यत्र दर्शनार्थं पुत्रागमनप्रार्थनप्रतीतेरिव कथं न्विति वाक्ये ज्ञानार्थमाविर्भावरूपभानप्रार्थनप्रतीतेरिति वाऽभिप्रायः। सुखरूप इति भाष्यं तु फलितोक्तिपरमिति भावः। तेषां सुखमित्यादेर्भावमाह ॥ तस्य चेति ॥ प्रकृतज्ञानिसुखवाचिसुखश्रुत्या ज्ञानिसुखनिष्ठत्व इत्यर्थः। ज्ञानिसुखस्यानिर्देश्यत्वमज्ञेयत्वं चोच्यत इत्यस्य भावमाह ॥ अनिर्देश्यत्वमिति ॥ प्राग्विष्णुधर्मतयोक्तमिति योज्यम्। इत्यवश्येत्युक्तार्थम्। निर्णेतव्यत्वम्। आनुकूल्येन गृह्यमाणस्येत्यनुषंगः। पूर्वपक्षादिपरत्वेनापि व्याकुर्वन् ज्ञानिसुखस्येत्येतत्प्रतिज्ञापरत्वेन व्याचष्टे ॥ ज्ञानिसुखस्यैतल्लिंगमिति ॥ कथं नु तदिति वाक्योक्तमानुकूल्येन गृह्यमाणत्वरूपमित्यर्थः। अनिर्देश्यमित्यादिपूर्वभाष्यलब्धं हेतुमाह ॥ परमं सुखमितीति ॥ तस्यैव च कथं नु तदिति तच्छब्देन परामर्शादिति भावः। तदेतदिति मन्यन्ते कथं नु तद्विजानीयामिति तेषां सुखं शाश्वतमित्युक्तज्ञानिसुखग्रहणमिति विपरीतश्रुतिभ्रम इत्यन्यत्रोक्तरीत्या सुखश्रुतेर्निरवकाशत्वाय तद्विशेषणभूततदादिसर्वनामश्रुतेर्निरवकाशत्वोक्तिपरतया तेषामित्यादिभाष्यं शंकापूर्वं व्याचष्टे ॥ न चेति ॥ सुखविशिष्टेति सूत्रे लक्षणं परमानंद इत्युक्तदिशा वा भूमा संप्रसादादित्यत्रोक्तदिशा यो वै भूमा तत्सुखमित्युक्त्या वेति भावः। तेषामिति तच्छब्दार्थसूचनाय एको वशीति त्रिपाद्युक्तिः। आत्मस्थं स्वस्थितम्। तदिति प्रातिपदिकश्रुतेः सावकाशत्वमाशंक्य नपुंसकलिंगेन तस्या निरवकाशत्वमाह ॥ न चेति ॥ तथा च तस्यैवेत्ययुक्तमिति भावः ॥ प्रकृतत्वादिति॥

तत्रैव मन्त्रे। एको वशीति प्रकृतत्वादित्यर्थः। ननु पूर्वत्र एष आत्मेत्यत्र एतच्छब्दस्य पूर्वोक्तज्योतिःपरत्वेऽपि विधेयात्मापेक्षया पुंल्लिंगत्ववदिहापि विधेयसुखापेक्षया नपुंसकत्वमस्त्वित्याशंकानिरासायोक्तं तदित्यादीत्यादिपदम्। तदेतच्छब्दयोरेकस्य तथात्वेऽप्येकस्योद्देशकत्वावश्यंभावेन द्वयोर्नपुंसकत्वायोगादित्यर्थः। अंगीकृत्य चेदमुदितम्। वस्तुतस्तु तदिति प्रातिपदिकश्रुतिरेव स्वतो निरवकाशेति भावेनाह ॥ संभवदिति ॥ दूरस्थेति ॥ ज्ञानिसुखेन व्यवहितेत्यर्थः। अन्यथा पूर्वत्रापि तस्मिन्यदंतरित्यत्राप्याकाशपरामर्शित्वं तच्छब्दस्य न स्यात्। व्यवहितपुंडरीकपरत्वमेव स्यादिति भावः ॥ अत इति ॥ सन्निहितपरामर्शिनपुंसकतदेतच्छ्रुतिसमानाधिकृतसुखश्रुत्यनुरोधादित्यर्थः ॥ अनिर्देश्यत्वादीति ॥ काठके आथर्वणे च श्रुतमिति योज्यम् ॥ छ ॥ भाष्ये परमात्मैवेत्यनंतरं आनुकूल्येन गृह्यमाण इति शेषं मत्वा भाष्यमाकांक्षाक्रमेण व्याचष्टे ॥ कथं नु तदिति ॥ सुखरूप इत्यस्यार्थ इति भ्रमनिरासाय कथं न्विति वाक्योक्तिः। अनिर्देश्यसुखरूप इति भाष्यं प्रागुक्तसुखश्रुतेः सावकाशत्वोक्तिपरतया तात्पर्यतो व्याचष्टे ॥ न चेति ॥ ननु तदेतच्छ्रुतिसामानाधिकरण्यात्साऽपि निरवकाशेत्युक्तमिति शंकते ॥ तेषामिति ॥ नेति चेदिति ॥ सुखश्रुतेर्विष्णुपरत्वं नेति चेदित्यर्थः। यज्ज्ञानाच्छाश्वतं सुखं स भगवान् यद्ब्रह्म अनिर्देश्यं सुखमिति वदंति तदेतत्स्वरूपमिति मन्यंत इत्यन्यत्रोक्तं वाक्यमत्र व्याकुर्वन् तदुत्तरत्वेन भगवानित्यंतस्य भावमाह ॥ चेतन इति ॥ यद्ब्रह्मेत्यादेः पूर्वकृतशंकांतरनिवर्तकत्वेनार्थमाह ॥ न चेत्यादिना ॥ यदिति ॥ यतो वाचो निवर्तंत इत्यादौ प्रसिद्धं यदनिर्देश्यमित्यर्थः। गृह्णंति ज्ञानार्थं प्रार्थयंत इत्यर्थः। काठक भाष्ये तु तदेव भगवद्रूपं परमं सुखं ज्ञानिसुखं तु विप्लुण्मात्रमिति सुखं विधेयमित्यर्थांतरमुक्तम्। तत्र तत् गुह्यं ब्रह्मेत्युपक्रांतं एतत् एकं रूपमिति मध्ये चोक्तं ब्रह्मणो रूपं परमं सुखमित्यर्थ इति नपुंसकोपपत्तिरुक्ता चंद्रिकायाम्। इदानीं तमेवेत्यादिभाष्यं संभवत्समीपेत्यादिना पूर्वोक्तशंकाव्यावर्तकत्वेन व्याचष्टे ॥ न च वक्तव्यमिति ॥ दूरस्थेति ॥ यद्यपि तेषां सुखमित्युक्तज्ञानिसुखात् एको वशीत्यादिनोक्तो विष्णुर्दूरस्थः। चेतनश्चेतनानामित्युक्तस्तु सन्निहित एव। एतन्मन्त्रस्य तेषां सुखमित्यतोऽनंतरमाम्नानात् अनेनैव मंत्रेण पूर्वं प्रकृतत्वस्योक्तेः। तथाप्यभ्युपेत्यवादेन वा चेतन इति मंत्रेऽपि तेषां शांतिः शाश्वती नेतरेषामिति श्रवणेन शांतिशब्दितसुखव्यवधानं चेतन इत्यस्याप्यस्तीति वा दूरस्थेत्युक्तम्। अनुभानं नाम

तदिच्छानुरोधेन भानं अनुकृतिशब्देन अनुभानमुच्यते। भानस्यापि क्रियारूपत्वात्। अन्यकृतीनामप्युपसंग्रहार्थमनुकृतेरित्युक्तमिति तत्वप्रदीपोक्त्या अनुकृतेरित्यस्य अनुभानादित्यर्थं मत्वाऽऽह ॥ एतदधीनप्रकाशेति ॥ सर्वमित्यस्यार्थः ॥ सूर्यादीनामिति ॥ एतदधीनेत्युक्त्या सूत्रे तस्येति पदं आनुकूल्येन गृह्यमाणपरं सत् अनुकृतेरित्यतः पूर्वमप्यन्वेति स्वस्थाने च स्थितं सत् तस्य भासेति वाक्यप्रतीकं च भवतीति दर्शितम्। स्पष्टीकृतं चैतत्तंत्रदीपिकायामस्माभिः। भाष्ये अनिर्देश्यसुखरूपत्वे च अनुकृत्यादेर्हेतुत्वोक्त्या समीपस्थदूरस्थत्यागोपादानयोर्हेतुत्वं लिंगसमन्वयहेतुत्वं च लब्धमिति दर्शयन् भाष्यस्य फलितोक्तिपरत्वेन भावमाह॥ अत इति ॥ उक्तलिंगद्वयाभावादित्यर्थः। सर्वं सूर्यादीत्युक्त्या श्रौतसर्वशब्दोऽपि सूर्यादितेजोमात्रपरो न सर्वजगत्पर इति व्याख्यातं भवति। न च तद्भासेति भाष्ये शेषमाह ॥ जगद्भातीति शेष इति ॥ तेन तस्य भासेति श्रुतौ सर्वशब्दो जगत्परो न तेजोमात्रपर इति दर्शितम्। न हीत्यादेर्भावमाह ॥ एतदुभयस्येति ॥ सर्वतेजोनियंतृत्वसर्वजगत्प्रकाशकत्वरूपोभयस्येत्यर्थः ॥ तदुक्तमिति ॥ चतुर्थस्कंधतात्पर्ये विंशेऽध्याये भगवत्पादोदाहृतशब्दनिर्णयवाक्ये सन्निधेरपि योग्यताया बलीयस्त्वमुक्तमित्यर्थः। इतिशब्दानंतरं श्रुतेरिति शेषमाह ॥ इति श्रुतेरिति शेष इति ॥ प्रकृतार्थद्वयं श्रुतौ व्यनक्ति ॥ रश्मीदिति ॥ अग्नीदित्यस्य अग्निसमिंधकत्वमिव रश्मीच्छब्दस्य रश्मिसमिंधकत्वमर्थ इत्युपेत्योक्तम् ॥ सूर्यादीति ॥ नारायणेति ॥ नारायणं पुरुषमिति वाक्यशेषादिति भावः। एषा च श्रुतिरंतर्नयोक्ता व्याख्याता च। श्रुत्यनुरोधेन भाष्यस्थपदानामप्यर्थद्वयमाह ॥ नारायणेति ॥ २२ ॥

सूत्रभाष्यम्—

॥ ॐ अपि स्मर्यते ॐ ॥ २३ ॥

'यदादित्यगतं तेजो जगद्भासयतेऽखिलम्।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकमि'ति। (भ. गी. १५–१२)
'न तद्भासयते सूर्यो न शशाङ्को न पावकः।
यद्गत्वा न निवर्तन्ते तद्धाम परमं ममे'ति (भ. गी. १५–६) च ॥ २३ ॥

॥ इति अनुकृत्यधिकरणम् ॥ ६ ॥

तत्वप्रकाशिका——

यदेतल्लिंगद्वयस्य विष्णुनिष्ठत्वं श्रु(त्यो)त्युपपादितं तत्स्मृत्याप्युपपादयत्सूत्रं पठित्वा तां स्मृतिमुदाहरति॥ अपीति॥ न केवलमेतच्छ्रूयतेऽपि तु स्मर्यतेऽपीत्यर्थः। मामकं मदधीनं मदीयं च। किंच 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः' इत्यानुकूल्येन गृह्यमाणस्य सूर्याद्यप्रकाश्यत्वमुच्यते। तच्च विष्णोरेव स्मर्यते। अतो विष्णुरेवात्र प्रतिपाद्य(त)इति सूत्रस्यार्थांतरमभिप्रेत्य तां स्मृतिमुदाहरति॥ न तद्भिति॥ धाम स्वरूपम्। 'तेजः स्वरूपं च गृहं प्राज्ञैर्धामेति गीयते' इत्यभिधानात्। युक्तिसमुच्चयेऽपिपदम्। न च मन्तव्यं न तत्र सूर्यो भातीत्यादि पुंलिङ्गेन प्रकृतपरमा(त्मनए)त्मैवोच्यते न तु आनुकूल्येन गृह्यमाणस्य। अतस्तज्ज्ञानिसुखमिति ग्रहणेऽपि बाधकाभाव इति। किमु भाति न भाति वेति प्रकृतस्यैव न तत्रेत्यनुसंधानप्रतीतेः। यस्यैवं सुखं रूपं तत्रेति वाक्ययोजनोपपत्तेश्च। दूरोक्तग्रहणे बिभ्यतोऽतिदूरोक्तग्रहणे कथं न भीतिः। अनिर्देश्यत्वाद्ययोगाच्च। तस्मादानुकूल्येन गृह्यमाणो हरिरेवेति तस्यैव अनिर्देश्यत्वादीति सिद्धम्॥ २३॥ अ०६॥

भावदीपः——

॥ ॐ अपि स्मर्यते ॐ॥ २३॥ न केवलमिति॥ एतेन प्रागुक्ता श्रुतिरेतत्सूत्रस्थापिपदेन समुच्चितैवोक्तेति सूचितम्। भाष्यस्य सूत्रेणान्वय इति भावः। अत्राद्यसूत्रे चशब्देन न तत्रेति वाक्यशेषोक्तलिङ्गं समुच्चीयते। तत्र सूर्याद्यप्रकाश्यत्वसूर्यादिनियंतृत्वजगद्भासकत्वरूपलिङ्गानां मध्ये द्वयोरपिशब्देन प्रागुक्तश्रुतिसिद्धत्वमुक्त्वा त्रयाणामपि विष्णुनिष्ठत्वं स्मार्तं चेत्याहेति योजना तु स्फुटत्वान्नोक्तेत्याहुः। न तदिति स्मृत्युपयोगाय सूत्रस्यार्थांतरं व्यक्तीकुर्वन्नवतारयति॥ किंचेति॥ सौत्रापिशब्दार्थोऽयम्। भाति भासयति। सूर्यादयस्तं न भासयन्तीत्याथर्वणभाष्योक्तेः॥ युक्तीति॥ पूर्वयोजनायां आद्यसूत्रोपात्तस्य युक्तिद्वयस्य विष्णौ श्रौतत्वसमुच्चयेऽपिशब्द इति दर्शितम्। इदानीं सूर्याद्यप्रकाश्यत्वस्यापि स्मार्तत्वमिति सूर्याद्यप्रकाश्यत्वाच्चानुकूल्येन गृह्यमाणो विष्णुरेवेति सूर्याद्यप्रकाश्यत्वरूपयुक्तिसमुच्चयेऽपिपदमित्यर्थः। श्रुतौ न तत्रेति वाक्यशेषोक्तलिंगस्य प्राथम्येन सूर्याद्यप्रकाश्यत्वादनुकृतेस्तस्य चेति वक्तव्ये अनुकृतिशब्देन तमेव भांतमिति द्वितीयवाक्योक्तानुभानोक्त्या सूचितं चोद्यमाशंक्योत्तरयति॥ न चेति॥ इत्यादि पुल्लिंगेनेति॥ तत्र तं तस्येति तच्छब्दत्रयगतेनेत्यर्थः। मध्ये तमिति पुंल्लिग-

श्रवणात् पूर्वोत्तरतच्छब्दयोरपि तथात्वमिति भावः ॥ प्रकृतेति ॥ चेतनश्चेतनाना-नामित्यनेनेत्यर्थः। उच्यते। सूर्याद्यप्रकाश्यत्वतत्प्रकाशनियंतृत्वजगत्प्रकाशकत्व-रूपलिंगत्र(योपेततये)यमित्यर्थः ॥ प्रकृतस्यैवेति ॥ दुर्ज्ञेयत्वेनोक्तस्येव वस्तुनो न तत्र सूर्यो भातीत्यत्र प्रत्यभिज्ञानादित्यर्थः। तथा च तदैकार्थ्यमेव तं तस्येति तच्छब्दयो-रपीति भावः। कथं तर्हि तत्र तमित्यादि पुंल्लिगनिर्वाह इत्यत आह ॥ यस्येति ॥ यदनिर्देश्यं सुखं आनुकूल्येन ग्राह्यं च तत्परमात्मनः एतत्प्रकृतं रूपम्। यस्य पर-मात्मनो रूपमेवमनिर्देश्यपरमसुखात्मकमानुकूल्येन ग्राह्यं च तत्र परमात्मनि तं पर-मात्मानं इति च पुंल्लिगस्य सन्निहितपरत्वस्य चोपपत्तेरित्यर्थः। तर्हि यस्येत्य-ध्याहारदोषः। व्यवहितपरत्वपक्षे तु यो विदधाति कामान् न तत्र सूर्यो भाती-त्युपपत्तेरित्यत आह ॥ दूरोक्तेति ॥ तदेतदिति श्रुतेर्व्यवहितेश्वरपरत्वे बिभ्यतः न तत्रेत्यादेरतिदूरोक्तस्य चेतनश्चेतनानामिति वाक्योक्तग्रहणे कथं न भीतिरित्यर्थः। सन्निहितपरामर्शितच्छब्दप्रातिपदिकस्वारस्यानुरोधेन गुणभूतं लिंगं कथंचिदुक्तदिशा निर्वाह्यमिति भावः। पुंल्लिगानुरोधेन न तत्रेत्यादेर्व्यवहितपरत्वमुपेत्य तदेतदित्यादे-र्ज्ञानिसुखपरत्वोपगतौ बाधकांतरं चाऽऽह ॥ अनिर्देश्यत्वाद्ययोगाच्चेति ॥ यतो वाचो निवर्तंत इत्यादिश्रुत्या ब्रह्मरूपानंदस्यैवानिर्देश्यत्वात्। एष परम आनंद इत्यादि-श्रुत्या तस्यैव परमानंदत्वाच्च ज्ञानिसुखस्य च अव्यक्तादितृणांतास्तु विप्लुडानंदभागिन इति पूर्वोक्तदिशा वा ब्रह्मादीनां तु युक्तानां सुखं विष्णुसुखस्य तु। प्रतिबिंबस्तु विप्लुट्को विष्णोरेव परं सुखमिति काठकभाष्योक्तवाराहस्मृत्या वा अनिर्देश्यत्व-परमत्वयोरयोगाच्चेत्यर्थः ॥ तस्मादिति ॥ सूर्यादितेजोनियंतृत्वजगत्प्रकाशकत्वसूर्याद्य-प्रकाश्यत्वरूपसूत्रोक्तसाधकभावात् सुखश्रुतिविरोधादिबाधकाभावाच्चेत्यर्थः। सूत्रेऽ-ध्याहृतप्रतिज्ञातार्थं आनुकूल्येनेति ॥ अदृश्यत्वादीति फलोक्तिः। अज्ञेयत्वमा-दिपदार्थः। अत्र श्रुतं प्राक् श्रुतं चेत्यर्थः ॥ २३ ॥ अ० ६ ॥

सूत्रभाष्यम्—

विष्णुरेव जिज्ञास्य इत्युक्तम्। तत्र

'ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति।
मध्ये वामनमासीनं विश्वे देवा उपासत' (क. उ. ५–३)

इति सर्वदेवोपास्यः कश्चित्प्रतीयते। स च 'एवमेवैष प्राण इतरान्प्राणान्पृथक्पृथगेव

सन्निधत्ते' (प्र. उ. ३–४) 'योऽयं मध्यमः प्राणः' (बृ. उ. ३–५–२१) 'कुविदङ्ग' (ऋ. सं. ७–९१–१) त्यादिना प्राणव्यवस्थापकत्वान्मध्यमत्वात्सर्वदेवोपास्यत्वाच्च वायुरेवेति प्रतीयते । अतोऽब्रवीत् ॥

॥ ॐ शब्दादेव प्रमितः ॐ ॥ २४ ॥

वामनशब्दादेव विष्णुरिति प्रमितः । न हि श्रुतेर्लिङ्गं बलवत् ।

'श्रुतिर्लिङ्गं समाख्या च वाक्यं प्रकरणं तथा ।
पूर्वं पूर्वं बलीयः स्याद्देवजागमनिर्णय' इति स्कान्दे ॥

तच्च लिङ्गं विष्णोरेव । तस्यैव प्राणत्वोक्तेः 'तद्वै त्वं प्राणो अभव' इति ॥ २४ ॥

तत्त्वप्रकाशिका—

अत्र प्रेरकत्वसाम्येन भगवति वायौ च साधारणस्येशाननाम्नो विष्णौ समन्वयप्रतिपादनादस्ति शास्त्रादिसंगतिः । श्रुत्यादिसंगतिं विषयसंशयौ च सूचयति ॥ विष्णुरेवेति ॥ 'अथातो ब्रह्मजिज्ञासा' इति जिज्ञास्यत्वं विष्णोरुक्तम् । तज्जिज्ञास्यत्वमीशानस्य काठके प्रतीयते । अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्येत्युक्त्वा 'ऊर्ध्वं प्राणम्' इत्यादौ 'विश्वेदेवा उपासते' इति जिज्ञासोपासनयोरैक्यात् । श्रवणादिरूपविचारो हि जिज्ञासोच्यते । उपासना च सैव । यदाहुः । 'सोपासना च द्विविधा शास्त्राभ्यासस्वरूपिणी । ध्यानरूपा परा चैव तदङ्गं धारणादिकम्' इति । स च यदि विष्णोरन्यः स्यात्तदा जिज्ञास्यत्वं चान्यस्यैव प्रसज्जते । इत्यवश्यं निर्णयः । स ईशानोऽत्र विषयः । किं विष्णुर्वायुर्वेति संदेहः । प्रागुक्तसाधारण्यमेव संदेहबीजमिति भावः । ईशानशब्दस्य रुद्रे प्रसिद्धावपि तद्विषयसंशयः (अधिकारिसर्वोपास्य) सर्वदेवोपास्यत्वलिङ्गभिया गर्भस्रावेणैव निवृत्तः । य उन्नयति तमित्यन्वयः । सयुक्तिकं पूर्वपक्षयति ॥ स चेति ॥ स चेशानो वायुरेव भवेत् । ईशानस्योर्ध्वं प्राणमुन्नयतीति वाक्ये प्राणव्यवस्थापकत्वमध्यमत्वसर्वदेवोपास्यत्वश्रवणात् । न चैतल्लिङ्गश्रवणेऽपि कुतोऽयं वायुर्विष्णुः किं न स्यादिति । 'यथा सम्राडेवाधिकृतान्विनियुङ्क्त एतान् ग्रामान् अधितिष्ठस्वैतान् ग्रामानधितिष्ठस्व इत्येवमेवैष प्राण इतरान् प्राणान् पृथक्पृथगेव संनिधत्ते' इति प्राणव्यवस्थापकत्वस्य वायुलिङ्गत्वश्रवणात् । 'अथेममेव नाप्नोद्योऽयं मध्यमः प्राणः' इति मध्यमत्वस्य तद्धर्मत्वोक्तेः । कुविदङ्गेति तस्य सर्वदेवोपास्यत्व-

प्रतीतेश्च । अतो वाय्वेकनिष्ठलिङ्गश्रवणादीशानो वायुरेवेति हेतोस्तस्यैव जिज्ञास्यत्वम् । न च वाच्यं नेदमनिष्टं वायोरपि जिज्ञास्यताभ्युपगमाद् विष्णुजिज्ञास्यत्वस्याबाधादिति । वायोः सर्वदेवोपास्यत्वे तस्य मोक्षदातृत्वापातात् । न हि प्राप्तसमस्तैश्वर्याणां देवानां प्रयोजनान्तरमस्ति । तथा च किं विष्णुजिज्ञासानियमेनेति विष्णुरेव मोक्षार्थं जिज्ञास्य इत्यस्यानुपपत्तिरिति भावः । अयं मन्त्रार्थः । अङ्गेति संबोधनम् । ये देवा वायोर्नमस्कारादिना ज्ञानादिगुणपूर्णा अज्ञानाद्यवद्यविधुराश्च पुरा आसंस्ते क्वचिद्रहस्यस्थाने सूर्येण साकं ज्ञानिने संसारबाधवद्भिः शरणं प्राप्ताय वायवे बुद्धिमावासयंस्तद्विषयामकुर्वन्निति । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ विष्णुरेवेशानो भवेत् । 'मध्ये वामनम्' इति वामनश्रुतेः । तस्याश्च विष्णौ महायोगरूढिसिद्धायास्तत्प्रमापकत्वात् । अतो विष्णोरीशानत्वेन तस्यैव जिज्ञास्यत्वमिति भावः । अत्र प्रमितपदं श्रुतेर्निरवकाशत्वसूचनार्थम् । ननु वायुलिङ्गसद्भावादीशानो वायुरेव किं न स्यादित्यत आह ॥ न हीति ॥ भवेत्सत्यामपि श्रुतौ लिङ्गेन वायुत्वनिश्चयो यदि श्रुतेर्लिङ्गं बलवद्भवेन्न च तदस्तीत्यर्थः । अनेन शब्दादेव इत्येवकाराभिप्रायो वर्णितो भवति । कुतो न श्रुतेर्लिङ्गं बलवदित्यत आह ॥ श्रुतिरिति ॥ नाममात्रेण निर्देशः श्रुतिः । असाधारणधर्मो लिङ्गम् । निराकाङ्क्षपदानि वाक्यम् । एकप्रमेयप्रतिपादकानेकवाक्यानि प्रकरणम् । अनेकप्रमेयप्रतिपादकमेकार्थे तात्पर्ययुक्तं स्थानम् । समानोक्तिः समाख्या । तत्र श्रुतेः साक्षादर्थधीजनकत्वात् सर्वतः प्राबल्यम् । लिङ्गस्यानुमापकतयाऽर्थबोधकत्वात् तदानन्तर्यम् । वाक्यस्यानेकार्थकथनद्वाराऽर्थानुमापकत्वात् ततोऽपि दौर्बल्यम् । प्रकरणस्य बह्वर्थपरत्वेनार्थानुमितिहेतुत्वात्तदवमता । स्थानस्यातिबह्वर्थकथनेनाभिप्रायतोऽर्थानुमितिजनकस्य ततोऽपि दौर्बल्यम् । समाख्यायाः स्थानान्तरगतायाः सादृश्यमात्रेणार्थानुमापकत्वात्ततोऽपि दुर्बलत्वम् । अत्रापि पूर्ववन्निरवकाशात् स्वभावदुर्बलादपि स्वभावप्रबलसावकाशस्य दौर्बल्यमित्यादि द्रष्टव्यम् । अत्र विरुद्धैतेषां समवाये सत्येवंपूर्वपूर्वेणोत्तरोत्तरबाधयागमार्थनिर्णयो भवतीत्यर्थः । न च यथास्थित एव क्रमः । आत्मा प्रकरणादित्यत्र समाख्यायाः प्रकरणेन बाधितत्वात् । तदाह जैमिनिः 'श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' इति । भाष्यकारोऽपि । 'वाक्यं प्रकरणं स्थानं समाख्या च तथा विधा' । इति । श्रुतिलिङ्गवाक्यानां साक्षाद्विप्रतिपन्नार्थनिष्ठत्वे श्रुत्यादित्वेनैव ज्ञापकत्वम् । उपक्रमोपसंहारयोः श्रुतत्वे तन्निश्चायकतया लिङ्गत्वमन्यत्र चेत्प्रकरणनिश्चायक-

त्वेन। उपक्रमोपसंहारावपि श्रुत्यादिना सत्यामर्थसिद्धौ तात्पर्यलिङ्गे। अन्यथा प्रकरणनिश्चायकौ। समाख्यापि साक्षाद्विप्रतिपन्ननिष्ठा समाख्यात्वेनैव लिङ्गम्। अन्यथा प्रकरणनिश्चायकत्वेन भवति। लिंगवाक्ययोः साक्षादसाक्षात्त्वेन भेदः। 'गोत्रभिदं' 'प्रवक्षणा अभिनत्पर्वतानाम्' इत्यादिवदिति। नन्वस्तु श्रुतेः स्वभाव-प्राबल्यं तथापि बाहुल्येन लिङ्गानामपि प्राबल्यादनिर्णय एवेत्यत आह ॥ तच्चेति ॥ न बाहुल्येऽपि लिङ्गानां श्रुतिसाम्येनानिर्णयः। श्रुतेर्निरवकाशत्वात्। लिङ्गानां विष्णावदवकाशात्। सावकाशशतादपि निरवकाशैकस्य प्राबल्यादिति भावः। श्रुत्य-न्तरेण प्राणनिष्ठतया लिङ्गोक्तेः। कथं तद्विष्णोरित्यत आह ॥ तस्यैवेति ॥ वायुत्वमत्रोपलक्ष्यते ॥ २४ ॥

भावदीपः—

॥ ॐ शब्दादेव प्रमितः ॐ ॥ २४ ॥ अत्र न्यायविवरणे पुनरीशानशब्द इत्येतावन्मात्रोक्तावपि प्राणप्रेरक इति संक्षेपभाष्योक्त्या सूचितं ऊर्ध्वं प्राणमुन्नय-तीति भाष्योक्तवाक्यशेषलब्धं धर्ममादाय साधारण्यमक्षरनयन्यायेनाऽऽह॥ प्रेरकत्वेति ॥ उपलक्षणमेतत्। रूढिसाम्येन चेत्यपि ध्येयम्। ईशानः प्राणदः प्राण इति विष्णाविव ईशानो मारुतः प्राणो वायुर्जिष्णुस्तथैव चेति प्रथमाध्यायबृहद्भाष्योक्त्या वायावपि रूढेः सत्वात्। संगतिपरत्वेन तावद्भाष्यं व्याकुर्वन् प्रतीयत इत्यंतस्यार्थमाह ॥ अथात इत्यादिना ॥ ईशानस्येति ॥ तेन भाष्ये कश्चिदित्यस्यार्थो दर्शितः। संगत्यादिद्योत-नाय भाष्ये उपासनावाक्योक्तावपि समन्वेतव्यशब्दादि दर्शयितुं पूर्ववाक्यं चाऽऽह ॥ अंगुष्ठेति ॥ इत्यादाविति ॥ प्राणोन्नयनादिप्रतिपादकवाक्य इति योज्यम्। तेनो-क्तेति युक्तम्। भाष्ये विश्वेदेवा इत्यादावेव वाच्ये ऊर्ध्वमित्यादि पूर्वशेषोक्तेरुप-योगोऽग्रे व्यक्तः ॥ यदाहुरिति ॥ अनुभाष्ये तृतीये सर्ववेदांतनय इत्यर्थः। स चेत्यादे-र्भावमाह ॥ स च यदीति ॥ वक्ष्यमाणदिशा प्राणव्यवस्थापकत्वादिना वायुः स्यादि-त्यर्थः। उक्तमित्यंतवाक्यस्य भावमाह ॥ तदेति ॥ इत्यवश्यमित्युक्तार्थम्। निर्णयः ईशान इत्यनुषंगः। श्रुतौ देवमात्रोक्तावपि कैमुत्यलब्धं मत्वाऽऽह ॥ अधिकारि-सर्वेति ॥ इयदामननादित्यादौ रुद्रादप्यधिकाधिकारिणो वक्ष्यमाणत्वादिति भावः। स्वेतरेत्यधिकारिविशेषणं बोध्यम्। तेन न वायावप्यनुपपत्तिरिति। एतेन प्रेरकत्वस्या-न्यत्रापि वृत्तेः कथं द्वयसाधारण्यमित्यपि शंकाऽपास्ता। ननूर्ध्वं प्राणमुन्नयतीत्यत्र

कर्तुरन्यस्याप्रतीतेः प्रकृतेशानस्यैव कर्तृत्वेनान्वयेऽपि नोत्तरार्धे । तत्र वामनमिति श्रुतेः अन्यस्यैवोपास्यत्वप्रतीतेः । अस्य तदप्रतीतेश्च कथं तल्लिंगतयेत्युक्तिरित्यत आह ॥ य इति ॥ अन्यथा समभिव्याहारेण प्रतीतैकवाक्यताभंगप्रसंगात् । मध्य आत्मनीत्युक्तस्य मध्ये वामनमिति प्रत्यभिज्ञानाच्चेत्यर्थः । पूर्वपक्षतद्युक्तितत्फल-परत्वेनापि भाष्यं व्याचक्षाणः स चेत्याद्यंशमवतार्य स च वायुरेवेति प्रतिज्ञांशार्थमाह ॥ सयुक्तिकमिति ॥ स चेत्यनुवादः ईशान इति व्याख्या । कुत इत्याकांक्षायां एवमेवैष प्राण इत्यादिवाक्यत्रयं श्रवणोपलक्षणमुपेत्य तद्व्याचष्टे ॥ ईशानस्येति ॥ अनेन ईशान एवात्र वाक्ये कर्तृत्वेनान्वेतीति दर्शितम् ॥ इति वाक्य इति ॥ एतेन भाष्ये पूर्वं ऊर्ध्वमित्यादिश्रियाद्युक्तेरुपयोगो दर्शितः । इदानीं ऊर्ध्वं प्राणमुन्नयतीत्यादि-लिंगानां प्राणादन्यत्रात्रकाशराहित्यमित्यन्यत्रोक्तलिंगनिरवकाशत्वविवरणपरतया एवमेवैष इत्यादि उपास्यत्वाच्चेत्यंतं भाष्यं शंकापूर्वं व्याचष्टे ॥ न चेति ॥ भाष्यस्थैवंपदार्थविवरणाय षट्प्रश्नस्थपूर्वशेषमाह ॥ यथेति ॥ सम्राट् सार्वभौमोऽधिकृतान्नियोगिनो विनियुङ्क्ते । कथं, एतान्ग्रामानधितिष्ठस्व । तदाधिपत्येन तिष्ठेति । एवमेवैष आत्मत एष प्राणो जायत इति आत्मजातत्वेनोक्तः प्राणो मुख्यप्राणः इतरान् भिन्नान् स्वस्माज्जातत्वेन उपचारेण आत्मप्रविभागान् प्राणान्वायून् पृथक्पृथगेव स्थानेषु स्थापयतीत्यर्थः ॥ अथेति ॥ वाजसनेये तृतीये वागादीनां मृत्युग्रस्तत्वमुक्त्वा अथेमं वायुं मृत्युर्नाऽऽप्नोदिति वागादिश्रैष्ठ्यं प्राणस्योच्यत इति तस्य मुख्यप्राणत्व-द्योतनाय पूर्वशेषोक्तिः । अयं वाव शिशुः योऽयं मध्यमः प्राणः प्राणः स्थूणेत्युपरि चतुर्थे शिशुब्राह्मणेऽप्यस्ति । फलितमाह ॥ अत इति ॥ तस्य व्याख्या वाय्वेकेति ॥ यद्वा अतः एवमेवैष इत्यादिसमाख्यानादित्यर्थः । सर्वदेवोपास्यः कश्चित्प्रतीयत इत्यस्य तात्पर्यमाह ॥ इति हेतोस्तस्यैवेति ॥ उक्तमित्यंतभाष्यभावं वक्तुं विष्णुरेव इत्यवधारणोक्तेर्भावं शंकोत्तराभ्यां व्यनक्ति ॥ न च वाच्यमिति ॥ वायोरपीति ॥ अंगावबद्धास्तु न शाखासु हि प्रतिवेदमिति तृतीये वक्ष्यमाणत्वादिति भावः । भाष्ये उपास्यः कश्चित्प्रतीयत इत्युक्त्यैव पूर्तौ सर्वदेवेत्युक्तिलब्धमाह ॥ न हीति ॥ एवमुक्ते-स्तात्प (क्तं तात्प)र्यं मोक्षार्थमिति शेषपूर्त्या भाष्यवाक्यारूढं करोति ॥ विष्णुरेवेति ॥ पूर्वं कुविदगेति तस्य सर्वदेवोपास्यत्वप्रतीतेरित्युक्तं तद्व्याख्यानेन व्यनक्ति ॥ अयं मंत्रार्थ इति ॥ कुविदग नमसा ये वृधासः पुरा देवा अनवद्यास आसन् । ते वायवे मनवे बाधितायावासयन्नुषसं सूर्येणेति मंत्रः । नमसेत्युपलक्षणं मत्वाऽऽह ॥ नमस्कारादिनेति ॥

वृधासः ज्ञानादिगुणपूर्णाः कुवित् क्वचित् । बाद्भिः इतायेत्युपेत्याऽऽह ।। संसारेति ।। उषसं बुद्धिन् । त्रयोऽर्थाः सर्ववेदेष्वित्युक्त्या कल्पनोपदेशादित्यादिचतुर्थपादोक्तन्यायैरन्यपरत्वस्यापि सत्त्वाद्वा सर्वसूक्तानां तत्र तत्रस्थवाय्वादिशब्दानां च ज्योतिरादिनयैर्वैष्णवत्वसिद्धावपि इह मंत्रे विष्णुलिंगाभावेन अंतरादिनयन्यायाविषयत्वाद्वाऽयं मंत्रोऽत्र वायुपरत्वेनोक्तो व्याख्यातश्च । वक्ष्यते चैतत्तृतीये मंत्रादिवद्वाऽविरोध इति सूत्रे । उक्तं च ऋग्भाष्ये । पूर्वप्रसिद्धवर्जं तु शक्रांता देवता मता इति ।। छ ।। प्रमित इत्यत्र विशेष्याकांक्षां ईशानशब्दोक्तो विष्णुरेवेत्यन्यत्रोक्तेनैव पूरयन् भाष्यं व्याचष्टे ।। विष्णुरेवेति ।। ननु वामनश्रुतिरप्यणुश्चेति सूत्रे द्वितीये वक्ष्यमाणदिशाऽणुभूतप्राणरूपाद्यभिप्रायेण वायावपि सावकाशेत्यतो वामनश्रुतेरेवानवकाश इत्यन्यत्रोक्तमनवकाशत्वं सौत्रप्रमितपदोक्तमिति दर्शयन् भाष्यस्थप्रमितपदतात्पर्यमाह ।। तस्याश्चेति ।। अन्तरनये स्थानादीति गुणसूत्रोक्ते एष उ एव वामनिरेष हि सर्वाणि वामानि नयतीति सावधारणश्रुतिवाक्ये वामनिशब्दनिरुक्त्या एकदेशविकृतमनन्यवद्भवतीति न्यायेन देवासो देवा इत्यादेरिव वामनिवामनशब्दयोरैकार्थ्येन महायोगस्य स वामनः स आनंदः सोऽच्युत इति तद्भाष्योक्तश्रौतप्रयोगस्य उपेंद्रो वामनः प्रांशुरिति सहस्रनामोक्तस्मार्तप्रयोगस्य च सत्त्वेन रूढेश्च सत्त्वादिति भावः । अस्त्वेवं प्रागुक्तजिज्ञासानियमाक्षेपे किमुक्तमुत्तरमित्यत आह ।। अत इति ।। निरवकाशश्रुतेरेवेत्यर्थः । निरवकाशत्वं भाष्ये कुतो नोक्तमित्यत आह ।। अत्रेति ।। भाष्ये सूत्रे चेत्यर्थः । यद्वा अत एव प्राण इत्यत्र लिंगं बलवदेव स्यादित्यनुभाष्ये लिंगनिरवकाशत्वस्यैवकारार्थत्वोक्त्या तत्रेवात्राप्येवकारो निरवकाशत्वार्थ इति भ्रमनिरासायोक्तम् ।। अत्रेति ।। एवकारस्तु श्रुतेर्लिङ्गादितोऽपि जात्या प्राबल्योक्त्यर्थ इत्याह ।। अनेनेति ।। एवं सति श्रुत्यैव निर्णयोपपत्तौ तन्निरवकाशत्वमभ्युच्चयत्वेनोक्तमिति भावः । स्मार्तक्रमो न विवक्षित इति भावेन श्रुतिर्नाम समुद्दिष्टं लिंगं तल्लक्षणं स्मृतम् । पदानि निरपेक्षाणि वाक्यं प्रकरणं तथा । एकस्य प्रतिपत्त्यंगवचनं स्थानमुच्यते । अन्यत्र तत्समोक्तिस्तु समाख्या स्थानमेव च । अध्यायादिप्रबंधास्तु प्रभेदा आगमस्य चेति तत्वप्रदीपोक्तवचतानुरोधेन क्रममुपेत्य लक्षणान्याह ।। नाममात्रेणेति ।। आपाततः धर्मद्वारं विना धर्मिनिर्देशकः शब्द इत्यर्थः । यथा द्युभ्वाद्यायतनं स्वशब्दादित्यत्र तमेवैकं जानथ आत्मानं इत्यत्राऽऽत्मश्रुतिः । यथा वा अत्रैव वामनश्रुतिः ।। असाधारणेति ।। एकपदार्पितो वाऽनेकपदार्पितो वेत्यर्थः । तथा च तादृशधर्मबोधकशब्दोऽपि लिंगमित्युच्यते । योग्यतावद्वाक्यमपि तथेति

भावः । तत्राद्यं यथा आकाशस्तल्लिंगादित्यत्र स एषोऽनंत इत्यनंतत्वम् । द्वितीयं तु अत एव प्राण इत्यत्र श्रीश्च ते लक्ष्मीश्च पत्न्याविति श्रीपत्नीकत्वादिकम् । एतेन श्रीश्च त इत्यादेर्वाक्यत्वेऽपि तद्बोध्यस्यासाधारणधर्मत्वात् तदभिप्रायेण तत्र सूत्र भाष्यादौ लिंगत्वोक्तिर्युक्तेति भावः ॥ निराकांक्षेति ॥ स्वस्मिन्नेव पूर्णाकांक्षत्वेनान्यत्र निराकांक्षाणि पदानीत्यर्थः । एतच्च वाक्यं विप्रतिपन्नस्वांतर्गतपदार्थनिर्णायकं वा समभिव्याहृतवाक्यांतर्गतविप्रतिपन्नपदार्थनिर्णायकं वा भवति । आद्यं यथा । हेयत्वावचनाच्चेति सूत्रे जानथ आत्मानमिति वाक्यं अहेयत्वरूपलिंगोपस्थापनद्वारा जीवं निवार्य परमात्मानं आत्मपदार्थं निर्णाययति । द्वितीयमपि वाक्यांतरनिर्णायकश्रुत्यादियुक्तत्वेन वा सहपाठमात्रेण वेति द्वेधा । आद्यं यथा । तत्रैव स एषोंऽतश्चरते बहुधा जायमान इति जीवलिंगोपस्थापकवाक्यसमभिव्याहारेण पुनरात्मशब्दे जीवपरत्वे विप्रतिपत्तौ अमृतस्यैष सेतुरिति मुक्तोपसृप्यत्वलिंगोपेतवाक्यांतरस्य जानथ आत्मानमिति वाक्यस्थात्मपदार्थस्य परमात्मत्वनिर्णायकत्वम् । द्वितीयं यथा । दहरनये किं तदत्र विद्यत इति प्रश्नवाक्यं एषोंऽतर्हृदय आकाश इति वाक्यस्थाकाशपदस्य ब्रह्मरूपार्थत्वं निर्णाययति ॥ एकेति ॥ एकप्रमेयतात्पर्यकानेकवाक्यानीत्यर्थः । यथा द्युभ्वादिनये प्रकरणादित्यत्र जुष्टं यदा पश्यत्यन्यमीशमितीशशब्दार्थे विप्रतिपत्तौ द्वे विद्ये इति निर्बाधोपक्रमेण ब्रह्मपरतया निर्णीतं प्रकरणं स्वांतर्गतेशशब्दार्थं ब्रह्मेति निर्णाययति । स्मृतौ ऐक्यस्येत्यादिकमुत्तरेणाप्यन्वेतीति मत्वाऽऽह ॥ अनेकेति ॥ एकार्थे तात्पर्ययुक्तानेकप्रमेयप्रतिपादकप्रकरणजातं स्थानमित्यर्थः । यथा शन्नोमित्रादिभिर्वाक्यैस्तैरेव हरिमस्तुवत् । भृगुः पंचात्मकं पूर्णमन्नादिमयमच्युतम् । मुक्तगीतासनैस्त्विति स्मृत्या ब्रह्मपरत्वेनावधारितवल्लीत्रयात्मकस्थानस्य स्वांतर्गतान्नमयादीनां ब्रह्मत्वनिर्णायकत्वम् ॥ समानेति ॥ निर्णीतस्थले समानोक्तिरित्यर्थः । सा च शब्दतोऽर्थतश्चेति द्वेधा । आद्या यथा । अंतर्यामिनये शारीरश्चेति सूत्रे य आत्मनि तिष्ठन्नात्मनोंऽतर इत्यादिसमाख्याया यो विज्ञाने तिष्ठन्नित्यादिवाक्यस्थविज्ञानस्य जीवत्वनिर्णायकत्वम् । उक्तं च तट्टीकायाम् । विज्ञानपदेन शारीरः कुत इति चेत् उदाहृतश्रुतिसमाख्यानादेवेति । द्वितीया तु वैश्वानरनये वैश्वानरस्य विष्णुत्वे पुरुषसूक्तसमाख्यानिर्णायिकेत्याद्यूह्यम् । अत्र लक्षणेषु विशेषणकृत्यं स्पष्टम् । तेषु पूर्वबलीयस्त्वं बीजोक्त्या व्यनक्ति ॥ तत्रेति ॥ साक्षात् लिंगवद्व्याप्त्यादिबुद्धिमनपेक्ष्य शब्दविधयेत्यर्थः ॥ अनुमापकतयेति ॥ इदमेतदर्थकं तदसाधारणधर्मबोधकशब्दसमानाधिकृतत्वात् । य एवं स एवं यथाऽमुक

इति वा । अयमेतत्पदार्थः तत्समानाधिकृतपदबोध्यासाधारणधर्मवत्त्वात् । य एवं स एवं यथाऽमुक इति वाऽनुमापकतयेत्यर्थः । व्याप्त्यादिबुद्धिव्यवधानेना (र्थधीहेतु) नुमापकत्वात् तदानंतर्यमित्यर्थः । यथाऽत्रैव वामनश्रुतितः प्राणादिव्यवस्थापकत्वलिंगस्य । यदोर्ध्वं प्राणमुन्नयतीति शब्दावगतो धर्मः वाय्वविनाभावानुसंधानवत एव, ईशानशब्दार्थो वायुरेव । तत्समानाधिकृतशब्दबोध्यतदविनाभूतप्राणव्यवस्थापकत्वरूपधर्मवत्त्वात् । यो यत्समानाधिकृतशब्दबोध्यासाधारणधर्मवान् स तच्छब्दार्थः । यथा तल्लिंगादित्यादौ स एषोऽनंत इत्याकाशशब्दसमानाधिकृतानंतशब्दबोध्यासाधारणधर्मवान् विष्णुः आकाश शब्दार्थ इति ईशानशब्दार्थ वायुरिति निर्णाययितुं प्रवर्तन्ते ततः प्रागेव ईशानशब्दसमानाधिकृता वामनश्रुतिः व्याप्तिधियं विनैवेशान् शब्दार्थरूपं स्वार्थं स्वनिष्ठशक्त्यैव निश्चाययतीति प्राबल्यमित्यर्थः ॥ अनेकेति ॥ (अव्याप्य भूतानेक) अनेकपदार्थकथनद्वारा स्वार्थान्वययोग्य एव समभिव्याहृतवाक्यांतरार्थ इत्यादिरूपेणानुमापकत्वादित्यर्थः । यथा दहरनये एषोंऽतर्हृदय आकाश इति वाक्यं हृत्स्थदहराकाशस्थितब्रह्मार्थकम् । तद्गतान्वेष्टव्यवस्तुप्रश्नार्थकंकितदत्रेत्यादिवाक्यसमभिव्याहारात् । यद्यदर्थकवाक्यसमभिव्याहृतं तद्वाक्यं तदर्थान्वययोग्यार्थकम् । यथा स य एवंविदिति ब्रह्मज्ञानिवाक्यसमभिव्याहृतं अन्नमयमात्मानमुपसंक्रामतीत्यादिवाक्यं ब्रह्मप्राप्त्यर्थकमिति सामान्यव्याप्त्या वा यथाऽधीहि भगवो ब्रह्मेति ब्रह्मप्रश्नार्थकवाक्यसमभिव्याहृतं चक्षुःश्रोत्रमित्याद्युत्तरवाक्यं ब्रह्मार्थकमित्यादिरूपेण विशिष्य वाऽनुमापकत्वादित्यर्थः । तथा जानथ आत्मानमित्याद्यपि वाक्यं अन्या वाचो विमुंचथ इत्यादिवाक्यसहपाठात् ब्रह्मार्थकम् । तथा एतमेव ब्रह्मेत्याचक्षत इतिवाक्यं ब्रह्मपदं मुख्यपरब्रह्मार्थकम् । अन्यत्रायोग्यान्वयप्रतियोग्यर्थकसावधारणपदसमभिव्याहारात् । सामान्यव्याप्त्या संमतवदिति स्वांतर्गतपदार्थानुमापकमित्याद्यूह्यम् ॥ बह्वर्थेति ॥ अनेकवाक्यात्मकस्य प्रकरणस्यानेकवाक्यार्थधीपूर्वकमिदं प्रकरणमेतत्परमिति यज्ज्ञानं तज्ज्ञानपूर्वकं स्वांतर्गतविप्रतिपन्नवाक्यस्य प्रकरणानुगुण एवार्थ इत्यनेकवाक्यार्थधीद्वारा लिंगत्वादित्यर्थः । यथा प्रागुक्तप्रकरणं अन्यमीशमिति वाक्यं जीवब्रह्मभेदार्थकमित्यस्यानुमापकमित्यादि बोध्यम् ॥ अतिबह्वर्थेति ॥ अनेकप्रकरणार्थधीपूर्वकमिदं स्थानमेतत्परमिति यज्ज्ञानं तत्पूर्वकं स्वांतर्गतस्य विप्रतिपन्नवाक्यस्य स्थानानुगुण एवार्थ इत्यनेकप्रकरणार्थधीद्वाराऽनुमापकत्वादित्यर्थः । प्रागुक्तमेवोदाहरणम् ॥ स्थानांतरेति ॥ स्थानांतरस्थाया अत्रोक्तमेव स्थानांतरस्थविप्रतिपन्नवाक्येनापि बोध्यमिति स्थानद्वयानुसंधानपूर्वकं

तत्सदृशत्वादिदं तत्परमित्येवं सादृश्यमात्रेण लिंगत्वादित्यर्थः । उक्तमेवोदाहरणम् । नन्वेवं कथमंतरादिनयेषु लिंगाच्छ्रुतेर्दौर्बल्योक्तिः । कथं वा वैश्वानरनये असंभवात्पुरुषविधमिति प्रकरणादिना पाद्यकृत्वादिलिंगबाध इत्यत आह ॥ अत्रापीति ॥ नोपक्रमादावेवेत्यपेरर्थः । पूर्ववत्समन्वयसूत्रोक्तोपक्रमादाविवेत्यर्थः । एवं त्रिपादीं व्याख्याय अस्त्वेवं ततश्च किमित्यत एवमागमनिर्णय इति चतुर्थपादं व्याचष्टे ॥ अत्र विरुद्धेति ॥ एवमित्यनुवादः पूर्वेणोत्तरेण च वाक्यद्वयेन व्याख्येयतयाऽन्वेति । एवं विरुद्धैतेषां समवाये सतीति । एवं पूर्वपूर्वेण उत्तरोत्तरबाधयेति च । आगमार्थविनिर्णय इत्युक्त्या श्रुत्यादिषट्कं आगमार्थ एव लिंगतया निर्णायकम् । उपक्रमादिकं तु तात्पर्यानुमापकमिति दर्शितम् । अत एव तत्र लिंगं तात्पर्यनिर्णय इत्युक्तम् । समाख्यावाक्यप्रकरणस्थानानि चेति प्रमाणलक्षणटीकायां उपक्रमादीनां तात्पर्यलिंगत्वं एतेषां पुनरर्थ एवेति योगविभाग इति। वक्ष्यते चात्रैवाग्रे उपक्रमेत्यादिना । अत्रैषामुदाहरणानि तु चंद्रिकायामुक्तानि । विवृतानि च तानि चंद्रिकाप्रकाशेऽस्माभिः । तत्र श्रुत्यादिलिंगबाधोऽत्रैव स्पष्टः । स्मृतावुक्तक्रमो न विवक्षितः किंतु सौत्र एवेति वक्तुमाह ॥ न चेति ॥ ॥ आत्मेति ॥ चतुर्थस्य चतुर्थपादे आत्मा प्रकरणादिति नये परं ज्योतिरुपसंपद्येति दहरविद्यास्थवाक्यगतं ज्योतिः किं सूर्यः विष्णुर्वेति संदेहे सूर्यमगन्न ज्योतिरिति ज्योतिःपदस्य सूर्य इव विष्णावपि तद्देवाज्योतिषां ज्योतिरित्यादौ प्रयोगसत्त्वेऽपि स तेजसि सूर्ये संपन्नो यथा पादोदरस्त्वचा विनिर्मुच्यते एवं हैव स पाप्मना विनिर्मुक्त इति श्रुतिसमाख्यानात् सूर्य इति प्राप्ते सिद्धान्तितम् । ज्योतिः परमात्मैव । य आत्माऽपहतपाप्मेति परमात्मप्रकरणात् । समाख्या तु विष्णौ सावकाशेति । तथा च तद्विरोधः स्यादिति भावः । तर्हि स्वोक्त एव क्रमः कुत इत्यत आह ॥ तदाहेति ॥ अस्माभिरुक्तं श्रुत्यादिपौर्वापर्यं तृतीयेऽध्याय इत्यर्थः । यद्वा श्रुत्यादिबलाबलबीजमस्माभिरुक्तमेव जैमिनिसूत्रेऽप्यभिमतं न तु पूर्वमीमांसाकारैरुक्तमित्यभिप्रेत्याऽऽह ॥ तदाह जैमिनिरिति ॥ श्रुत्यादिबलाबलबीजमित्यर्थः । परोक्तबलाबलबीजखंडनं तु तर्कतांडवे द्वितीयपरिच्छेदांते प्रपंचितम् । सूत्रे विरुद्धानामिति योज्यम् । भाष्यमपि स्वोक्तक्रमे संवादयति ॥ भाष्यकारोऽपीति ॥ भक्तिपादीयानुव्याख्यानकारोऽप्याहेत्यर्थः । आगमार्थावसित्यर्था नियतव्याप्तयोऽखिला इति पूर्वशेषः । ननु वैश्वानरनये असंभवादिति गुणसूत्रे को न आत्मा किं ब्रह्मेति श्रुतात्मादिश्रुतेरुपक्रमनिश्चयद्वारा प्रकरणनिश्चायकत्व

मुक्तम् । अत्र तूच्यते विप्रतिपन्नेगानशब्दार्थप्रमापकत्वं वामनश्रुतेः । तथा तल्लिंगादित्यादौ अनंतत्वादिलिंगस्य विप्रतिपन्नार्थनिर्णायकत्वमुक्तम् । अत्ता चराचरग्रहणादित्यादौ अप्लंवत्सरसृष्ट्यादेर्लिंगस्य प्रकरणनिर्णायकत्वमुक्तम् । तथा मांत्रवर्णिकसूत्रे ब्रह्मविदाप्नोति परमिति वाक्यं ब्रह्मप्रकरणनिर्णायक(मित्यु) मुक्तम् । दहरनयादौ किं तदत्रेत्यादिवाक्यं समभिव्याहृतवाक्यांतरार्थनिर्णायकं भवति । तत्कथमित्यत आह ॥ श्रुतिलिंगवाक्यानामिति ॥ एतेषामुदाहरणानि चंद्रिकायां व्यक्तानि । तर्हि उपक्रमादिकं व्यर्थमित्यत आह ॥ उपक्रमेति ॥ अन्यथेति॥ अर्थसिद्ध्यभावे । नन्वसाधारणधर्मो लिंगमिति निराकांक्षपदानि वाक्यमिति चोक्तम् । तदयुक्तमिव । तथात्वे श्रीश्च त इत्यादेर्लिंगत्वेनोक्तस्य वाक्यतापत्तेरित्यत आह ॥ लिंगेति ॥ असाधारणधर्मबोधकत्वाविशेषेऽपि एकः कर्ता वर्तमानकाले स्वार्थं पाकक्रियां निर्वर्तयतीत्यस्य पचते इत्यस्य चैकार्थत्वेऽपि एक इत्यादिवाक्यात् पचते इति पदस्यैव झडित्यर्थबोधकत्वादेकपदात्मकं लिंगं अन्यत्तु वाक्यमिति भेद इत्यर्थः । तथा चांतरादिनये यस्यांडकोशं शुष्मम् । श्रीश्च ते लक्ष्मीश्च पत्न्यौ । वि मे कर्णा पतयत इत्यादीनां वाक्यत्वेऽपि लिंगत्वोक्तिः तद्बोध्यस्य असाधारणधर्मत्वात्तद्विवक्षयेति भावः । प्रवक्षणाः पक्षान् । इत्यादिवत् इत्यादौ यथा साक्षादसाक्षादर्थबोधकत्वेन लिंगं वाक्यमिति व्यवहारः । तथा अनंतः श्रीश्च त इत्यादाविति भावः । एतेन ऊर्ध्वं प्राणमुन्नयतीत्यादेः शब्दस्य वाक्यत्वेऽपि तद्बोध्यस्य लिंगत्वाभिप्रायेण भाष्यादौ लिंगत्वोक्तिर्युक्तेति भावः । ननु सौत्रैवकारसूचितस्वभावप्राबल्येनैव श्रुतेर्लिंगबाधकत्वोपपत्तौ भाष्ये तच्च लिंगमित्यादिना लिंगस्य सावकाशत्वोक्तिरयुक्तेत्यतो व्यावर्त्यचोद्यमाह ॥ नन्विति ॥ बाहुल्येनेति ॥ द्विविधं बलवत्त्वं च बहुत्वाच्च स्वभावत इत्युक्तेरिति भावः । यद्यपि तयोः स्वभावो बलवानित्युक्त्या अनेकलिंगानामप्येकश्रुत्या बाधो युज्यते । उक्तश्चायमर्थः पादांत्यप्राणनयटीकायाम् । तथापि सौत्रप्रमितपदसूचितश्रुतिनिरवकाशत्वावैयर्थ्याद्याभ्युपेत्यवादेन वा प्रागुक्तदिशा लिंगानां निरवकाशत्वमप्यस्तीति हृदि कृत्वा लिंगानामपि प्राबल्यादनिर्णय एवेत्युक्तम् । ततश्च किमित्यतो भावमाह ॥ न बाहुल्येऽपीति ॥ ॥ निरवकाशादिति ॥ तस्याश्च विष्णौ महायोगेति प्रागुक्तदिशेति भावः ॥ अवकाशादिति ॥ वक्ष्यमाणदिशेति भावः । एतेन लिंगानां परमात्मन्यवकाशो विद्यत एव वामनश्रुतेरेवानवकाश इत्यन्यत्र श्रुतिलिंगयोर्निरवकाशत्वसावकाशत्वोक्तेरप्यभिप्रायो विवृतः ॥ इत्यत आहेति ॥ तद्वै त्वमिति वाक्ये यद्देवान्प्राणयो नव तस्मात्त्वं

प्राणोऽभव इत्युक्तप्राणनेतृत्वरूपप्राणत्वस्यात एव प्राण इत्यत्र विष्णौ साधितत्वात् । समाख्याया वायुपरत्वे प्राणमुन्नयतीत्याद्यं विष्णोरेव । तथा योऽयं मध्यम इत्युक्तमध्यमत्वस्य वायुधर्मत्वेऽपि इह न तत्प्रतीयते । मध्ये वामनमिति मध्यदेशस्थत्वस्यैव प्रतीतेः । तच्चाल्पश्रुतेरित्युक्तदिशा विष्णोरेवेति भावः । अथापि कुविदंगेति मंत्रे वायोर्देवोपास्यत्वमुक्तमित्यत आह ॥ वायुत्वमिति ॥ अत्र प्राणत्वेति भाष्ये अंतर्नये आधिदैविकसर्वशब्दानां महायोगविद्वद्रूढिभ्यां विष्णावुक्तत्वेन वायुशब्दस्याप्युक्तेरित्यर्थो बोध्य इति भावः ॥ २४ ॥

सूत्रभाष्यम्—

॥ ॐ हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॐ ॥ २५ ॥

सर्वगतस्यापि तस्याङ्गुष्ठमात्रत्वं हृद्यवकाशापेक्षया युज्यते । इतरप्राणिनामङ्गुष्ठाभावेऽपि मनुष्याधिकारत्वान्न विरोधः ॥ २५ ॥ इति वामनाधिकरणम् ॥ ७ ॥

तत्वप्रकाशिका—

तथापि कथमीशानो विष्णुर्भवेत् । अङ्गुष्ठमात्रत्वोक्तेः । न च विष्णोरङ्गुष्ठमात्रत्वं युक्तम् । सर्वगतत्वात् । न च वक्तव्यं व्योमवत्सर्वगतस्याप्यणुत्वं प्रत्यपादीति । 'अङ्गुष्ठमात्रः' इति तन्मात्रत्वोक्तेरित्याशंकां परिहरत्सूत्रमुपन्यस्य तदक्षराणि व्याचष्टे ॥ हृदीति ॥ सर्वगतस्यापि विष्णोरङ्गुष्ठमात्रत्वोक्तिर्युक्ता । हृदि विद्यमानावकाशस्याङ्गुष्ठमात्रत्वेन तदपेक्षया भगवन्मूर्तिविशेषस्याभिव्यक्त्या तन्मात्रपरिमाणत्वादित्यर्थः । भिन्नेष्वपि स्थानैक्येनैक्योक्तिवद् हृदयाकाशस्याङ्गुष्ठमात्रत्वेन तत्संबंधात्सर्वगतेऽपि हरावुपचारेणाङ्गुष्ठमात्रत्वोक्तिरिति वाऽर्थः । तुशब्दः परिच्छिन्नतयाऽङ्गुष्ठमात्रत्वनिवृत्त्यर्थमेवार्थः । तथापि नाङ्गुष्ठमात्रत्वं विष्णोर्युक्तम् । तथाहि । किं तत्तदङ्गुष्ठमात्रत्वं वा । यत्किंचिदङ्गुष्ठमात्रत्वं वा । नाद्यः । पश्वादीनामङ्गुष्ठाभावेन तदन्तर्गतविष्णोरङ्गुष्ठमात्रत्वायोगात् । न द्वितीयः । तत्कथनवैयर्थ्यादसंभवाच्चेत्याशङ्कां परिहरत्सूत्रशेषं व्याचष्टे ॥ इतरेति ॥ युक्तं विष्णोरङ्गुष्ठमात्रत्वम् । तत्तदङ्गुष्ठमात्रत्वाभ्युपगमेन विकल्पानवकाशात् । न च तत्पक्षोक्तविरोधः । मनुष्याणामेव वेदविद्योपासनाधिकारित्वेन तान्प्रत्येतद्विद्याप्रवृत्त्या पश्वादीनामंगुष्ठाभावेऽपि विष्णोरङ्गुष्ठमात्रत्वोक्तिसंभवादिति भावः । तुशब्दोऽपिशब्दार्थः । तस्मादीशानो विष्णुरेवेति स एव-जिज्ञास्य इति सिद्धम् ॥ २५ ॥ अ० ७ ॥

भावदीपः—

॥ ॐ हृद्यपेक्षया तु० ॐ ॥ २५ ॥ तथापीति ॥ प्राणव्यवस्थापकत्वादिलिंगविरोधाभावेऽपीत्यर्थः ॥ अंगुष्ठेति ॥ अंगुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्येति ईशानस्यांगुष्ठमात्रत्वोक्तेरित्यर्थः ॥ सर्वेति ॥ अदृश्यत्वनये सर्वगतं सुसूक्ष्ममिति श्रवणेन तत्र सिद्धत्वात्सर्वगतत्वस्येत्यर्थः ॥ व्योमवदिति ॥ यद्यपि निचाय्यत्वादेवं व्योमवच्चेत्यत्र व्योमवत्सर्वगतस्याल्पदेशस्थितिरुक्ता न त्वणुत्वम् । अक्षरनये अन्यभावव्यावृत्तेश्चेति गुणसूत्र एवाणुत्वमुक्तं विरुद्धैर्लक्षणैर्युतम् । ब्रह्मेत्येवेत्यनुभाष्योक्तेः । तथाप्यणुपरिमाणस्यैवाल्पदेशस्थत्वं भवतीति भावेन वा महतोऽल्पत्वमपि हि व्योमवत्प्राह देवविदिति वैशेषिकनयानुभाष्ये व्योमदृष्टांतेनैवेश्वरेऽणुत्वमहत्वयोः साधितत्वाद्वा व्योमवदणुत्वं प्रतिपादितमित्युक्तम् ॥ तन्मात्रत्वेति ॥ अवधारणार्थकमात्रपदेनांगुष्ठेतरपरिमाणराहित्योक्तिपूर्वं अंगुष्ठपरिमाणत्वोक्तेरित्यर्थः । एतेन पूर्वस्मादभ्यधिकाशंका प्रदर्शिता । यद्यत्र मात्रशब्दो नावधारणार्थः किंतु प्रमाणे द्वयसजिति परिमाणार्थो मात्रच्प्रत्ययः । तदा अंगुष्ठमात्रः पुरुषोंऽतरात्मा सदा जनानां हृदये सन्निविष्ट इति हृदयपदवैयर्थ्यमिति भावः । अधिकं चंद्रिकायां बोध्यम् । एतेनैव वक्ष्यमाणलक्षणाबीजमुख्यार्थानुपपत्तिरुपन्यस्ता ध्येया । सूत्रे हृदपेक्षयेत्यनुक्त्वा हृदीत्युक्तिः दहरनये प्रसिद्धेश्चेत्यत्रोक्तदिशा हृत्स्थाकाशस्थितत्वं विष्णोर्वक्तुमिति भावेन प्रवृत्तं हृद्यवकाशापेक्षयेति भाष्यं देहांगुष्ठमितो देहे जीवांगुष्ठमितो हृदि । जीवस्य स तु विज्ञेयो जीवाद्भेदेन मुक्तय इति काठकभाष्ये अंगुष्ठपरिमितत्वोक्त्यनुरोधेन मुख्यार्थपरतया तावद्व्याचष्टे ॥ हृदीति ॥ भगवन्मूर्तिविशेषस्य तन्मात्रपरिमाणत्वेन तादृशहृदयावकाशे व्यक्तत्वेनांगुष्ठमात्रपरिमाणत्वोक्तिरित्यर्थः । शक्त्यात्मनाऽपरिमितपरिमाणस्यापि रूपविशेषे व्यक्त्यात्मनांऽगुष्ठमात्रपरिमाणत्वोक्तिपरतया व्याख्यायेदानीं ईश्वरे तन्मात्रपरिमाणाभावेऽपि उपचारात्तदुक्तिर्युक्तेत्यर्थांतरपरतया व्याचष्टे ॥ भिन्नेष्विति ॥ यथा गावः सायं गोष्ठ एकीभवंति परेऽव्यये सर्व एकीभवंतीत्यादौ स्थानगतैक्येन तद्गतेष्वैक्याभावेऽप्यैक्योक्तिस्तथेत्यर्थः । एतेनानंदमयनये प्राणमयादेरन्यत्वांतरत्वादिधर्माः कोशगता एव तद्गतभगवद्रूपेषूपचर्यंत इति समाध्यंतरमपि सूचितम् । तथा च न स्थानतोऽपि परस्योभयलिंगमित्यधिकरणे भाष्ये अभेदेऽपि भेदव्यपदेशः स्थानभेदादैश्वर्ययोगाच्च युज्यत इति । वैश्वानरनयोदाहरणे श्रुतं प्रादेशमात्रत्वमप्यने-

नैत्र समाहितं बोध्यम् । यत्तु एवमुपचरितार्थत्वे श्रुतेर्वर्ण्यमाने वेदवाक्यस्य तु वाचनिकार्थं विना नैवान्यो युज्यत इति कर्मनिर्णयोक्तिविरोध इति तन्न । स्वातंत्र्ये च विशिष्टत्वे स्थालमत्यैक्ययोरपि । सादृश्ये चैक्यवाक्सम्यक् सावकाशा यथेष्टत इति जिज्ञासानयानुव्याख्यानादौ भगवत्पादैरेव श्रुतेर्गौणार्थत्वोक्तेः । अत एव टीकायां स्थानैक्येनैक्योक्तिवदिति दृष्टांतोक्तिः । कर्मनिर्णयवाक्यं तु तट्टीकायां सम्यग्व्याख्यातमिति भावः ॥ कथनेति ॥ अंगुष्ठवद्व्यक्तिविशेषनिर्धारणं विना यत्किंचिदंगुष्ठमात्रत्वेनोपासनायोगात्तत्कथनं व्यर्थमित्यर्थः ॥ असंभवाच्चेति ॥ पिपीलिकाहृदयस्थे अंगुष्ठमात्रसामान्यस्यैवाभावादित्यर्थः । सूत्रे भाष्ये च मनुष्यपदं मनुष्यमात्रपरमुपेत्यार्थमाह ॥ मनुष्याणामेवेति ॥ पूर्वं सौत्रस्तुशब्दो हृद्यपेक्षयेति भाष्यानुरोधादेवकारार्थो व्याख्यातः । इदानीं अंगुष्ठाभावेऽपीति भाष्यानुरोधादपिशब्दार्थतया व्याचष्टे ॥ तुशब्दोऽपिशब्दार्थ इति ॥ सूत्रद्वयार्थं फलोक्त्योपसंहरति ॥ तस्मादिति ॥ निरवकाशबलवद्वामनशब्दादंगुष्ठमात्रत्वादिबाधकाभावाच्चेत्यर्थः । आद्येतिशब्दो हेत्वर्थः । यत्तु कश्चिदाह । प्रथमे सूत्रे ईशान इति पदाध्याहारदोषः। प्रमितपदवैयर्थ्यं च । द्वितीये हृच्छब्दस्य अवकाशलक्षणाप्रसंगः अंगुष्ठमात्रत्वमित्यध्याहारप्रसंगश्चेति । तन्न । अपेक्षिताध्याहारस्य सूत्रे सर्वतांत्रिकसिद्धत्वात् । त्वन्मतरीत्या प्रमित इत्यस्य पक्षत्वे पूर्वोत्तरावैरूप्याय प्रमितः शब्दादेवेति निर्देशापातात् । श्रुतिनिरवकाशत्वद्योतकतया प्रमितपदस्य सार्थक्योक्तेश्च । द्वितीये हृदपेक्षयेति वाच्ये हृद्यपेक्षयेति निर्देशादेव हृत्स्थावकाशापेक्षयेति लाभेन लक्षणानापत्तेः । त्वन्मते प्रमितपदास्वारस्याच्चेत्याद्यूह्यम् ॥ २५ ॥ अ० ७ ॥

सूत्रभाष्यम्—

मनुष्याणामेव वेदविद्या(याम)धिकार इत्युक्तम्। तिर्यगाद्यपेक्षयैव मनुष्यत्वविशेषणमुक्तं, न तु देवाद्यपेक्षयेत्याह—

**॥ ॐ तदुपर्यपि बादरायणः सम्भवात् ॐ ॥ २६ ॥**

तदुपरि मनुष्याणां सतां देवादित्वप्राप्त्युपरि । सम्भवति हि तेषां विशिष्टबुध्यादिभावात् । तिर्यगादीनां तदभावादभावः । तेषामपि यत्र विशिष्टबुध्यादिभावस्तत्राविरोधः। निषेधाभावात् । दृश्यन्ते हि जरितार्यादयः ॥ २६ ॥

तत्वप्रकाशिका—

अत्र देवानां ब्रह्मविद्याऽधिकारसमर्थनादस्ति शास्त्रसंगतिः । प्रासंगिकत्वान्नाध्यायादिसंगतिर्गवेषणीया । श्रुत्यादिसंगतिं विषयसंशयतद्बीजानि सूचयति ॥ मनुष्याणामिति ॥ "मनुष्याधिकारत्वात्" इति मनुष्याणामेव वेदविद्याधिकार इत्युक्तम् । स च यदि न देवानां स्यात्तदा 'विश्वेदेवा उपासते' इत्यादिश्रुत्यप्रामाण्यं प्रसज्येत इत्यवश्यं विचार्यः । स वेदविद्याधिकारो विषयः । देवानामस्ति न वेति संदेहः । मनुष्याणामेवेत्युक्तिर्विश्वेदेवा उपासत इति श्रुतिश्च संदेहबीजमिति भावः । न च श्रुत्युक्त्योरसाम्यादसंदेहबीजत्वम् । उक्तेरप्यङ्गुष्ठमात्रश्रुतिमूलत्वात् । न देवानां वेदविद्याधिकार इति पूर्वः पक्षः । तथाहि । किं देवा अनादिनित्या उत विद्यादिना पदप्राप्तिमुक्तिमन्तः । आद्ये न वेदविद्याधिकारः । अर्थी समर्थो विद्वानधिक्रियत इति न्यायात् । तेषां चार्थित्वाभावात् । न ह्यनादितः प्राप्तपदानां मोक्षशून्यानां च विद्याभिः प्रयोजनमस्ति येनार्थिता स्यात् । न द्वितीयः । अमराणां मुक्त्याद्यङ्गीकारे कर्मादिविरोधापातात् । अतो देवानां वेदविद्याधिकाराभावान्न तदुपास्यत्वलिङ्गं विष्णोः संभवति । अथ संदेहबीजं विघटयन् सिद्धान्तयितुं सूत्रमवतारयति ॥ तिर्यगादीति ॥ मनुष्यपदं विशिष्टबुद्ध्यादिरहिततिर्यगादिव्यावृत्त्यर्थं प्रयुक्तं न तु देवतादिव्यावृत्त्यर्थमित्यभिप्रेत्य देवानामधिकारमाहाऽऽचार्यो बादरायण इत्यर्थः । सूत्रं व्याचष्टे ॥ तदिति ॥ देवानामपि वेदविद्याधिकारो विद्यत एव । विशिष्टबुद्ध्यादेरधिकारोपयोगिनो देवेषु विद्यमानत्वेन तेषामधिकारसंभवात् । न चोक्तप्रकारेण देवानामर्थित्वाभावात्सामर्थ्यविद्वत्तासत्त्वेऽप्यधिकाराभाव इति वाच्यम् । विद्याकर्मभ्यां योग्यमनुष्याणां देवादित्वप्राप्त्यभ्युपगमेन विद्याभिस्तेषां मोक्षसिद्धेरिति भगवान् बादरायणो मन्यत इत्यर्थः । विप्रतिपत्तिसूचनाय बादरायणपदम् । न देवा वेदविद्याधिकारिणोऽमनुष्यत्वात्तिर्यगादिवदित्यत आह ॥ तिर्यगादीनामिति ॥ न तिर्यगादीनाममनुष्यत्वप्रयुक्तोऽधिकाराभावोऽपि तु विशिष्टबुद्ध्यादिराहित्यनिबन्धन एव । तथा च विशिष्टबुद्ध्यादिराहित्यं व्यावर्तमानं पक्षात्त्वव्याप्यमधिकाराभावं च व्यावर्तयतीति भावः । विशिष्टबुद्ध्यादिमतामपि तिरश्चां न वेदविद्याधिकार इति व्याप्तिविधुरोऽयमुपाधिरित्यत आह ॥ तेषामिति ॥ अविरोधोऽधिकाराङ्गीकारेऽपीति शेषः । कथं तिरश्चां वेदविद्याधिकाराविरोध इति चेत् । किं निषेधात्तिरश्चामधिकारायोगोऽदर्शनाद्वा । आद्यं दूषयति ॥ निषेधेति ॥ अनेन निषेधराहित्ये सति विशिष्टबुद्ध्यादिमत्त्वम-

धिकारे प्रयोजकमिति सूचितं भवति । तेन शूद्रादौ व्यभिचारपरिहारः । द्वितीयं निराह ॥ दृश्यन्ते हीति ॥ वेदाधिकारितयेति शेषः । अनेनैव स्वप्रयुक्तानुमानस्य मनुष्यत्वोपाधिरप्यपोढो भवति ॥ २६ ॥

भावदीपः—

॥ ॐ तदुपर्यपि० ॐ ॥ २६ ॥ अधिकारेति ॥ योग्यतेत्यर्थः ॥ प्रासंगिकत्वादिति ॥ मनुष्येत्युक्त्या तिर्यगादिवद्देवानामपि नेति प्रसक्तस्य निवृत्यर्थत्वादित्यर्थः । अधिकारश्च तद्धानिः प्रसंगादेव चिंतिताविव्यनुभाष्योक्तेरिति भावः ॥ नाध्यायादीति ॥ साक्षादिति भावः । फलतस्तस्य सत्त्वात् । संगतिपरत्वेन भाष्यं व्याचष्टे ॥ मनुष्येति ॥ मनुष्यपदस्य मनुष्यमात्रपरत्वेन व्याख्यानादाह ॥ मनुष्याणामेवेति ॥ तिर्यगादीत्यादेस्तात्पर्यं स चेति ॥ श्रुतीति ॥ एतेनास्य पूर्वेणाक्षेपिकी संगतिर्दर्शिता । तदुपरीति सौत्रोक्तिसूचितसादित्वव्यावर्त्ययुक्तिं वक्तुं विकल्पयति ॥ किमिति ॥ विद्यादिना विद्याकर्मभ्याम् । विरोधः कर्मणीति सूत्रभाष्योक्तमाह ॥ अमराणामिति ॥ मुक्तीति ॥ पदप्राप्तेरप्युपलक्षणम् । क्वचिन्मुक्त्यादीत्येव पाठः । इंद्रादिपदप्राप्तेः पूर्वं पश्चाच्चेंद्रादित्यादिदेवताभावेन तदुद्देशेन द्रव्यत्यागात्मकयागायोगादित्यर्थः । वक्ष्यमाणशब्दविरोध आदिपदार्थः । अमराणामित्युक्त्या तेषां मरणवर्जितत्वप्रसिद्धेर्मुक्त्यंगीकारोऽनुचित इति सूचयति । फलोक्त्योपसंहरति ॥ अत इति ॥ अनित्यत्वे कर्मादिविरोधेनानादिनित्यत्वांगीकारेऽर्थित्वादेरसंभवादित्यर्थः ॥ न तदुपास्यत्वलिंगं विष्णोस्संभवतीति ॥ न चेष्टापत्तिः । श्रुत्यप्रामाण्यापत्तेरुक्तत्वादिति भावः । लिंगपदोक्त्या न प्रासंगिकत्वमेव किं तर्हि अत्र देवानामधिकारसिद्धौ तदुपास्यत्वरूपलिंगसमन्वयस्यापि सिद्ध्या अंतर्नयवैश्वानरनययोरिव फलतोऽध्यायपादसंगतिरप्यस्तीति सूचितम् । प्रसंगादेव चिंतिताविव्यनुभाष्योक्तिः तमेव समन्वयं प्रकटयति समस्तेनाध्यायेन प्राधेणेत्येतद्भाष्योक्तिश्च साक्षात्समन्वयानुक्त्यभिप्रायेति भावः ॥ छ ॥ अथ देवानामधिकारसद्भावरूपमर्थांतरं साधयितुमित्यथशब्दस्य प्रकृतादनधिकारादर्थांतरपरत्वमर्थः । मनुष्याधिकारेत्युक्तिरूपसंशयबीजविघटनप्रकारमेव भाष्यव्याख्यानेन व्यनक्ति ॥ मनुष्येति ॥ ननु मनुष्येत्युक्त्या तद्भिन्नामनुष्यमात्रव्यावृत्तिप्रतीतेः कथं तिर्यगित्युक्तिरित्यतः सूत्रे मनुष्यत्वं व्यावर्तकत्वेन न विवक्षितं किंतु विशिष्टबुद्ध्यादिमत्त्वमेव विवक्षितमिति भावेनोक्तम् ॥ विशिष्टबुद्धीति ॥ यद्वा तिर्यगाद्यपेक्षयेत्युक्तिः तेषामपीत्यग्रेतनवाक्यविरुद्धेत्यत उक्तम्

॥ विशिष्टेति ॥ न सर्वतिर्यगाद्यपेक्षयेत्यर्थः । पूर्वस्माद्बुद्ध्या विभागेनाधिकारपदमनुवर्त्य संभवति तेषामिति भाष्यार्थमाह ॥ देवानामिति ॥ विशिष्टेत्यादिभाष्यं व्याकुर्वन् तेषां संभवतीत्येतद्धेतुगर्भतयाऽपि व्याचष्टे ॥ विशिष्टेति ॥ तदुपरीत्यादि भाष्यं शंकानिरासकतया व्यनक्ति ॥ न चेति ॥ न हि अनादित इत्यादिनोक्तेत्यर्थः ॥ योग्येति ॥ देवतापदयोग्यानां मनुष्यत्वेन भूमौ जातानामित्यर्थः ॥ मोक्षेति ॥ विद्याकर्मभ्यां देवत्वप्राप्त्युक्त्या सादित्वस्य तद्व्याप्तसांतत्वस्यापि लब्धत्वादिति भावः ॥ विप्रतिपत्तीति ॥ अनधिकारं जैमिनिरित्यनेनेत्यर्थः । देवानामधिकारो विद्यते विशिष्टबुद्ध्यादिमत्त्वात् सम्मतवदिति स्वप्रयुक्तानुमाने प्रतिपक्षमाशंकते न देवा इति ॥ अपि तु विशिष्टेति ॥ प्रतिपक्षे प्रतिपक्षांतरवत् उपाधिरपि न वाच्य इति कस्यचिदुक्तिर्नादर्तव्या । हेतोर्व्यभिचारव्याप्यत्वासिध्द्याश्रयेण (ध्द्याद्याशयेन) तदुक्तिसंभवादिति भावः ॥ अयमुपाधिरिति ॥ विशिष्टबुद्ध्यादिराहित्यरूपः । ॥ तेन शूद्रादाविति ॥ संभवति हि तेषां विशिष्टबुद्ध्यादिभावादित्यत्र स्वप्रयुक्तविशिष्टबुद्ध्यादिमत्त्वरूपहेतोर्वा प्रतिपक्षानुमानेऽभिहितविशिष्टबुद्ध्यादिराहित्यरूपोपाधेर्वेत्यर्थः । शूद्रादेश्चाग्रे निषिद्धत्वं व्यक्तमित्यनिषिद्धत्वे सति विशिष्टबुद्ध्यादिमत्त्वाभावरूपोपाधेः तत्रापि सत्वेन न व्यभिचार इति भावः ॥ वेदाधिकारितयेति ॥ खांडववनस्थानां जरितारिसारिसृक्वस्तंबमित्रद्रोणाख्यानां चतुर्णां पक्षिणां समातृकाणां कृत्स्नवनं परिलेलिहानेन वह्निना स्वदाहप्रसक्तौ भ्रातृभिः प्रार्थितो जरितारिरग्निमयमग्ने जरितेत्यादिमंत्रैः स्तुत्वा प्रीतेनाग्निना तान्मोचयामासेति। एवमुक्तो भ्रातृभिस्तु जरितारिर्विभावसुम् । तुष्टाव प्रांजलिर्भूत्वा यत्तच्छृणु नराधिपेत्यादिना भारते प्रसिद्धत्वादिति भावः ॥ अनेनैवेति ॥ जरितार्यादयोऽधिकारितया दृश्यंत इति वचनेनैवेत्यर्थः । साध्याव्यापकत्वादिति भावः ॥ २६ ॥

सूत्रभाष्यम्—

॥ ॐ विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॐ ॥२७॥

मनुष्या एव देवादयो भवन्तीति तदुपरीत्युक्तम् । तत्र यदि मनुष्याः सन्तो देवादयो भवन्ति तत्पूर्वं देवताभावाद्देवतोद्दिष्टकर्मणि विरोध इति चेन्न । अनेकेषां देवतापद(प्रतिपत्ते) प्राप्तेर्दर्शनात् । 'ते ह नाकं महिमानः सचन्ते(न्त) यत्र पूर्वे साध्याः सन्ति देवा' (तै. आ. ३–१२) इति ॥ २७ ॥

तत्वप्रकाशिका—

देवानां वेदविद्याधिकारमाक्षिप्य समादधत्सूत्रं पठित्वाऽऽक्षेपांशं तावद्व्याचष्टे ॥ विरोध इति ॥ यदुक्तं देवानां वेदविद्याधिकारसिद्ध्यर्थं सादिविनाशित्वं । तदयुक्तम् । तथात्वे तेभ्यः पूर्वं देवताऽभावेन पूर्वकल्प(ल्पे)प्रयुक्तकर्मण्युद्देश्याभावाद्वैयर्थ्याख्यविरोधापत्तेः । अतः कर्मविरोधपरिहाराय देवानामनादिनित्यत्वमेवाभ्युपेयम् । तथा चार्थित्वाभावेनानधिकार एवेत्यर्थः । परिहारांशं व्याचष्टे ॥ नेति ॥ भवेदयं विरोधो यदि पूर्वं देवताऽभावः । न चासावस्ति । एतद्देवानां पूर्वमभावेऽपि देवान्तरसद्भावात् । न च तत्र प्रमाणाभावः । अनेकेषां योग्यमनुष्याणां पूर्वं पूर्वं देवतापदप्राप्तेः श्रुत्युक्तत्वादित्यर्थः । देवा देवत्वयोग्या मनुष्याः यज्ञेन ज्ञानकर्मात्मकेन यज्ञं भगवन्तमयजन्त । ततस्ते ज्ञानपूर्वकर्मणा स्वपदं प्राप्य मुख्यलोकधारका आसन् । ते पुनर्महात्मानो देवाः स्वाधिकारावसाने पूर्णसुखात्मकं मोक्षं प्राप्नुवन् । यत्र मोक्षे पूर्वकल्पे मुक्ताः साध्या देवाः सन्तीति मन्त्रार्थः ॥ २७ ॥

भावदीपः—

॥ ॐ विरोधः कर्मणीति० ॐ ॥ २७ ॥ भवंतीत्यंतभाष्यभावमाह ॥ यदुक्तमिति ॥ तत्पूर्वमित्यादि व्याचष्टे ॥ तथात्व इति ॥ सादित्व इत्यर्थः । नेत्येतव्द्याचष्टे ॥ न चासाविति ॥ पूर्वं देवताभावो नास्तीत्यर्थः । अनेकेषामित्यादि व्याचष्टे ॥ एतदिति ॥ योग्येति ॥ देवत्वयोग्यमनुष्याणामित्यर्थः । प्रकृतोपयोगितयाऽर्थमाह ॥ देवा इति ॥ भगवंतमिति ॥ यज्ञो वै विष्णुरिति श्रुतेरिति भावः । पूर्वोक्तं हेतूकृत्य तानीत्यादेरर्थमाह ॥ ततस्त इत्यादिना ॥ ते ह नाकमित्यादेरर्थः ॥ ते पुनरिति ॥ कं सुखं तदन्यदकं नेति नाकमिति नञ्द्वयार्थमाह ॥ पूर्णसुखेति ॥ २७ ॥

सूत्रभाष्यम्—

**॥ ॐ शब्द इति चेन्नातः**
**प्रभवात्प्रत्यक्षानुमानाभ्याम् ॐ ॥ २८ ॥**

'वाचा विरूप नित्यये' (ऋ. सं. ८–६४–६) त्यादि श्रुतेराप्त्यनिश्चयान्नित्यत्वापेक्षत्वाच्च मूलप्रमाणस्य, स्वतःप्रामाण्यप्रसिद्धेश्च नित्यत्वाद्वेदस्य तदुदितानां देवानामनित्यत्वात् पुनरन्यभावनियमाभावाच्च (पुनरित्यादि क्वचित् नास्ति) शब्दे विरोध इति चेन्न । 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' (म. ना. उ. ५–७)

'यथैव नियमः काले सुरादिर्नियमस्तथा।
तस्मान्नानीदृशं क्वापि विश्वमेतद्भविष्यति'॥

इत्यादेरत एव शब्दात्तेषां प्रभवनियमात्, महतां प्रत्यक्षात्। यथेदानीं तथोपर्यपि देवा भविष्यन्तीतीतरेषामनुमानाच्च ॥ २८ ॥

तत्वप्रकाशिका—

पुनरुक्तमाक्षिप्य समादधत्सूत्रं पठित्वाऽऽक्षेपांशं विवृणोति ॥ शब्द इति ॥ अत्रापि विरोधपदाकर्षणम्। यद्देवानामधिकारसिद्ध्यर्थमाद्यन्तवत्त्वमुक्तम्। न तद्युक्तम्। देवानामाद्यन्तवत्त्वे वेदाप्रामाण्याख्यविरोधापातात्। वेदस्य नित्यत्वादनित्यदेवानां तद्वाच्यत्वात्। वाच्यहीनाया वाचः प्रामाण्यासंभवात्। यावता तदेव वाक्यस्याप्रामाण्यम्। वेदस्य नित्यत्वमेव कुत इति चेत्। 'वाचा विरूप नित्यया' इत्यादिश्रुतेः। न च वाच्यमनित्य एव वेदो नित्य इत्युपचारमात्रमिति। वेदानित्यत्वे प्रामाण्याभावापत्तेः। आप्तिमूलत्वेन प्रामाण्यमिति चेन्न। कर्तृसार्वज्ञादौ मानाभावेनाप्त्यनिश्चयात्। विवादपदं कस्यचित्प्रत्यक्षं प्रमेयत्वादिति सार्वज्ञे मानमिति चेन्न। प्रमेयत्वेन विप्रतिपन्नधर्मान्तरसाधनापातात्। किंचेदं प्रमेयत्वं न तावत्सामान्यं केवलान्वयिधर्मत्वात्। उपाधित्वेऽपि क्वचिदन्तर्भावस्यापेक्षितत्वात्। न तावद्द्रव्यम्। निर्गुणत्वादस्वतन्त्रत्वाच्च। नापि गुणकर्मणी। गुणादावपि वृत्तेः। न च समवायः। असंबन्धत्वात्। न च विशेषोऽनित्येऽपि वृत्तेः। न चाभावोऽप्रतियोगिसापेक्षत्वात्। प्रमेयस्य भाव एव प्रमेयत्वं न तु ततोऽतिरिक्तमिति चेत्। सत्यम्। भावभवित्रोर्भेदे पुनरुक्तानतिवृत्तेः। भावस्य भवितुः पृथगभावे तच्छब्दयोः पर्यायतापातात्। एवं परत्वापरत्वादिगुणानां च दत्तजलाञ्जलिता स्यात्। प्रमातद्विषयतत्संबन्धेष्वन्तर्भावोऽस्तीति चेन्न। प्रमाप्रमेययोः संबन्धस्यैव दुर्निरूपत्वात्। न ह्यात्मगुणस्यान्येन समवायः संयोगो वा संभवति। विषयविषयिभाव इति चेन्न। तस्याप्यन्तर्भाव्यत्वात्। अन्तर्भावस्य चोक्तदोषलङ्घनाजङ्घालत्वात्। एवैव दिगन्यसमये धर्मान्तरेऽपीति। प्रमेयत्वानिर्वचनान्न तेन सार्वज्ञसिद्धिः। विप्रतिपन्नं सकर्तृकं कार्यत्वात् घटवदित्यनुमानेन जगत्कर्तरि सिद्धे तस्य सार्वज्ञादिसिद्धिरिति चेन्न। शरीरिजन्यत्वोपाधेः। शरीर्यजन्यत्वेन सत्प्रतिपक्षत्वाच्च। शरीरिविशेषणं व्यर्थमिति चेन्न। उपाधौ पक्षव्यावृत्त्यर्थत्वात्। प्रतिपक्षेऽसिद्धिपरिहारार्थत्वात्। पक्षव्यावृत्त्यर्थविशेषणवतोऽप्युपाधित्वे पक्षेतरत्वस्याप्यापाद्यते तदिति

चेत्का नो हानिः । पर्वतेतरत्वादीनामपि व्याप्तिरस्ति चेत् अनुमानोपजीव्येन बाधादव्याप्तौ स्वयं दुष्टत्वात् । न चासिद्धिपरिहारार्थ विशेषणासंभव इति राज्ञामाज्ञास्ति । तथात्वे व्यभिचारनिवृत्त्यर्थेनापि न प्रयोक्तव्यम् । व्याप्तिवत्पक्षधर्मताया आवश्यकत्वात् । सकर्तृकत्वे कार्यत्वमेव प्रयोजकम् । शरीरमपि तत्र सन्निहितमित्युक्तरत्र निरसिष्यते । अस्तु वा सकर्तृकत्वम् । कथं सार्वज्ञसिद्धिः । बहुकर्तृत्वेनाप्युपपत्तेः । लाघवादेकांगीकार इति चेन्न । बह्वङ्गीकारस्य लोकानुकूल्येनागौरवात् । अतो न सार्वज्ञसिद्धिः । अविप्रलंभादि चातिदुरवगमम् । अस्तु वा आप्तिनिश्चयस्तन्मूलत्वं कुतो वेदस्य । वेदः सार्वज्ञादिमता प्रणीतो वेदत्वादिति व्यतिरेक्यनुमानादिति चेन्न वेदत्वस्य पामरप्रणीतत्वादौ साम्यात् । असाधारण्यस्यापि साम्यात् । वेद आप्तप्रणीत प्रमाणवाक्यत्वादिति चेन्न । वेदनित्यत्वे प्रामाण्यविवादात् । 'तस्माद्यज्ञात्' इति सर्वज्ञेश्वरप्रणीतत्वं श्रूयत इति चेन्न । उक्तदोषात् । 'ऋग्वेद एवाग्नेरजायत' इत्यसर्वज्ञप्रणीतत्वोक्तेश्च । संप्रदायप्रवर्तकतया तद्वाक्यमुपपद्यतमिति चेन्न । कारणाभावात् । ईश्वरविरचितत्ववाक्यादिति चेन्न । तद्वाक्यादस्य संप्रदायप्रवर्तकत्वाद्यर्थोपपत्तेः । तेषामसार्वज्ञादेतदिति चेन्न । चक्रकापातात् । तस्मादाप्तितन्मूलत्वानिश्चयाद्वेदानित्यत्वे तत्प्रामाण्याभावापत्तेर्न नित्यत्वश्रुतेरन्यपरितार्थत्वं वाच्यम् । किं च वेदस्याप्तप्रणीतत्वे मूलप्रमाणेन भाव्यम् । पौरुषेयस्य मूलप्रमाणसापेक्षतानियमात् । न च तत्प्रत्यक्षम् । अदृष्टादौ तदप्रवेशात् । न च कस्यचित्प्रत्यक्षं तादृशम् । अत्र प्रमाणाभावात् । नाप्यनुमानम् । तस्य प्रतिपक्षादिदुष्टत्वात् । कथंचित्तेनादृष्टसंभावनेऽपि तद्विशेषासिद्धेः । न हि लशुनगृञ्जनाद्यदनस्य पापहेतुत्वं यज्ञादेः पुण्यसाधनत्वं वाऽनुमानेन शक्यसाधनम् । अतो वाक्यमेवेति वक्तव्यम् । तदपि न तावत्पौरुषेयम् । मूलान्तरान्वेषणेनानवस्थानात् । अतस्तन्नित्यमेवापेक्षितम् । तथा च किमनया कल्पनया श्रुतिसिद्धं वेदनित्यत्वमेवाङ्गीक्रियताम् । ननु वेदस्य नित्यत्वेऽपि न प्रामाण्यम् । आप्तोक्तत्वाभावादिति । मैवम् । प्रामाण्यस्य स्वतस्त्वेन गुणानपेक्षणात् । प्रामाण्यं नाम यथार्थज्ञानकरणत्वम् । न च याथार्थ्यं ज्ञानकारणातिरिक्तकारणमपेक्षते । याथार्थ्य ज्ञानकारणातिरिक्तकारणनिरपेक्षं अयथार्थतातिरिक्तत्वे सति ज्ञानधर्मत्वात् । ज्ञानत्ववत् । याथार्थ्यं न गुणोत्पन्नं ज्ञानधर्मत्वादप्रामाण्यवदित्याद्यनुमानात् । न च ज्ञानधर्मत्वेनायथार्थत्वस्यापि स्वतस्त्वं वाच्यम् । दोषाभावे तदभावनियमात् । प्रमा ज्ञानसामग्रीव्यतिरिक्तकारणजन्या कार्यत्वादिति चेन्न । प्रमाया ज्ञानकारणातिरिक्तकारणजन्यत्वं नाम प्रमात्वस्यैवं-

विधत्वेन वा ज्ञानस्य वा तत्संबन्धस्य वा । नाद्यः । अजन्यत्वात् । न द्वितीयः । व्याहतेः । न तृतीयः । तस्य समवायत्वेनाजन्यत्वादेव । प्रमात्वयुक्तज्ञानस्यैवंविधत्वं साध्यत इति चेन्न । तादृशज्ञानस्यापि ज्ञानकारणातिरिक्तकारणजन्यत्वसाधने व्याघातानिस्तारात् । ज्ञानकारणतदतिरिक्तजन्यत्वं साध्यत इति चेन्न । ईशप्रमायां बाधात् । तदतिरिक्तप्रमापक्षीकारान्नैवमिति चेन्न । तथापि घटादौ व्यभिचारात् । ज्ञानकारणमात्रजन्यत्वाभावः साध्यत इति चेन्न । ज्ञाने व्यभिचारापरिहारात् । ज्ञानातिरिक्तत्वेन हेतुर्विशेष्यत इति चेन्न । ज्ञानेऽपि कार्यत्वेन तत्साधनसौलभ्यात् । विशिष्टाभावविकल्पेन व्याघातस्य समीकरणात् । प्रमा गुणजन्या तदन्वयव्यतिरेकित्वादित्येतदपि प्रतिज्ञानिरासेन निरस्तम् । किं चेदं गुणान्वयव्यतिरेकित्वमन्यत्रानुपक्षीणं सामान्यं वा । न द्वितीयः । व्यभिचारात् । नाद्यः । दोषनिरासोपक्षीणत्वात् । न चोभयकारणत्वे कल्पकमस्ति । न चैवमप्रमाया अपि स्वतस्त्वम् । तत्र दोषान्वयव्यतिरेकनियमेन दोषाणामुभयकारणत्वकल्पनोपपत्तेः । न चैतत्समं प्रकृतेऽपि । यादृच्छिकयथार्थवाक्यजनितप्रमायां व्यभिचारात् । गुणानां दोषनिरसनव्यापारत्वे दोषाभावोऽपि कारणतयापन्न इति चेन्न । प्रदीपावरणनिवृत्त्यादीनामपि प्रकाशनादिकारणत्वापत्तेः । दोषाभावस्य कारणत्वे च नास्माकमनिष्टम् । तावता वेदापौरुषेयताऽव्याघातात् । प्रमा गुणजन्या प्रमात्वादिति चेन्न । ईशप्रमायां बाधात् । तदतिरिक्तप्रमाः पक्षीक्रियन्त इति चेन्न । तत्रैव व्यभिचारात् । जन्यप्रमात्वं हेतुरिति चेन्न । प्रमा गुणजन्या न भवति । प्रमात्वादीश्वरप्रमावदिति प्रतिपक्षसाधनात् । न चाजन्यत्वमुपाधिः । घटादौ व्यभिचारात् । अजन्यप्रमात्वमुपाधिरिति चेन्न । व्याप्त्यभावात् । अतः प्रमाया ज्ञानकारणातिरिक्तकारणनिरपेक्षत्वेन वेदस्य कर्तृगुणनिरपेक्षस्यापि प्रामाण्यसिद्धेर्युक्तमेव तन्नित्यत्वम् । तस्यैवं नित्यत्वात्तद्वाच्यदेवानां चानित्यत्वेऽप्रामण्यमेव स्यात् । न च तद्युक्तम् । अतस्तत्सिध्द्यर्थं देवानां नित्यत्वमेवाभ्युपेयम् । तथा च न तेषां वेदविद्याधिकारः । न च वाच्यं कर्मविरोधाभाववदयमपि विरोधः परिहर्तव्य इति । अतीतदेवताप्रवाहे प्रमाणसद्भावेनातीतकालीनविरोधस्यैव परिहर्तुं शक्यत्वात् । उत्तरकालेऽन्यदेवताभावनियमे प्रमाणाभावेन विरोधस्य कर्मण्यपि साम्यात् । न च भारतादिवदतीतविषयतया वेदस्य प्रामाण्योपपत्तिः तस्य देवताह्वानादिरूपस्य वर्तमानविषयतयावश्यंभावात् । अतो देवानां नानित्यत्वं युक्तमिति न तेषां वेदाधिकारः इति भावः । परिहारांशं व्याख्याति ॥ नेति ॥ यदुदितं वेदो नित्य इति तत्सत्यमेव । तथापि न तस्याप्रामाण्यं तद्वाच्यानां

देवतानां स्वरूपनित्यत्वाभावेऽपि प्रवाहरूपेण नित्यत्वात् । न च तत्र प्रमाणाभावः । 'सूर्याचंद्रमसौ' इति श्रुतेरेव । न चेयं श्रुतिरतीतविषयैव देवप्रभवनियमं न प्रमापयतीति वाच्यम् । प्रतिकल्पमपि श्रुत्या यथा विष्णुः पूर्वकल्पे सूर्याचन्द्रमसावकल्पयत् तथाऽस्मिन्कल्पेऽपीति कथने देवानां सर्वकल्पेषु (प्रभव)सद्भावसिद्धेः । यथैवेति स्पष्टस्मृत्या च देवानां सर्वकल्पेषु प्रभवसिद्धेः । न च वाच्यं श्रुतावुपचारेणाप्युक्तिः संभवतीति न देवप्रभवनियम इति । अतीतानागतविदां महतां श्रुतिसंवादिनो देवप्रभवनियमग्राहकप्रत्यक्षस्य सत्त्वात् । न च परप्रत्यक्षस्याप्रत्यक्षत्वात्तदनिश्चयः । 'यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये । दृश्यन्ते तानि तान्येव तथा भावा युगादिषु' इति (त्यादि) तद्वचनान्निश्चयोपपत्तेः । न चायोगिनां श्रुतिप्रत्यक्षयोरविश्वासेनोक्तानिश्चयः । उपरितनकालो देववान् कालत्वात् सम्प्रतिपन्नकालवदिति श्रुतिसंवाद्यनुमानेन तेषां देवप्रभवनियमसिद्धेरिति भावः । न च वाच्यं प्रलयकाले कालत्वहेतोर्व्यभिचारोऽप्रलयकालत्वहेतोः परं प्रति व्यर्थविशेषणत्वमिति । प्रलयस्य प्रमाणसिद्धत्वात् ॥ २८ ॥

भावदीपः—

॥ ॐ शब्द इति चेत्० ॐ ॥ २८ ॥ शब्दे विरोध इति भाष्यं व्याचष्टे ॥ अत्रापीत्यादिना ॥ आद्यंतवत्त्व इति शेषोक्तिः । यद्यप्यतीतदेवताप्रवाहे प्रमाणसद्भावेनेत्यादिना वक्ष्यमाणदिशा विरोधसूत्रं सादित्वप्रयुक्तशंकाव्यावर्तकमिति तदनुरोधेन पूर्वत्र सादित्व इति अत्र तु अनित्यत्व इत्येव वाच्यम् । तथापि आद्यंतवत्त्वे इति द्वयोरप्युक्तिः पूर्वत्रोक्तसादित्वचोद्योत्तरयोः अत्र । अत्रोक्तसांतत्वचोद्योत्तरयोः पूर्वत्रानुसंधेयत्वं सूचयितुमित्याहुः । नित्यत्वाद्वेदस्येत्यादि व्याचष्टे ॥ वेदस्येति ॥ यावता यस्मादित्यर्थः । वाचेत्यादि व्याचष्टे ॥वेदस्येति ॥ आप्त्यनिश्चयादित्येतदवतार्य व्याख्यातुं श्रुतेरन्यथासिद्धिं शंकते ॥ न चेति ॥ अविप्रलंभस्तज्ज्ञानं तत्कृतत्वादयोऽपि च । कल्प्या इति । प्रत्यक्षः कस्यचिद्धर्मो वस्तुत्वादिति चोदित इति चानुभाष्यं हृदि कृत्वाऽऽह ॥ विवादेति ॥ विवादपदं धर्माधर्मादिकमित्यर्थः । अतींद्रियापरोक्षिणः सार्वज्ञं कैमुत्यसिद्धमिति भावः ॥ विप्रतिपन्नेति ॥ विवादास्पदं धर्मादिकं कस्यचिच्छरीरिणः प्रत्यक्षम् । कस्यचित्सुखिनः प्रत्यक्षं प्रमेयत्वात् घटवदित्यादेरपि संभवेनेश्वरे सार्वज्ञसाधनवत् विप्रतिपन्नशरीरसुखदुःखादृष्टानित्यज्ञानादिरूपधर्मांतरसाधनापातादित्यर्थः ॥ केवलान्वयीति ॥ केवलान्वयिनः

सामान्यहीनत्वेन प्रसिद्धेषु सामान्यविशेषसमवायाभावेष्वपि सत्त्वादित्यर्थः ॥ क्वचिदिति ॥ अन्यथा सप्तपदार्थनियमभंगापत्तेरिति भावः ॥ अस्वतंत्रत्वाच्चेति ॥ प्रमापरतंत्रत्वात् प्रमेयरूपाश्रयपरतंत्रत्वाच्चेत्यर्थः ॥ एवमिति ॥ परत्वापरत्वगुरुत्वद्रवत्वादावपि परस्य भाव एव परत्वं न तु ततोऽतिरिक्तमित्यापत्त्या परत्वादेरपि गुणत्वेन पृथग्गणनं न स्यादित्यर्थः ॥ लंघनेति ॥ लंघने जंघाशून्यत्वादित्यर्थः । प्राणिस्थादातोलजन्यतरस्यामिति जंघाशब्दान्मत्वर्थे लच्प्रत्ययः । जंघालोऽतिजवस्तुल्याविित्यमरोक्तेः ॥ धर्मांतरेऽपीति ॥ अभिधेयत्वव्यापकत्वादिरूपेऽयमेव खण्डनमार्ग इत्यर्थः । पर्वतेतरत्वादीनां व्याप्तिरस्ति न वा । आद्यं निराह ॥ का नो हानिरिति ॥ द्वितीयं प्रत्याह ॥ अनुमानेति ॥ अनुमानं प्रत्युपजीव्येन व्याप्तिग्राहकानुकूलतर्केणेत्यर्थः । अनुकूलेन तर्केण सनाथे सति साधने । साध्यव्यापकता भंगात्पक्षे नोपाधिसंभव इति न्यायादिति भावः पक्षव्यावृत्त्यर्थत्वादित्येतदुपपाद्य असिद्धिपरिहारार्थत्वादित्येतदुपपादयति ॥ न चेत्यादिना ॥ सन्निहितमिति ॥ अवर्जनीयसन्निधि न तु कार्यकारीति तूत्तरत्र समयपादे संबंधानुपपत्तेश्च अंतवत्त्वमसर्वज्ञता वेत्यत्र निरसिष्यत इत्यर्थः ॥ पामरेति ॥ वेदः पामरप्रणीतः वेदत्वाद्व्यतिरेकेण गगनवदित्यपि प्रयोक्तुं शक्यत्वादित्यर्थः । पामरप्रणीतलौकिकवाक्यात्सपक्षाद्व्यावृत्त्या पक्षमात्रवृत्तेरसाधारण्यं चेत् सर्वज्ञप्रणीतपुराणादितो व्यावृत्त्या पक्षमात्रवृत्तेरसाधारणानैकांत्यं तवापि तुल्यमित्याह ॥ असाधारण्यस्येति ॥ उक्तेति ॥ ईश्वरसार्वज्ञासिद्धिरूपोक्तदोषादित्यर्थः । वेदप्रणेतृत्वोक्त्यन्यथानुपपत्त्या सार्वज्ञं सेत्स्यतीत्यतो व्यभिचारान्नैवमित्याह ॥ ऋग्वेद एवेति ॥ तद्वाक्यादिति ॥ ऋग्वेद इति वाक्यादित्यर्थः । अविशेषादिति भावः । विशेषमाशंकते ॥ तेषामिति ॥ समं प्रकृतेऽपि । उक्तदिशा ईश्वरसार्वज्ञस्याप्यसिद्धेरिति भावः । यस्सर्वज्ञ इत्यादि वेदेनैव तत्सार्वज्ञसिद्धिरस्त्वित्यत आह ॥ चक्रकेति ॥ ईश्वरस्य सर्वज्ञत्वे सिद्धे तस्मात्सर्वज्ञादित्यादिना वेदस्य सर्वज्ञप्रणीतत्वसिद्धिः तत्सिद्धौ च वेदस्य प्रामाण्यसिद्धिः तत्सिद्धौ च वेदेनेश्वरसर्वज्ञत्वसिद्धिरिति चक्रका(श्रया)पातादित्यर्थः । नित्यत्वापेक्षत्वाच्च मूलप्रमाणस्येत्येतद्व्याचष्टे ॥ किं चेति ॥ मूलेति ॥ अर्थमुपलभ्य रचितत्वं प्रणीतत्वमिति वाच्यत्वादिति भावः तत्किं प्रत्यक्षमनुमानं पौरुषेयवाक्यं वा न त्रयमपीति क्रमेण निराह ॥ न चेति ॥ स्वतःप्रामाण्यप्रसिद्धेश्चेत्येतदवतार्य व्याचष्टे ॥ नन्विति ॥ न केवलमनित्यत्व इत्यपेरर्थः । स्वतस्त्वेन ज्ञानजनकसहजशक्त्यैव प्रमात्वजनकत्वेनेत्यर्थः ॥ प्रामाण्यं नामेति ॥ वेदस्येत्यनुषंगः ।

तादृशप्रामाण्यस्य स्वतस्त्वं ज्ञानयाथार्थ्यस्वतस्त्वायत्तमिति भावेन व्यनक्ति ॥ न चेति ॥ ज्ञाननिष्ठमित्यर्थः ॥ याथार्थ्यमिति ॥ प्रमात्वरूपम् ॥ ज्ञानकारणेति ॥ कारणपदं समग्रकारणपरम् । ननु दोषाभावस्य कारणत्वेऽपि नास्माकमनिष्टमित्युपरितनवाक्याद्दोषाभावस्य याथार्थ्ये कारणत्वेन एवंरूपसाध्यस्य साधने बाध इति चेन्न । भावकारणानपेक्षमिति तात्पर्यात् । यद्वा दोषाभावोऽपि न प्रामाण्यकारणम् । यादृच्छिकसंवादिषु सत्यपि दोषे प्रमाणज्ञानोदयादिति तत्वनिर्णयटीकोक्त्या तर्हि दोषाभावः कारणमित्यायातमिति चेन्न । तथा सत्युत्सर्गापवादयोः व्याप्यभावप्रसंगादिति सुधोक्त्या च दोषाभावः कारणं नेति भावेन एवं साध्योक्तिः । अग्रे कारणत्वोक्तिस्तु तावता प्रकृतवेदनित्यत्वाक्षतेरभ्युपेत्यवादेन वा निर्दोषः शब्द आगम इति प्रमाणलक्षणे आगमोऽदुष्टवाक्यं चेति तत्वनिर्णयादौ च दोषाभावस्याप्युक्त्या दंडगतदार्ढ्यादिवत् प्रयोजकत्वाभिप्राया वा ज्ञानजनकत्वशक्तिरेव प्रामाण्यजनकत्वशक्तिरिति पद्धत्युक्त्या ज्ञानजनकशक्तियाथार्थ्यजनकशक्त्योरेकत्वपक्षे चायं साध्यनिर्देशो बोध्यः । यदा तु दोषवशात् प्रमाजननशक्तिप्रतिबंधेऽपि ज्ञानजननशक्तेरप्रतिबंधाज्ज्ञानप्रमाऽपीत्यादिना याथार्थ्यज्ञानजननशक्त्योर्भिन्नत्वमभ्युपेत्य द्वयोः सहजत्वमात्रेण स्वतस्त्वमिति मतं तदाऽतिरिक्तागंतुकानपेक्षमिति साध्यार्थो बोध्यः । न गुणोत्पन्नमिति साध्ये तु न कापि विवक्षा । दोषसापेक्षाप्रामाण्ये व्यभिचारनिरासाय हेतौ सत्यंतम् ॥ स्वतस्त्वमिति ॥ अयाथार्थ्य ज्ञानकारणातिरिक्तकारणानपेक्षम् । न दोषोत्पन्नं वा । ज्ञानधर्मत्वात् याथार्थ्यवदित्यर्थः । उभयत्र साध्ये सकृदेव दोषमाह ॥ दोषाभाव इति ॥ यादृच्छिकसंवादिनि सत्यपि दोषेऽयाथार्थ्यादर्शनेनान्वयमनुक्त्वा दोषाभावेऽयाथार्थ्याभाव इति व्यतिरेक एवोक्तः । दोषकारणताग्राहकमानबाध इत्यर्थः । न चैवं गुणेऽस्ति । गुणाभावेऽपि यादृच्छिकस्थले याथार्थ्योपलंभेन व्यतिरेकव्यभिचारादिति भावः ॥ प्रमेति ॥ अत्र प्रमात्वतदाश्रयतत्संबंधानामन्यतमस्यैतत्साध्यते । त्रयाणां विशेषणविशेष्यभावापत्त्या विशिष्टस्य वेति विकल्प्याऽऽद्येऽपि कस्येति विकल्प्य दोषमाह ॥ प्रमात्वस्येति ॥ द्वितीयं शंकते । ॥ प्रमात्वेति ॥ किं ज्ञानकारणातिरिक्तमात्रजन्यत्वं साध्यं किं वा ज्ञानत्वप्रयोजककारणजन्यत्वे सत्यतिरिक्तकारणजन्यत्वम् । आद्ये आह ॥ तादृशेति ॥ द्वितीयं शंकते ॥ ज्ञानेति ॥ व्यभिचारात् कार्यत्वहेतोरित्यर्थः । बाधव्याहतिनिरासाय शंकते ॥ ज्ञानकारणेति ॥ विशिष्टाभावश्च अतज्जन्यत्वेन वा तज्जन्यत्वेऽप्यधिकजन्यत्वेन वा सर्वथैवाजन्यत्वेन वा त्रेधा घटते । दृष्टांते घटादावाद्यमादाय पक्षे द्वितीयमादाय

ईश्वरज्ञाने त्वंत्यपक्षमादाय पर्यवसानात् इष्टसिद्धिरव्याघातो नेश्वरज्ञाने बाधश्चेति भावः। हेतुः कार्यत्वम्। ज्ञानव्यावृत्तिर्व्यर्था प्रमायामिव तत्राप्युक्तसाध्यसाधनसंभवादित्याह॥ ज्ञानेऽपीति॥ ननु ज्ञानेऽपि ज्ञानहेतुमात्रजन्यत्वाभावसाधने व्याघात इत्यत आह॥ विशिष्टेति॥ यथा विशिष्टाभावः प्रमायामधिकजन्यत्वाभावेन पर्यवस्यतीति न व्याघात इत्युच्यते। तथा ज्ञानेऽप्यधिकजन्यत्वेन पर्यवसानोक्त्या व्याघातस्य समाधातुं शक्यत्वादित्यर्थः। भ्रमेऽपि धर्म्यंशे प्रमात्वस्य सत्त्वेन ज्ञानत्वसमनियतस्य प्रमात्वस्याधिकप्रयोज्यत्वे ज्ञानत्वेऽपि तथात्वस्य संभवात्। ज्ञानत्वं भ्रमे गुणव्यभिचारि चेत् प्रमात्वमपि यादृच्छिकसंवादिनि तथेति सममिति भावः। व्याघातस्येत्युपलक्षणम्। ईशज्ञाने बाधस्यापि समाधातुं शक्यत्वादित्यपि ध्येयम्॥ प्रतिज्ञेति॥ परेणापि गुणत्वजातेरनंगीकारेण गुणपदेन ज्ञानकारणातिरिक्तकारणस्यैव वाच्यत्वेन पूर्वोक्तव्याघाताद्यापत्तेरित्यर्थः। हेतुं च निराह॥ किं चेति॥ व्यभिचारात्। दंडरूपादौ घटं प्रति कारणत्वाभावादित्यर्थः। तस्माद्गुणेभ्यो दोषाणामभावस्तदभावतः। अप्रामाण्यादयो भावास्तेनोत्सर्गोऽनयोदित इत्युक्त्यनुरोधेनाऽऽह॥ दोषनिरासेति॥ उभयेति॥ प्रामाण्यजननदोषनिरासरूपोभयेत्यर्थः॥ न चैवमिति॥ गुणानां दोषनिरासोपक्षीणत्वे दोषाणामपि गुणनिरासोपक्षीणत्वसंभवात् ज्ञानकारणमात्रजन्यत्वरूपं स्वतस्त्वं स्यादित्यर्थः॥ दोषान्वयेति॥ दोषे सत्येवाप्रामाण्यं तदभावे तदभाव इत्यन्वयव्यतिरेकनियमेनेत्यर्थः। यादृच्छिकसंवादिनि सत्यपि दोषेऽप्रामाण्यानुत्पत्तिस्तु विषयसत्त्वादेर्दोषप्रतिबंधकस्यासत्त्वादिति भावः॥ उभयेति॥ गुणास्त्वकिंचित्करा इति पद्धत्युक्त्या दोषाणां गुणनिरासकत्वेऽपि न हानिस्तथाप्यभ्युपगमोक्तिरियम्॥ व्यभिचारादिति॥ गुणाभावेऽपि प्रमाया जायमानत्वादिति भावः। तत्र विषयसत्त्वादिकमेव गुण इति त्वन्यत्र निरस्तं बोध्यम्। अभ्युपेत्यवादेनाऽऽह॥ दोषाभावस्येति॥ कारणतावच्छेदकप्रतिबंधकाभावसाधारणप्रयोजकत्वमात्राभिप्रायेण वा कारणत्वोक्तिः। अन्यथा प्रागुक्ततत्त्वनिर्णयटीकासुधावाक्याभ्यां विरोधापातात्। न च स्वतस्त्वभंगः। ज्ञानजननशक्तिवत् प्रमाजननशक्तेः सहजत्वमात्रेण स्वतस्त्वोपपत्तेः। अप्रामाण्यं तु दोषाहितशक्त्येति वैषम्यम्। उक्तं च प्रथमपादीयसुधायां इंद्रियादीनामौत्सर्गिकी शक्तिः प्रामाण्यजनने दोषापवादादप्रामाण्यमुपजनयतीति। व्यतिरेकिणमाशंकते॥ प्रमेति॥ अजन्यप्रमात्वमिति॥ जन्यप्रमात्वाभाव इत्यर्थः॥ व्याप्तीति॥ यादृच्छिकसंवादिदुष्टवाक्यजन्यप्रमायां साध्ये सत्युपाध्यभावादित्यर्थः। अतो गुणज-

न्यत्वे मानाभावात् तदजन्यत्वे मानभावाच्चेत्यर्थः ॥ छ ॥ भाष्ये देवानामनादिनित्यत्वादित्यनुक्त्वा नित्यत्वादित्युक्तेरभिप्रायं व्यंजयितुमाह ॥ न च वाच्यमिति ॥ ॥ प्रमाणेति ॥ तेह नाकमिति प्रमाणेत्यर्थः ॥ अतीतेति ॥ शब्दे कर्मणि चोभयत्रेत्यर्थः । तथा च पूर्वत्र कर्मणीतिशब्दे इत्यस्याप्युपलक्षणमिति भावः ॥ कर्मण्यपि साम्यादिति ॥ शब्द इति सूत्रे कर्मणि चेत्यनुवर्त्य वा उपलक्ष्यं वेति भावः ॥ देवताह्वानेति ॥ इंद्रागच्छ हरिव आगच्छेत्यादिरूपस्येत्यर्थः । नेति नञा निषेध्यं दर्शयन् तेषां प्रभवनियमादिति भाष्यं व्याचष्टे॥ यदिति ॥ न तस्याप्रामाण्यमिति ॥ विरोध इति पदं नञाऽन्वेतीति सूचितम्। सूर्येत्यादिभाष्यं व्याचष्टे ॥ न च तत्रेति ॥ तथैवेति ॥ वचनोक्तेरुपयोगं वक्तुमाह ॥ न च वाच्यं श्रुताविति ॥ तामेव सूर्यादिव्यक्तिं पूर्वप्रकारेणाकल्पयदित्यादिरूपेणेत्यर्थः । यथर्तुष्विति संभवपर्वण्याद्येऽध्याये सौतिवचनम् । यथेत्यादेरुपयोगं इतरेषामिति पदार्थं वदन्नाह ॥ न चायोगिनामिति ॥ परं प्रति अप्रलयवादिनं पूर्वपक्षिणं प्रति ॥ प्रलयस्येति ॥ अपश्यमप्यये मायया यत्प्रयंति, आकाशं प्रत्यस्तं यंति, नासदासीन्नो सदासीत्तदानीं, यमप्येति भुवनं य इदं सर्वं विलापयति, स रुद्रेण विलापयति, क्रमाद्विलीयते व्युत्क्रमाद्विलयश्चेत्यादिश्रुतिभिः ब्रह्मणा सह ते सर्वे संप्राप्ते प्रति संचर इति यस्मिंश्च प्रलयं यांतीत्यादि स्मृतिभिस्सिद्धत्वादित्यर्थः ॥ २८ ॥

सूत्रभाष्यम्—

## ॥ ॐ अत एव च नित्यत्वम् ॐ ॥ २९ ॥

अत एव शब्दस्य नित्यत्वादेव च देवप्रवाह(स्य)नित्यत्वं युक्तम् (भवति पा.)॥ २९॥

तत्वप्रकाशिका—

युक्त्यन्तरेण देवप्रवाहनित्यतां साधयत्सूत्रं पठित्वा व्याचष्टे ॥ अत एवेति ॥ न देवप्रवाहनित्यत्वसिद्ध्यर्थं युक्त्यन्तरं गवेषणीयं किं तु यत्परेण प्रतिपादितं वेदस्य नित्यत्वं तदन्यथानुपपत्त्यैव तत्सिद्ध्यति । नहि वाच्यानित्यत्वे वाचो नित्यत्वमुपपद्यत इति भावः । न चाप्रामाण्येनोपपत्तिः । तदभावादेव । नापि भारतादिवदतीतविषयत्वेन । अनुपपत्तेरुक्तत्वात् । न च तद्वाच्यदेवतास्वरूपस्यैव नित्यत्वेनान्यथोपपत्तिः । 'सूर्याचन्द्रमसौ' इत्याद्युत्पत्तिश्रुतेः प्रलयश्रुतिबाहुल्याच्च । न च प्रलयश्रुतीनामयथार्थत्वम्। बाधकाभावात्। जातिसंकेताद्यनुपपत्तेरिति चेन्न।

ईश्वरविरचितत्वेनोपपत्तेः । ब्राह्मणादेव ब्राह्मण इति नियमस्य क्वचिदन्यथात्वोपपत्तेर्वृश्चिकताण्डुलीयकादिवदिति ॥ २९ ॥

भावदीपः—

॥ ॐ अत एव च नित्यत्वम् ॐ ॥ २९ ॥ युक्त्यन्तरेणेति ॥ पूर्वमनुमानपदेन युक्तेरुक्तत्वाद्युक्त्यंतरेणेत्युक्तम् । सौत्रश्चकारः समुच्चय इति भावः । एवकारतात्पर्यमाह ॥ न देवेति ॥ यत्परेणेति ॥ वाचा विरूप नित्ययेत्यादिनेत्यर्थः । अनुपपत्तिं व्यनक्ति ॥ न हीति ॥ यद्यपि शब्दशक्तिविषयस्य वाच्यस्य नाशेऽपि शक्तेस्तदाश्रयशब्दस्य चानाश उपपद्यते शक्यनाशे शक्तितदाश्रययोर्नाशानियमात् । प्रलये वाच्यस्य देवतादेरभावेऽपि वाचकसद्भावात् भारतादिवदतीतविषयत्वोपपत्तेश्च । तथापि प्रागुक्तदिशा इंद्रागच्छेत्यादिदेवताह्वानादिरूपाया वाचो नित्यत्वं वाच्यानित्यत्वेऽनुपपन्नमिति भावः । अत एव वक्ष्यति नापि भारतादीत्यादि ॥ तादिति ॥ प्रामाण्यस्य साधितत्वेन अप्रामाण्यस्याभाव देवेत्यर्थः ॥ अनुपपत्तेरिति ॥ देवताह्वानादिरूपस्य वर्तमानविषयत्वं विनाऽनुपपत्तेरुक्तत्वादित्यर्थः । सूर्येति श्रुतेरपि स्वरूपैक्यपरत्वोपपत्तेराह ॥ प्रलयेति ॥ ननु प्रलये ब्राह्मणादेरभावेन ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः परिकीर्तित इत्याद्युक्तजातिभेदः देवर्ष्यादिशब्दसंकेतः वेदोक्तरूपकर्मलिंगादिव्यवस्था च नोपपद्यत इति शंकते ॥ जातीति ॥ वृश्चिकेति ॥ यथा गोमयतण्डुलकणादिविजातीयजन्यानामपि वृश्चिकताण्डुलीयकत्वादिस्तथैवाब्राह्मणाज्जातस्यापि सर्गादिकालीनस्य ब्राह्मणत्वादिजातिरित्यर्थः । संकेताद्यनुपपत्तिरग्रे ऋषीणामिति स्मृतौ निरसिष्यत इत्यर्थः ॥ २९ ॥

सूत्रभाष्यम्—

**॥ ॐ समाननामरूपत्वाच्चावृत्तावप्यविरोधो**
**दर्शनात्स्मृतेश्च ॐ ॥ ३० ॥**

अतीतानागतानां देवानां समाननामरूपत्वात्प्राप्तपदानां मुक्त्याऽऽवृत्तावप्यविरोधः । 'यथापूर्वमि'ति (म. ना. उ. ५–७) दर्शनात् ।

'अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा ।
ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः ।
वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः' । इति स्मृतेश्च ॥ ३० ॥

तत्वप्रकाशिका—

न देवानां प्रवाहनित्यत्वेनापि वेदप्रामाण्योपपत्तिः । तथा हि । किं पूर्वकल्पे मुक्ता एव देवा उत्तरकल्पे पुनरावर्तन्ते तदन्ये एव वा । नाद्यः । मुक्तेरपुनरावृत्तित्वात् । अतस्तदन्य एवेति वाच्यम् । तथा च तेषां नानाविधनामरूपवतां वाचकवेदस्य कथं नाप्रामाण्यम् । तस्य प्रतिकल्पं पाठभेदाभावात् । तद्भावे नित्यत्वव्याघातादित्याशंकां परिहरत्सूत्रमुन्नयस्य व्याचष्टे ॥ समानेति ॥ संभवत्येव देवप्रवाहनित्यत्वेन वेदप्रामाण्यम् । प्राचीनानां प्राप्तमुक्तित्वेन पुनः स्वपदेष्ववृत्तावपि तदन्येषां प्राचीनसमाननामरूपत्वात् तत्प्रतिपादकैकविधस्यापि वेदस्याप्रामाण्याप्राप्तेः । न च सर्वदेवानां समाननामरूपत्वे प्रमाणाभावः । 'यथापूर्वम्' इति श्रुतेः । एतच्छ्रुतेस्तत्स्वरूपकल्पनानियमपरत्वमपि संभवतीति नानया तन्निश्चय इति चेत् स्मृतिसंवादेन निश्चयोपपत्तेरिति भावः । ननु कथं देवप्रवाहनित्यत्वे समाननामरूपत्वे वा नित्यवेदप्रामाण्योपपत्तिः । तद्वाच्चित्वेनेति चेन्न । तस्यैवासंभवात् । न ह्येतावत्कालमयं वेदो मयोक्तोऽतः परमेनं वक्ष्यामीत्यपौरुषेयस्य विमृश्य वृत्तिः संभवतीत्याशङ्काऽपि स्मृत्यैव परिहृता । स्वयंभुवा स्वतंत्रेण विष्णुना या वेदवागुच्चारिता तद्वेदगतशब्देभ्यो ब्रह्मादिविबुधानां नामानि निर्ममे । तान् शब्दांस्तेषु संकेतितवान् । याश्च तेषां वेदेषूक्ताः दृश्यंत इति दृष्टयो रूपाणि तानि च तथैव निर्ममे । इति सर्वदेवानां समाननामरूपत्वस्यापौरुषेयवेदस्यापि स्वतन्त्रेण भगवता प्रतिकल्पं वेदेषु संकेतितत्वस्य चोक्तेः । न च प्रलये वेदाप्रामाण्यं शङ्क्यम् । तदाऽतीतविषयत्वस्य भगवन्मात्रविषयत्वस्य चोपपत्तेः ॥ ३० ॥

भावदीपः—

॥ ॐ समाननामरूपत्वाच्च ॐ ॥ ३० ॥ सूत्रमवतारयितुं शंकामाह ॥ नेति ॥ सौत्रविरोधपदार्थो न प्रामाण्योपपत्तिरिति समानेत्यादेर्व्यावर्त्योक्तिस्तथा चेत्यादि । तस्य वेदस्य । आम्नायोऽनन्यथापाठादिति स्मृतेरिति भावः । अविरोध इत्यस्यार्थमाह ॥ संभवत्येवेति ॥ प्राप्तेत्यादेरर्थः प्राचीनानामिति । अनागतानामित्यस्यार्थोऽन्येषामिति । अतीतपदार्थः प्राचीनेति । सौत्रश्चशब्दः समानधर्मकर्मत्वाच्चेत्यर्थ इति तत्वप्रदीपे । स्मृत्युक्तेरुपयोगं वक्तुमाह ॥ एतच्छ्रुतेरिति ॥ स्वरूपेति ॥ तामेव सूर्यादिव्यक्तिं पूर्वप्रकारेण अकल्पयदित्यर्थपरत्वेनेत्यर्थः । परिहृतेत्युक्तमेव स्मृत्यर्थोक्त्या व्यनक्ति ॥ स्वयंभुवेति ॥ स्वयमेव भवति परापेक्षां विना वर्तत इति

स्वयंभूः स्वतंत्रः। उत्सृष्टेत्यस्य उत्पन्नेत्यर्थत्वे प्रागुक्तनित्यत्वविरोधादाह ॥ उच्चारितेति ॥ संकेतितवानिति ॥ अयं शब्दोऽत्र शक्त इति ज्ञापितवानित्यर्थः। देवताह्वानादिरूपस्य कथनतीतविषयत्वमित्यत आह ॥ भगवन्मात्रेति ॥ ३० ॥

सूत्रभाष्यम्--

॥ ॐ मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॐ ॥ ३१ ॥

'वसूनामेवैको भूत्वे' (छां. उ. ३-६-२) त्यादिना प्राप्यफलत्वात्प्राप्तपदानां देवानां मध्वादिविद्यास्वनधिकारं जैमिनिर्मन्यते ॥ ३१ ॥

तत्वप्रकाशिका--

अतो देवानामाद्यन्तवत्वेऽपि विरोधाभावाद्युक्तस्तेषां वेदविद्याधिकार इति स्थिते पुनस्तमाक्षिपत्सूत्रमुपन्यस्य व्याचष्टे ॥ मध्वादिष्विति ॥ वेदविद्या द्विविधाः। मुक्तिफलार्थास्तदितरफलार्था इति। मोक्षेतरफलार्थाश्च द्विविधाः। ब्रह्मकर्मविद्याभेदात्। यथा मधुविद्या। यथा चाग्निष्टोमविद्या। तत्र न तावन्मोक्षेतरफलार्थद्विविधविद्यास्वधिकारो देवानां युज्यते। तत्रार्थित्वाभावात्। 'स य एतदेवममृतं वेद वसूनामेवैको भूत्वाग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति। देवो भूत्वा देवानप्येति। स ऊर्जमुपगच्छति' इत्यादिना मध्वादिविद्यासु वस्वादिपदानामुपासनाप्राप्यफलत्वश्रवणात्। देवानां च प्राप्ततत्पदत्वात्। न हि प्राप्तेऽर्थिता संभवति। एवं कर्मविद्यास्वपि वस्वादिपदानां फलत्वोक्तेनार्थिता संभवति। न च द्वितीयाद्यमृतविद्यादिषु वस्वादीनामप्यधिकारः संभवतीति वाच्यम्। तास्वपि रुद्रादिपदस्य फलत्वेन श्रवणात्। तत्र चायोग्यतयार्थिताऽयोगात्। एवं कर्मविद्यास्वपि रुद्रादिपदफलाभिधात्रीषु वस्वादीनामधिकारायोगः। न चास्त्वेवं स्वस्वेतरपदफलाभिधात्रीषु ब्रह्मकर्मविद्यास्वनधिकारस्तथापि मोक्षेतरसामान्यफलाभिधायकविद्यासु स्यादिति वाच्यम्। सामान्यफलानां च 'प्रकाशवानस्मिँल्लोके भवति' इत्यादीनां तत्फलेऽन्तर्भावात्। 'न ह वा एवंविदि किंचनानन्नं भवति' इत्यादीनां सर्वायोग्यत्वात् योग्यैश्च रुद्रादिभिः प्राप्तत्वाच्च। अतो मोक्षेतरफलार्थं विद्याविचारे देवानामर्थित्वाभावात् न तास्वधिकारः। किं चैवमाप्ततमो जैमिनिराचार्योऽपि मन्यत इत्यर्थः ॥ ३१ ॥

भावदीपः—

॥ ॐ मध्वादिष्वसंभवात्० ॐ ॥ ३१ ॥ अतो देवानां प्रवाहतोऽनादिनित्यत्वात् समाननामरूपत्वाच्चेत्यर्थः ॥ तन्नाक्षिपदिति ॥ श्रुतफलोद्देशेनेति भावः । ॥ यथा मधुविद्येति ॥ छांदोग्ये तृतीयाध्याये । असौ वा आदित्यो देवमध्विति आदित्यस्थविष्णोः परमानंदरूपत्वेन मधुत्वमुक्त्वा तस्य पूर्वदक्षिणपश्चिमोत्तरोर्ध्वरश्मिषु स्थितानाममृतशब्दितवासुदेवसंकर्षणप्रद्युम्नानिरुद्धनारायणाख्यपंचरूपाणां प्राच्यादिरश्मिषु स्थितैर्वसुरुद्रादित्यमरुदृजुनामकपंचगणस्थैर्देवैः क्रमेणाग्निवायिंद्रसोमविरिंचमुखेनोपासनायां कृतायां तदपरोक्षद्वारा वसुरुद्रादिपदप्राप्तिस्तद्गणस्थानामुच्यते ॥ यथाऽग्निष्टोमेति ॥ तत्र स्वर्गादिफलकत्वश्रवणादिति भावः । मध्वादीत्यादिभाष्यं व्याचष्टे ॥ तत्रेति ॥ वसूनामित्यादि व्याचष्टे ॥ एतदेवामृतमिति ॥ वासुदेवाख्यं रूपमित्यर्थः । ऊर्जमन्नं प्राप्तेत्यादिभाष्यं व्याचष्टे ॥ देवानामिति ॥ सर्वयज्ञादिकर्म चेत्युत्तरस्मृत्यनुरोधादिपदेन कर्मविद्यापि ग्राह्येति भावेनाऽऽह ॥ एवंकर्मेति ॥ यद्यप्यग्निष्टोमादौ स्वर्गादिः फलत्वेन श्रूयते न वस्वादिपदप्राप्तिः । तथापि यज्ञेनेति प्रागुक्तश्रुत्या यज्ञादिकर्मणो देवतापदप्राप्तिहेतुत्वोक्तेः स्वर्गादिशब्दस्योपलक्षणत्वं वा वस्वादिपदस्यापि स्वर्गत्वेन स्वर्गपदेनैव वा ग्रहणोपपत्तेरिति भावः । यद्वा वस्वादिफलकासाधारणकर्मविशेषपरो वाऽत्र कर्मशब्दः ॥ न च द्वितीयेति ॥ यद्यत्प्रथमममृतं तद्वसव उपजीवंतीत्युक्तप्रथमामृतविद्याया वसुत्वफलकत्वेन तत्र वसूनामनधिकारेऽपि अथ यद्द्वितीयममृतं तद्रुद्रा उपजीवंतीत्यादिनोक्तद्वितीयाद्यमृतविद्यासु रुद्रत्वादेः फलत्वेन तत्राधिकारोऽस्त्विति न वाच्यमित्यर्थः ॥ स्वस्वेति ॥ स्वयोग्यफलाभिधात्रीषु स्वेतरयोग्यफलाभिधात्रीषु प्रथमद्वितीयाद्यमृतविद्यास्वित्यर्थः ॥ मोक्षेतरेति ॥ छांदोग्य एव चतुर्थेऽध्याये सत्यकामं प्रति वृषभाद्याविष्टवाय्वादिभिरुपदिष्टायां एष वै सोम्य चतुष्कलः पादो ब्रह्मणः प्रकाशवान्नामेत्यादिविद्यायां य एवं विद्वान् चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते प्रकाशवानस्मिंल्लोके भवति प्रकाशवतो ह लोकान् जयतीत्यादिनोक्तानामस्मिल्लोके प्रकाशवत्त्वादीनां सर्वसाधारण्यात्तत्रास्त्वधिकार इति न वाच्यमित्यर्थः ॥ तत्फलेति ॥ मधुविद्याफलभूतवसुत्वादावित्यर्थः ॥ न ह वा इति ॥ तत्रैव पंचमे न ह वा एवंविदीत्यादिनोक्तेषु ते ह प्राणा अहं श्रेयसि व्यूदिर इत्यादि प्राणविद्याफलेषु सर्वभोक्तृत्वादिरूपेषु रुद्रादेरेव योग्यत्वेन सर्वेषामयोग्यत्वादित्यर्थः । एवं युक्तिभिरुपपादितस्य सर्वैरंगीकार्यत्वात् जैमिनिरिति कस्यचिन्मतत्वेनोक्तिः कथमित्यतो व्याचष्टे ॥ किंचेति ॥ ३१ ॥

सूत्रभाष्यम्—

**॥ ॐ ज्योतिषि भावाच्च ॐ ॥ ३२ ॥**

ज्योतिषि सर्वज्ञत्वे भावाच्च । आदित्यप्रकाशेऽन्तर्भाववत्तज्ज्ञाने सर्ववस्तूनामन्तर्भावात् । नित्यासिद्धत्वाच्च विद्यानाम् ॥ ३२ ॥

तत्वप्रकाशिका—

मास्तु मोक्षेतरफलार्थविद्यास्वधिकारो देवानाम् । 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिमोक्षार्थविद्यासु भविष्यति अर्थित्वसंभवादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ ज्योतिषीति ॥ भावाद्वस्तूनामिति शेषः । कथं वस्तूनां ज्ञानेऽन्तर्भाव इत्यतः स्वपदे वर्णयति ॥ आदित्येति ॥ अभिप्रायं वक्ति ॥ नित्येति ॥ न मोक्षार्थविद्यास्वपि देवानामधिकारः संभवति । तदुक्तोपासनेऽर्थिताभावात् । द्विविधा हि अर्थिता विद्याविचारे भवति ज्ञानाय फलाय चेति । तत्र देवानां मोक्षार्थित्वेऽपि न तत्साधने विद्यासाध्ये ज्ञानेऽर्थिताऽस्ति । तेषां सार्वज्ञेन सर्वविद्योक्तज्ञानित्वात् । न हि स्वर्गार्थिनोऽपि कृतयज्ञस्य पुनर्यज्ञविद्याविचारेऽर्थिताऽस्तीति भावः । अनेन प्राचीनपक्षे दोषान्तरं चोक्तं भवति ॥ ३२ ॥

भावदीपः—

॥ ॐ ज्योतिषि भावाच्च ॐ ॥ ३२ ॥ कथमनेन भाष्येण पूर्वोक्तशंकानिरास इत्यत आह ॥ न मोक्षार्थेति ॥ अनेनेति ॥ नित्यसिद्धत्वाद्विद्यानामिति भाष्येणेत्यर्थः । प्राचीनपक्षे मोक्षेतरफलार्थविद्यास्वधिकार इति पक्षे । वसुत्वादिफलस्य प्राप्तत्वेनार्थित्वाभावान्मधुविद्यायामनधिकार इत्येव दोषो न किंतु वसुत्वादिफलसाधनस्य ज्ञानस्य विद्यासाध्यस्य प्राप्तत्वाच्च न तत्राधिकार इति दोषांतरं चोक्तमित्यर्थः । साधनफलयोर्द्वयोरपि प्राप्तत्वान्न मध्वादिविद्यास्वधिकार इत्युक्तं भवति ॥ ३२ ॥

सूत्रभाष्यम्—

**॥ ॐ भावं तु बादरायणोऽस्ति हि ॐ ॥ ३३ ॥**

फलविशेषभावात्प्राप्तपदानामपि देवानां मध्वादिष्वप्यधिकारं बादरायणो मन्यते । अस्ति हि प्रकाशविशेषः ।

'यावत्सेवा परे तत्वे तावत्सुखविशेषता ।
सम्भवाच्च प्रकाशस्य परमेकमृते हरिम् ॥

तेषां सामर्थ्ययोगाच्च देवानामप्युपासनम् ।
सर्वं विधीयते नित्यं सर्वयज्ञादिकर्म चे'ति स्कान्दे ॥

उक्तफलानधिकारमात्रं जैमिनिमतम् । अतो न तन्मतविरोधः (तदिति क्वचिन्नास्ति) ।

'सर्वज्ञस्यैव कृष्णस्य त्वेकदेशविचिन्तितम् ।
स्वीकृत्य मुनयो ब्रूयुस्तन्मतं न विरुध्यत' इति (च) ब्राह्मे ॥ ३३ ॥

॥ इति देवताधिकरणम् ॥ ८ ॥

तत्वप्रकाशिका—

एवं देवैर्मोक्षेतरयोग्यफलानां प्राप्तत्वादयोग्यानां प्राप्तुमशक्यत्वात् मोक्षस्याप्यर्थतो लब्धत्वादर्थित्वाभावेन तेषां कास्वपि विद्यास्वधिकाराभावे जैमिनिमतावलंबिना समर्थिते पुनस्तं समर्थयत्सूत्रं पठित्वा व्याचष्टे ॥ भावमिति ॥ बादरायणस्तु भगवान् देवानामशेषविद्यास्वधिकारभावं मन्यते । मोक्षतदितरफलानां योग्यानां प्राप्तत्वेऽयोग्यानां प्राप्तुमशक्यत्वेऽपि विद्योक्तोपासनकर्मकरणाभ्यां योग्यस्य ज्ञानमात्रेणासाध्यस्य मोक्षफलेऽतिशयस्य सिद्धचार्ऽथित्वसंभवात् । न च विद्यानां नित्यसिद्धत्वात्तद्विचारेऽर्थित्वाभावः । भगवदितरेषां निरुपचरितसार्वज्ञाभावाद्विद्याविचारेण ज्ञानविशेषसंभवादित्यर्थः । ननु तत्तद्विद्योक्तानुष्ठानेन तत्रोक्तादन्यदपि फलं प्रकाशविशेषश्च भवतीत्येतत्कुतः इत्याशङ्कां परिहर्तुं उक्तार्थे स्मृतिं दर्शयति ॥ यावदिति ॥ नन्वस्त्येवमुक्तयुक्तिपराभवस्तथापि देवानामधिकाराभ्युपगतावाप्ततमजैमिनिमतविरोध इत्यत आह ॥ उक्तेति ॥ न देवाधिकाराभ्युपगमे जैमिनिमतविरोधः । तत्तद्विद्यासूक्तफलार्थं प्रागाप्तज्ञानार्थं च जैमिनिना देवाधिकारस्य निरस्तत्वात् सूत्रकारेण च तदुक्तमङ्गीकृत्य प्रयोजनान्तराय तस्य समर्थितत्वादित्यर्थः । किमनयोर्मतयोर्विषयवैलक्षण्यकल्पनेन विरोध एव किं न स्यादित्यत आह ॥ सर्वज्ञस्येति ॥ अतो देवानां सर्वविद्याधिकारित्वात् तदुपास्यत्वं हरेर्युक्तमिति सिद्धम् ॥ ३३ ॥ अ० ८ ॥

भावदीपः—

॥ ॐ भावं तु बादरायणोऽस्ति हि ॐ ॥ ३३ ॥ समर्थयदिति ॥ समाहितमेतस्य साधुत्वं प्राक् । भाष्ये फले विशेषभावादित्येतत्सौत्रतुशब्दार्थ इति भावेन देवानामित्यादिभाष्यं व्याचष्टे ॥ देवानामिति ॥ भगवानित्युक्त्या बादरायणपदं पूजार्थमिति सूचितम् । विमतिसूचनार्थत्वस्यादावुक्तत्वात् । प्राप्तपदानामपीत्यस्यार्थः ॥ मोक्षेति ॥ फले विशेषभावादित्यस्यार्थो विद्योक्तेति ॥ अस्ति हि प्रकाशविशेष इत्येतद्व्याचष्टे ॥ न चेति ॥ ज्ञानविशेषेति ॥ एतेन सूत्रे तुशब्दः फलविशेषद्योतकः । अस्ति हीति तु ज्ञानातिशयोक्तिपरमिति सूचितम् । अप्रामाण्यमेवानुक्त्वा तन्मताविरोधोक्तेर्बीजोक्तिराप्लतमेति । फलोक्त्योपसंहरति॥ अत इति ॥ स्वपदविशिष्टानां देवानामाद्यंतवत्त्वेन प्राप्तफलतत्साधनानामपि मोक्षे ज्ञाने च विशेषस्य सत्त्वेन चार्थित्वसंभवादाद्यंतवत्त्वेऽपि तेषां प्रवाहतोऽनादिनित्यत्वेन समाननामरूपत्वेन च शब्दकर्मणोरप्रामाण्याननुष्ठानाख्यविरोधाभावाच्चेति समस्तसूत्रार्थः । तद्धेतुकप्रतिज्ञांशार्थमाह ॥ देवानामिति ॥ ३३ ॥ अ०८ ॥

सूत्रभाष्यम्—

मनुष्याधिकारत्वादित्युक्तेऽविशेषाच्छूद्रस्या'प्यह हारेत्वा शूद्रे'ति (छां. उ. ४–२–३) पौत्रायणोक्तेरधिकार इत्यत आह—

**॥ ॐ शुगस्य तदनादरश्रवणा-**
**त्तदाद्रवणात्सूच्यते हि ॐ ॥ ३४ ॥**

नासौ पौत्रायणश्शूद्रः, शुचाऽऽद्रवणमेव शूद्रत्वम् (शूद्रशब्देनोक्तम्)। 'कम्वर एनमेतत्सन्तमि' (छां. उ. ४–१–३)त्यनादरश्रवणात् । 'स ह सञ्जिहान एव क्षत्तारमुवाचे'ति (छां. उ. ४–१–५) सूच्यते हि ॥ ३४ ॥

तत्वप्रकाशिका—

अत्र त्रिवर्णेतरस्य वेदोक्तब्रह्मविद्याधिकारनिरासादस्ति शास्त्रसंगतिः । प्रासंगिकत्वान्नाध्यायादिसंगतिरन्वेष्टव्या । श्रुत्यादिसंगतिं विषयादिकं च सूचयति ॥ मनुष्येति ॥ वेदविद्यासु मनुष्याणामधिकृतत्वात्तेषां चाङ्गुष्ठसद्भावाद्युक्तं तान्प्रति विष्णोरङ्गुष्ठमात्रत्वाभिधानमित्युक्तम् । स च वेदविद्याधिकारो यदि

शूद्रादीनां स्यात्तदा श्रुत्यादिविरोधादसौ निषेध्य एव । न चोक्ते विरोधाभावादसंगतिः । स्वन्यायेन श्रुत्यादिविरोधप्राप्तेः । स एव ह्युक्ते विरोधो नाम यदुक्तं प्रमाणबाधितं स्यात् । स वेदविद्याधिकारो विषयः । शूद्रस्यास्ति न वेति संदेहः । मनुष्यत्वसमदर्शनं च संदेहबीजम् । अस्ति शूद्रस्यापि वेदविद्याधिकार इति पूर्वः पक्षः । मनुष्याधिकारत्वादिति मनुष्याणामधिकारस्योक्तत्वात् । मनुष्यत्वे च शूद्रस्य(अपि) द्विजातिभ्यो विशेषाभावात् । न मनुष्यत्वं वेदविद्याधिकारोपयोगि किं तु विशिष्टबुद्ध्यादिमत्त्वमेवेति चेत् तथापि शूद्राधिकारसिद्धिः । विशिष्टबुद्ध्यादिमत्त्वेऽपि शूद्रस्यान्येभ्योऽविशेषात् । न च वाच्यं शूद्रस्य वेदविचारादर्शनादनधिकार इति । छन्दोगोपनिषदि पौत्रायणस्य वैदिकसंवर्गविद्याध्ययनदर्शनात् । तस्य शूद्रत्वमेव कुत इति चेन्न । 'तमुह परः प्रत्युवाचाह हारेत्वा शूद्र तवैव सह गोभिरस्तु' इति पौत्रायणं प्रति रैक्वोक्तेरेव । न चाधिकाराभावेऽपि पौत्रायणो विद्यां विचारयामासेति किं न स्यादिति वाच्यम् । अनधिकारिणं प्रति मुनेरुपदेशासंभवात् । न हि तस्यापरोक्षज्ञानिनो गवाद्याशयाऽप्यन्याय्या प्रवृत्तिः संभाविता । अतो युक्त्या लिङ्गदर्शनेन च शूद्रस्य वेदाधिकारसिद्धिरिति भावः । उक्ते इति सप्तमी पञ्चम्यर्थे । अधिकारोपयोगितयोक्ते मनुष्यत्वेऽविशेषादिति वा । अहेति संबोधनम् । हारो रथश्च गोभिः सह तवैवास्त्वित्यर्थः । हारेत्वेति सेदुराजेत्यादिवद्विसर्गलोपेन भवति । हारेत्वा नाविति वा । तथात्वे पृथगन्वयः । सिद्धान्तयत्सूत्रमवतार्य तत्फलितार्थं तावदाह ॥ अत इति ॥ यदुक्तं शूद्रस्यापि पौत्रायणस्य वेदविचारदर्शनादस्ति शूद्रस्य वेदविद्याधिकार इति तद्भवेद्यदि पौत्रायणः शूद्रो भवेन्न तु तदस्तीत्यर्थः । शूद्रेति संबोधितत्वात् कथमसौ न शूद्र इत्यतः तदाऽऽद्रवणादिति सूत्रांशं व्याचष्टे ॥ शुचेति ॥ शोकेनाऽऽद्रवणं शूद्रशब्दप्रवृत्तिनिमित्तम् । अतः शुचाऽऽद्रवणादेव शूद्रेति संबोधितो न तु वर्णावरत्वाभिप्रायेणेति नानेन पौत्रायणस्य शूद्रत्वसिद्धिरित्यर्थः । पौत्रायणस्य शुगेव किंनिमित्तेत्यतः शुगस्य तदनादरश्रवणादिति सूत्रांशं व्याचष्टे ॥ कम्विति ॥ अरे हंसैतद्वचनं कमेनमुद्दिश्यात्थ संतं सयुग्वानं रैक्वमिवेति हंसकृतानादरश्रवणादस्य पौत्रायणस्य शुगित्यर्थः । तदिति श्रुत्युक्तपरामर्शः । श्रुतानादरस्यापि तस्य कुतः शोकोत्पत्तिर्ज्ञायते । परबुद्धेरप्रत्यक्षत्वात् । कारणस्य च कार्याविनाभावाभावादित्यतः सूत्रशेषं व्याचष्टे ॥ सहेति ॥ स श्रुतानादरः पौत्रायणः शयनादुत्तिष्ठन्नेव क्षत्तारं रैक्वगवेषणायोवाचेत्युक्ततद्व्यग्रतया शोको ज्ञायतेऽतोऽनादरश्रवणात्पौत्रायणस्य शुगासीत्तया

शुचाऽऽद्रवणाच्छूद्रेति संबोधितो न तु वर्णावरत्वाभिप्रायेणेति नेदं शूद्राधिकारे लिङ्गमिति भावः। शोकेनाऽऽद्रवणपरिज्ञानं च मुनेः सार्वज्ञ्यादुपपद्यते। तदुक्तम्। 'राजा पौत्रायणः शोकाच्छूद्रेति मुनिनोदितः। प्राणविद्यामवाप्यास्मात्परं धर्ममवाप्तवान्' इति। दीर्घस्वरार्थत्वेनाऽऽद्रवणादित्युक्तम्। शुग्द्र एव शूद्रो रुग्द्र एव रुद्र इतिवत् ॥ ३४ ॥

भावदीपः—

॥ ॐ शुगस्य तदनादरश्रवणात्तदाद्रवणा० ॐ ॥ ३४ ॥ संगतिपरत्वेन भाष्यं व्याचष्टे ॥ वेदविद्यास्विति ॥ अविशेषादित्यादेर्भाविस्स चेति। वक्ष्यमाणदिशेत्यर्थः ॥ श्रुत्यादीति ॥ श्रवणाध्ययनेति सूत्रोक्तश्रुत्यादीत्यर्थः ॥ न चोक्त इति ॥ शूद्रस्याधिकारे उक्ते मनुष्याधिकारे विरोधो नास्ति। शूद्रस्यापि मनुष्यत्वात्। तथा चोक्तानाक्षेपादफलोऽयं विचार इति न वाच्यमित्यर्थः। स्वन्यायेन मनुष्यत्वविशिष्टबुद्ध्यादिमत्वरूपपूर्वोक्तसूत्रकारीयन्यायेन शूद्रस्याप्यधिकारप्राप्तौ वक्ष्यमाणश्रुतिस्मृतियुक्तिविरोधप्राप्तेरित्यर्थः। शूद्रस्यानधिकारोक्तौ प्राक्तनसामान्योक्तिः शूद्रेतरमनुष्यपरा स्यादिति भावः। पूर्वपक्षतद्युक्तिपरत्वेनापि भाष्यं व्याचष्टे ॥ अस्ति शूद्रस्यापीति ॥सप्तमीयं पंचम्यर्थे इत्युपेत्याऽऽह॥ उक्तत्वादिति ॥ अविशेषाच्छूद्रस्यापीत्येतन्मनुष्यत्वाविशेषादित्येवं व्याख्याय देवतानयोक्तन्यायाविशेषादित्यर्थांतरपरतयाऽपि व्याख्यातुमाह ॥ न मनुष्यत्वमिति ॥ पौत्रायणोक्तेरिति वाक्यं पौत्रायणस्य श्रुतावधिकारोक्तेरित्यर्थकं व्याख्यातुमाह ॥ न च वाच्यं शूद्रस्येति ॥ पौत्रायणं प्रति रैक्वेण शूद्रेत्युक्तेरित्यर्थांतरं च व्याख्यातुमह हारेत्वा शूद्रेत्यादिवाक्यमवतार्य व्यनक्ति ॥ तस्येति ॥ छांदोग्ये चतुर्थे श्रुतसंवर्गविद्यायां प्रासादाग्रे शयानं पौत्रायणमुपर्युपरि पतंतो हंसपक्षिणो रैक्वमुनिप्रशंसाकराणि पौत्रायणानादरकराणि च वाक्यानि परस्परं वदंतोऽगमन्। तच्छ्रुत्वा परितप्तमनाः पौत्रायणः प्रातस्तल्पादुत्थित एव क्षत्तृमुखेन रैक्वस्थानं निश्चित्य तत्वबुभुत्सुर्गुरुदक्षिणां गृहीत्वा तत्समीपमुपेत्य तं संबोध्य दक्षिणां निवेद्य मह्यं विद्यां ब्रूहीत्युवाच। तदा तं पौत्रायणं परो रैक्वः प्रत्युवाच किमिति अह हारेत्वेत्यादि। हारः कंठमाला इत्वा रथः। तवैवास्त्विति स्वाभिमतानवाप्तेः पौत्रायणानीतां दक्षिणां मुनिः प्रत्याचख्यौ इति श्रुत्यर्थः। पौत्रायणं प्रति रैक्वेण विद्योक्तेरित्यर्थांतरं भाष्यस्य वक्तुमाह ॥ न चाधिकारेति ॥ अत इति ॥ मनुष्यत्वात् विशिष्टबुद्ध्यादिमत्त्वात् मुनेरन्यायप्रवृत्तेरसंभवाच्चेत्यर्थः। युक्त्या अविशेषादित्युक्त-

युक्त्या । पौत्रायणं प्रति रैक्वस्य शूद्रेति शूद्रपदेन संबोध्य विद्योपदेशनरूपलिंगदर्शनेन च ।। सप्तमीति ।। भाष्यगतेत्यर्थः । श्रुत्यर्थमाह ।। अहेति ।। इत्वशब्दार्थमाह ।। रथश्चेति ।। अस्त्वित्येकवचनान्वयाय हारेत्वेत्यत्र हारो रथश्चेति पृथगन्वयः कृतः। तर्हि हार इत्वेति स्यात् । न तु हारेत्वेत्याशंक्योपपत्तिमाह ।। हारेत्वेतीति ।। यथा स इदित्यत्र छांदसेन विसर्गलोपेन सेदिति गुणस्तथा हारेत्वेत्यत्रापि गुण इत्यर्थः। यद्वा हारेत्वेत्येकं पदं व्यत्ययेन द्विवचनस्यैकवचनमित्याह ।। हारेत्वा नाविति वेति ।। तथात्वे पृथक् हारो रथश्चास्त्विति अन्वय इत्यर्थः ।। छ ।। नेत्यादिभाष्यं व्याचष्टे ।। यदुक्तमिति ।। इति सूत्रांशमिति ।। सूत्रे तदित्यस्य प्रकृतशुक्परत्वमिति दर्शितम् । आङर्थोऽग्रे स्पष्टयिष्यते । भाष्ये शुगस्य तदिति पदत्रयस्यार्थाद्व्याख्यानं मत्वाऽऽह ।। इति सूत्रांशं व्याचष्ट इति ।। अयि भल्लाक्ष भल्लाक्ष जानश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततं तन्मा प्रसांक्षीः तत्वा मा प्रधाक्षीरित्येकेन हंसेनोक्तोऽन्यो हंसः प्रतिवक्ति कम्वर इति । तदर्थः अरे हंसेति सूत्रे अस्यानादरेति षष्ठयाः क्रियाकर्तृभावसंबंधलब्धार्थमाह ।। हंसकृतेति ।। शेषमाह ।। अस्येत्यादि ।। पूर्वत्र सूत्रे क्वाप्यप्रकृतत्वात् तदित्यस्य कथं हंसकृतेति व्याख्येत्यत आह ।। तदितीति ।। तदनादरेति सूत्रे तदिति तच्छब्देन व्याख्येयश्रुतिगतहंसपरामर्श इत्यर्थः । कारणस्य समग्रस्येत्यर्थः । इह च शोके सति न कार्यमुपलभ्यत इति भावः । हिशब्दो हेताविति मत्वाऽऽह ।। अत इति ।। व्यग्रताख्यकार्यलिंगदर्शनेन शोकस्य ज्ञापितत्वात् अनादरश्रवणात्कारणादित्यर्थः ।। तदुक्तमिति ।। छांदोग्यभाष्योक्तपाद्मस्मृतावुक्तमित्यर्थः । शोकाच्छोकेन आद्रवणादित्यर्थः । तथा च शुगुपपदात् द्रुगताविति धातोः डप्रत्यये गकारस्य दकारे रूपमित्र्थः । तर्हि श्रुतौ शुद्रेति वक्तव्ये उकारस्य दीर्घेण शूद्रेति किमर्थमुक्तम् । सूत्रे च तद्द्रवणादित्येवपूर्तौ तदाद्रवणादित्याङ्प्रयोगश्च किमर्थ इत्यत आह ।। दीर्घेति ।। दीर्घो यः स्वरः शूद्र इत्यत्र ऊकाररूपो वर्णः । अचः स्वरा इति शिक्षाग्रंथेऽजक्षराणां स्वरत्वोक्तेः । तस्य योऽर्थः शोकाधिक्यरूपोऽर्थः तदर्थत्वेन तद्व्यक्त्यर्थत्वेन सूत्रे तदाद्रवणादित्युक्तमित्यर्थः । संहितायां (यत्र) तत्र दैर्घ्यं पदे यत्र न विद्यते । उक्तार्थस्य महाधिक्यं श्रुतेस्तत्र विवक्षितमित्याद्यैतरेयभाष्योक्तेः ।। रुद्र इतिवदिति ।। यथा रुजं द्रावयते यस्माद्रुद्रस्तस्माज्जनार्दन इति निरुक्तत्वात् गकारस्य दत्वेन रुद्र इति रूपं तथेत्यर्थः ।। ३४ ।।

सूत्रभाष्यम्—

॥ ॐ क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॐ ॥ ३५ ॥

अयमश्वतरीरथ इति चित्ररथसम्बन्धित्वेन लिङ्गेन पौत्रायणस्य क्षत्रियत्वावगतेश्च ।

'रथस्त्वश्वतरीयुक्तश्चित्र इत्यभिधीयत' । इति ब्रह्माण्डे (ब्राह्मे) ।

यत्र वेदो रथस्तत्र न वेदो यत्र नो रथ' इति(च) ब्रह्मवैवर्ते ॥ ३५ ॥

तत्वप्रकाशिका—

ननु शूद्रशब्दोऽयं कुतो यौगिकोऽङ्गीक्रियते रूढार्थ एव किं न स्यात् । योगरूढ्यो रूढेरेव प्राबल्यात् । तथा च पौत्रायणनिदर्शनेन शूद्रस्य वेदविद्याधिकारसिद्धिरित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ क्षत्रियत्वेति ॥ अयमश्वतरीरथ इति पौत्रायणस्याऽऽद्रवणाच्छूद्रशब्देन संबोधनाद्वोत्तरत्र चित्ररथसंबधित्वलिङ्गं श्रूयते । तेन च लिङ्गेन तस्य क्षत्रियत्वमवगम्यते । अतो रूढेरेव प्राबल्येऽपि बाधकाद्योगाङ्गीकारो युक्त इति भावः । श्रुतावश्वतरीरथश्रवणात्कथं चित्ररथत्वमसूत्रयदित्यत आह ॥ रथ इति ॥ न च वाच्यं पौत्रायणेन दीयमानरथोऽत्रोच्यते न तु तस्य तदीयत्वमिति । बाधकाभावे तदीयत्वस्यैव प्राप्तत्वात् । ननु चित्ररथ(थि) त्वेऽपि पौत्रायणस्य वर्णावरत्वं किं न स्यादित्यत आह ॥ यत्रेति ॥ न च वर्णावरत्वे पौत्रायणस्य रथित्वं संभवति । रथस्य वेदाविनाभावाच्छूद्रे च वेदाभावादिति भावः । नन्वेवं वैदिकमात्रे विद्यमानं रथित्वं कथं क्षत्रियत्वे लिङ्गम् । क्षत्रियस्य स्वाभाविकत्वात् । अन्येषां कादाचित्कत्वात् । स्वाभाविकस्य नैमित्तिकादाधिक्यात् । अपलायनं च शूद्रस्य विप्ररक्षार्थमित्येतदपि पदातितयेति गमयितव्यम् ॥३५॥

भावदीपः—

॥ ॐ क्षत्रियत्वावगतेः० ॐ ॥ ३५ ॥ भाष्ये अयमश्वतरीरथ इत्यनंतरं उत्तरत्रेति सौत्रं पदं श्रुतेनेति शेषश्च योज्यत इति भावेन कस्मादुत्तरत्र इत्यतः तन्निरूपकं द्वेधाऽऽह ॥ पौत्रायणस्येति ॥ अनेन पूर्वसूत्रादस्येति बुद्धिविभागेनाऽऽद्रवणादिति च पदद्वयमत्र सूत्रे उत्तरत्र इत्यतः पूर्वमनुवर्त्यमिति दर्शितम् । पौत्रायणस्य रैक्वं प्रत्यागमनोक्त्यनंतरमित्यर्थः ॥ शूद्रेति ॥ अह हारेत्वा शूद्रेत्युक्त्यनंतरमित्यर्थः । ॥ लिंगेनेति ॥ सूत्रे तृतीयापंचम्योरेकार्थत्वाल्लिंगादित्युक्तमिति भावः । चैत्ररथेनेति

सौत्रपदं भावप्रत्ययांतं कृत्वा चित्ररथस्यायं चैत्ररथ इति संबन्धार्थाण्प्रत्ययांतस्य चित्ररथसंबंधित्वेनेति भाष्ये व्याख्यातम् । तस्यासिद्धिमाशंक्य निराह ॥ न च वाच्यमित्यादिना ॥ भाष्ये यत्रेति स्मृतौ यत्र वेदो रथस्तत्र इत्युक्त्या वेदस्य रथ-व्याप्तत्वमुक्तम् । न वेदो यत्र नो रथस्तत्रेति व्यतिरेकोक्त्या वेदरथयोः सम-व्याप्तत्वोक्तेः प्रकृतोपयोग्यर्थमाह ॥ रथस्येति ॥ यद्वा रथस्तत्र तत्रैवेत्यर्थः । एव-कारार्थस्यैव व्यक्तीकरणं न वेदो यत्रेति । अन्वयव्यतिरेकाभ्यां रथस्य वेदव्याप्तत्व-मेव लब्धमिति भावेनोक्तम् ॥ रथस्येति ॥ सूत्रभाष्ययोश्चित्ररथेनेत्येव पूर्तौ चित्ररथ संबंधित्वेनेत्युक्ततात्पर्यं व्यनक्ति ॥ नन्वेवमित्यादिना ॥ नन्वपलायनं चेत्यष्टादश-गीतातात्पर्योक्तवाक्येऽपलायनोक्त्या रथो गम्यते शूद्रेऽपीत्यत आह ॥ अपलायनं चेति ॥ ३५ ॥

सूत्रभाष्यम्—

॥ ॐ संस्कारपरामर्शात्तदभावाभिलापाच्च ॐ ॥ ३६ ॥

'अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयीते'त्यध्ययनार्थं संस्कारपरामर्शात् । 'नाग्निर्न यज्ञो न क्रिया न संस्कारो न व्रतानि शूद्रस्ये'ति पैङ्गिश्रुतौ संस्काराभावाभिलापाच्च । उत्तमस्त्रीणां तु न शूद्रवत् । 'सपत्नीं मे पराधमे' (मन्त्रप्रश्न. १–१६) त्यादिष्वधिकार-दर्शनात् । संस्काराभावेनाभावस्तु सामान्येन । अस्ति च तासां संस्कारः ।

'स्त्रीणां प्रदानकर्मैव यथोपनयनं तथे'ति स्मृतेः (व्याससमृतिः) ॥ ३६ ॥

तत्वप्रकाशिका—

यदुक्तं रथित्वलिङ्गेन पौत्रायणस्य क्षत्रियत्वावगमान्न तल्लिङ्गेन शूद्रस्य वेदाधिकारसिद्धिरिति । तदयुक्तम् । शूद्रस्यापि रथित्वसंभवात् । तस्य वेदाविनाभावान्नेति चेन्न । शूद्रेऽपि वेदाधिकाराङ्गीकारादित्याशङ्कां परिहर-त्सूत्रमुपन्यस्य व्याचष्टे ॥ संस्कारेति ॥ न परेणाङ्गीकृतोऽपि शूद्रस्य वेदाधि-कारः संभवति । वेदाध्ययनादेरुपनयनादिसंस्कारसापेक्षत्वात् । अष्टवर्षं ब्राह्मण-मुपनयीतेति संस्कारमुक्त्वा तमुपनीतमध्यापयीतेत्यध्ययनार्थमुपनयनपरामर्शात् । 'वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना' इति स्मृतेश्च । अस्तु तर्हि शूद्रस्यापि संस्कारः । मैवम् । 'नाग्निर्न यज्ञ' इति शूद्रस्य संस्काराभावाभिधानात् । अतः

शूद्रस्य संस्काराभावेन वेदानधिकारान्न तस्य वेदाविनाभूतरथित्वमिति भावः। नन्वेवं संस्काराभावेन वेदानधिकारश्चेदुत्तमस्त्रीणामनधिकारप्रसङ्गः। संस्काराभावेऽपि तासामधिकारे शूद्रस्यापि तत्प्राप्तिरित्यत आह ॥ उत्तमेति ॥ नोत्तमस्त्रीणां शूद्रवत्संस्काराभावेन वेदविद्याधिकाराभावो वक्तव्यः। 'सपत्नीं मे पराधम' इत्यादिविद्यासु शच्यादीनां तद्द्रष्टृत्वेनाधिकारदर्शनादित्यर्थः। तर्हि उक्तन्यायभङ्ग इत्यत आह ॥ संस्कारेति ॥ संस्काराभावेन वेदाधिकाराभावः सामान्यन्यायेनोक्तो न तु नियमेन। अतस्तस्य विशेष(षे)णापवादे न दोष इति भावः। अनेनैव शूद्रप्रतिबन्दी विमोचिता भवति। सामान्यस्य बाधैकापोद्यत्वात्। एवं स्त्रीणामुपनयनाभावेऽपि पूर्वन्यायस्य सामान्यतयाऽपवादसंभवादस्ति वेदाधिकार इत्युक्तम्। अथोपनयनप्रतिनिधिसद्भावाच्चास्त्यधिकार इत्याह ॥ अस्ति चेति ॥ यथा पुंसामुपनयनादिसंस्कारस्तथा स्त्रीणां प्रदानकर्मैव संस्कार इत्यर्थः। अत्रापवादोक्तिः प्रदानादिशून्यतिर्यगादीनामपि संग्रहार्था। तेषामपि 'अयमग्ने जरिता' इत्यादावधिकारदर्शनात् ॥ ३६ ॥

भावदीपः—

॥ ॐ संस्कारपरामर्शात्० ॐ ॥ ३६ ॥ साध्यहेतू अध्याहृत्य तद्धेतुसाधकत्वेन भाष्यसूत्रोक्तहेतुं परंपरया योजयति ॥ न परेणेति ॥ संस्कारमुक्त्वेति भाष्ये शेषोक्तिः। तमित्यनुवादः। उपनीतमिति व्याख्या। नन्वध्यापयीतेत्यध्यापनांगत्वमेव श्रूयते। न त्वध्ययनांगत्वं संस्कारस्य तत्कथमध्ययनार्थमित्युक्तिः। मैवम्। स्वहितानभिज्ञो बालो हितैषिपित्रादिना शासनीय इत्येवंपरत्वेन स्वाध्यायोऽध्येतव्य इत्यध्ययनविधिश्रुत्यंतरानुरोधेनाध्यापनवाक्यस्याप्यध्ययनार्थत्वादिति भावः। नन्वष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत इति श्रुतौ ब्राह्मणस्यैवाध्ययने उपनयनापेक्षा नान्यस्योच्यत इत्यतः सर्वशाखानयभाष्योक्तस्मृतिं चाऽऽह ॥ वेद इति ॥ द्विजन्मना उपनयनाख्यद्वितीयजन्मवतेति त्रैवर्णिकमात्रसाधारण्यस्यैव स्मरणादित्यर्थः। नाग्निरित्यादिभाष्यं व्याचष्टे ॥ अस्त्विति ॥ अतः संस्काराभावाभिधानादित्यर्थः। संस्कारेति भाष्यव्यावर्त्यमाह ॥ संस्कारेति ॥ पराधम पराणुद। इत्यादीत्यादिपदेन ईंखयंति (तीरपस्यवः) परस्यवः। इंद्रं जातमित्यादिग्रहः। अनेन संस्कारेत्यादिभाष्येणेत्यर्थः। शच्यादीनामिव शूद्राणां संस्काराभावेऽपि अधिकारकल्पकप्रमाणाभावादित्यर्थः। तर्हि स्त्रीणां संस्काराभावमभ्युपेत्य पूर्वभाष्येऽपवादोक्तिः किमर्थे-

स्यतः कृतचिंतायाः फलमन्यत्रेत्याह ॥ अपवादेति ॥ छ ॥ निषेधेति ॥ शूद्रं नोपनयीतेति निषेधेनेत्यर्थः । निषेधाभावेऽपि संस्काराभावोक्तिमात्रेणैवाध्ययनाभावः सुवचः तथाप्यभ्युपेत्यवाद इति चंद्रिकोक्तिः ॥ ३६ ॥

सूत्रभाष्यम्—

॥ ॐ तद्भावनिर्धारणे च प्रवृत्तेः ॐ ॥ ३७ ॥

'नाहमेतद्वेद भो यद्गोत्रोऽहमस्मी'ति (छां. उ. ४–४) सत्यवचनेन सत्यकामस्य शूद्रत्वाभावनिर्धारणे हारिद्रुमतस्य 'नैतदब्राह्मणो विवक्तुमर्हती'ति (छां. उ. ४–५) तत्संस्कारे प्रवृत्तेश्च ॥ ३७ ॥

तत्वप्रकाशिका—

यदुक्तमध्ययनस्य संस्कारसापेक्षत्वान्न शूद्रस्य वेदविद्याधिकार इति न तद्युक्तम् । शूद्रस्यापि संस्कारसंभवात् । न च वाच्यं तदसंभवोऽप्युक्त इति । संस्काराभावस्यैवोक्तेर्निषेधाभावात् । निषेधाभावेऽप्यभावोक्तिसंभवादित्याशंकां परिहरत्सूत्रं पठित्वा व्याचष्टे॥ तद्भावेति ॥ न शूद्रस्योपनयननिषेधाभावः । 'नाहमेतद्वेद भो यद्गोत्रोऽहमस्मि' इति वचनेन सत्यकामस्याऽऽर्जवं ज्ञात्वा नैतदब्राह्मणो विवक्तुमर्हतीति शूद्रत्वाभावनिर्णय एव तदुपनयने गोतमस्य प्रवृत्तत्वात् । शूद्रोपनयननिषेधाभावे कथं तदभावनिर्धारण एव प्रवर्ततेति भावः ॥ ३७ ॥

भावदीपः—

॥ ॐ तद्भावनिर्धारणे० ॐ ॥ ३७ ॥ साध्यमध्याहृत्य भाष्यं योजयति ॥ न शूद्रस्येति ॥ नाहमिति ॥ छांदोग्ये चतुर्थे गुरूपसत्त्यर्थं प्राप्तेन गोतमेन किंगोत्रस्त्वमिति पृष्टस्सत्यकामो वक्ति । नाहमित्यादि । वेदेत्युत्तमपुरुषैकवचनम् ॥ निर्णय एवेति ॥ चोऽवधारणे भिन्नक्रम इति दर्शितम् ॥ तदुपनयन इति ॥ अनेन पूर्वस्मात्संस्कारपदं सप्तम्यंततया विभागेनात्र सूत्रेऽनुवर्त्यमिति सूचितम् ॥ ३७ ॥

सूत्रभाष्यम्—

॥ ॐ श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ॐ ॥ ३८ ॥

'श्रवणे त्रपुजतुभ्यां श्रोत्रपरिपूरणम् । अध्ययने जिह्वाच्छेदः । अर्थावधारणे हृदयविदारणमि'ति (गौ. ध. १२–४...७) प्रतिषेधात् ।

'नाग्निर्न यज्ञश्शूद्रस्य तथैवाध्ययनं कुतः ।
केवलैव तु शुश्रूषा त्रिवर्णानां विधीयत' इति स्मृतेश्च ।

विदुरादीनां तु उत्पन्नज्ञानत्वात्काश्चिद्विशेषः ॥ ३८ ॥

॥ इति अपशूद्राधिकरणम् ॥ ९ ॥

तत्वप्रकाशिका—

ननु श्रुतावब्राह्मणमात्रस्यानुपनयनाभिप्रायप्रतीतेः कथं शूद्रत्वाभावेत्यसूत्रयद-भाषत च । ब्राह्मणपदेन ब्रह्माणनयोग्यानां त्रैवर्णिकानामुक्तेः । शूद्रो वेदविद्याधि-कारी विशिष्टबुद्ध्यादिमत्त्वात् द्विजवत् । अन्यथा विशिष्टबुद्ध्यादिमत्त्वेन देवता-धिकारसिद्धिर्न स्यादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ श्रवणेति ॥ न विशिष्टबुद्ध्यादिमत्त्वेन शूद्रस्य वेदाधिकारो वाच्यः । अनिषिद्धत्वे सति विशिष्ट-बुद्ध्यादिमत्त्वस्याधिकारप्रयोजकत्वेन केवलविशिष्टबुद्ध्यादिमत्त्वस्याधिकारासाध-कत्वात् । शूद्रस्य वेदश्रवणाध्ययनार्थावधारणानां श्रुतौ प्रतिषिद्धत्वात् । श्रुतौ शूद्रशब्दाश्रवणाद्वर्णबाह्यविषयोऽसाविति न वाच्यम् । नाग्नि यज्ञः शूद्रस्य' इति स्मृतौ शूद्रस्यैव स्पष्टनिषेधाच्छ्रुतेरपि तदर्थत्वोपपत्तेः । अतोऽनिषिद्धत्वे सति विशिष्टबुद्ध्यादिमत्त्वं व्यावर्तमानं शूद्रात्स्वव्याप्यं वेदाधिकारं च व्यावर्तयतीति भावः । ननु शूद्रस्य वेदार्थावधारणादेर्निषिद्धत्वे कथं विदुरधर्मव्याधादीनां वैदिका-र्थावधारणमस्ति । संस्काराभावेनानधिकारे च कथं कर्णोऽक्षत्रसंस्कारयुतोऽखिलाः श्रुतीरधिजगौ । न च वाच्यमसावपवादविषय इति । अविहितोपनयनानामेव वेदाधिकारिणामपवादविषयत्वसंभवादित्यत आह ॥ विदुरादीनामिति ॥ तेषां पूर्व-जन्मन्युत्पन्नापरोक्षज्ञा(न)नित्वेनेतरशूद्रादिभ्यो विशिष्टत्वात् वेदार्थावधारणादि न निषिद्धमिति भावः । अतो हरिः शूद्राद्यैर्वेदविद्याविज्ञेयो न भवतीति सिद्धम् ॥ ३८ ॥ अ० ९ ॥

भावदीपः—

॥ ॐ श्रवणाध्ययन० ॐ ॥ ३८ ॥ ब्रह्माणनेति ॥ आर्जवं ब्राह्मणे साक्षाच्छूद्रो नार्जवलक्षणः । गौतमस्त्विवति विज्ञाय सत्यकाममुपानयदिति श्रुतिव्याख्यानरूपस्मृतौ ब्राह्मणप्रतियोगित्वेन शूद्रस्योक्तेः श्रुतावपि ब्राह्मणशब्दो वेदाध्ययनयोग्यत्रैवर्णिकपर इत्यर्थः । हेतोरप्रयोजकत्वं निराह । अन्यथेति ॥ भाष्यं योजयितुं साध्यं पूरयति

॥ न विशिष्टेति ॥ परोक्तहेतोरप्रयोजकत्वं वक्तुं प्राग्देवतानयोक्ताधिकारप्रयोजकं हेतुं स्मारयित्वा शूद्रे तादृशप्रयोजकाभावपरतया भाष्यं व्याचष्टे ॥ अनिषिद्धत्वे सतीति ॥ यस्त्वया प्रयुक्तः स त्वप्रयोजकः यस्तु प्रयोजकत्वेन वेदाधिकारे विवक्षितः स तु शूद्रे नास्ति विशेषणाभावादिति भावः । स्मृत्युक्तेरुपयोगमाह ॥ श्रुताविति ॥ अविहितेति ॥ अविहितोपनयनत्वे सत्यनिषिद्धाध्ययनानामुत्तमस्त्रीतिर्यगादीनामेवापवादविषयता । न तु निषिद्धाध्ययनानामित्यर्थः । एवं चेत्सच्छूद्रादौ मुक्त्यभाव इति शंकां निरस्यन्नुपसंहरति ॥ अत इति ॥ रथरूपलिंगेन क्षत्रिये शूद्रशब्दस्य यौगिकतया लिंगदर्शनाभावेन संस्कारशून्यत्वेन । गौतमप्रवृत्तिरूपलिंगदर्शनेन निषिद्धत्वेन च शूद्रस्याधिकाराभावादित्यर्थः ॥ वेदेति ॥ ज्ञेयो न वेदैः शूद्राद्यैरिति संक्षेपभाष्योक्तेरिति भावः । वेदेत्युक्त्या स्त्रीशूद्रब्रह्मबंधूनां तंत्रज्ञानेऽधिकारितेत्यादेर्वेदादन्येन ज्ञेय इति दर्शितम् । फलं तु प्रागेवोक्तमिति भावः ॥ ३८ ॥ अ० ९ ॥

सूत्रभाष्यम्––

'यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतम् ।
महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ती(क. उ. २–३–२)

त्युद्यतवज्रज्ञानान्मोक्षः प्रतीयत (श्रूयत) इत्यतोऽब्रवीत् ।

॥ ॐ कम्पनात् ॐ ॥ ३९ ॥

एजतीति कम्पनवचनादुद्यतवज्रो भगवानेव । 'को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यादि (तै. उ. २–७)ति हि श्रुतिः । 'प्राणस्य प्राणमुत चक्षुषश्चक्षुरि'ति (बृ. उ. ६–४–१८) च ।

'नभस्वतोऽपि सर्वाः स्युश्चेष्टाः भगवतो हरेः ।
किमुतान्यस्य जगतो यस्य चेष्टा नभस्वत' इति (च) (हि) स्कान्दे ॥

'चक्रं चङ्क्रमणादेष वर्जनाद्वज्र(म्) उच्यते ।
खण्डनात्खड्ग एवैष हेतिनामा स्वयं हरिरिति ब्रह्मवैवर्ते ॥ ३९ ॥

॥ इति कम्पनाधिकरणम् ॥ १० ॥

तत्त्वप्रकाशिका——

अत्र लोकप्रसिद्ध्या भगवल्लिंगेन च साधारणवज्रनाम्नो हरौ समन्वयप्रतिपादनादस्ति शास्त्रादिसंगतिः । श्रुत्यादिसंगतिं विषयादिकं च सूचयति ॥ यदिद्मिति ॥ तमेवं विद्वानित्यादौ भगवज्ज्ञानादेव मोक्ष इत्युक्तम् । काठके तु यदिदं किंचेति वज्रज्ञानान्मोक्षः श्रूयते । तस्य च विष्णोरन्यत्वेऽन्यज्ञानान्मो(क्षापत्ते)क्षोपपत्तेरवश्यं निर्णयत्वम् । स वज्रोऽत्र विषयः । किं विष्णुरिन्द्रायुधं वेति संदेहः । उक्तसाधारण्यं संदेहबीजम् । इन्द्रायुधमेवेदं वज्रमिति पूर्वः पक्षः । वज्रश्रुतेस्तत्र रूढत्वादुद्यतत्वलिंगाच्च । तद्धि आयुध एवोपपद्यते । न च वज्रज्ञानेन मोक्षोक्तेर्विष्णुरिति वाच्यम् । लिंगमात्रात् श्रुतिलिंगयोः प्राबल्यात् । न च लिंगस्य निरवकाशतया प्राबल्यम् । श्रुतिलिंगयोरपि तथात्वात् । अतो वज्रमिन्द्रायुधमेवेति न विष्णुज्ञानादेव मोक्ष इति भावः । यत्किं च सर्वं जगत्प्राणे स्थितं प्राणान्निःसृतं तदिदं जगद्यस्मादेजति यत्प्रेरणया चेष्टते तन्महद्भयंकरं वज्रं ये विदुस्तेऽमृता भवन्तीत्यर्थः । प्राणः सर्वमिदं किं च जगच्च यस्मान्निःसृतं चेष्टते चेति वा । सर्वं जगद्यस्मान्निःसृतं स प्राणो यस्माच्चेष्टत इति वा । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ अयं वज्रो भगवानेव । वज्रस्य सर्वजगच्चेष्टकत्वश्रवणात् । न चोद्यतत्वलिंगविरोधः । उद्यमित्वार्थतयोपपत्तेरिति भावः । लिंगमात्रेण कथमयं निश्चयः । लिंगस्य निरवकाशत्वादेवेत्याह ॥ को हीति ॥ यदा सामान्यतो जगच्चेष्टकत्वमेव विष्ण्वेकनिष्ठं तदा सुतरां वज्रस्योक्तं सर्वप्रवर्तकप्राणचेष्टकत्वं तदेकनिष्ठमिति भावेनाऽऽह ॥ प्राणस्येति ॥ ननूद्यतत्वलिङ्गस्य सावकाशत्वेऽपि वज्रश्रुतेर्निरवकाशत्वान्निरवकाशेनापि लिंगेन कथं निर्णय इत्यतः श्रुतेरपि विष्णाववकाशं स्मृत्या दर्शयति ॥ चक्रमिति ॥ न च योगस्य रूढेर्दौर्बल्यादनिर्णय इति वाच्यम् । स्मृत्युक्तत्वेन विद्वद्रूढेरपि सत्त्वात् । आयुधानामहं वज्रम् । वज्रं प्रहरणोत्तमम् इति च । नन्वेवं सावकाशत्वे श्रुतिलिंगयोर्य एतद्विदुरित्युक्तलिंगं विहाय किं लिंगांतरग्रहणेन । मैवम् । तदविहायैव लिंगांतरस्याप्युक्तत्वात् । एतदन्यत्राप्यनुसंधेयम् । अतो विष्णुरेव वज्र इति तज्ज्ञानादेव मोक्ष इति सिद्धम् ॥ ३९ ॥ अ० १० ॥

भावदीपः——

॥ ॐ कंपनात् ॐ ॥ ३९ ॥ न्यायविवरणेऽनुक्तेर्भाष्यदिशा स्वयं साधारण्यमाह ॥ लोकेति ॥ एवं हि प्राणाकाशाद्याद्यपादीयनाम्नामप्येवं स्यादिति चोद्यनि-

रासादि तु चंद्रिकायां व्यक्तम् । संगतिपरत्वेन तावद्भाष्यं व्याचष्टे ।। तमेवमिति ।। नेतरोऽनुपपत्तेरिति सूत्रभाष्ये उक्तमित्यर्थः । शेषोऽयम् । उद्यतवज्रेति पदद्वयभावमाह ।। तस्य चेति ।। वज्रश्रुतेरुद्यतत्वलिंगाच्चेंद्रायुधत्व इत्यर्थः । अध्याहृतवाक्यभावमाह ।। अन्यज्ञानेति ।। इतिसंगतिसंभवान्निर्णेयत्वं तस्येत्यन्वयः । पूर्वपक्षतद्युक्तितत्फलोक्तिपरत्वेनापि भाष्यं व्याचष्टे ।। इंद्रायुधमिति ।। वज्रशब्द उद्यतत्वलिंगं चेति तादृग्द्वयमिति न्यायविवरणानुरोधेनोद्यतवज्रेति पदद्वयं श्रुतिलिंगरूपयुक्तिपरत्वेन व्याचष्टे ।। वज्रश्रुतेरिति ।। योगवृत्त्या श्रुतिर्विष्णावस्त्वित्यत आह ।। तत्र रूढत्वादिति ।। तथात्वे सर्वशब्दानां सर्वत्र यौगिकत्वसंभवेनाव्यवस्थानात् प्राणाकाशादिशब्देष्वपि हरौ योगवृत्तिरिह पूर्वपक्षे न सम्मतेति भावः । लिंगस्यापि निरवकाशत्वमाह ।। तद्धीति ।। तेनेंद्रो वज्रमुद्यच्छन् । उद्यतायुधदोर्दंडा इत्यादावायुधे प्रसिद्धत्वादिति हेरर्थः । श्रुतिलिंगो नयोक्तेरुपयोगं वक्तुमाह ।। न चेति ।। द्वयोरपि निरवकाशत्वोक्तेः फलमाह ।। न च लिंगस्येति ।। एतेन तादृग्द्वयमित्येतद्विवृतं ध्येयम् । फलोक्त्योपसंहरति ।। अत इति ।। निरवकाशश्रुतिलिंगभावादित्यर्थः । श्रुतित्वनिरवकाशत्वाभ्यां प्रबलवज्रश्रुत्यैव निरवकाशस्वभावदुर्बललिंगबाधः सुशकः । तथाप्यभ्युच्चयतया लिंगोक्तिः कंपकत्वरूपसिद्धान्तलिंगस्य वज्रनिष्ठताद्योतनाय । प्राणाख्ये तु हरौ सर्वमेजत्यस्माच्च निःसृतम् । वज्रवद्भयदं चैव स्वधर्मस्यातिलंघन इति काठकभाष्यानुरोधेन को हीति वक्ष्यमाणवाक्यानुगुणं श्रुत्यर्थमाह ।। यत्किंचेति ।। स्थितमित्युक्त्या तद्भाष्योक्तस्मृतावपि शेष इति दर्शितम् । स्मृतावस्मादिति पदं पूर्वत्रोत्तरत्र चान्वेतीति मत्वा श्रुतौ प्राणपदस्याऽऽवृत्तिविपरिणामाभ्यामर्थमाह ।। प्राणादिति ।। यदित्युक्तिलब्धोक्तिस्तदिति । यदित्यस्याऽऽवृत्त्या वा यत्तच्छब्दावध्याहृत्य वाऽर्थमाह ।। यस्मादिति ।। प्राणस्य प्राणमिति वक्ष्यमाणश्रुत्यनुरोधेन क्रमेणार्थांतरद्वयमाह ।। प्राण इत्यादिना ।। यद्वा द्वितीयोऽपि को हीति वाक्यानुगुणः । तृतीयस्तु प्राणस्येत्यादिश्रुतिस्मृत्यनुगुण इति ध्येयम् ।। छ ।। एजतीत्यादिभाष्यं व्याचष्टे ।। अयमिति ।। प्रागुक्तमाद्यं श्रुत्यर्थमुपेत्याह ।। वज्रस्येति ।। उद्यमित्वमेवोद्यतत्वमिति न्यायविवरणदिशोद्यतवज्र इत्युक्तोद्यतपदप्रयोगतात्पर्यमाह ।। न चेति ।। उत्पूर्वस्य यतीप्रयत्न इत्यस्य कर्तर्यकारप्रत्यये सति उद्यतः उत्कृष्टप्रयत्नवानित्यर्थ इत्यर्थः । को हीति श्रुत्यर्थस्तु तद्धेतुसूत्रे प्रागेवोक्त इति भावः ।। सर्वप्रवर्तकेति ।।

यद्यपि श्रुतौ प्राजमिति द्वितीयांतद्वितीयप्राणस्य प्राणादयो वाक्यशेषादित्यग्रे वक्ष्यमाणदिशा विष्णुत्वेऽपि प्राणस्येत्यस्य न सर्वप्रवर्तकत्वं श्रुतम्। तथा नभस्वत इति स्मृत्यनुरोधात् यस्मिन्पंच पंचजना इति प्रतिशरीरस्थत्वोक्त्या सर्वप्रवर्तकत्वमार्थिकमित्यभिप्रेत्य सर्वप्रवर्तकप्राणेत्युक्तम्। वज्रशब्दस्योद्यतत्वस्य च विष्णावेवावकाश इति न्यायविवरणे द्वयोः सावकाशत्वमुक्त्वा उद्यमित्वमेवोद्यतत्वमिति लिंगस्य तद्विवृतम्। श्रुतेः सावकाशत्वस्य तत्राविवृतत्वाच्चक्रमित्यादिभाष्यं श्रुतेः सावकाशत्वविवरणपरतया व्याख्यामि ॥ नन्वित्यादिना ॥ वर्जनात्सर्वदोषवर्जनादिति स्मृतावर्थः। यत्तु काठकभाष्ये वज्रवद्दुर्दमं चेति गौणत्वमुक्तं तत्तावताऽपि तद्वाक्यस्य ब्रह्मपरत्वसिद्धेः। इह तु समन्वयसूत्रे प्रतिज्ञातमुख्यार्थत्वाय योग एवोक्त इत्युक्तं चंद्रिकायाम्। अत एव भाष्यद्वये श्रुतेः सावकाशताया द्वेधा विवृतत्वान्न्यायविवरणेनैतद्विवृतम्। स्मृत्या योगप्रदर्शनस्य कृत्यमाह ॥ न चेत्यादिना ॥ विद्वद्रूढेरिति ॥ विद्वद्रूढिर्वैदिका स्यात्सा योगादेव लभ्यत इत्युक्तेरिति भावः। एतच्च कर्मनिर्णयटीकायां रूढियोगौ विना कश्चिन्नैवार्थो वेदगो भवेदित्यस्य न केवलं रूढो नापि केवलयौगिकोऽस्तीत्यर्थ इतीतरेतरद्वंद्वमाश्रित्य रूढियोगरूपवृत्तिद्वयसमुच्चयपरत्वेन व्याख्यातत्वात्तदनुरोधेन रूढिमपि वक्तुमुक्तम्। वस्तुतस्तु। श्रुत्यर्थनिर्णयार्थत्वात्स्मृतेस्तत्र निरूपितोऽर्थो ग्राह्यो वेदवाक्ये तदभावे तु लौकिक इति चंद्रिकोक्तदिशा केवलश्रौतस्मार्तयोगस्यापि निरवकाशत्वेन अज्ञरूढितोऽपि प्राबल्यम्। अन्यथा स्मृत्यादौ वैदिकपदानां योगोक्तिरनर्था स्यादिति ध्येयम्। न केवलमार्थिकी रूढिः प्रयोगसिद्धा चेति भावेन प्रयोगमाह ॥ आयुधानामिति ॥ गीतायाम्। वज्रमिति स्थलांतरे ॥ नन्वेवमिति ॥ पूर्वं श्रुतिलिंगयोर्निरवकाशत्व एव अमृतत्वहेतुवेदनत्वलिंगमाक्षिप्तम्। तयोस्सावकाशत्वेनेतर इत्यत्र ब्रह्मधर्मतया निर्णीतस्याक्षेपकाभावात् सिद्धांते साधकं भवत्येवेति भावः ॥ अन्यत्रापीति ॥ शब्दादेवेत्यत्र विश्वदेवोपास्यत्वं अंतस्तद्धर्मेत्यादिष्वदृश्यत्वमहाभोगत्वादिकमित्यर्थः। यथा वाऽऽकाशोऽर्थांतरत्वादीत्यत्र ब्रह्मश्रुतेरत्यागेन लिंगांतरोक्तिः। एवं तत्र तत्र। अत एव चंद्रिकायां आनंदमयनयमारभ्य प्रतिनयं तत्तत्प्रकरणस्थानेकश्रुतिलिंगाद्युपदर्शनं कृतम्। प्रपंचितं चास्माभिः संक्षेपभाष्यविवृतौ प्रतिनयम्। एतेन भूमेत्यत्र पूर्वपक्षिणाऽऽक्षिप्तस्यैव संप्रसादपदोक्तपूर्णसुखत्वस्य भूमा विष्णुरित्यत्र हेतुत्वम्। द्युभ्वाद्यायतनमित्यत्राऽऽक्षिप्तपरविद्याविषयत्वेन प्रकरणादिति प्रकरणस्य वैष्णवत्वोज्जीवनमित्यादि समाहितं ध्येयम्। फलोक्त्योपसंहरति ॥ अत इति ॥ निरवकाशलिंगभावादित्यर्थः। इति हेतोरित्यर्थः ॥ ३९ ॥ अ० १०॥

सूत्रभाष्यम्—

हृदय आहितं ज्योतिः परमात्मेत्युक्तम् । तत्र 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुष' (बृ. उ. ६-३-७) इत्यत्र 'उभौ लोकावनुसञ्चरती' (बृ. उ. ६-३-७) ति वचनाज्जीव इति प्रतीयत इत्यत उच्यते—

॥ ॐ ज्योतिर्दर्शनात् ॐ ॥ ४० ॥

'विष्णुरेव ज्योतिर्विष्णुरेव ब्रह्म(।) विष्णुरेवाऽऽत्मा विष्णुरेव बलं विष्णुरेव यशो विष्णुरेवाऽऽनन्द' इति दर्शनाच्चतुर्वेदशिखायां ज्योतिर्विष्णुरेव । 'प्राज्ञेनाऽऽत्मनाऽन्वारूढ उत्सर्जद्याती' (बृ. उ. ६-३-३५) ति वचनात्तस्यापि लोकसञ्चरणमस्त्येव ॥ ४० ॥

॥ इति ज्योतिरधिकरणम् ॥ ११ ॥

तत्वप्रकाशिका—

अत्र जीवेशयोर्ज्ञानरूपत्वेन हृदयाहितत्वेन च साधारणस्य ज्योतिर्नाम्नो विष्णौ समन्वयप्रतिपादनादस्ति शास्त्रादिसंगतिः । श्रुत्यादिसंगतिं विषयादिकं च दर्शयति ॥ हृदय इति ॥ 'ज्योतिश्चरणाभिधानात्' इति हृदयाहितं ज्योतिः परमात्मेत्युक्तम् । वाजसनेयके च तच्छ्रूयते ॥ योऽयमिति ॥ तच्च यदि विष्णोरन्यत्स्यात्तदा पूर्वोक्तमप्यन्यत्प्रसज्यत इत्यवश्यं निर्णेयम् । तज्ज्योतिर्विषयः । किं विष्णुर्जीवो वेति संदेहः । उक्तसाधारण्यं संदेहबीजम् । जीव एवेदं ज्योतिरिति पूर्वः पक्षः । 'स समानः सन्नुभौ लोकावनुसंचरती'ति जीवलिंगात् । तस्य हि कर्मवशादुभयलोकसंचरणं युक्तम् । 'इमं लोकमतिक्रामति मृत्यो रूपाणि' 'स वा अयं पुरुषो जायमानः शरीरमभिसंपद्यमानः पाप्मभिः संसृज्यते । स उत्क्रामन् म्रियमाणः पाप्मनो विजहाति' । 'उभयानपि पाप्मन आनंदांश्च पश्यति स यत्र प्रस्वपिति' । स्वप्नान्त उच्चावचमीयमानो' 'भयानि पश्यन्' इत्यादि जीवलिंगाच्च । किं च 'किं ज्योतिरयं पुरुष इत्यादित्यज्योतिः सम्राडिति होवाचे'त्यादिना यस्य पुरुषस्याऽऽदित्यादिज्योतिष्ट्वमुक्तं तस्यैव 'आत्मैवास्य ज्योतिर्भवती'ति सु(षु)प्त्यादावात्मज्योतिष्ट्वोक्तौ 'कतम आत्मे'ति तदात्मप्रश्ने ज्योतिरुच्यते । न ह्यादित्यादिज्योतिष्ट्वं विष्णोः संभवति । न तत्र सूर्यो भातीत्यादेः । न च वाच्यं यस्यादित्यादिज्योतिष्ट्वमुक्तं स जीव एवास्तु तस्य चात्मैवास्येत्यत्र परमात्मज्योतिष्ट्वमुच्यते । तदात्मप्रश्ने च ज्योतिराम्नानात् परमात्मैव ज्योतिरिति । जीवस्य परमात्मज्योतिष्ट्वस्यैवा-

योगात्। तथात्वे परमात्मनोऽस्तमयादिशून्यस्य जाग्रत्यपि ज्योतिष्ट्वप्राप्त्या तदा 'आदित्येनैवायं ज्योतिषाऽऽस्ते' 'चन्द्रमसैवायं ज्योतिषाऽऽस्ते' इत्यवधारणानुपपत्तेः। तदा विशिष्याऽऽत्मज्योतिष्ट्वोक्त्यनुपपत्तेश्च। अत्रायं पुरुषः स्वयं ज्योतिर्भवतीत्यस्यैवार्थस्य प्रत्यभिज्ञानाच्च। अतो जीव एवेदं ज्योतिरिति प्रागुक्तमपि स एवेति भावः। सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ विष्णुरेवेदं ज्योतिर्न तु जीवः। ज्योति श्रुतेर्विष्ण्वैकवाचित्वश्रवणादित्यर्थः। ज्योतिर्विष्णुश्चेदुभयलोकसंचरणलिंगविरोध इत्यत आह ॥ प्राज्ञेनेति ॥ जीवमादायेश्वरस्यैवोभयलोकसंचरणोक्तेर्न तद्विरोध इत्यर्थः। न चेमं लोकमतिक्रामति मृत्यो रूपाणीत्याद्युक्तलिंगविरोधः। द्रष्टुश्चक्षुष इत्यादिवदन्तर्गतलिंगत्वेनोपपत्तेः। न चादित्यादिज्योतिष्ट्वविरोधः। आदित्यादिज्योतिष्मतोऽयं पुरुष इत्युक्तस्य जीवत्वेनाभ्युपगमात्। न च तस्यैव स्वयंज्योतिष्ट्वेनोक्तस्य ज्योतिष्ट्वमुच्यत इति वाच्यम्। 'आत्मैवास्य ज्योतिर्भवती'ति 'कतम आत्मा' इत्यात्मशब्दोदितस्य विष्णुत्वात्। न चैवं सत्यवधारणविरोधः। अवधारणस्य बाह्यज्योतिषां मध्ये सूर्यादीनां प्राधान्यज्ञापनार्थत्वेनोपपत्तेः। अन्यव्यावर्तकत्वस्य वागादिसत्त्वेनायोगात्। न च विशिष्योक्तिविरोधः। ज्योतिरन्तराभावाभिप्रायेणोपपत्तेः। तदुक्तम्। भावेऽभावेऽपि सूर्यादेर्जीवानां विष्णुरेव हि। ज्योतिस्तथाप्यभावे तु तज्ज्ञेयं हि विशेषतः ॥' इति। न च प्रत्यभिज्ञाविरोधः। 'अत्रायं भगवान्विष्णुर्जीवस्य स्वयमेव तु। ज्योतिर्विशेषतो भूयान्नैवान्यज्ज्योतिरत्र यत्' इत्युक्तरीत्योपपत्तेः। नन्वेवं बाधकाभावात्कथं लिंगानामन्यार्थता श्रुतिमात्रस्य बहुलिंगानुसारेणामुख्यार्थत्वोपपत्तेरिति। मैवम्। जीवपक्षे बहुबाधकसद्भावात् प्रसिद्धत्वेन 'कतम आत्मा' इति प्रश्नायोगात् सुखदुःखविशेषवत्त्वेनोभयलोकसञ्चरणे समानत्वायोगत् स्वाप्नपदार्थकर्तृत्वाभावात्स्वप्नेन शारीरमित्यादिमन्त्रासङ्गतेश्च। तस्मादिदं प्रागुक्तं च ज्योतिर्विष्णुरेवेति सिद्धम् ॥ ४० ॥ अ० ११ ॥

भावदीपः—

॥ ॐ ज्योतिर्दर्शनात् ॐ ॥ ४० ॥ अत्र न्यायविवरणे साधारण्यबीजानुक्तेः योऽयमिति भाष्योक्तवाक्यानुरोधेन द्वेधा साधारण्यं स्वयमाह ॥ अत्र जीवेति ॥ ज्योतिःपदप्रवृत्तिनिमित्तं हि प्रकाशत्वं ज्ञानत्वमपि प्रकाशत्वमेवेति भावः। अग्न्यादौ ज्योतिःपदप्रसिद्धावपि इह तस्य पूर्वपक्षकोटित्वाप्रसक्तेः प्रवृत्तिनिमित्तसाम्यमेवोक्तम्। संगतिपरतया भाष्यं व्याचष्टे ॥ ज्योतिरिति ॥ तत्रेत्येतत्प्रथमांतं व्याचष्टे।

तच्छ्रूयते इति ॥ षष्ठेऽध्याये ज्योतिर्ब्राह्मणे योऽयमित्यत्र वाक्य इत्यर्थः । उभौ लाकावित्यादेस्तात्पर्यं तच्चेति । उभयलोकसंचरणाद्यदि जीवः स्यादित्यर्थः । उक्तमित्यन्तस्य तात्पर्यमाह ॥ तदेति ॥ इतिसंगतिसंभवादित्यर्थः । पूर्वपक्षतद्युक्त्यादिपरतयाऽपि भाष्यं व्याख्यातुं तत्र तत् जीव इति षष्ठेऽध्याये प्रतीयत इति प्रतिज्ञार्थमाह ॥ जीव एवेति ॥ संचरतीत्यत्र कर्तृवाचकं दर्शयन्नुभावित्यादिभाष्यं व्याचष्टे । ॥ स समान इति ॥ निराकांक्षाणि पदानि वाक्यमित्युक्तदिशाऽस्य वाक्यत्वेऽपि तद्बोध्यस्यासाधारणधर्मत्वाल्लिंगादित्युक्तम् । आदित्यादिज्योतिष्ट्वमुभयलोकसंचरणं आदित्येनैवाऽयं ज्योतिषाऽऽस्त इत्यवधारणमित्यादीनां परमात्मन्यवकाशाभावो बहु तादृक्त्वमिति न्यायविवरणोक्तमनवकाशत्वमस्य व्यनक्ति ॥ तस्य हीति ॥ ब्रह्म तु कर्मातीतं अन्यत्र धर्मादन्यत्राधर्मादित्यादेः । भूमा संप्रसादादित्यत्रोक्तदिशोत्क्रमणक्रियावदणुत्वयुक्ते हरौ संचरणक्रियोपपत्तावपि कर्माधीनं यदुभयलोकसंचरणं तज्जीव एव युक्तं न तु हराविति भावः । भाष्यमुपलक्षणं मत्वाऽन्यत्रोक्तादिपदोपात्तलिंगानि चाह ॥ इममिति ॥ पृथिवीलोकं मृत्युसाधनमिति वा मृत्युसाधनानि चेति वाऽऽम्नोतीत्यर्थः । जीवरयानादिनित्यत्वाज्जायमानत्वम्रियमाणत्वे व्यनक्ति । शरीरमभिसंपद्यमान उत्क्रामन्निति च । उभयानित्यस्य व्याख्या पाप्मनः पापफलानि दुःखानि पुण्यफलान्यानंदांश्च पश्यत्यनुभवतीति । स्वप्नान्ते स्वप्नदेशे ईयमानः प्राप्नुवन् । लिंगानां हरावनवकाशत्वं स्पष्टमिति भावः । आदित्यादिज्योतिष्ट्वमितीममंशं अन्यत्रोक्तं आत्मैवास्य ज्योतिरित्यत्र इदंशब्दस्य जीवार्थत्वसाधकतया व्यनक्ति ॥ किं चेति ॥ अयं पुरुषः जीवः किं ज्योतिः ज्ञानसाधनं यस्येति व्युत्पत्त्या जनकराजेन जीवस्य ज्ञानसाधने पृष्टे सति याज्ञवल्क्यः आदित्यज्योतिः सम्राडिति होवाचेत्युत्तरमुक्त्वा आदित्येनैवाऽयं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीत्युपपाद्य अस्तमित आदित्ये किं ज्योतिरेवायं पुरुष इति चंद्रमा एवास्य ज्योतिर्भवतीत्यादिना आदित्यचंद्राग्निवाचां पूर्वपूर्वास्तमये उत्तरोत्तरस्य ज्ञानसाधनत्वरूपं ज्योतिष्ट्वं प्रश्नोत्तराभ्यां यस्य जीवस्य जाग्रद्दशायामुक्तं तस्यास्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शांतेऽग्नौ शांतायां वाचि किंज्योतिरयं पुरुष इति प्रश्ने आत्मैवास्य ज्योतिर्भवतीति सुप्तिस्वप्नयोः स्वप्रकाशत्वरूपात्मज्योतिष्ट्वोक्तौ कतम आत्मेति ज्योतिष्ट्वेनोक्तात्मविषयप्रश्ने कृते सति योऽयं विज्ञानमयः प्राणेषु हृद्य तज्ज्योतिरित्युच्यत इत्यर्थः । अस्य लिंगस्यान्यत्रोक्तं हरावनवकाशत्वं व्यनक्ति ॥ न हीति ॥

न तत्रेत्येतद्विष्णुपरमित्यनुकृतिनये व्यक्तम् । एवं लोकसंचरणादेरादित्यादिज्योतिष्ट्वस्य चानवकाशत्वमुपपाद्य आदित्येनैव ज्योतिषाऽऽस्ते इत्यवधारणमित्यंशमात्मपदस्य स्वरूपार्थकत्वसाधनपरतया व्याख्यातुमाह ॥ न च वाच्यमिति ॥ तदा जाग्रद्दशायामित्यर्थः ॥ अवधारणानुपपत्तेरिति ॥ किं त्वादित्येन ज्योतिषेति वा आदित्येन चेति वा स्यादित्यर्थः । तदा सुप्त्यादिदशायामित्यर्थः । परमात्मनोऽस्तमयादिशून्यस्य जाग्रत्यपि ज्योतिष्ट्वप्राप्त्येत्यनुकर्षः । एतेनावधारणमित्यादीनामिति न्यायविवरणस्थादिपदस्योक्तरूपयुक्त्यंतरसंग्राहकत्वरूपमर्थांतरमुक्तं भवति । नन्वात्मशब्दस्य परमात्मार्थत्व इव स्वरूपार्थत्वेऽप्यवधारणस्य विशिष्य सुप्त्यादौ स्वयं ज्योतिष्ट्वोक्तेश्चानुपपत्तिसाम्यात् जीवस्यापि स्वगतज्ञानहेतुस्वरूपस्यात्मज्योतिष्ट्वस्य सुप्त्यादाविव जाग्रत्यपि सत्त्वात् ब्रह्मैव कुतो नाऽऽत्मेत्यतोऽन्यत्रस्थाऽऽदिपदोक्तयुक्त्यंतरेणात्मपदस्य स्वरूपार्थत्वमाह ॥ अत्रायं पुरुष इति ॥ आत्मप्रश्नोत्तरोपसंहारपरे अत्रायं पुरुषः स्वयंज्योतिरिति वाक्येऽभिहितार्थस्येहस्वयंशब्दपर्यायात्मशब्देन प्रत्यभिज्ञानादात्मशब्दः स्वरूपपरो न परमात्मपर इत्यर्थः । फलोक्त्योपसंहरति ॥ अत इति ॥ निरवकाशलिंगादिभावादित्यर्थः । उक्तमित्यंतभाष्यतात्पर्यं प्रागुक्तमिति ॥ छ ॥ विष्णुरेवेत्यंतभाष्यमाकांक्षाक्रमेण व्याख्याति ॥ विष्णुरेवेति ॥ प्राज्ञेनेति श्रुतौ जीवः प्राज्ञेनान्वारूढः प्राक्तनदेहं त्यजन्यातीति जीवस्यैव संचरणप्रतीत्या श्रुतेः प्रकृतानानुगुण्यं निरस्यँल्लोकसंचरणं तु जीवमादाय तस्यैवादुःखेन स्वातंत्र्यादिति न्यायविवरणानुरोधेन भाष्यं व्याचष्टे ॥ जीवमादायेति ॥ बृहदारण्यकभाष्योक्तं समाधिमाह ॥ द्रष्टुरिति ॥ दर्शयितुरित्यर्थः । एतेनेमं लोकमतिक्रामयति जनयति मारयतीत्यादिरूपेण विषयवाक्ये अर्थो दर्शितः । अयं पुरुष इति संसारी आत्मशब्दोदित एव विष्णुः । अत आदित्यादिज्योतिष्ट्वं संसारिण एव आदित्येनैवेत्यवधारणं बाह्यज्योतिष्षु प्राधान्यापेक्षया इत्यादिन्यायविवरणं भिन्नभिन्नशंकानिरासकतया खंडशोऽत्र योजयति ॥ न चादित्यादीत्यादिना ॥ उच्यते आत्मैवाऽस्येति वाक्य इत्यर्थः । अन्यत्रोक्तादिपदोपात्तयुक्तिं वक्तुं तदा विशिष्येत्यादिना प्रागुक्तमनुवदति ॥ न च विशिष्येति ॥ तदुक्तमिति ॥ वाजसनेयभाष्य इत्यर्थः तद्भाष्यरीत्यैवाऽऽदिपदोक्तं युक्त्यंतरं प्रागुक्तशंकानिवर्तकतयाऽऽह ॥ न च प्रत्यभिज्ञेति ॥ उक्तरीत्येति ॥ अत्र सुप्त्यादावयं पुरुषो विष्णुर्जीवस्य स्वयं ज्योतिरित्युपसंहारस्य स्मृत्यैव व्याख्यानेन आत्मापि विष्णुरेवेत्युपपत्तेरित्यर्थः । बृहद्भाष्योक्तजीवपरत्वबाधकान्यपि न्यायविवरणस्थादि-

पदसंगृहीतानीति भावेन तानि शंकोत्तराभ्यां विशदयति ॥ नन्वेवमिति ॥ श्रुतिमात्रस्य ज्योतिःश्रुतिमात्रस्येत्यर्थः । विष्णुरेवेदंज्योतिरिति श्रुत्या विष्णौ मुख्यः स्यादपीत्यर्थः ॥ स्वाप्नेति ॥ अथ रथान् रथयोगान्पथः सृजत इत्यादिनोक्त इत्यर्थः ॥ स्वप्नेनेति ॥ स्वप्नेन शारीरमभिप्रहृत्यासुप्तः सुप्तानभिचाकशीतीत्याद्युदाहृतमंत्रे जीवस्य स्वप्नसंबंधं कृत्वा स्वयमसुप्त एव तान्पश्यतीत्युक्तार्थस्य जीवेऽनुपपत्तेरित्यर्थः । फलोक्त्योपसंहरति ॥ तस्मादिति ॥ ज्योतिःश्रुतिरूपसाधकभावात् बाधकाभावात् जीवपरत्वे बहुबाधकभावाच्चेत्यर्थः ॥ ४० ॥ अ० ११ ॥

सूत्रभाष्यम्––

सर्वाधारत्वं विष्णोरुक्तम् । त'च्चाकाशो वै नाम नामरूपयोर्निर्वहिते' (छा. उ. ८–१४–१) त्यत्राऽऽकाशस्य प्रतीयते । वै नामेति प्रसिद्धोपदेशात् । प्रसिद्धाकाशश्चाङ्गीकर्तव्य इत्यत उच्यते––

॥ ॐ आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॐ ॥ ४१ ॥

'ते यदन्तरा तद्ब्रह्मे' (छा. उ. ८–१४–१) त्यर्थान्तरत्वादिव्यपदेशादाकाशो हरिरेव । 'अवर्णं' (अवर्णमचक्षुश्श्रोत्रम्' इत्याद्याथर्वणी श्रुतिः) 'यतो वाचो निवर्तन्त' (तै. उ. २–४) इत्यादिश्रुतेस्तस्यैव हि तल्लक्षणम् ।

'अनामा सोऽप्रसिद्धत्वादरूपो भूतवर्जनादि'ति (हि) ब्राह्मे ॥ ४१ ॥

॥ इति आकाशाधिकरणम् ॥ १२ ॥

तत्वप्रकाशिका––

अत्र प्रयोगवशाद्गगने भगवति च साधारणस्याकाशनाम्नो हरौ समन्वयप्रतिपादनादस्ति शास्त्रादिसंगतिः । श्रुत्यादिसंगतिं विषयादिकं च सूचयति ॥ सर्वेति ॥ द्युभ्वाद्यायतनं स्वशब्दादित्यादौ सर्वाधारत्वं विष्णोरुक्तम् । तच्छन्दोगश्रुतावाकाशस्य प्रतीयते । आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतमिति । स च विष्णोरितरश्चेत्सर्वाधारत्वमन्यस्य प्रसज्जेत इत्यवश्यं निर्णयः । स आकाशोऽत्र विषयः । किं विष्णुः प्रसिद्धाकाशो वेति संदेहः । उक्तसाधारण्यं संदेहबीजमिति भावः । सयुक्तिकं पूर्वपक्षयति ॥ वै नामेति ॥ अयमाकाशः प्रसिद्ध एव भवेत् । आकाशशब्दस्य तत्र रूढत्वात् । न च वाच्यमा-

काशशब्दस्य विष्णावपि वृत्तेः सावकाश इति । यौगिकत्वात् । योगस्य रूढेर्दौर्बल्यात् । सर्वाधारत्वलिङ्गेन योगोऽप्याश्रीयत इति चेन्न । प्रसिद्धाकाशपरित्यागेनात्र विष्णवङ्गीकारे वै नामेत्युक्तनिपातद्वयविरोधात् । तस्योक्तार्थप्रसिद्धिद्योतकत्वात् । न हि विष्णुस्तन्निर्वहितृत्वं वा प्रसिद्धम् । अतः प्रसिद्धाकाश एवायमिति । तस्य सर्वाधारत्वमिति भावः । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ अयमाकाशो हरिरेव । अस्याकाशस्य ते यदन्तरेति नामरूपराहित्याख्यविलक्षणार्थत्वव्यपदेशात् । 'तद्ब्रह्मेति' ब्रह्मत्वव्यपदेशाच्चेत्यर्थः । अर्थान्तरत्वमिति रूपराहित्यमादिपदेनानामत्वमिति वा ते नामरूपे अन्तरा विना वर्तत इत्यर्थ । अरूपत्वादिलिंगेन कुतो विष्णुत्वनिश्चय इत्यत आह ॥ अवर्णमिति ॥ रूपस्य वाच्यान्तर्भावेन प्राधान्यात् क्रमोल्लङ्घनम् । ननु हरेः कथमनामरूपत्वमुक्तविरोधादित्यत आह ॥ अनामेति ॥ न च विष्णुपक्षे निपातद्वयविरोधः । भगवतो नामादिनिर्वहितृत्वस्यालोकप्रसिद्धत्वेऽपि 'एको दाधार भुवनानि विश्वा'इत्यादिवेदप्रसिद्धत्वेन तदर्थत्वेनोपपत्तेः । अन्यथा अनामरूपत्वविरोधात् । अव(आ)काशस्यापि नाम(रूप)वत्त्वात् । अतोऽयमाकाशो विष्णुरेवेति तस्यैव सर्वाधारत्वमिति स्थितम् ॥ ४१ ॥ अ० १२ ॥

भावदीपः—

॥ ॐ आकाशोऽर्थांतरत्वादिव्यपदेशात् ॐ ॥ ४१ ॥ न्यायविवरणेऽनुक्तेर्भाष्यपर्यालोचनया लब्धं साधारण्यबीजमाह ॥ प्रयोगेति ॥ आकाशस्तल्लिंगादित्याकाशशब्दस्य विष्णौ प्रयोगस्य दर्शितत्वात् गगने च प्रयोगस्य प्रसिद्धत्वादित्यर्थः । यद्वाऽत्र प्रयुक्तवैनामेतिनिपातद्योतितप्रसिद्धेर्व्यावर्त्यत्वेनाप्रसिद्धब्रह्मण्याकाशशब्दप्रयोगस्य पूर्वपक्षिणांऽगीकृतत्वादित्यर्थः । संगत्यर्थतया भाष्यं व्याचष्टे ॥ द्युभ्वादीति ॥ अक्षरमंबरांतधृतेः दहर उत्तरेभ्यः इत्यादावित्यादिपदार्थः । तच्चेत्यादि व्याचष्टे ॥ तच्छंदोगेति ॥ अष्टमान्ते । यद्यपि नामेति शब्दप्रपंचोक्तावपि रूपपदेनात्रावर्णमित्याद्युक्त्या वर्णविशेषोक्तेर्न सर्वाधारत्वलाभः । तथाप्यस्य वाच्यरूपार्थप्रपंचमात्रोपलक्षणत्वमिति भावः । एतेन इत्यत्रेत्येतद्व्याख्यातम् । रूपेत्यर्थमात्रोपलक्षणम् । नामरूपयोः शब्दार्थप्रपंचयोः निर्वहिता निर्वोढा आश्रय इत्यर्थः । ते निर्वाह्यतया प्रकृते प्राकृतनामरूपे अंतरा विना तद्रहितमिति यावत् । साकल्येन नामावाच्यं प्राकृतरूपरहितं च यद्वर्तत इति फलितार्थः । वै नामेत्यादिभाष्यभावमाह ॥ स चेति ॥

वक्ष्यमाणदिशेति भावः । उक्तमित्यंतस्य तात्पर्यं सर्वेति । इतिसंगतिसंभवादित्यर्थः । पूर्वपक्षाद्यपरत्वेनापि व्याख्यातुं पूर्वपक्षतद्युक्तिकथनपरांशमवतार्य प्रसिद्धाकाशश्चांगीकर्तव्य इति प्रतिज्ञातार्थमाह ॥ सयुक्तिकमित्यादिना ॥ प्रसिद्धपदसूचितां युक्तिमाह ॥ आकाशेति ॥ पूर्वेण गतार्थत्वमाशंकते ॥ न चेति ॥ विष्णावपीति ॥ आकाशस्तल्लिंगादित्युक्तन्यायादिति भावः ॥ यौगिकत्वादिति ॥ यच्छब्दायोगवृत्तय इति संक्षेपभाष्योक्तेः । अन्यथा ब्रह्मपदोक्तगुणपूर्त्यसिद्धेस्तदर्थत्वात् समन्वयस्येति भावः ॥ दौर्बल्यादिति ॥ तथा च प्रबलरूढित्यागेन यौगिकग्रहणे निरवकाशानंतत्वादिलिंगादाकाश इति होवाच इत्यादौ यौगिकस्यापि विष्णोर्ग्रहणेऽपीह कारणाभावादिति भावः । कारणमप्यत्राऽऽशंकते॥ सर्वेति ॥ तथा चाऽऽकाशस्तल्लिंगादित्यनेनैव गतार्थमिदमिति भावः । एतदुपसर्जकतयाऽधिकां शंकां वक्तुं वै नामेति प्रसिद्धिद्योतकनिपातद्वयं रूढित्यागेनोक्तयौगिकार्थस्वीकारविरोधीति न्यायविवरणं योजयित्वा वै नामेति भाष्यं योजयति ॥ प्रसिद्धेति ॥ प्रसिद्धाकाशश्चांगीकर्तव्य इत्युक्तिलब्धमेतदापादकम् । तस्येत्यादि तु भाष्ययोजना । तद्धि निपातद्वयम् । य आकाशः प्रसिद्धः स नामरूपनिर्वहितेत्युद्देशेन वाऽन्वितं स्यात् । य आकाशः स नामरूपनिर्वहिता वै नाम तस्य नामरूपनिर्वोढृत्वं प्रसिद्धमिति विधेयेन वाऽन्वितं स्यात् द्वेधाऽपि न विष्णौ युक्तमित्याह ॥ न हीति ॥ य आकाशो विष्णुः प्रसिद्ध इति वा य आकाशशब्दितो विष्णुस्स नामरूपयोर्निर्वहिता प्रसिद्ध इति वाऽर्थः स्यात् । न हि विष्णुर्वा तस्य निर्वोढृत्वं वा लोकतः प्रसिद्धम् । औपनिषदत्वात् तस्येति भावः । श्रौतपदानुकरणरूपत्वान्निर्वहितृत्वमित्युक्तम् । फलोक्त्योपसंहरति ॥ अत इति ॥ वै नामेति प्रसिद्धोपदेशादित्यर्थः । उक्तमित्यंतवाक्यस्य तात्पर्यं तस्येति ॥ छ ॥ आकांक्षाक्रमेण भाष्यं व्याचष्टे ॥ अयमाकाश इति ॥ आदिपदार्थमाह ॥ तद्ब्रह्मेति ॥ पूर्वमर्थांतरत्वपदेन नामरूपोभयराहित्यं विवक्षित्वा आदिपदेन ब्रह्मत्वं गृह्यत इति मत्वा व्याख्यातम् । इदानीं प्रकारांतरेण व्याचष्टे ॥ अर्थांतरत्वमिति ॥ अस्मिन्पक्षे भाष्ये तद्ब्रह्मेत्यंशोक्तिः सौत्रलिंगोक्तेरुपलक्षणत्वाभिप्राया । कम्पनादित्यत्र तदविहाय लिंगांतरस्यापीत्युक्त्वा एतदन्यत्राप्यनुसंधेयमित्युक्तत्वादिति भावः ॥ इत्यत आहेति ॥ अवर्णमिति श्रुतिरदृश्यत्वनये ब्रह्मपरेति सिद्धम् । यतो वाच इति तु वाक्यमानंदमयनय इति भावः । नन्वादिपदेनानामत्वं ग्राह्यमिति व्याख्याने सूत्रभाष्ययोरनामत्वादिव्यपदेशादिति वाच्यम् । तत्क्रमेणैव च वैष्णवता

व्युत्पाद्या । नामरूपयोरिति ते इति च श्रौतक्रमानुरोधात् शब्दलाघवाच्चेत्यत आह ॥ रूपस्येति ॥ नाम्नो वाच्यसापेक्षत्वादप्राधान्यमिति भावः ॥ उक्तेति ॥ ईक्षतेर्नाशब्दमित्यत्र वाच्यत्वोक्तया नामवत्त्वस्य रूपोपन्यासादित्यत्र रुक्मवर्णमिति रूपस्य चोक्तेस्तद्विरोधादित्यर्थः । अप्रसिद्धत्वात् साकल्येनागोचरत्वात् । भूतेति । भौतिकरूपराहित्यादित्यर्थः । वै नामेति निर्वहितृत्वे श्रुत्यादिप्रसिद्धिबाहुल्यमिति न्यायविवरणोक्तमत्र योजयितुमाह ॥ न चेति ॥ अन्नाध्द्येव खल्विमानि भूतानि जायंत इत्यादौ प्रसिद्धेर्विधेयान्वयदर्शनात् इहापि तथेति नामरूपनिर्वहितृत्वस्येत्युक्तम् । साधुत्वं प्राग्वत् ॥ अलोकेति ॥ लोकतोऽप्रसिद्धत्वेऽपीत्यर्थः । वेदवैदिकप्रसिद्धेरेवासंभाव्याज्ञानादिमूलकत्वेनांतरंगत्वेन च ग्राह्यत्वादिति भावः । प्रसिद्धाकाशस्योक्तमनामरूपत्वं विरुद्धमिति न्यायविवरणांशमर्थतो योजयति ॥ अन्यथेति ॥ प्रसिद्धाकाशत्व इत्यर्थः । नन्वाकाशो नीलिमोदेतीति श्रुतेर्भूताकाशस्य रूपादिमत्त्वेऽपि अत्राभिमताव्याकृताकाशस्य त्वनामरूपत्वमस्तु । तस्मिन् रूपाश्रुतेरचाक्षुषत्वाच्चारूपत्वनिश्चयादित्यत आह ॥ अवकाशस्यापीति ॥ अनामत्वहेत्वप्रसिद्धत्वस्यावकाशेऽभावेन नामवत्त्वादित्यर्थः ॥ अत इति ॥ निरवकाशश्रुतिलिंगभावादित्यर्थः ॥ ४१ ॥ अ० १२ ॥

सूत्रभाष्यम्—

असङ्गत्वं परमात्मन उक्तम् । तच्च 'स यत्तत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष' (बृ. उ. ६–३–१५) इति स्वप्नादिद्रष्टुः प्रतीयते । स च जीवः प्रसिद्धेरित्यत आह (वक्ति)—

॥ ॐ सुषुप्त्युत्क्रान्त्योर्भेदेन ॐ ॥ ४२ ॥

'प्राज्ञेनाऽऽत्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नाऽऽन्तरम्' (बृ. उ. ६–३–२१) 'प्राज्ञेनाऽऽत्मनाऽन्वारूढ उत्सर्जद्याती' (बृ. उ. ६–३–३५) ति भेदव्यपदेशान्न जीवः, पर एवासङ्गः । स्वप्नादिद्रष्टृत्वं च सर्वज्ञत्वात्तस्यैव युज्यते ॥ ४२ ॥

॥ इति सुषुप्त्यधिकरणम् ॥ १३ ॥

तत्वप्रकाशिका—

अत्रासङ्गत्वलिङ्गेन लोकप्रसिद्धया चेशजीवयोः साधारणस्य स्वप्नादिदर्शनलिङ्गस्य भगवति समन्वयप्रतिपादनादस्ति शास्त्रादिसंगतिः । श्रुत्यादिसंगति

विषयादिकं च सूचयति ॥ असङ्गत्वमिति ॥ असङ्गमरसमित्यसङ्गत्वं परमात्मन उक्तम् । तद्वाजसनेयके स्वप्नादिद्रष्टुः प्रतीयते । 'स वा एष एतस्मिन्संप्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्यां द्रवति स्वप्नायैव स यत्तत्र किंचित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुषः' इति । तस्य च विष्णोरन्यत्वेऽन्यस्यासङ्गत्वप्रसंगादवश्यनिर्णयत्वम् । तत्स्वप्नादिद्रष्टृत्वं विषयः । विष्णोर्जीवस्य वेति संदेहः । उक्तसाधारण्यं संदेहबीजमिति भावः । सयुक्तिकं पूर्वपक्षयति ॥ स चेति ॥ स्वप्नादिद्रष्टृत्वं जीवस्यैव भवेत् । प्रसिद्धत्वात् । न चासङ्गत्वलिङ्गादीशस्येति वाच्यम् । जीवेशयोरभेदेन जीवेऽपि चैतन्यविवक्षयाऽसंगत्वोक्तिसंभवात् । न च मुख्यतोऽसङ्गत्वादीश्वरस्य स्वप्नादिद्रष्टृत्वम् । तस्याशरीरतया स्वप्नाद्यवस्थानुभवानुपपत्तेः । न च मन्तव्यं यथा स्वप्नादिदर्शनस्य जीवे मुख्यत्वेनाऽसङ्गत्वमभेदाभिप्रायेण नीयते तथाऽसङ्गत्वस्येश्वरे मुख्यत्वेन स्वप्नादिदर्शनस्याप्यभेदाभिप्रायेण नेतुं शक्यत्वात् किं जीव एवात्रोच्यत इति निर्बन्धे कारणमिति । चैतन्यैक्याभिप्रायेण तद्गतासङ्गत्वस्य जीवेऽमुख्यवृत्तिवदीश्वरे स्वप्नादिद्रष्टृत्वस्य विशिष्टनिष्ठस्यामुख्यतोऽपि वक्तुमयोगात् । न च जीवेशाभेद एव कुत इति वाच्यम् । विशेषणद्वयसामानाधिकरण्यान्यथानुपपत्त्यैव तत्सिद्धेः । अतो जीव एवायं स्वप्नादिद्रष्टेति न प्रागुक्तासङ्गत्वं विष्णोरेवेति भावः । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ स्वप्नादिद्रष्टा परमात्मैवासङ्गत्वलिङ्गात् । यतोऽसङ्गः पर एव न जीवः । न चेश्वराभेदेन जीवेऽप्यसङ्गत्वोक्तिः संभवतीति वाच्यम् । सुषुप्त्युत्क्रान्तिप्रकरणयोर्भेदेनैव जीवेशयोरुक्तत्वेन तदभेदस्यैवाभावादिति भावः । न चायं भेदो व्यावहारिक एवेति युक्तम् । सुषुप्तिप्रकरणस्य मोक्षपरताया अपि भावात् । यद्वक्ष्यति 'स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि' इति । अनन्वागतं पुण्येनानन्वागतं पापेनेत्याद्युपपत्तेश्च । मोक्षे च सतो भेदस्य व्यावहारिकता नाम परिभाषामात्रं स्यात् । ननु कथमशरीरस्येश्वरस्य स्वप्नादिदर्शनं युक्तं स्यादित्यत आह ॥ स्वप्नादीति ॥ न विष्णोः स्वप्नादिदर्शनायोगः किं नाम तस्यैव तन्मुख्यं जीवादपि । स्वाप्नपदार्थानां जीवगतावस्थायाश्च सत्यत्वात् परमात्मनश्च सर्वज्ञत्वेन तद्विशेषदर्शनोपपत्तिरिति भावः । एवं स्वप्नादिदर्शनासङ्गत्वयोः परमात्मनि मुख्यत्वोक्त्या तदन्यथानुपपत्त्याऽभेदः इति परास्तम् । तत्र प्रतीतोभयविधलिंगांतरोपपत्तिस्तु तद्भाष्यादवगन्तव्या । अतो विष्णुरेव स्वप्नादिद्रष्टाऽसङ्गश्चेति सिद्धम् ॥ ४२ ॥ अ० १३ ॥

॥ ॐ सुषुप्त्युत्क्रांत्योर्भेदेन ॐ ॥ ४२ ॥ भाष्यसूचितं साधारण्यबीजमाह ॥ असंगत्वेति ॥ अलेपत्वरूपासंगत्वलिंगेनेत्यर्थः। संगत्यर्थतया भाष्यं व्याचष्टे ॥ असंगमिति ॥ अक्षरनये अन्यभावेति सूत्र इत्यर्थः। तच्चेत्यादि व्याचष्टे ॥ तद्वाजसनेयक इति ॥ षष्ठ इत्यर्थः। स यत्तत्रेति तच्छब्दपरामृष्टं दर्शयितुं पूर्वशेषमाह ॥ स वा इति ॥ स्वप्नवप्रसीदत्यस्यामिति संप्रसादः सुप्तिः तस्मिन्। रत्वा रमणं कृत्वा प्रतिन्यायं अवस्थांतरं प्राप्तव्यमिति न्यायमनुसृत्य प्रतियोन्या पदव्या तेन स्वाप्नपदार्थदर्शनेनानन्वागतो निर्लेपः लेपे सर्वप्रमाणाभावं वक्तुमसंगो-ह्ययमिति वाक्यशेषः। स चेत्यादेस्तात्पर्यं तस्य चेति। प्रसिद्ध्या जीवत्व इत्यर्थः। उक्तमित्यंतभाष्यस्य तात्पर्यं अन्यस्येति। न च न हि संगोऽस्ति वह्निवायुविवस्वता-मिति न्यायेनानेकेषामसंगत्वं तथा च न पूर्वाक्षेप इति शंक्यम्। अनन्यापेक्षस्याने-केषामयोगादिति तात्पर्यात् तस्यैव श्रुतौ प्रतीतेरिति। पूर्वपक्षादिपरत्वेनापि व्याकु-र्वंस्स च जीव इति प्रतिज्ञार्थमाह ॥ स्वप्नेति ॥ स्वप्नादिद्रष्टृत्वं चेति सिद्धांतभाष्या-नुरोधात् अत्रापि तथैव व्याख्या कृतेति बोध्यम्। ननु यथा पूर्वत्र नामरूपनिर्वो-ढृत्वरूपब्रह्मलिंगाद्वैलामेति प्राप्तलोकप्रसिद्धिबाधस्तथाऽत्राप्यस्त्विति भावेन शंकते ॥ न चेति ॥ जीवेश्वराभेदे ईश्वरोक्तावप्यर्थाज्जीव एवोच्यत इति न्यायविवरणांशो-क्तमाह ॥ जीवेशयोरिति ॥ विशिष्टस्य संगित्वादुक्तं चैतन्येति। ननु विनैवाभेद-मीशलिंगेन जीवलिंगमीशे नीयतामिति शंकते ॥ न चेति ॥ तस्येशेऽनवकाशतामाह ॥ तस्येति ॥ सर्वत्र प्रसिद्धेत्यत्राशरीरः प्रज्ञात्मेत्युक्तेरिति भावः। ईश्वरोक्ता-वप्यर्थाज्जीव एवोच्यत इत्यंशतात्पर्यं व्यक्तीकर्तुमाह ॥ न च मंतव्यमिति ॥ ॥ चैतन्येति ॥ जीवस्य येन चैतन्यात्मना ब्रह्मैक्यं तदभिप्रायेणेत्यर्थः॥ विशेषणेति ॥ उक्तदिशा निरवकाशासंगत्वस्वप्नादिद्रष्टृरूपविशेषणेत्यर्थः। एतच्चासंगत्वं प्रसि-द्धेरिति भाष्योक्त्या ज्ञायत इति भावः ॥ अत इति ॥ असंगत्वरूपब्रह्मलिंगस्य जीवे तदभेदेनोपपत्त्या जीवलिंगस्य चेशेऽनुपपत्त्या च निर्बाधनिरवकाशप्रसिद्धिभावादि-त्यर्थः। उक्तमित्यंतस्य भावोक्तिर्न प्रागिति। अभेदेन जीवेऽप्युपपन्नतोक्त्या विष्णाद-निरासादेवेत्युक्तम् ॥ छ ॥ स्वप्नादिद्रष्टृत्वं च तस्यैवेति प्रतिज्ञांशं व्याचष्टे। ॥ स्वप्नादिद्रष्टेति ॥ असंगत्वादि चेश्वरस्यैवेति न्यायविवरणानुरोधेन हेतुमाह ॥ असंगत्वेति ॥ अनन्वागतस्तेनेति वाक्योक्तादित्यर्थः। तावता कुतो विष्णुरित्यतो

न जीव इत्यादि व्याचष्टे ॥ यत इति ॥ असंगो ह्ययमिति हेतूक्तासंग इत्यर्थः। अनन्वागतस्तेन भवतीत्यत्रासंगो ह्ययं पुरुष इत्यसंगत्वं हेतुः। प्रसिद्धमेव च हेतुत्वयोग्य असंगमस्पर्शमित्यादिश्रुतिषु च ब्रह्मण्येव प्रसिद्धमिति भावः। सुषुप्त्युत्क्रांत्योर्जीवे (श्वरयो) भेदोक्तेरिति न्यायविवरणानुरोधेन प्राज्ञेनेत्यादि भाष्यं व्याचष्टे ॥ न चेति ॥ सुषुप्तिपदलब्धयुक्तिं वक्तुमाह ॥ न चायमिति ॥ यद्वक्ष्यतीति ॥ चतुर्थ इत्यर्थः। तीर्णो हि तदा सर्वान् शोकान् हृदयस्य भवतीति वाक्यं न मुक्तविषयं किंतु स्वर्गस्थविषयं स्वर्गे लोके न भयं किंचनास्तीत्यादेरित्यतः स्वाप्ययेति सूत्रम्। स्वाप्ययः सुप्तिः संपत्तिर्मुक्तिः। अन्यतरशब्दोऽत्र उभयपरः। तीर्णो हीति वाक्यं सुप्तिमुक्त्युभयपरं न स्वर्गिविषयम्। कुतः हि यस्मात् आविष्कृतं तदुभयविषयत्वमस्य वाक्यस्य विस्पष्टमत इति सूत्रार्थः। तत् किंचिद्व्यनक्ति ॥ अनन्वागतमिति ॥ अन्यथा अत्र पिताऽपिता भवति अनन्वागतं पुण्येनेत्यादिनोक्तापितृत्वपुण्यपापाद्यसंगत्वलिंगानां स्वर्गिणः श्राद्धादिभोक्तुरनुपपत्तेः सुप्तिप्रकरणस्य मुक्तिपरत्वमुपेयमित्यर्थः। व्यक्तमुक्तमस्य सूत्रस्योभयपरत्वाद्यर्थकत्वं बृहदारण्यकभाष्ये। कर्मनिर्णयटीकायां च। विवृतं तंत्रदीपिकायामस्माभिश्चतुर्थे। अस्तु तावता व्यावहारिको भेद इत्यत्र किमागतमित्यत आह ॥ मोक्षे चेति ॥ प्रतिज्ञापरत्वेन व्याख्यातमपीदानीं स्वप्नादीत्यशेषभाष्यं प्रागुक्तशंकानिवर्तकतयाऽवतार्य जीवस्य तदयुक्तेरीशे सावकाशत्वाच्चेति न्यायविवरणविवरणपरतया व्याचष्टे ॥नन्वित्यादिना॥ संध्ये सृष्टिराह हीत्यादिना तृतीयस्य द्वितीयपादे वक्ष्यमाणत्वात्सत्यत्वस्येति भावः। एतल्लिंगद्वयानुपपत्तिपरिहारेऽपि लिंगांतरसामानाधिकरण्यानुपपत्त्याऽभेदशंकायां कथं तदुपपत्तिरित्यत आह ॥ तत्र प्रतीतेति ॥ संप्रसादे रत्वेत्यादिना प्रागुदाहृतवाक्ये प्रतीतजीवलिंगांतराणां अनन्वागतं पुण्येनेतीदानीमुदाहृतवाक्यप्रतीतपुण्यपापालेपरूपब्रह्मलिंगांतराणामुपपत्तिस्तु शुभाशुभं तु दृष्ट्वैव स्वप्ने जागरितेऽपि च। असंसृष्टः सदा दुःखैश्चरतीशः पुनःपुनरित्यादि वाजसनेयभाष्यादवसेयेत्यर्थः। फलोक्त्योपसंहरति ॥ अत इति ॥ परमात्मनि मुख्यत्वादित्यर्थः ॥ ४२ ॥ अ० १३ ॥

सूत्रभाष्यम्——

'एष नित्यो महिमा ब्राह्मणस्ये' (बृ. उ. ६–४–२२) ति ब्राह्मणस्यापि नित्यमहिमा प्रतीयते। स च ब्राह्मणः 'स वा एष महानज आत्मे' (बृ. उ. ६–४–२४)

त्यजशब्दाद्विरिञ्च इति प्राप्तम् । देवानां च विद्याकर्मणोः पदप्राप्तिः सूचिता तदुपर्यपीति । अतो ब्रवीति—

॥ ॐ पत्यादिशब्देभ्यः ॐ ॥ ४३ ॥

'सर्वस्याधिपतिः सर्वस्येशानः .... स वा एष नेति नेती (बृ. उ. ६–४–२१) त्यादिशब्देभ्यो नित्यमहिमा विष्णुरेव । 'उतामृतत्वस्येशानः । यदन्नेनातिरोहति' (तै. आ. ३-१२) 'सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि' (ऋ. सं. १–१६४–३६) 'स योऽतोऽश्रुत' (ऐ. आ. ३–२–४) इत्यादि श्रुतिभ्यस्तस्यैव हि ते शब्दाः ॥ ४३ ॥ इति ब्राह्मणाधिकरणम् ॥ १४ ॥

॥ इति श्रीसिद्दानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये प्रथमाध्यायस्य तृतीयः पादः ॥

तत्वप्रकाशिका—

अत्र नित्यमहिमत्वलिंगेनाजश्रुत्या च विष्णुविरिञ्चयोः साधारणस्य ब्राह्मणनाम्नो विष्णौ समन्वयप्रतिपादनादस्ति शास्त्रादिसंगतिः । श्रुत्यादिसंगतिं विषयादिकं च सूचयति ॥ एष इति ॥ प्राचीनाधिकरणेषु विष्णोर्नित्यमहिमत्वमभिसंहितम् । अनन्यापेक्षया जगत्स्रष्टृत्वादेरुपपादितत्वात् । तद्वाजसनेयके कस्यचिद् ब्राह्मणस्य प्रतीयते । 'एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नो कनीयान्' इति । तस्य च विष्णोरितरत्वेऽन्यस्यापि नित्यमहिमत्वप्रसङ्गादवश्यनिर्णेयत्वम् । स ब्राह्मणो विषयः । किं विष्णुर्विरिञ्चो वेति संदेहः । उक्तसाधारण्यं संदेहबीजमिति भावः । सयुक्तिकं पूर्वपक्षयति ॥ स इति ॥ स ब्राह्मणो विरिञ्चो भवेत् । अस्मिन्बहुशोऽजशब्दश्रवणात् । अजशब्दस्य च तस्मिन् प्रसिद्धत्वात् । न च वाच्यं न जायत इत्यजशब्दो विष्णावपि सावकाशः । तत्र यौगिकोऽसाविति चेत् विरिञ्चेऽपि विष्णुजातत्वयोगेन प्रवृत्तत्वादिति । ब्राह्मणशब्देन सह पठितस्य विष्णावनवकाश(शात्)त्वात् । वर्णादिशून्यादीश्वराद्व्यावर्तमानस्य ब्राह्मणशब्दस्य सहश्रुताजशब्दव्यावर्तकत्वात् । महत्तत्त्वाभिमानितया महच्छब्दोऽपि विरिञ्चिवाची । ब्राह्मणशब्देन सह श्रवणादजशब्दो यथा विरिञ्चिवाचीत्युच्यते तथाऽऽत्मशब्देन सह श्रवणाद्विष्णुवाची किं न स्यादिति चेन्न । 'आत्मा विरिञ्चः सुमनाः सुधौतश्चेति कथ्यते' । इत्यादेरात्मशब्दस्य विरिञ्चेऽपि वृत्तेः । अतोऽजशब्दाद्विरिञ्च एवायं ब्राह्मण इति

भावः । ननु कथं ब्राह्मणो विरिंचो भवेत् । 'तदुपर्यपि बादरायणः संभवात्' इत्यत्र देवानां विद्याकर्मभ्यां पदप्राप्तेः समर्थितत्वेन ब्राह्मणे श्रुतनित्यमहिमत्वस्य विरिञ्चेऽसंभवात् सादिपदस्य चानित्यत्वनियमादित्यत आह ॥ देवानां चेति ॥ देवताधिकरणे देवानामेव विद्याकर्मणोः सकाशात्पदप्राप्तिः समर्थिता न त्वीश्वरस्य । विरिञ्चश्चेश्वरस्वरूपमेव । अतस्तस्य नित्यमहिमत्वं युक्तमेव । न च विरिञ्चस्येश्वरस्वरूपत्वमेव कुत इति वाच्यम् । अन्यथैतत्प्रकरणानुपपत्तेरेव तत्सिद्धेः । तथाहि । अत्र तावद् ब्राह्मणाजशब्दौ श्रूयेते । नित्यमहिमत्वलिङ्गं 'स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान्' इति पापाद्यलेपलिंगं च । न च एतद्विष्णुविरिञ्चान्यतरमात्रग्रहणे युक्तम् । विष्णौ शब्दानवकाशाद्विरिञ्चे लिंगानवकाशात् । न च भिन्नतयोभयग्रहणेनोपपत्तिः । एकनिष्ठत्वात् । अत एतदन्यथानुपपत्त्या विष्णुविरिञ्चयोरभेदसिद्धेर्युक्तं विरिञ्चस्यापि नित्यमहिमत्वमिति स एवात्रोक्तब्राह्मणः । 'सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्य धत्ते । स्थित्यादये हरिविरिञ्चहरेति संज्ञा' इत्यादेश्च । तर्हि विरिञ्च एवेति निर्बन्धे को हेतुः । मैवम् । कारणशब्दानां कार्ये प्रवृत्त्युपपत्तिवत्कार्यशब्दानां कारणे तदनुपपत्तेरिति भावः । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ अयं ब्राह्मणो विष्णुरेव । 'सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यतेऽशीर्यो न हि शीर्यतेऽसंगो न हि सज्जतेऽसितो न व्यथते न रिष्यति स एष आत्माऽजरोऽमरोऽमृतोऽभय इति सर्वाधिपत्यादिवाचिशब्दसद्भावात् । तथा च तस्यैव नित्यमहिमत्त्वमिति भावः । सर्वाधिपत्यादि वाचिशब्दसद्भावेऽपि कुतो विष्णुत्वनिश्चय इत्यत आह ॥ उतेति ॥ यद्भूतं भविष्यद्वर्तमानं सर्वं तत्परमपुरुषाधीनम् । न केवलममुक्तसर्वाधिपतिः पुरुषः किं तु मुक्तसमुदायस्यापि यस्मात्संसारिसमूहमतिशेते । मुक्तावनधीनत्वे सर्वज्ञस्य बुद्धिमतः स्वाधीनसंसारिभ्यो मोक्षप्रदानायोगादित्यर्थः । ईशानपदोक्तसर्वप्रेरकत्वे द्वितीया श्रुतिः । नेति नेतीत्युक्तश्रुतदृष्टवैलक्षण्ये तृतीया । सर्ववशित्वादौ श्रुत्यन्तराण्यादिपदेन सूचयति । न च विष्णोर्ब्राह्मणत्वेऽजशब्दविरोधः । न जायत इति योगेनोपपत्तेः । न च विष्णौ ब्राह्मणशब्दानुपपत्त्याजशब्दापहारः । ब्रह्मणा वेदेन गम्यत इति योगेनोपपत्तेः । स्वरव्यत्ययस्याधिक्यार्थत्वात् । अण गताविति धातोः । अन्यथा पत्यादिशब्दविरोधात् । न चाभेदात्पतित्वादिर्विरिञ्चेऽपि

संभवतीति वाच्यम् । तदभेदे मानाभावात् । ब्राह्मणाजशब्दयोरुक्तरीत्याऽन्यथाप्युपपत्तेः । स्मृतेस्तदन्तर्गतेश्वररूपापेक्षयोपपत्तेः । 'स्वधर्मनिष्ठः शतजन्मभिः पुमान् विरिञ्चतामेति ततः परं हि माम्' इति वचनाद्विरिञ्चस्य कर्मफलाभावायुक्तेर्नित्यमुक्तेन परमात्मना भेदस्यैवोपपन्नत्वात् । 'तत एते व्यजायन्त विश्वो हिरण्यगर्भः' इत्यादिभेदश्रुतिबाहुल्याच्च । अतो विष्णुरेवायं ब्राह्मणो नित्यमहिना(मः)चेति सिद्धम् ॥ ४३ ॥ अ० १४ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्रभाष्यस्य टीकायां श्रीमज्जयतीर्थमुनिविरचितायां तत्त्वप्रकाशिकायां प्रथमाध्यायस्य तृतीयः पादः ॥

॥ श्रीरस्तु ॥

भावदीपः—

॥ ॐ पत्यादिशब्देभ्यः ॐ ॥ ४३ ॥ भाष्यसूचितं साधारण्यबीजमाह ॥ अत्र नित्यमहिमत्वेति ॥ संगतिपरतया भाष्यं व्याकुर्वन् ब्राह्मणस्यापीत्यपिपदसूचितमाह ॥ प्राचीनेति ॥ साक्षादनुक्तेराह ॥ आभिसंहितामिति ॥ तद्व्यनक्ति ॥ अनन्येति ॥ एष इत्यादि व्याचष्टे ॥ एतद्विति ॥ षष्ठेऽध्याये इत्यर्थः । स चेत्यादेस्तात्पर्यं तस्य चेति । वक्ष्यमाणदिशा विरिंचत्व इत्यर्थः । अपिपदसूचिताभिसंहितमित्यंतवाक्यस्य भावोऽन्यस्यापीति ॥ विरिंचो वेति ॥ विप्रमात्रे ब्राह्मणपदस्य लोकप्रसिद्धावपि इहाजश्रुत्या न तस्य संदेहनिर्दिष्टत्वमिति भावः । पूर्वपक्षादिपरत्वेनाप्यवतार्य स च ब्राह्मणो विरिंच इति प्रतिज्ञार्थमाह ॥ सयुक्तिकमिति ॥ स वा एष इति भाष्योपात्तवाक्यस्यास्मिन्प्रकरणे बहुकृत्वः श्रवणादाह ॥ बहुश इति ॥ प्रसिद्धत्वादिति रूढत्वादित्यर्थः ॥ यौगिक इति ॥ उपलक्षणमेतत् । विरिंचे रूढत्ववत् तस्मादहमजः स्मृत इति भारतवाक्यादजशब्दस्य विष्णौ रूढेरपि सत्वादित्यपि ध्येयम् । अन्यथा विरिंचे योगरूढयोः केवलयोगात्प्राबल्येन पूर्वपक्षसंभवात् । ब्राह्मणपदसाहित्येनोज्जीवनायोगात् । एवं भाष्योक्तमजशब्दं सावकाशं कृत्वा ब्राह्मणशब्दस्य पापालेपलिंगस्य च चतुर्मुखेन सह परमात्मनो भेदं विनाऽवकाशराहित्यादर्थादप्राप्तिरिति न्यायविवरणे ब्राह्मणश्रुतितो विरिञ्चप्राप्तेरुक्त्या तत्साहित्येनाजश्रुतेर्निरवकाशतामाह ॥ ब्राह्मणेति ॥ वर्णादीति ॥ अगोत्रमवर्णमित्यादेर्ब्राह्मण्यादिवर्णगोत्रशून्यादित्यर्थः ॥ व्यावर्तकत्वादिति ॥ ईश्वरादित्यनुषंगः । विरिंचस्य तु विप्रत्वात् विप्रत्वजातौ

निरूढब्राह्मणश्रुतिर्युक्तेति भावः। उत्कृष्टत्ववाचिमहच्छब्दविरोध इत्यत आह ॥ महत्तत्वेति ॥ द्वितीये वक्ष्यमाणाभिमानिनयन्यायादिति भावः। प्रथमेऽध्याये बृहद्भाष्योक्ताभिधानमाह ॥ आत्मेति ॥ इत्यादेरित्यादिपदेन बुद्धेरात्मा महान्पर इति प्रयोगग्रहः ॥ अत इति ॥ विष्णावनवकाशब्राह्मणश्रुतिसाहित्यात् बाधकाभावाच्चेत्यर्थः। ब्राह्मणो ब्राह्मणशब्दार्थः। प्रागुक्तन्यायविवरणोक्तश्रुतिलिंगे भाष्योक्ताजश्रुतिनित्यमहिमत्वलिंगयोरप्युपलक्षणमिति भावेन न्यायविवरणभाष्याभ्यामुक्तविरुद्धश्रुतिलिंगानि व्यक्तीकृत्याभेदं विनाऽवकाशराहित्यादिति न्यायविवरणोक्तदिशाऽभेदप्रापकतां व्यनक्ति ॥ तथा हीत्यादिना ॥ ननु श्रुत्युपेतं अज आत्मेत्यादिकं विरिंचविषयं विष्णुलिंगोपेतवाक्यं तु विष्णुविषयमित्यन्यथोपपत्तिः श्रुत्यादेराशंक्य निराह ॥ न च भिन्नेति ॥ वाक्यभेदमाश्रित्येति योज्यम् ॥ एकेति ॥ एकार्थनिष्ठत्वेनैकवाक्यत्वावगमादित्यर्थः ॥ स एवेति ॥ पूर्वाधिकरणपूर्वपक्षन्यायात् वक्ष्यमाणदिशा वेति भावः। विवरिष्यते चैतदग्रे इति भावः। न केवलमर्थापत्त्येत्याह ॥ सत्त्वमिति ॥ भागवते प्रथमस्कंधे परमपुरुषस्यैकस्यैव क्रमेण सत्वादिगुणै रक्षासृष्टिसंहारार्थं हरिविरिंचहरात्मना रूपत्रयोक्तेरित्यर्थः। इत्यादेरित्यादिपदेन तृतीयस्कंधे एकादशाध्याये तात्पर्योदाहृतं स त्रेधा बभूवैषां गुणानामुपादानाय विष्णुर्वाव सत्त्वस्य रजसो ब्रह्मा ईशानो नाम तमस इत्यादिश्रुतिवाक्यं च गृह्यते ॥ छ ॥ ब्रह्मशब्दो विष्णावेवेति न्यायविवरणानुरोधात् ब्राह्मणपदमध्याहृत्य नित्यमहिमा विष्णुरेवेति प्रतिज्ञार्थमाह ॥ अयं ब्रह्मणो विष्णुरेवेति ॥ भाष्ये पत्यादीति सूत्रोपात्तशाखांतरस्थवाक्यस्यैवोदाहृतत्वेन स्वयमेव तत्प्रकरणस्थवाक्यमुदाहृत्य इत्यादिशब्देऽय इति हेतुपरभाष्यं व्याचष्टे ॥ सर्वस्येति ॥ सेतुर्विधारण इति ॥ धारणसमर्थ आश्रय इत्यर्थः ॥ इति नेति ॥ इति नेति श्रुतदृष्टवन्नेत्यर्थः। असितः अबद्धः। षिञ्बंधने। न रिष्यति न नश्यति। रिषहिंसायाम्। सूत्रे पत्यादिशब्दः सर्वाधिपत्यादिवाचिपर इति मत्वाऽऽह ॥ सर्वाधिपत्येति ॥ तेन सर्वस्य वशीत्याद्यपि शाखांतरस्थवाक्यमिह संगृहीतमिति भावः। नित्यमहिमा विष्णुरेवेत्येतद्व्याचष्टे ॥ तथा चेति ॥ भाष्ये सर्वस्य वशीत्यादावुदाहर्तव्ये सर्वस्याधिपतिरित्युक्तिः शाखांतराणामुपसंग्रहार्थेत्यस्य धृतेश्च महिम्न इति सूत्रे एवमन्यत्रापीत्युक्त्या उक्तप्रायत्वादत्रानुक्तिः। उतशब्दाकांक्षितं पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यमिति पूर्ववाक्यार्थमाह ॥ यद्भूतमिति ॥ उपलक्षणं मत्वोक्तं वर्तमानमिति। इदं हि विश्वं भगवानिवेतरो यतो जगत्स्थान-

निरोधसंभव इत्याद्यानन्दमयनयभाष्योक्तस्मृतेरधीनमित्युक्तम्। पुरुष एवेदं सर्वं भूतं भव्यं भवच्च यत्। इत्युच्यते तदीशत्वान्न तु सर्वस्वरूपत इति प्रथमे बृहद्भाष्योक्तभारतस्मृतेरिति भावः। उतेत्यस्यार्थो न केवलमिति। अमृतत्वस्येत्यस्यार्थः ॥ मुक्तसमुदायस्येति ॥ विचित्रा हि तद्धितगतिरिति समुदाये भावप्रत्ययः। भाव-भवित्रोरभेदादमृतत्वशब्दोऽत्र मुक्तसमुदायपर इति वा भावः। द्वितीया सप्तार्धगर्भेति श्रुतिरित्यर्थः। इयमक्षरनये व्याख्यातत्वान्नेह व्याख्याता ॥ तृतीयेति ॥ स योऽत इति श्रुतिः। इयं च सर्वत्र प्रसिद्धेतिनये व्यक्ता। ब्रह्मणा वेदेन गम्यत इति ब्राह्मणशब्दो विष्णावेव युज्यत इत्यर्थादजशब्दोऽपि तस्मिन्नेवेति न्यायविवरणं प्रागुक्तशंकाव्यावर्तकत्वेन योजयितुं शंकामनूद्याकांक्षाक्रमेण योजयति ॥ न चेत्यादिना ॥ स्वरेति ॥ ब्रह्मणा वेदेन गम्यत इति विग्रहे ब्रह्माण इति वाच्ये ब्राह्मण इति स्वरशब्दितदीर्घव्यत्यासः आधिक्येऽधिकमित्येव हरिणा सूत्रमीरितमिति ऋग्भाष्योक्त्या वेदेन गम्यत्वाधिक्यद्योतनार्थ इत्यर्थः। ननु गम्यत इति व्युत्पत्तौ ब्रह्म गम इत्यादि स्यात् स्वरव्यत्यय इति कथमित्यत आह ॥ अणगताविति ॥ उक्तविरोधश्च तत्रैवेति न्यायविवरणोक्तमाह ॥ अन्यथेति ॥ मानाभावादिति ॥ अभेदः किमर्थापत्त्याऽथ पुराणवाक्येन। नाद्यः। श्रुत्या यौगिकत्वोक्तिपरन्यायविवरणेन परिहृतत्वादित्याह ॥ ब्राह्मणेति ॥ स्मृतिस्तु तात्पर्ये स्मृत्यैव व्याख्यातेति मत्वाऽऽह ॥ स्मृतेस्त्विति ॥ सत्त्वं रजस्तम इत्यादेः ब्रह्माणि ब्रह्मरूपोऽसौ शिवरूपी शिवे स्थित इत्यादिस्मृतेरिति भावः। चतुर्मुखस्य कर्मफलाभावायुक्तेस्तयोर्भेद एवार्थादापद्यत इति न्यायविवरणोक्तमत्र व्यनक्ति ॥ स्वधर्मेति॥ इतिवचनादिति ॥ चतुर्थस्कंधे त्रयोविंशेऽध्याये। मां लक्ष्मीमित्यर्थः ॥ नित्यमुक्तेनेति ॥ तथा च परमात्मनो नित्यमुक्तत्वेन कर्मफलाभावात् विरिंचस्य चोदाहृतवचनेन कर्मफलसद्भावावगमेन तदभावायुक्तेरित्यर्थः। भेदश्रुतिबाहुल्यादित्यन्यत्रोक्तं व्यनक्ति ॥ तत इति ॥ अदृश्यत्वनयभाष्योक्तेयं श्रुतिः ॥ अत इति ॥ निरवकाशप्रापकसद्भावादित्यर्थः। नित्यमहिमा चेति फलोक्तिः। अकारांतत्वमुपेत्य क्वचिन्नित्यमहिमश्चेति पाठः ॥ ४३ ॥ अ० १४ ॥

॥ इति श्रीमद्भाष्यटीकाभावदीपे श्रीराघवेंद्रयतिकृते प्रथमाध्यायस्य तृतीयः पादः ॥

॥ श्रीरस्तु ॥

॥ श्रीः ॥

॥ अथ चतुर्थः पादः ॥

सूत्रभाष्यम्—

॥ ॐ श्रुतिलिङ्गादिभिरन्यत्रैव प्रसिद्धानामपि शब्दानां सामस्त्येन विशेषहेतुभिर्विष्णावेव प्रवृत्तिं दर्शयत्यस्मिन्पादे ।

**॥ ॐ आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॐ ॥ १ ॥**

'तत्तु समन्वया' (ब्र. सू. १–१–४) दिति सर्वशब्दानां परमेश्वरे समन्वय उक्तः । तन्न युज्यते । यतो'ऽव्यक्तात्पुरुषः पर' (क. उ. १–३–११) इति साङ्ख्यानुमानपरिकल्पितं प्रधानमप्येकेषां शाखिनामुच्यत इति चेन्न तस्यैव पारतन्त्र्याच्छरीररूपकेऽव्यक्ते विन्यस्तस्य परमात्मन एवाव्यक्तशब्देन गृहीतेः । कप्रत्ययः कुत्सने । परमात्मन एवाव्यक्तशब्दः । तत्तन्त्रत्वेन तच्छरीररूपत्वादितरस्याप्यव्यक्तशब्दः । 'तुच्छे(च्छ्ये)नाभ्वपिहितं यदासीदि' (ऋ. सं. १०–१२९–३) ति दर्शयति च ।

'अव्यक्तमचलं शान्तं निष्कलं निष्क्रियं परम् ।
यो वेद हरिमात्मानं स भयादनुमुच्यत ' इति पिप्पलादशाखायाम् ।

'अक्षरं ब्रह्म परममि'त्युक्त्वा 'अव्यक्तोऽक्षर इत्युक्त(च्यत)' (भ. गी. ८–३,२१) इति वचनाच्च ॥ १ ॥

तत्वप्रकाशिका—

श्रीमद्धनुर्द्धीमध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥हरिः ॐ ॥ एतत्पादप्रतिपा(द्यं दर्शयति)द्यमाह ॥ श्रुतीति ॥ अन्यत्रोभयत्र च प्रसिद्धानां नामलिङ्गात्मकानां शब्दानां भगवति समन्वये सिद्धेऽवसरप्राप्तमन्यत्रैव प्रसिद्धानामुभयविधशब्दानां विष्णौ समन्वयं वक्त्यस्मिन्पादे सूत्रकार इत्यर्थः । नन्विन्द्रादिशब्दानामन्यत्रैव प्रसिद्धानां विष्णौ समन्वयस्य प्रथमपाद एव सिद्धत्वाद्व्यर्थ इ(ए)वायं पादः प्रतिभाति । न च तेषामन्यत्रैव प्रसिद्धताभावः । तथा सति तृतीयवैयर्थ्यात् । अन्यत्रैवान्यत्रापीत्यतः प्रकारान्तराभावादित्यत उक्तम् ॥ श्रुतिलिङ्गादिभिरिति ॥

लोकप्रसिध्द्याऽन्यत्ररूढानामिन्द्रादिशब्दानां श्रुतिलिङ्गादिबलाद्विष्णौ समन्वयः प्राक् प्रतिपादितः। इदानीं तु श्रुतिलिङ्गादिभिरेवान्यत्रप्रसिद्धानामपि शब्दानां समन्वयनिरूपणान्नैतत्पादवैयर्थ्यम्। अनेनैवाभिप्रायेणा(न्यत्रान्य वेत्युक्ति)न्यत्रैवेत्युक्तिरिति भावः। पूर्वं क्वचिच्छ्रुत्यादिनैवान्यत्रप्रसिद्धशब्दसमन्वयोक्तावप्येतत्पादीयश्रुत्यादीनां प्राबल्यादियमुक्तिः। पूर्वं स्रष्टृत्वादिगुणाभिधायकानां शब्दानां तत्सङ्गतानां च समन्वयो निगदितोऽत्र पुनः स्वरवर्णपदात्मकानां समस्तशब्दानामिति वाऽवैयर्थ्यमिति भावेनोक्तम् ॥ सामस्त्येनेति ॥ यदुक्तं बलवच्छ्रुत्यादिभिरन्यत्रप्रसिद्धशब्दानां समन्वयोऽत्र कथ्यत इति तदयुक्तम्। असंभवादित्यत उक्तम् ॥ विशेषेति ॥ ततोऽपि प्रबलहेतुभिरित्यर्थः। यदुदितमत्र समस्तशब्दसमन्वयनिरूपणादवैयर्थ्यमिति। तदसत्। अंशे वैयर्थ्यादित्य(तो वा)तस्त्वाऽऽह ॥ विशेषेति ॥ प्रागनुक्तहेतुभिरित्यर्थः। स्यादेतत्। न समस्तशब्दसमन्वयोक्तिरुपपन्ना। वैयर्थ्यात्। जन्माद्यस्येत्युक्तजन्मादिकारणत्वे हि शास्त्रं प्रमाणीकृतम्। जन्मादिकारणत्वाभिधायकवाक्यानामेव परमात्मपरत्वं चतुर्थसूत्रे प्रतिज्ञातम् तच्चातीतैः पादैः समर्थितमिति। मैवम्। चतुर्थसूत्रे सर्वशब्दानां परमात्मपरत्वस्य प्रतिज्ञातत्वात्। जन्मादिसूत्रे हि न जन्मादिकारणत्वमात्रं विवक्षितम्। किं तु 'किं तद्ब्रह्म' इत्याकाङ्क्षायां निखिलगुणपरिपूर्णत्वस्यैव वक्तव्यत्वात्। न हि ब्रह्मशब्दः कतिपयगुणाभिधायकः। जन्मादिकारणत्वगुणग्रहणं तु तस्याखिलगुणसाधकत्वेनान्योपलक्षणाभिप्रायेणैव। तृतीयसूत्रे च तत्रैव सर्वं शास्त्रं प्रमाणमुक्तम्। कतिपयशब्दानां निखिलगुणाभिधायकत्वायोगादिति। सूत्रमेवादौ पठति ॥ आनुमानिकमिति ॥ अत्रावरत्वादिलिङ्गैर्भगवति विरुद्धतयाऽन्यत्रैव प्रसिद्धाव्यक्तादिशब्दानां भगवति समन्वयप्रतिपादनादस्ति शास्त्रादिसंगतिः। श्रुत्यादिसंगतिं विषयादिकं च सूचयन् सौत्रं पूर्वपक्षांशं तावद्व्याचष्टे ॥ तन्विति ॥ तत्तु समन्वयादिति सूत्रे सर्वशब्दानां परमात्मपरत्वमुक्तम्। सर्वान्तर्गताव्यक्तादिशब्दैश्च काठकादौ किंचिदुच्यते। 'महतः परमव्यक्तमव्यक्तात्पुरुषः परः'। 'योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः। स्थाणुमन्ये तु संयान्ति यथा कर्म यथा श्रुतम्'। 'जीवा एव तु दुःखिनः' इति। तस्याव्यक्तादेर्विष्णोरन्यत्वे न तस्य सर्वशब्दवाच्यतेत्यवश्यनिर्णेयता। तदव्यक्तजीवादिपदवाच्यं विषयः। किं विष्णुरन्यद्वेति संदेहः। समन्वयसूत्रमन्यत्रैव प्रसिद्धिश्च संदेहबीजम्। प्रधानाद्येवाव्यक्तादिपदवाच्यं न तु विष्णुरिति पूर्वः पक्षः। अव्यक्तादिशब्दानां प्रधानादावेव प्रसिद्धेः। न च तेषां विष्णावपि सावकाशतेति वाच्यम्। तत्राव्य-

वतस्य पुरुषावरत्वश्रवणात् । तच्च प्रधानस्य युक्तं न तु विष्णोः । 'न तत्समश्चाभ्यधिकश्च दृश्यते' इत्यादिप्रमाणविरोधात् । तथाऽव्यक्तस्य महत्परत्वश्रवणात् । तदपि प्रधानस्यैवोपपन्नम् । 'महान्तं च समावृत्य प्रधानं समवस्थितम् ।' इत्यादेः विष्णोरव्यक्तादपि परत्वात् । जीवानां च दुःखिबद्धत्वादिप्रतीतेः । तच्च विष्णोः प्रमाणविरुद्धम् । तस्मादव्यक्तादिशब्दवाच्यं प्रधानाद्येव । यत एवं केषांचिच्छाखास्वव्यक्तादिशब्दैः प्रधानाद्येवोच्यतेऽतो यत्तु समन्वयादिति सर्वशब्दानां परमेश्वराभिधायकत्वं उक्तं तन्न युज्यत इति भावः । सिद्धान्तांशं व्याचष्टे ॥ नेति ॥ यतः परमात्मैव अव्यक्तादिशब्दवाच्यो न प्रधानादि । अतः परमात्मन एवाव्यक्तादिशब्दवाच्यत्वग्रहणात् यत्सर्वशब्दानां परमात्मपरत्वं न युज्यत इत्युक्तं तन्न इत्यर्थः । यस्मिन्समन्वयः प्रतिज्ञातः तस्यैवेति स्वपदं परमात्मन एवेति व्याख्यातम् ।

परमात्मन एवाव्यक्तादिशब्दवाच्यत्वे कथं प्रधानादौ तद्व्यवहारः । अवाचकत्वेऽप्यनभिज्ञानादिना व्यवहार इत्युक्तमिति चेन्न । तथा सत्यवाचकत्वाविशेषेण घटादिशब्दानां पटादौ व्यवहारप्रसङ्गादित्याशङ्कानिरासायोक्तं शरीररूपकविन्यस्तेति । तद्व्याचष्टे ॥ पारतन्त्र्यादिति ॥ यथा शरीरं पुरुषतन्त्रं तथा परमात्मतन्त्रत्वेन शरीरसमे प्रधानादौ स्थितस्य इत्यर्थः । नन्वत्र पारतन्त्र्याभिप्रायेण प्रधानादेः परमात्मशरीररूपत्वमसूत्रयदिति कुतो ज्ञायते शरीरत्वाभिप्रायेण किं न स्यादित्यत आह ॥ कप्रत्यय इति ॥ न प्रधानादेः परमात्मशरीरत्वाभिप्रायेणैतत्पदं प्रायुंक्त सूत्रकारः यावता तत्कप्रत्ययेन कुत्सयामास । न हि कुत्सनार्हं परमात्मशरीरमिति भावः । अन्यथा रूपपदवैयर्थ्याच्च । शरीररूपकविन्यस्तपदं व्याख्याय तदभिप्रायमाह ॥ परमात्मन एवेति ॥ यद्यपि परमात्मन एवाव्यक्तादिशब्दा वाचकास्तथापि न प्रधानादौ तद्व्यवहारायोगः । प्रधानादौ परमात्मनो विन्यस्ततया तत्संबन्धेन तत्रापि शब्दप्रवृत्तेः । न च वाच्यमुभयोरपि मुख्यवाच्यत्वं विपरीतं वा किं न स्यादिति । प्रधानादेः भगवत्तन्त्रत्वेनोभयोर्मुख्यवाच्यत्वायोक्तविपर्ययस्य चायोगादिति भावः । तदुक्तं गारुडे । 'एवमेव हि शब्दानां प्रसिद्धिरपि लौकिकी । वाचकत्वं प्रधानस्य त्वितरस्य तदन्वयात्' । इति । न च मञ्चादावुक्तव्यभिचारः शङ्कनीयः । समाकर्षादिति वक्ष्यमाणन्यायस्यात्राभिप्रेतत्वेन लक्षणानाश्रयणादिति । अत्र सर्वत्राव्यक्तपदं जीवाद्युपलक्षणार्थम् । ननु परमात्मन एवाव्यक्तादिशब्दाभिधेयत्वं प्रधानादेस्तु तत्संबन्धादेवेति युज्यते यदि प्रधानादेरल्पत्वं परमात्मनः स्वातन्त्र्यं प्रधानादिविन्यस्तत्वं च भवेत्तदेव कुत इत्यत आह ॥ तुच्छेनेति ॥ अल्पेनाव्यक्तेन विभुब्रह्मापिहितमासीदित्यर्थः । 'य आत्मनि

तिष्ठन्नित्यादिश्रुत्यन्तरं चात्रोदाहर्तव्यम्। परमात्मनोऽव्यक्तादिशब्दवाच्यत्वे सिद्धे भवेत्प्राचीनचिन्ता। तदेव कुत इत्यतो दर्शयतिचेतिशब्दाभ्यां सूचिते श्रुतिस्मृती पठति ॥ अव्यक्तमिति ॥ अचलमीश्वरभावात्। शान्तं निर्विकारम्। निष्क्रियम् अक्लिष्टकारित्वादेः। आत्मानमादानादेः। यस्याक्षरस्य ब्रह्मत्वमुक्तं तस्यैवाव्यक्तत्वमुच्यत इत्यर्थः। 'अनेन जीवेनाऽऽत्मना' इत्यादिश्रुतिः 'जीवो विनयिता साक्षी' इत्यादिस्मृतिश्चोदाहर्तव्या ॥ १ ॥

भावदीपः—

॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥ ॥ ॐ आनुमानिकमप्येकेषां० ॐ ॥ १ ॥ पूर्ववत्कृत्स्नपादार्था(र्थत्वा)प्रतीतेराह ॥एतदिति॥ अत्रैतत्समन्वये का संगतिरित्यत आनंदमयनये प्रागुक्तं स्मारयति॥ अन्यत्रेति॥ भाष्ये शब्दपदं नामलिंगपरमित्युपेत्याऽऽह ॥ उभयविधेति॥ श्रुतिर्लिंगादिभिरित्यस्योपयोगं वक्तुमाह ॥ नन्विति ॥ पूर्वं क्वचिदिति ॥ द्वितीयपाद इत्यर्थः ॥प्राबल्यादिति॥ श्रुतेरर्थांतरपरत्वमपि विनाऽनुपपद्यमानत्वरूपात्प्राबल्यादित्यर्थः। तादृशश्रुत्यादिकं च प्रतिनयं दर्शयिष्याम इति भावः। सामस्त्येनेत्येतद्व्याचष्टे ॥ पूर्वमिति ॥ त्रिपाद्यामित्यर्थः ॥ स्पष्टत्वेति ॥ जन्मादिसूत्रे कंठोक्तेरित्यर्थः॥ तत्संगतानां चेति ॥ आनंदमयाकाशादिशब्दानामित्यर्थः ॥ ततोऽपि प्रबलेति ॥ विष्णुपरत्वं विनाऽनुपपद्यमानैस्तदधीनत्वज्ञेयत्वावचनादिभिरित्यर्थः। विशेषहेतुभिरित्येतत्प्रकारांतरेण व्याचष्टे ॥ यदुदितमिति॥ प्रागनुक्तेति ॥ तदधीनत्वादिभिरित्यर्थः। तदधीनत्वादित्युक्तिः सूत्रकृताऽत्रोक्तैव भाष्यादौ पूर्वमुक्तेति भावः। तत्त्वित्याद्यग्रेतनभाष्योपपत्तिं जन्माद्यस्येति सूत्रेण गुणसर्वस्वसिद्धये इत्याद्यानंदमयनयानुभाष्यदिशा वक्तुमाह ॥स्यादेतदिति॥न हीति॥ संकोचकाभावादिति भावः। अन्योपलक्षणत्वेनोक्तौ बीजमाह ॥ तस्याखिलगुणेति ॥ पूर्वत्रेव संगतिभाष्यभ्रांतिनिरासायाऽऽह ॥ सूत्रमेवेति ॥ अवरत्वादीति ॥ दुःखित्वादिरादिपदार्थः। तस्य प्राबल्यायोक्तं भगवति विरुद्धतयेति ॥ श्रुत्यादीति ॥ समन्वयसूत्रे सर्वश्रुतिगतसर्वशब्दार्थत्वोक्त्या तदधिकरणेन तद्विषयभूतसर्वश्रुतिनिचयेन च संगतिमित्यर्थः। उच्यत इत्यंतं भाष्यं संगतिसूचकत्वेन तावद् व्याख्यातुं उक्त इत्यंतस्यार्थमाह॥ तत्त्वित्यादिना ॥ तत्रेत्यादेरर्थः सर्वेत्यादि ॥ अव्यक्तादीति ॥ दुःखिबद्धावरादिदोषवाचिनः सर्वेऽपि शब्दा आदिपदार्थाः। उक्तं

चानुभाष्ये। दुःखिबद्धावराद्यास्त्विति। पूर्वपक्षे युक्तिसूचनाय महतः परमित्यंशोक्तिः। सूत्रभाष्ये उपलक्षणं मत्वाऽऽह ॥ योनिमिति ॥ अनेन बद्धत्वमुच्यते ॥ जीवा इति ॥ 'अदुःखमितरत्सर्वं जीवा एव तु दुःखिनः। तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तते' इति श्रुतौ किंचिदुच्यत इत्यर्थः। त्रिष्णोरन्यत्वे वक्ष्यमाणदिशेति भावः। उक्त इत्यंत-वाक्यस्य भावोक्तिः ॥ न तस्येति ॥ इति संगतिसंभवादितीतिशब्दो हेत्वर्थः। एव-मव्यक्तादिशब्दास्सर्वेऽन्यत्र प्रसिद्धा अपीति वक्ष्यमाणभाष्यानुरोधेन विषयादिकमाह ॥ तद्व्यक्तेति ॥ तन्नेत्यादिभाष्यं पूर्वपक्षादिपरत्वेनापि व्याख्यातुं प्रधानमप्युच्यत इति प्रतिज्ञामुपलक्षणत्वेन व्याचष्टे ॥ प्रधानाद्येवेति ॥ एतेनापिरेवार्थ इति दर्शितम्। तत्र हेत्वाकांक्षायां वक्ष्यमाणभाष्यसूचितां युक्तिमाह॥ अव्यक्तेति ॥अव्यक्तादिशब्दानां परमात्मविषयत्वांगीकारे सर्वमानविरोध इति न्यायविवरणमत्र योजयितुं शंकामाह ॥ न चेति ॥ नामपादीयन्यायेनेति भावः। 'महतः परं ध्रुव'मित्याद्यग्रेतनभाष्यलब्धां युक्तिमाह ॥ तथाऽव्यक्तस्येति ॥ महांतं महत्तत्वम्। इत्येकादशगीताभाष्योक्त-स्मृतेरित्यर्थः ॥ विष्णोरिति ॥ अदृश्यत्वनये तथा निर्णयादिति भावः। न्यायविव-रणस्थादिपदार्थं व्यंजयन् तत्रापि मानविरोधयुक्तिमाह ॥ जीवानामिति ॥ तच्चेति ॥ दुःखित्वादिकं निरनिष्टो निरवद्य इत्यादिप्रमाणविरुद्धमित्यर्थः। ननु भाष्ये प्रधानमप्यु-च्यत इति प्रतिज्ञामात्रं श्रूयते न तूक्तहेतुवाचि किमपीत्यतः तन्नेत्यत्र तच्छब्दः पंचम्यंत-तया इहाप्युक्तसर्वहेतुपरामर्शितयाऽन्वेतीति भावेनाऽऽह ॥ तस्मादिति ॥ अव्यक्तादिश-ब्दानां प्रधानादौ प्रसिद्धत्वात् अवरत्वादीनां श्रुतानामपि तत्परत्वे प्रमाणाविरोधाच्चे-त्यर्थः। एवं सानुषंगप्रतिज्ञांशं व्याख्याय समग्रभाष्यं यत इत्याद्युक्त्या अतो यदित्यध्या-हृत्य योजयति ॥ यत एवमिति ॥ उपक्रमादिलिंगकशक्तितात्पर्यावधारणरूपसमन्वयस्य तत्रोक्तेराह ॥ परमेश्वरेति ॥ भाष्ये तन्नेति समन्वयशब्दाभिमतस्य परमेश्वरवाचित्व-परामर्श इति भावः ॥ छ ॥ परमात्मन एवाव्यक्तशब्देन गृहीतेरित्येतत् नेत्यत्र हेत्वा-कांक्षापूरकं मत्वा हेतोरसिद्धिनिरासायाऽनुवादलब्धविधेयमाह ॥ परमात्मैवेति ॥ अत इत्यस्यैवार्थः परमात्मन एवेत्यादि। नेत्यत्र प्रतियोग्यपेक्षायां तन्न युज्यत इत्येत-दन्वेतीत्याशयेनाऽऽह ॥ यत्सर्वेति ॥ सूत्रेऽदर्शनादाह ॥ स्वपदमिति ॥ तस्यार्थो यस्मि-न्नित्यादि। अपौनरुक्त्यायाऽऽह ॥ इति व्याख्यातमिति ॥ परमात्मन एवेत्यादिभाष्ये तात्पर्योक्त्यनुरोधेन सूत्रांशमवतारयति ॥ परमात्मन एवेति ॥ साक्षादप्यविरोधं जैमि-निरित्यनेन गतार्थत्वमाशंक्य निराह ॥ अवाचकत्वेऽपीति ॥ शरीरसम इति॥ रूपशब्दः

समार्थ इति दर्शितम् । प्रायुङ्क्त प्रयुक्तवान् । प्रोपाभ्यां युजेरयज्ञपात्रेष्वित्यात्मनेपदम् । अन्यथा मुख्यशरीरत्वे शरीरविन्यस्ततेत्येव सामंजस्यात् । अस्मत्पक्षे तु शरीरस्य रूपमिव रूपं यस्येति विग्रहसूचनार्थत्वेन सार्थक्यादिति भावः । पुनरुक्तिप्रतीतेराह ॥ शरीरेति ॥ अनेन भाष्येण प्रागुक्तशंकानिरासप्रकारं दर्शयति ॥ यद्यपीत्यादिना ॥ विपरीतं वेति ॥ प्रधानसंबंधाच्छब्दवृत्तिरिति ॥ एवमित्युक्तं व्यनक्ति ॥ ॥ वाचकत्वमिति ॥ प्रधानस्य स्वतंत्रस्य हरेः । कर्मणि षष्ठी । इतरस्य जगतः । वाचकत्वं शब्दानां तदन्वयात् । प्रधानहरिसंबंधादित्यर्थः ॥ न च मंचादाविति ॥ पारतंत्र्यादमुख्यत्वमिति व्यभिचरितं मंचातंत्रेऽपि पुरुषे मंचशब्दस्य अमुख्यार्थत्वदर्शनादिति न शंक्यमित्यर्थः । समाकर्षादित्यत्र परममुख्यमुख्यवृत्तिभेदेन वृत्तितारतम्यस्य मुख्यवृत्तावेव वक्ष्यमाणत्वेनेहापि हरौ परममुख्यत्वं तत्संबंधात्प्रधानादौ मुख्यत्वं न लक्षणावृत्तिरिति मुख्यवृत्तावेव हीनत्वे प्रवृत्तिनिमित्तपारतंत्र्यं हेतुः न लक्षणायामित्यभिमतत्वेन पारतंत्र्याभावेऽपि मंचादिशब्दे लक्षणायास्संभवादित्यर्थः । अव्यक्तादीत्यग्रे भाषणादाह ॥ अत्रेति ॥ अधिकरण इत्यर्थः । सर्वत्र सूत्रेषु भाष्ये चेत्यर्थः । अल्पत्वं पारतंत्र्यमित्यर्थः । तुच्छेनेत्यस्यार्थोऽल्पेनेति । परतंत्रेणेत्यर्थः । अव्यक्तेनेति विशेष्यम् । अनेन प्रधानस्य पारतंत्र्यं हरेस्तत्र स्थितत्वं च सिद्धमिति भावः । जीवस्य अस्वातंत्र्ये हरेर्जीवविन्यस्तत्वे च अंतर्यामिनये ब्रह्मपरत्वेन सिद्धश्रुत्यंतरमाह ॥ य आत्मनीति ॥ प्राचीनेति ॥ अव्यक्तशब्दवाच्यभगवत्संबंधादन्यत्र शब्दवृत्तिविचार इत्यर्थः । निष्क्रियमित्यनेनापौनरुक्त्यायाऽऽह ॥ अचलमीश्वरभावादिति ॥ अक्लिष्टेति ॥ अकर्माक्लिष्टकारित्वात् इत्येकादशस्कंधतात्पर्योक्तेरिति भावः । प्राकृतादिक्रियाराहित्यमादिपदार्थः । अन्यभावव्यावृत्तेरित्युक्तेः । निष्कलं प्राकृतषोडशकलारहितमिति स्पष्टमिति भावः । स्वात्मानमिति भ्रमनिरासायाऽऽह ॥ आत्मानमिति ॥ भाष्ये इत्युक्त्वेत्यंतोक्तेरुपयोगायार्थमाह ॥ यस्येति ॥ उक्तमिति ॥ गीतायामष्टमेऽध्याये उक्तमित्यर्थः । जीवशब्दवाच्यत्वेऽपि श्रुतिस्मृती आह ॥ अनेनेति ॥ छांदोग्ये षष्ठे श्रुतेयं श्रुतिः । तत्र जीवशब्दस्य ईशपरत्वं चेमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीत्यादौ जीवानुप्रवेशात्पूर्वमेव देवतापदप्रयोगेण चेतनत्वावगमेन पुनर्जीवप्रवेशोक्तेः वैयर्थ्येन जीवाख्यानिरुद्धरूपात्मना भगवत एवानुप्रवेश इति तत्वनिर्णयछांदोग्यभाष्यादौ व्यक्तमिति भावः ॥ जीव इति ॥ सहस्रनाम तु ॥ १ ॥

सूत्रभाष्यम्—

॥ ॐ सूक्ष्मं तु तदर्हत्वात् ॐ ॥ २ ॥

सूक्ष्ममेवाव्यक्तशब्देनोच्यते । तध्यव्यक्ततामर्हति । सूक्ष्मत्वं च मुख्यं तस्यैव ।

'यत्तत्सूक्ष्मं परमं वेदितव्यं नित्यं पदं वैष्णवं ह्यामनन्ति ।
यत्तल्लोका न विदुर्लोकसारं विन्दन्त्येतत्कवयो योगनिष्ठाः ॥'

इति च पिप्पलादशाखायाम् । मुख्ये च विद्यमाने नामुख्यं युक्तम् ॥ २ ॥

तत्वप्रकाशिका—

नन्वस्त्वेवं श्रौतस्मार्तप्रयोगबलेनाव्यक्तादिशब्दानां भगवद्वाचित्वम् । तत्र तेषां मुख्यत्वं तु कुतः प्रयोगस्यामुख्यवाच्येऽपि (अमुख्येनापि) संभवादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ सूक्ष्ममिति ॥ अव्यक्तत्वस्यैवाव्यक्तशब्दप्रवृत्तिनिमित्तत्वात्कथं सूक्ष्ममेवाव्यक्तशब्देनोच्यत इति तत्राऽऽह ॥ तद्धीति ॥ अस्तु सूक्ष्मस्यैवाव्यक्तशब्दप्रवृत्तिनिमित्ताव्यक्तताऽर्हत्वात्तदव्यक्तशब्दवाच्यम् । तथापि प्रकृते किमायातमित्यत आह ॥ सूक्ष्मत्वं चेति ॥ युक्तं परमात्मन्यव्यक्तशब्दस्य मुख्यत्वम् । तदर्थभूताव्यक्तत्वस्य परमात्मनि सत्त्वात् । अव्यक्तत्वोपयोगिनः सूक्ष्मत्वस्य तत्र सद्भावात् । न च वाच्यं प्रधानस्यापि सूक्ष्मत्वेनाव्यक्तत्वसंभवात् कथमव्यक्तशब्दस्य परमात्मनि मुख्यतेति । विष्णोरतिसूक्ष्मत्वेना(स्या)त्यंतमव्यक्तत्वादतिशयेन प्रवृत्तिनिमित्तवत्येव शब्दस्य मुख्यत्वादिति भावः । कुतो विष्णोः मुख्यसूक्ष्मत्वं येन तस्य मुख्याव्यक्तत्वमिति तत्राऽऽह ॥ यदिति ॥ 'यत्तल्लोकोत्तमं नित्यं विष्णोः स्वरूपं परमसूक्ष्मं वेदितव्यम्' 'एषोऽणुरात्मा चेतसा वेदितव्यः' इत्याद्यामनन्ति । यच्च पृथग्जना न विदुस्तदेतदुपायसिद्धा ज्ञानिनः पश्यन्तीत्यर्थः । एवं जीवादिशब्दप्रवृत्तिनिमित्तानां प्राणधारणादीनां भगवति मुख्यत्वेन तच्छब्दानां तत्र मुख्यत्वं द्रष्टव्यम् । तदुक्तम् 'स जीवनामा भगवान् प्राणधारणहेतुतः । उपचारेण जीवाख्या संसारिणि निगद्यते' । इत्यादि । नन्वस्तु विष्णौ मुख्यं शब्दप्रवृत्तिनिमित्तं प्रधानादावपि किंचिदव्यक्तत्वादिसद्भावादव्यक्तात्पुरुषः पर इत्यादौ तद्वाच्यं किं न स्यादिति चेत् । तत्किं परमात्मनो मुख्यवाच्यत्वमङ्गीकृत्य मुख्यतयाऽन्यस्यापि वाच्यत्वं स्यादित्युच्यते । उतान्यस्यैव । आद्ये न विरोधः । न चोभयार्थत्वे वाक्यभेदः । प्रधानविशिष्टस्यैव परमात्मनः शब्दवाच्यत्वाभ्युपगमात् । द्वितीयं

निराह ॥ मुख्ये चेति ॥ मुख्यतोऽव्यक्तादिशब्दार्थवति विष्णावव्यक्तादिशब्दवाच्यतया संभवति तत्परित्यागेनामुख्यतः शब्दार्थवतां प्रधानादीनामत्र वाच्यतया ग्रहणं न युक्तम् । मुख्यासंभव एव गौणाश्रयणस्य न्यायत्वा(प्राप्तत्वा)दिति भावः ॥ २ ॥

भावदीपः--

॥ ॐ सूक्ष्मं तु तदर्हत्वात् ॐ ॥ २ ॥ मुख्यत्वामिति॥ परममुख्यत्वमित्यर्थः । एवं पदार्थानुक्त्वा तात्पर्योक्त्या उक्तशंकां निराह ॥ युक्तमित्यादिना ॥ मुख्यमित्युक्तमुख्यपदतात्पर्यं व्यनक्ति ॥ न चेत्यादिना ॥ लोकसारं लोकोत्तमम् । पदं स्वरूपम् । उत्तमानां स्वरूपं तु पादशब्देन भण्यत इत्युक्तेः । एषोऽणुरित्याथर्वणे । पृथग्जनाः पामरा इत्यर्थः । यच्च पृथग्जना न विदुः । तदेतदिति तच्छब्दद्वयस्य च योजना। योगनिष्ठा उपायसिद्धाः । कवयो ज्ञानिनः । विदंतीत्यस्य योगनिष्ठा इत्याद्युक्त्यनुरोधेनार्थमाह ॥ पश्यंतीति ॥ साक्षात्कुर्वतीत्यर्थः ॥ तदुक्तमिति ॥ गीतातात्पर्ये द्वितीय इत्यर्थः । मुख्यवाच्यत्वं परममुख्यवाच्यत्वम् ॥ अमुख्यतयेति ॥ परममुख्यवृत्त्यपेक्षया एवमुक्तिः । लोकसिद्धयोगरूढ्यादिरूपमुख्यवृत्त्येत्यर्थः । न तु लक्षणादिनेति भ्रमितव्यम् । लक्षणानाश्रयणादिति प्रागेवोक्तत्वात् । एवमग्रेऽपि बोध्यम् । शरीररूपकविन्यस्तगृहीतेरित्यंशतात्पर्यमाह ॥ प्रधानविशिष्टस्यैवेति ॥ लोकसिद्धन्यायमाह ॥ मुख्यासंभव इति ॥ यद्वा परममुख्यापेक्षया गौणेत्युक्तिः ॥ २ ॥

सूत्रभाष्यम्--

॥ ॐ तदधीनत्वादर्थवत् ॐ ॥ ३ ॥

तदधीनत्वाद्व्यक्तत्वादीनां तस्यैवाव्यक्तत्वपरावरत्वादिकमर्थवत् ।

'यदधीनो गुणो यस्य तद्गुणी सोऽभिधीयते ।
यथा जीवः परात्मेति यथा राजा जयीत्यपी'ति च स्कान्दे ॥ ३ ॥

तत्वप्रकाशिका--

नन्वस्त्वेवं परमात्मन्येवाव्यक्तादिशब्दानां मुख्यत्वम् । तथाप्यव्यक्तात्पुरुषः पर इत्यादौ प्रधानाद्येवोच्यते । न विष्णुः । अव्यक्तादीनां महत्परत्वस्य पुरुषावरत्वस्य दुःखिबद्धत्वादेश्च श्रवणात् । तस्य च प्रधानादावेव संभवात् । सर्वप्रमाणविरोधेन परमात्मन्यसंभवात् । अतो विष्णोः मुख्यार्थत्वेऽपि तद्ग्रहणे परावरत्वादि-

श्रुतेः नैरर्थ्यादमुख्यमपि प्रधानादि ग्राह्यमित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ तदधीनत्वादिति ॥ नाव्यक्तादिशब्दैः परमात्मनो वाच्यत्वग्रहणे परावरत्वादिश्रुतिनैरर्थ्यं येन मुख्यार्थं परित्यज्याऽमुख्यार्थाभ्युपगतिः । किं नाम तस्मिन्नेवावरत्वादिवाचिशब्दजातमर्थवत् । प्रधानादिगतपरावरत्वादिधर्माणां भगवदधीनत्वात् । अन्यगतशब्दार्थनियन्तृत्वं तदधिकरणत्वं चेति द्विधा हि प्रवृत्तिनिमित्तम् । तत्र परमात्मनो निरनिष्टो निरवद्य इत्यादिनाऽवरत्वादिदोषात्यस्पृष्टिनियमात्तदन्यथानुपपत्त्या तत्तन्नियामकत्वेन तत्तच्छब्दवाच्यतापातात् । न च तदवाच्यतयाऽन्यथोपपत्तिः । 'नामानि सर्वाणि यमाविशन्ति' इत्यादिश्रुतिविरोधात् । न च संकोचः । सर्वाणीत्यस्य निरवकाशत्वात् बाधकाभावाच्चेति भावः । अत्र अव्यक्तत्वग्रहणेनाव्यक्तशब्दस्य द्वेधाऽपि परमात्मनि वृत्तिरिति दर्शयति । अत एव भाष्ये चशब्दः । अनेन प्रधानादेरतिसूक्ष्मत्वाद्यभावेऽपि नामुख्यार्थत्वमल्पपङ्कजेऽपि पद्मे पङ्कजशब्दस्यामुख्यार्थताऽदर्शनादिति शङ्का च निरस्ता भवति । ननु भवेदेतत्प्रधानादिगतशब्दप्रवृत्तिनिमित्तप्रेरकत्वेनेश्वरस्यावरत्वादिशब्दवाच्यत्वम् । यद्यन्यगतशब्दप्रवृत्तिनिमित्तप्रेरकेऽसौ शब्दो वर्तत इति सिध्येत्तदेव कुत इति तत्राह ॥ यदधीन इति ॥ यथा परमात्मा जीवगतप्राणधारणस्य तदधीनत्वेनानेन जीवेन इत्यादौ जीवशब्देनोच्यते । यथा च भृत्यगतजयस्य राजाधीनत्वादसौ जयीत्युच्यते इत्यर्थः । न च अन्यगतशब्दप्रवृत्तिनिमित्तप्रेरके शब्दप्रवृत्तिरमुख्या । राजनि विजयिशब्दस्य बहुलप्रयोगात् यमादौ मृत्युप्रमुखशब्दानां च तथात्वात् बहु(ल)प्रयोगसिद्धस्यैव मुख्यत्वात् । अवरयतीत्यादिव्युत्पत्त्युपपत्तेश्च । तथा च श्रुतिः । स बद्धः स दुःखी स बन्धयति स दुःखयतीति स जीवः सा प्रकृतिः स जीवयति स प्रकरोति सोऽवरः सोऽनित्यः सोऽवरयति सोऽनित्ययति' इत्यादिका । एवं प्रयोगप्रवृत्तिनिमित्तातिशयाभ्यां परमात्मन्येवाव्यक्तादिशब्दानां मुख्यत्वात् । मुख्यार्थस्यैव ग्राह्यत्वात् स एवाऽव्यक्तात्पुरुषः पर इत्यादावुच्यते न प्रधानादीत्युक्तम् ॥ ३ ॥

भावदीपः—

॥ ॐ तदधीनत्वादर्थवत् ॥ ३ ॥ मुख्यासंभवोऽसिद्ध इति शंकते ॥ नन्विति ॥ ॥ परावरत्वादिश्रुतेरिति ॥ परशब्दः परत्वश्रुतिः । अव्यक्तादिति पंचमी त्ववरत्वाक्षेपकावधित्वावाचित्वादवरत्वश्रुतिरित्युच्यत इति ध्येयम् । उक्तशंकानिवृत्तिपूर्वं तस्यैवेति सूत्रांशभाष्यं व्याचष्टे ॥ नाव्यक्तेति ॥ तस्येति पदं सप्तम्यंतं व्याचष्टे

॥ तस्मिन्निति ॥ तदित्यादिभाष्यार्थमाह ॥ प्रधानेति ॥ अवरत्वसमवायादेरवरादिशब्दप्रवृत्तिहेतोरीशेऽभावेन तच्छब्दवाच्यता नेत्यस्य किमुत्तरमनेनोक्तं स्यादित्यतः अवरत्वादि धर्मनियंतृत्वं तत्तादात्म्यपरत्वं चेति द्विधि(धं ह्यवरत्वादि) धमवरत्वं निरनिष्टो निरवद्य इत्यादिश्रुतेः तत्तद्दोषतादात्म्यात्यस्पृष्टिनियमाद्विष्णोः नामानि सर्वाणि यमाविशंतीति श्रुतिबलाच्च नियंतृत्वमवरत्वादिकमित्यापतति । श्रुतिद्वयस्यापि निरवकाशत्वादिति न्यायविवरणमत्र योजयति ॥ अन्यगतेति ॥ द्विधा हीति हि शब्देन भाष्ये वक्ष्यमाणप्रसिद्धिर्दर्शिता । अस्त्ववरत्वादिबाधकात्संकोच इति तत्राऽऽह ॥ बाधकेति ॥ तस्य समाहितत्वादिति भावः । ननु भाष्ये तदधीनत्वाच्चावरत्वादीनामिति वाच्येऽव्यक्तत्वादीनामित्याद्युक्तिः किमर्था । अव्यक्तशब्दप्रवृत्तिनिमित्तस्य सूक्ष्मं तु इत्यत्रेशे प्रतिपादनेन तस्मिन् शब्दे अमुख्यत्वशंकानुदयादित्यत आह ॥ अत्राव्यक्तत्वेति ॥ अत एव पूर्वनिमित्तस्योक्तत्वादेवेत्यर्थः । प्राचीननिमित्तेनैव अव्यक्तादिशब्दस्येशे मुख्यत्वोपपत्तौ तदधीनत्वन्यायः किमर्थ तत्र संचारित इत्यत आह ॥ प्रधानादेरिति ॥ एतच्च तुष्यतु दुर्जन इति न्यायेनोक्तम् । वस्तुतस्तु प्रवृत्तिनिमित्तस्य हरौ मुख्यत्वेनैव मुख्यत्वोपपत्तेरिति वक्ष्यमाणत्वेन तन्न्यायस्याव्यभिचारात् । पद्मत्वजातेरेव निमित्तत्वेन विवक्षिततया तस्याल्पपंकजेऽपि सत्वेन अमुख्यत्वानापत्तेः । अन्यथाऽग्रेतनवाक्यविरोधादिति ध्येयम् ॥ निरस्तेति ॥ अव्यक्तत्वग्रहणेनेत्यनुषंगः । लौकिकं च दृष्टांतं व्यनक्ति ॥ यथा चेति ॥ अभिधीयत इत्युक्ताभिधावृत्तिं साधयितुं न हि भृत्यस्य विजयिशब्दस्तावत्प्रयुज्यते ॥ यावद्राज्ञ्यन्यगत्वेऽपि स्वातंत्र्याभासमात्रत इत्यनुभाष्योक्तमत्र योजयितुं शंकामाह ॥न चेति॥ मृत्युशब्दादिषु प्रसिद्धेश्च प्रसिद्धत्वाच्च कर्तृव्युत्पत्तेरिति न्यायविवरणोक्तमाह ॥ यमादावित्यादिना ॥ स्वातंत्र्येण निमित्तेन मुख्यत्वादित्यर्थः । यद्यपि न्यायविवरणे तमेव मृत्युममृतमिति हरावेव मृत्युप्रभृतिशब्दस्य श्रुतौ प्रसिद्धिर्दर्शिता । तथाप्येतदुदाहरणांतरमित्यदोषः । नियामकाभावादन्यथापि व्युत्पत्तिः स्यादित्यतो मांडूकभाष्योक्तश्रुतिमाह ॥ तथा चेति ॥ एतेन प्रसिद्धेश्चेत्युक्तप्रसिद्धिरुपपादिता । एतच्चावरत्वाक्षेपकावधित्ववाचिपंचमीभिन्नावरादिशब्दविषयम् ॥ स एवेति ॥ प्रधानादिविशिष्ट एवेत्यर्थः ॥ न प्रधानादीति ॥ प्रधानाद्येवेत्यर्थः । यद्वा मुख्यत्वादित्यादिमुख्यशब्दस्य परममुख्यार्थत्वे तु यथान्यासमेव योज्यम् ॥ अन्यथा अन्यस्यापि वाच्यत्वाभ्युपगमादित्यादिपूर्वेण विरोधात् । एवमग्रेऽपि विष्णोरेवेत्यादौ ध्येयम् ॥ ३ ॥

सूत्रभाष्यम्––

॥ ॐ ज्ञेयत्वावचनाच्च ॐ ॥ ४ ॥

अन्यस्य न वाच्यत्वं युज्यते ॥ ४ ॥

तत्वप्रकाशिका––

तदेव युक्त्यन्तरेणोपपादयत्सूत्रमुपन्यस्य तच्छेषं पूरयति॥ ज्ञेयत्वेति ॥ विष्णोरेवाव्यक्तादिश्रुतिवाच्यत्वम्। न प्रधानादेः। 'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः' इति विष्णोरेव मोक्षार्थं ज्ञेयत्ववचनात्। प्रधानादेस्तदभावात् यज्ज्ञानेन मोक्षः तज्ज्ञापन एव वेदस्य प्रवृत्तत्वादिति भावः। तथा च श्रावयति। 'न तादृशी प्रीतिरीड्यस्य विष्णोर्गुणोत्कर्षज्ञातरि यादृशी स्यात्। तत्प्रीणनान्मोक्षमाप्नोति सर्वस्ततो वेदास्तत्पराः सर्व एव' इति ॥ ४ ॥

भावदीपः––

॥ ॐ ज्ञेयत्वावचनाच्च ॐ ॥ ४ ॥ आकांक्षां पूरयन् भाष्यं व्याचष्टे ॥ विष्णोरेवेति ॥अन्यार्थं तु जैमिनिरित्यादौ अन्यस्यापि ज्ञेयत्वोक्तेः सौत्रहेतोरसिद्धिनिरासाय उपलक्षणं मत्वा सूत्रार्थं शेषोक्तिपूर्वमाह ॥ तमेवेति ॥ इयं च द्युभ्वादिनये विष्णुपरत्वेन निर्णीता। अस्त्वेवं तावतान्यस्यावाच्यत्वं कुत इत्यतो भावमाह ॥ यज्ज्ञानेनेति ॥ तद्वा कुत इत्यत आह ॥ तथा चेति ॥ श्रावयति श्रुतिर्वक्ति। इयं तत्वनिर्णयादावुदाहृता। अनया श्रुत्या सर्वस्य ब्रह्मपरत्वे सिद्धे प्रतिवाक्यं च तत्परत्वस्यादावंते च मध्ये च विष्णुः सर्वत्र गीयत इत्यादिवचनसिद्धत्वात् स्वतःप्राप्तमुख्यवृत्तित्यागे च हेत्वाभावाद्विष्णोरेव अव्यक्तादिश्रुतिवाच्यत्वमिति भावः ॥ ४ ॥

सूत्रभाष्यम्––

॥ ॐ वदतीति चेन्न प्राज्ञो हि ॐ ॥ ५ ॥

'महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यत' (क. उ. १–३–१५) इति ज्ञेयत्वं वदतीति चेन्न। प्राज्ञः परमात्मा हि तत्रोच्यते। 'अणोरणीयान्महतो महीयानि' (क. उ. १–२–२०) ति तस्यैव हि महतो महत्वम्। सर्वस्मात्परस्य महतोऽपि परत्वं युज्यते ॥ ५ ॥

तत्वप्रकाशिका--

उक्तमाक्षिप्य समादधत् सूत्रमुपन्यस्याऽऽक्षेपांशं तावद्व्याचष्टे ।। वदतीति ।। न प्रधानस्य मोक्षार्थं ज्ञेयत्वे वचनाभावः । 'अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते' इति वचनस्य सद्भावात् । न च वाच्यमत्र प्रधानं प्रतिपाद्यं कुत इति । महत्परत्वलिङ्गादेव । 'महान्तं च समावृत्य प्रधानं समवस्थितम्' । इत्यादेः । पूर्वोक्तरीत्या तदपि विष्णुपरतया नेतुं शक्यमिति चेत् । सत्यम् । अन्यस्यापि वाच्यत्वाभ्युपगमात् । (अतः) प्रधानस्यापि मोक्षार्थं ज्ञेयत्ववचनात्तस्यापि मुख्यतो वेदवेद्यतेति भावः । परिहारांशं व्याचष्टे ।। नेति ।। नैतद्वाक्यबलेन प्रधानस्य मोक्षार्थं ज्ञेयत्वं मन्तव्यम् । यतस्तत्र वाक्ये परमात्मैवोच्यते न प्रधानमित्यर्थः । महतः परत्वलिङ्गात् प्रधानमत्रोच्यत इति । तत्राह ।। अणोरिति ।। नन्वणोरणीयानिति श्रुतौ सर्वस्मात्स्थूलात् स्थूलत्वमेवोच्यते न महत्तत्वपरत्वम् । स्थूलस्यैवाणुप्रतियोगित्वात् । अतो न महत्परत्वलिङ्गं विष्णौ सावकाशमित्यत आह ।। सर्वस्मादिति ।। सत्यमत्र सर्वस्मात्स्थूलात् स्थूलत्वं विष्णोरुच्यत इति तथाप्यनेन महत्परत्वं च सिध्यति । यदा खलु सर्वस्मात् स्थूलात्परस्तदा महत्तत्वपरत्वस्य सुतरां युक्तत्वादिति भावः ।। ५ ।।

भावदीपः--

।। ॐ वदतीति चेन्न प्राज्ञो हि ॐ ।। ५ ।। उक्तमित्येतद्व्यंजयन् महत इत्यादि भाष्यं व्याचष्टे ।। न प्रधानस्येति ।। भाष्ये महतः परमित्यंशोक्तेः उपयोगमाह ।। न च वाच्यमित्यादिना ।। इत्यादेरिति ।। एकादशगीताभाष्योक्तादित्यपुराणवाक्यम् ।। पूर्वोक्तेति ।। तदधीनत्वादर्थवदित्युक्तरीत्येत्यर्थः । तदपि महत्परत्वमपि । तर्हि किमनिष्टं सिद्धान्तेऽपि तस्यानिरासादित्यतो निचाय्येत्याद्यंशोक्तितात्पर्यमाह ।। अत इति ।। निरपवादोक्तलिंगादित्यर्थः । नेत्यत्र प्रतियोग्याकांक्षायां पूर्वयोगोक्तं संयोजयति ।। नैतदिति ।।हीत्यस्यार्थो यत इति । तत्रेति भाष्यस्थानुवादः । ननु महत इति पदेन महत्तत्वमेवोच्यतामित्यत आह ।। स्थूलस्यैवेति ।। प्रतियोगित्वादिति ।। अणोरित्युक्तस्य प्रतिद्वंद्वित्वात् स्थूलवस्तुन एतत्प्रतिद्वंद्वितायोग्यत्वादित्यर्थः ।। ५ ।।

सूत्रभाष्यम्-- ।। ॐ **प्रकरणात्** ॐ ।। ६ ।।

'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदमि' (क.उ.१-३-९) ति तस्य ह्येतत्प्रकरणम् ।। ६ ।।

तत्वप्रकाशिका—

ननु विशिष्य महत्परत्वस्य प्रधानलिङ्गस्यामुख्यार्थतां स्वीकृत्याऽनाद्यनन्तादि-वाक्यस्य विष्णुपरत्वग्रहणे कारणाभावात् प्रधानमेवात्रोच्यत इत्याशङ्कां परिहरत्-सूत्रमुपन्यस्य व्याचष्टे ॥ प्रकरणादिति ॥ नात्र विष्णुग्रहणे कारणाभावो येनान्यस्य वाच्यता शङ्क्येत। एतत्प्रकरणस्य वैष्णवत्वात्। एतत्प्रकरणोक्तार्थोपासकस्य विष्णु-पदप्राप्त्युक्त्या तदवगमात् अन्यप्रकरणत्वे तदयोगादिति भावः । न च लिङ्गात्प्रकर-णस्य दौर्बल्येनासाधकत्वम् । लिङ्गस्योक्तरीत्या सावकाशत्वात् प्रकरणस्य निरव-काशत्वात् । निरवकाशप्रकरणस्यापि सावकाशलिङ्गबाधकत्वोपपत्तेः । न च वाच्यं विशिष्य महत्परत्वलिङ्गं च प्रधानपरे परमात्मनि निरवकाशमिति । प्रधानपरस्यापि 'यो बुद्धेः परतस्तु सः' इत्यादाविव महत्परत्वोक्तिसंभवात् । पूर्वं महत्परत्वेन परमात्मनोऽप्रकृतत्वात् प्रधानस्य तद्भावात् तमिति परामर्शेनैतत्सिद्धमित्युक्तार्थ-विस्मरणविजृम्भितं साधकमस्माकं न परस्य। सत्यम्। तद्वदत्राप्युभयोक्तिः स्यादिति चेन्न । अविरोध एवोभयार्थताऽभ्युपगमात् । न च प्रकरणस्यापि प्रसङ्गादन्योक्ति संभवात्सावकाशत्वेन पुनर्लिङ्गमेव प्रबलमिति युक्तम्। प्रासंगिकोक्तेरत्र प्रयोजना दर्शनात् । 'अनाद्यनन्तं महतः परं ध्रुव'मिति 'परो हि देवः पुरुहूतो महत्परः' (महत्तः)इति श्रुतेश्चेति ॥ ६ ॥

भावदीपः—

॥ ॐ प्रकरणात् ॐ ॥ ६ ॥ प्रकरणादित्यत्र साध्याकांक्षां पूरयति ॥ नात्रेति ॥ तस्यैव हि एतत् प्रकरणमिति अस्यार्थमाह ॥ एतदिति ॥ हिर्हेताविति सूचितम् । कुतो न शंक्येतेत्यतः स इत्यादि पूर्वभाष्यं व्याचष्टे ॥ एतत्प्रकरणेति ॥ उक्त-शंकानिरासकतयाऽपि सर्वस्मात् परस्य महतोऽपि परत्वं युज्यतइति वाक्यमेवात्र योजयति ॥ प्रधानेति ॥ इत्यादाविवेति ॥ यथा गीतायां तृतीयेऽध्याये बुद्धेः परान्मह-दादितोऽपि परस्य बुद्धिपरत्वमुच्यते तथेत्यर्थः । उक्तं च गीताभाष्ये । न केवलं बुद्धेः परः श्रुत्युक्तप्रकारेणाव्यक्तादपीत्यादि । काठकभाष्ये तु स्वभार्यायाः परत्वं च सिद्धमिति महतः परमित्येवोक्तमित्युक्तम्। शंकते ॥ पूर्वमिति ॥ अनाद्यनंतमिति वाक्यात्पूर्वं महतः परमव्यक्तमिति वाक्य इत्यर्थः । इति चोद्यमिति शेषः ॥ उक्तार्थेति ॥ आनुमानिकसूत्र एव व्यक्तशब्दवाच्यं ब्रह्मेत्युक्तार्थइत्यर्थः । शंकते ॥ सत्यमिति ॥ प्रागव्यक्तं ब्रह्मेत्युक्तं सत्यमित्यर्थः ॥ अविरोध एवेति ॥ अविरोधे

तु बह्वर्थाएतन्मूलतया मताइत्यनुभाष्योक्तेः। इह तु मुक्तिहेतुज्ञानत्वविरोधादन्यवाचित्वमपोद्यतइति भावः। ननु षट्प्रश्ने यथा आत्मत एष प्राणो जायत इत्यादि प्राणप्रकरणे प्रसंगाद्धृदि ह्येष आत्मेति जीवोक्तिः तथा विष्णुप्रकरणेऽपि प्रसंगादस्तु प्रधानोक्तिरित्याशंक्य निरस्यति ॥ न चेति ॥ ज्ञानरूपस्य जीवस्यैव विभोर्विषयसंबंधोपपत्तौ किमिंद्रियवृत्तिभिरिति शंकानिरासरूपप्रयोजनं हृदिहीतिवाक्येऽस्तीति भावः। स्पष्टां समाख्यां चाऽऽह ॥ अनादीति ॥ द्वादशे गीताभाष्योक्ताग्निवेश्यश्रुतेश्चेत्यर्थः। (महत्परः) महतः महत्तत्वात्परः ॥ ६ ॥

सूत्रभाष्यम्——

॥ ॐ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॐ ॥ ७ ॥

त्रयाणामेव पितृसौमनस्यस्वर्ग्याग्निपरमात्मनां प्रश्न उपन्यासश्च।

'अविज्ञातप्रार्थनं च प्रश्न इत्याभिधीयत' ॥ इति वचनान्न विरोधः ॥ ७ ॥

तत्वप्रकाशिका——

हेत्वन्तरेणानाद्यनन्तादिवाक्येऽन्यस्यापि प्रतिपाद्यतां पराकुर्वत्सूत्रमुपन्यस्य व्याचष्टे ॥ त्रयाणामेवेति ॥ न केवलमेतत्प्रकरणस्य वैष्णवत्वेन प्रधानस्याप्रतिपाद्यता किं त्वेतदुपनिषद्यपि पितृसौमनस्यादित्रयस्यैवोपन्यासाच्च। तदेव कुतः। तत्त्रयविषय एव नचिकेतसः प्रश्नात् अपृष्टस्य चोपन्यासायोगादिति भावः। त्रयाणामेवोपन्यास इत्युक्ते त्रयेऽपि प्रधानं किं न स्यादिति शङ्कानिरासाय तत्प्रकारं दर्शयन्नेवमित्याह। तदेव व्याचष्टे ॥ पितृसौमनस्येत्यादिना ॥ येयं प्रेते विचिकित्सेत्यादिना मृतजीवस्यास्तित्वादौ तृतीयप्रश्नस्य प्रवृत्तत्वात्कथं परमात्मप्रश्न इति शङ्कातद्भाष्य एव परिहृता। ननु पितृसौमनस्यं वरत्वेन प्रार्थ्यतेऽतः कथं प्रार्थनंप्रश्नइत्यतआह ॥ अविज्ञातेति ॥ यत्प्राप्स्यते न वेत्यज्ञातं तत्प्रार्थनमपि प्रश्न इत्यधीयत इति वचनान्न प्रार्थनस्यापि प्रश्नत्वोक्तिर्विरुद्धेत्यर्थः ॥ ७ ॥

भावदीपः——

॥ ॐ त्रयाणमेव चैवमुपन्यासः प्रश्नश्च ॐ ॥ ७ ॥ आद्यश्चो युक्तिसमुच्चय इति मत्वाऽर्थमाह ॥ न केवलमिति ॥ पितृसौमनस्यादीति ॥ वीतमन्युस्त्वां ददृशिवान्मृत्युमुखात् प्रमुक्तमिति। स्वर्ग्यमग्निं नचिकेतः प्रजानन्निति। देवैरत्रापि विचि-

किति तं किलेत्येवंरूपस्य पितृसौमनस्यस्वर्ग्याग्निपरमात्मरूपत्रयस्येत्यर्थः । उपन्यासो-क्त्यैव प्रधानस्याप्रतिपाद्यतासिद्धौ प्रश्नोक्तिः किमर्थेत्यत आह ॥ तदेव कुत इति ॥ उपन्यासस्य त्रितय विषयकत्वसमर्थनं प्रश्नोक्तेः फलमिति दर्शितम् । पितृसौमनस्ये-त्यादिभाष्यस्य व्यावर्त्योक्तिपूर्वं व्याख्येयं दर्शयति ॥ त्रयाणामिति ॥ सुमना यथा स्याद्वीतमन्युरिति स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तमिति येयं प्रेते विचिकित्सा मनुष्य इति त्रयविषय एवेत्यर्थः । तद्भाष्ये काठकभाष्ये । प्रेते मुक्ते मनुष्ये नियामकत्वेन भगवानस्तीत्यादिना येयं प्रेत इति वाक्यं मुक्तविषयं व्याख्याय न च मृत्वा यमं प्राप्तस्य नचिकेतसो मृतोऽस्ति न वेति संशयोऽस्तीत्यादिना परिहृतेत्यर्थः ॥ अविज्ञातमिति ॥ प्राप्स्यत इति वा न वेति वा यदनिर्णीतमित्यर्थः ॥ ७ ॥

सूत्रभाष्यम्—

॥ ॐ **महद्वच्च** ॐ ॥ ८ ॥

यथा महच्छब्दो महत्तत्वे प्रसिद्धोऽपि परममहत्त्वात्परमात्मन एव मुख्यः एवमित-रेऽपि ॥ ८ ॥

तत्वप्रकाशिका—

यदुक्तं विष्णोरेव मुख्यतोऽव्यक्तादिशब्दवाच्यत्वमिति तदयुक्तम् । अव्यक्ता-दिशब्दानां प्रधानादावेव प्रसिद्धत्वात् । न च वाच्यं शब्दप्रवृत्तिनिमित्तस्येश्वरे मुख्यत्वेन तत्र शब्दानां मुख्यत्वमु(यु)क्तमिति । न हि यत्र शब्दः प्रसिद्धस्तत्रा-मुख्यो मुख्यतः प्रवृत्तिनिमित्तवति मुख्य इति दृष्टचरमित्याशङ्कां परिहरत्सूत्रमुप-न्यस्य व्याचष्टे ॥ महद्वच्चेति ॥ चशब्दो दार्ष्टान्तिकसमुच्चयार्थः । युक्तमेवाव्य-क्तादिशब्दानां मुख्यतः परमात्मवाचित्वम् । तत्प्रवृत्तिनिमित्तस्य तत्र मुख्यत्वात् । न चान्यत्रप्रसिद्धत्वविरोधः । महान्तं विभुमित्यादौ श्रुतमहच्छब्दस्य महत्तत्वे प्रसिद्ध-त्वेऽपि *तत्प्रवृत्तिनिमित्तस्य हरौ मुख्यत्वेन मुख्यत्वोपपत्तिरिति भावः । न च मन्तव्यं प्रवृत्तिनिमित्ताधिक्येन मुख्यतः शब्दवाच्यत्वाभावेऽपि दृष्टान्तोऽस्ति । अति-सहनवति पुरुषे सिंहशब्दस्यामुख्यत्वादिति । न ह्यस्माभिः प्रवृत्तिनिमित्ताधिक्य-मात्रेण शब्दस्य मुख्यतः परमात्मवाचित्वमुच्यते किं तु सिद्धे परमात्मवाचित्वे मुख्य-त्वमात्रस्य तेन साधनादिति ॥ ८ ॥

भावदीपः—

॥ ॐ महद्वच्च ॐ ॥ ८ ॥ प्रवृत्तिनिमित्तस्येति ॥ सूक्ष्मं तु इत्यत्रोक्तस्येत्यर्थः । निमित्तस्य शब्दशक्तिनियामकत्वेन तस्य मुख्यत्वे शब्दस्यापि मुख्यत्वनियमादिति भावः । एवमितरेऽपीति भाष्यमुत्सूत्रमिति भ्रमं वारयति ॥ च शब्द इति ॥ इतरेऽपीतिभाष्यंव्याचष्टे ॥ युक्तमिति ॥ एवमित्यस्यार्थमाह ॥ तत्प्रवृत्तीति ॥ यथेत्यादि भाष्यं व्याचष्टे ॥ न चान्यन्यत्रेति ॥ महांतं विभुमात्मानं मत्वा धीरो न शोचतीति काठकएवेत्यर्थः ॥ न ह्यस्माभिरिति ॥ यद्यपि सिंहशब्दो जातिनिमित्तको न यौगिकः तथापि तुष्यतु दुर्जन इति न्यायेनेदं समाधानम् । वस्तुतो निमित्ताधिक्येन मुख्यत्वोक्तौ न व्यभिचार इति ध्येयम् । तस्य शब्दशक्तिनियामकत्वेन तदाधिक्ये मुख्यत्वावश्यंभावात् । अवयवार्थो यथा यथोत्कृष्यते तथा तथा योग वृत्तेरप्युत्कर्षेण भाव्यमिति सुधोक्तेः उत्तरसूत्रावतारणायाभ्युपगमवाद इति ज्ञेयम् ॥ ८ ॥

सूत्रभाष्यम्—

॥ ॐ चमसवदविशेषात् ॐ ॥ ९ ॥

यथा चमसशब्दोऽन्यत्र प्रसिद्धोऽपि 'इदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्न' (बृ. उ. ४–२–३) इति श्रुतेः शिरोवाचकः एवमव्यक्तादिशब्दाः सर्वेऽन्यत्र प्रसिद्धा अपि, 'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ती' (भाल्लवेयश्रुतिः) त्यादि श्रुतेः परमात्माभिधायका एव । अविशेषाच्छ्रुतेः ॥ ९ ॥

॥ इति आनुमानिकाधिकरणम् ॥ १ ॥

तत्वप्रकाशिका—

ननु भवेदियमेव्यक्तादिशब्दानां परमात्मनि मुख्यत्वचिन्ता । यदि तेषां तद्वाचित्वमेव भवेत् । न च तद्युक्तंते षामन्यत्रैव प्रसिद्धत्वात् । न च वक्तव्यम व्यक्तमचलमित्यादिप्रयोगात् तद्वाचित्वावगम इति वृत्त्यन्तरेणापि प्रयोगोपपत्तेः । न च योगयुक्तप्रयोगेण तन्निश्चयः । सहनवति पुंसि प्रयुक्तस्यापि सिंहशब्दस्य तदवाचकत्वेन दर्शनात् । अतः प्रसिद्धेरेव वाचकताध्यवसायकत्वात्तस्याश्च प्रधानादावेव सत्त्वान्नाव्यक्तादिशब्दा विष्णुवाचकाः किमु मुख्या इत्याकांक्षांपरिहरत्सूत्रमुप-

न्यस्य व्याचष्टे ॥ चमसवदिति ॥ अव्यक्तादिशब्दाः परमात्मवाचका भवन्त्येव। नामानि सर्वाणीति तस्याशेषशब्दवाच्यत्वश्रुतेः। न चान्यत्र प्रसिद्धिविरोधः। यथा खलु चमसशब्दो यज्ञपात्रे प्रसिद्धोऽपि श्रुतिबलेन शिरोवाचकः तथाऽव्यक्तादिशब्दानां प्रधानादौ प्रसिद्धानामपि श्रुतिबलेन विष्णुवाचकत्वनिश्चयात्। न च वक्तव्यं प्रयोगमात्रस्य वृत्त्यन्तरेणापि संभवान्न चमसशब्दः शिरोवाचक इति। अभिधानादाविवानुशासनरूपत्वात् न हि गौण्यादिवृत्तीनामनुशासनमस्ति। अन्यथा कलशकरीरादिशब्दानामनुशासनसिद्धानां तद्वाचकत्वप्रसङ्गात्। अथापि स्यात्। अनुशासनरूपत्वाच्छ्रुतिबलेन चमसशब्दस्य शिरोवाचकत्वेऽपि न तथाऽव्यक्तादिशब्दानां परमात्मवाचित्वम्। नामानीति प्रयोगस्य वृत्त्यन्तरेणापि संभवादिति ॥ मैवम् ॥ नामानि सर्वाणीति श्रुतेरप्यनुशासनरूपत्वेनतच्छ्रुतेरविशेषात्। तद्वदस्या अप्यनुशासनरूपत्वात्। न चात्राव्यक्तादिशब्दाश्रवणदोषः। सर्वशब्दसद्भावात्। संकोचे कारणाभावादितिभावः। 'अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः' इति व्याख्येयमन्त्रे यदुक्तं तदिदं प्रतीयमानं शिरः कुतः। एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्न इत्यर्थः। एष इति चमसविवक्षया। 'दक्षिणान्नं वनुते यो न आत्मा' इतिवत्। बिलं मुखादि। तस्मादव्यक्तादिशब्दवाच्यो हरिर्भवत्येवेतिसर्वशब्दवाच्यत्वं तस्यैवोपपन्नमिति सिद्धम् ॥ ९ ॥ अ० १ ॥

भावदीपः—

॥ ॐ चमसवदविशेषात् ॐ ॥ ९ ॥ दर्शयति च इत्याद्यसूत्रखंडेन गतार्थत्वमाशंक्याऽऽह ॥ न चाव्यक्तमिति ॥ सूक्ष्मं तु इत्यादिना गतार्थत्वमाह ॥ न च योगयुक्तेत्यादिना ॥ सहनवदीति ॥ षहमर्षणइति धातुजत्वमभ्युपेत्यवादोऽयम्। जातिनिमित्तकत्वात्सिहशब्दस्य। अविशेषाच्छ्रुतेरित्येतद्व्यावर्त्यपूर्व व्याचष्टे ॥ अथापि स्यादिति ॥ भाष्योक्तश्रुत्यर्थमाह ॥ इति व्याख्येयमंत्र इति ॥ काण्वश्रुतौ चतुर्थेऽध्याये शिशुब्राह्मणे सप्ताक्षिविद्यायामुक्तेऽर्थे सम्मतित्वेन तदेष श्लोको भवति अर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन्यशो निहितं विश्वरूपमित्यादि मंत्रमुदाहृत्य पादं पादमुपादाय सव्याक्रियते। तत्रार्वाग्बिलश्चमस ऊर्ध्वबुध्न इत्याद्यपादव्याख्यानपरे वाक्ये इत्यंतस्यार्थः इति व्याख्येयमंत्र इति। तच्छब्दार्थो यदुक्तं तदिति। इदंशब्दार्थः प्रतीयमानमिति। शिरःपरामर्शित्वे एतदित्येव स्यात् कथमेष इति पुंल्लिगमित्यतः एष इतीति ॥ दक्षिणेति ॥ ऐतरेये यथाऽस्मिन्वाक्ये य

इत्यस्यान्नपरत्वेऽपिविधेयात्मविवक्षया पुल्लिङ्गं तथेहापीत्यर्थः । सूत्रार्थोपसंहारपूर्वं भाष्यार्थमुपसंहरति ॥ तस्मादिति ॥ प्रयोगप्रवृत्तिनिमित्ताविसाधकाभावादवरत्वादिवाधकाभावाच्चेत्यर्थः ॥ तत्तु समन्वयादित्यादिभाष्योपसंहारः सर्वशब्देत्यादि ॥ ९ ॥ अ० १ ॥

सूत्रभाष्यम्—

'वसन्ते वसन्ते ज्योतिषा यजेते'त्यादि कर्माभिधायकस्य कर्मक्रमादिविरोधान्न युज्यत इत्यत आह—

॥ ॐ ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके ॐ ॥ १० ॥

ज्योतिरादि कर्मवाचकत्वेन प्रसिद्धाभिधेयोऽपि स एव । 'एष इमं लोकमभ्यार्चदि'त्युपक्रम्य 'ता वा एताः सर्वा ऋचः सर्वे वेदास्सर्वे घोषाः एकैव व्याहृतिः प्राण एव प्राण ऋच इत्येव विद्यादि'ति (ऐ. आ. २–२–२) ह्यधीयत एके ॥ १० ॥

तत्वप्रकाशिका—

अत्र कर्मक्रमादिलोपप्रसङ्गेन कर्मतदङ्गेष्वेव प्रसिद्धानां ज्योतिष्टोमादिसर्वशब्दानां भगवति समन्वयप्रतिपादनादस्ति शास्त्रादिसंगतिः । श्रुत्यादिसंगतिं विषयादिकं च सूचयति ॥ वसन्त इति ॥ तत्तु समन्वयादिति सर्वशब्दानां परमात्मवाचकत्वमुक्तम् । सर्वमध्यपतिता ज्योतिरादिशब्दाः श्रुतिषु पठ्यन्ते तेषां चान्यपरत्वे न विष्णोः सर्वशब्दवाच्यता सिद्ध्येदित्यवश्यं निर्णयता । तज्ज्योतिरादिशब्दवाच्यं विषयः । किं विष्णुरन्यद्वेति संदेहः । समन्वयसूत्रमन्यत्रैव प्रसिद्धिश्च संदेहबीजम् । तत्र ज्योतिरादिशब्दवाच्यो न विष्णुरिति पूर्वः पक्षः ॥ तस्य ज्योतिष्टोमादिकर्मतदङ्गाभिधायकत्वेन प्रसिद्धत्वात् । तत्प्रसिद्धिं चापहाय परमात्मवाचित्वाङ्गीकारे कालकर्मक्रमाधिकारिनियोज्ययजमानफलर्त्विगाद्यभिधायकाभावेन तदभावाख्यविरोधापातात् । न हि तत्प्रामाणान्तरेण सिध्यति । तथा च विहितानुष्ठानलोपप्रसंगः । किंच ज्योतिरादिसर्वशब्दवाच्यत्वं परमात्मनो योगेनैव वाच्यम् । रूढेरभावात् । ततो गुणपूर्त्यसिद्धेश्च । न च योगमात्रेण रूढार्थापहारो युज्यते । अभ्युपेत्यैव चेदमुदितम् । न योगोऽपि संभवति । ज्योतिषां स्तोम इत्यादिरूपा हि ज्योतिष्टोमादिशब्दव्युत्पत्तिः । कथमसौ स्तोमादिशब्दानामन्यपरत्वानभ्युपगमे संभवेत् । अन्यथा भगवन्नामावृत्तिमात्रत्वप्राप्तेः । स्तोमा-

दिशब्दानामन्यपरत्वाभ्युपगमे किं ज्योतिष्टोमादिशब्दैरेव विशेषतोऽपराद्धम् । न च वाच्यं परमात्मसंबन्धेनान्यत्रापि शब्दवृत्तिरभ्युपगतेति । तथा सति लोके लक्षणेतरवृत्त्यभावप्रसंगात् । अतो न ज्योतिरादिशब्दजातस्य परमात्मवाचित्वं युक्तमिति न समन्वयसूत्रं युक्तमिति भावः । सिद्धान्तयसूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ ज्योतिष्टोमादि कर्मतदंगवाचकत्वेन प्रसिद्धज्योतिरादिशब्दाभिधेयो हरिरेव । यस्मादेके शाखिनस्ता वा एता इति तथा सर्वशब्दाभिधेयत्वेन हरिमेवाधीयते । न च शब्दानां भगवत्परत्वे वृत्त्यभावः । 'एव इमं लोकमभ्यर्चत्' इत्यादिना शतर्च्यादिशब्दानां परमात्मनि योगस्योक्तत्वात् । न च शब्दानामन्यत्र रूढत्वेन योगांगीकारा योगः । 'तस्मात्शतर्चिन इत्याचक्षत एतमेव सन्तमिति योगेन रूढेरपहारोक्तेः । एतमेव परमात्मानं मुख्यतोयौगिकार्थं सन्तं शतर्च्यादिनामभिराचक्षते न तु मुख्यतो रूढत्वेऽपि मुनीनिति प्रतीतेः । यद्यपि पंकजादिशब्दे योगापहारित्वं रूढेर्दृश्यते तथाप्यत्राचक्षत इति विद्वद्रूढिसहितत्वेनोक्तयोगस्य रूढ्यपहारित्वं युक्तमेव ॥ अतो हरेः कर्माभिधायकशब्दवाच्यत्वाद्युक्तं समन्वयसूत्रमिति भावः । ज्योतिःशब्दस्यात्रयत्नपठितत्वेऽपि प्रधानकर्माभिधायकत्वात्तस्यैवान्योपलक्षकत्वसंभवाच्च संग्रहः । तुशब्द एवार्थो । यास्ता एताः सर्वा ऋचस्तासामेकमेव व्याहर्तव्यं तच्च विष्णुरेव । किं च ये सर्वे वेदास्तेषामपीश्वर एव प्रतिपाद्यः किमृचाम् । अपि च ये समुद्रादिघोषास्तेषामपि किमु वेदानां तत्र ऋचस्तु विशेषतः परमात्मप्रतिपादिका इति जानीयादित्यर्थः ॥ १० ॥

भावदीपः—

॥ ॐ ज्योतिरुपक्रमात्तु० ॐ ॥ १० ॥ एतदधिकरणोपाधिभूतशब्दानां भाष्योक्तबलवदनुपपत्त्याऽन्यत्रैव प्रसिध्दत्वं वदन्नर्थावसंगतिमाह ॥ अत्र कर्मक्रमादीति ॥ यद्यपि शरीररूपकविन्यस्तगृहीतेरित्युक्तन्यायेन तच्छब्दवाच्येश्वरसंबन्धादन्यत्रापि शब्दवृत्तेरंगीकारेण न कर्मादिलोपप्रसंगः । अन्यथा पूर्वत्रापि तारतम्यलोपप्रसंगः स्यात् । तथापीह पदवर्णस्वरादिरूपेणैव समन्वयस्याभिप्रेतत्वेन कर्मक्रमादिप्रतीतेरेवाभावात् । तच्छब्दवाच्येशसंबंधात् अन्यत्रवृत्तिश्चेत् गंगासंबंधात्तीरे गंगापदस्येव सर्वशब्दानां लोके लक्षणाप्रसंगेन प्राक्तनन्यायस्यैव अयोगेन इहाप्याक्षेप्यत्वादिति भावः ॥ सर्वशब्दानामिति ॥ पूर्वनयेषु समन्वितानां अन्यत्रासमन्वितानां च वाक्यानां पदवर्णस्वरादिभेदेनेह समन्वीयमानत्वात्तद्रूपेणोदाहरणत्वमित्यर्थः । विरोधिसर्वबाहुल्येत्यनुभाष्ये सर्वेत्येतदधिकरणोपाधेरुक्तेरिति भावः । तत्तु समन्वयादिति सर्वशब्दानां

परमेश्वरे समन्वय उक्त इति पूर्वनयस्थभाष्यवाक्यमिहापि योज्यमिति भावेन तदर्थं वदन् संगतिसूचकत्वेन तावद्भाष्यं व्याचष्टे ॥ तविति ॥ वसंत इत्यादिभाष्यभावमाह ॥ सर्वमध्येति ॥ कर्मक्रमादीत्यादिवाक्यतात्पर्यमाह ॥ तेषां चान्यपरत्व इति ॥ वक्ष्यमाणदिशेति भावः ॥ तद्धिति ॥ निर्णेतव्यत्वेन प्राप्तेत्यर्थः । पूर्वपक्षादिपरत्वेनापि भाष्यं व्याकुर्वन् कर्माभिधायकस्य इत्येतल्लब्धहेतुमाह ॥ तस्य ज्योतिष्टोमादीति ॥ प्रसिद्धाभिधेयोऽपीत्यग्रेतनभाष्यानुरोधात् प्रसिद्धत्वादित्युक्तम् । कर्मक्रमादिविरोधादित्येतद्वाक्यं व्यनक्ति ॥ तत्प्रसिद्धिमिति ॥ अधिकारीति ॥ फलस्वामित्वावस्थायुक्तोऽधिकारी । विधिप्रेर्यत्वावस्थावान् नियोज्यः । कर्मकर्तृत्वावस्थायुक्तो यजमान इत्येकस्यैवावस्थाभेदात् भेदेन व्यपदेशः । हरौ महायोगविद्रूढियुक्तिपरस्योपक्रमादिति सूत्रांशस्य व्यावर्त्यं भाष्यस्थप्रसिद्धवदसूचितमाह ॥ किं चेति ॥ हरौ शब्दानां रूढ्यंगीकारे बाधकं चाह ॥ तत इति ॥ रूढित इत्यर्थः । अतोऽनंतगुणो विष्णुर्यच्छब्दायोगवृत्तय इति संक्षेपभाष्योक्तदिशा समन्वीयमानशब्दानां हरौ यौगिकत्व एव जिज्ञासासूत्रस्थब्रह्मशब्दोक्तगुणपूर्णत्वसिद्धिरन्यथा तदसिद्धेरित्यर्थः । कल्पनासूत्रव्यावर्त्यं व्युत्पत्तेरप्यशक्यता इत्यनुभाष्योक्तमाह ॥ न योगोऽपि संभवतीति ॥ ज्योतिषां स्तोम इत्यादिरूपा हीति ॥ सूत्रे ज्योतिःपदस्यैवोपात्तत्वेऽपि जातमोतं हरौ यस्माज्ज्योतिरित्यनुभाष्ये च ज्योतिःपदस्यैव व्युत्पत्त्युक्तावपीह ज्योतिष्टोमशब्दोऽप्युदाहरणम् । ज्योतिश्शब्दो ज्योतिष्टोमवाचीति च दर्शयितुं ज्योतिष्टोमशब्दस्य व्युत्पत्तिप्रदर्शनमिति ध्येयम् ॥ नामाकृतिमात्रत्वेति ॥ जगज्जनकत्वादिगुणपूर्तिसिद्धिर्न स्यादिति मात्रशब्दार्थः । शरीररूपकविन्यस्तगृहीतेरिति पूर्वोक्तेन परिहृतत्वमाशंक्य तदाक्षेपेणागतार्थत्वमाह ॥ न च वाच्यमिति ॥ अत इति ॥ कर्मक्रमादिविरोधाद्योगस्य च रूढितोऽपि दुर्बलत्वादीशे शब्दानां व्युत्पत्तेरशक्यत्वाच्चेत्यर्थः । न युज्यत इत्यस्य अर्थो न ज्योतिरादीति । पूर्वपक्षफलमाह ॥ न समन्वयेति ॥ छ ॥ ज्योतिरादीति भाष्यमाकांक्षितपूर्त्या व्याचष्टे ॥ ज्योतिष्टोमेति ॥ तत्त्विनुवृत्तस्य स एवेति भाष्यम् । तस्यार्थो हरिरेवेति । कुत इत्यतो हिशब्दो हेत्वर्थ इत्युपेत्य ता वा एता इत्यंशं व्याचष्टे ॥ यस्मादिति ॥ इतीत्यनंतरं सौत्रतथाशब्दमध्याहृत्य तस्यार्थमाह ॥ सर्वशब्दाभिधेयत्वेनेति ॥ इङध्ययन इत्यस्य कर्तरि बहुवचनांतं रूपम् । अतो हरिमित्युक्तम् । तेन सूत्रे तत्त्वित्यत्राप्यन्वेतीति सूचितम् । उपक्रमादिति सूत्रांशस्य एष इममित्यादिभाष्यं तदवतार्य व्याचष्टे ॥ न चेति ॥ एष प्राणशब्देन प्रकृतपरमात्मा । इमं

लोकं ब्रह्मादिदेहमभ्यार्चत् प्राविशदिति व्याख्यातेयं श्रुतिः पादांत्यप्राणनये। प्रागुक्त शंकामनूद्य निराह ॥ न च शब्दानामन्यत्रेति ॥ तस्मादिति ॥ तं देहं यस्माच्छतं वर्षाण्यभ्यार्चत् तस्मादित्यर्थः ॥ योगापहारित्वमिति ॥ अन्यथा पंकजपदाद्भेकादिप्रतीतिप्रसंग इति भावः ॥ आचक्षत इति ॥ प्रयोगबाहुल्यस्य रूढित्वादिति भावः। यद्यपि श्रौतस्य स्मार्तस्य वा केवलयोगस्यैव अज्ञरूढितः प्राबल्यमस्त्येव। अन्यथा श्रुत्यादौ योगोक्तेर्वैयर्थ्यापत्तेः उपपादितमेतन्निपुणतरं चंद्रिकायां कंपनादित्यत्र ॥तथाप्यभ्युपेत्यवादेन श्रौतयोगस्याज्ञरूढ्यपहारकत्वेऽपि विद्वद्रूढिसाहित्यमुक्तमिति ध्येयम् ॥ अत इति ॥ महायोगविद्वद्रूढिभ्यां सर्वशब्दवाच्यत्वस्य श्रौतत्वादित्यर्थः। वसंते वसंते ज्योतिषा यजेतेति श्रुतौ वसंतपदस्यैवादौ श्रुतत्वेन सूत्रे वसंत उपक्रमादिति वक्तव्ये कुतो ज्योतिष उक्तिरित्यत आह ॥ ज्योतिश्शब्दस्येति तुशब्द इति ॥ सौत्र इत्यर्थः। पंचमी ल्यब्लोपे उपक्रम्येत्यर्थो दर्शितः। न केवलमृष्यादीनां नाम भगवतः सर्वे वेदा अपि तस्यैवनाम किमु च वेदाः समुद्रघोषवृक्षस्तनभेरीताडनादिसर्वघोषा अपि तस्यैव नामानि यथायोग्यं योजनीयानि इत्यैतरेयभाष्यदिशा श्रुत्यर्थमाह ॥ यास्ता इति ॥ व्याहर्तव्यं तच्च विष्णुरेवेति ॥ यद्यप्यैतरेयभाष्ये एकमेव व्याहरणं एकमेव नाम। निर्दोषगुणपूर्तिवाचित्वादेकप्रकारता। प्राणे नारायण एव नारायणविषय एव व्याहार इति प्राणपदं सप्तम्यंतं कृत्वा योजितम्। तथापि प्रथमांतमुपेत्य व्याख्यानांतरमेतदित्यदोषः। ऋचस्तु विशेषत इंद्रादिनामवतो विष्णोर्गुणानल्पज्ञानामपि प्रकाशयंतीति प्राणे नारायण एवेति विद्यादिति तद्भाष्यदिशैवार्थमाह ॥ तत्रर्चस्त्विति ॥ १० ॥

सूत्रभाष्यम्—

॥ ॐ कल्पनोपदेशाच्च मध्वादिवदविरोधः ॐ ॥ ११ ॥

मधुविद्यादिवत्सर्वशब्दार्थत्वेन परस्य कल्पनोपदेशाच्च न कर्मक्रमादिविरोधः ॥ ११ ॥

॥ इति ज्योतिरुपक्रमाधिकरणम् ॥ २ ॥

तत्वप्रकाशिका—

ननु कथं ज्योतिरादिशब्दवाच्यत्वं परमात्मनः संभवति। कर्मक्रमादिविरोधात्। व्युत्पत्त्यसंभवाच्चेत्याशंकामपनुदत्सूत्रमुपन्यस्य व्याचष्टे ॥ कल्पनेति ॥ सर्वशब्दानां परमात्मवाचित्वेऽपि न कर्मक्रमादिविरोधो व्युत्पत्त्ययोगो वा। यथा

खलु मधुविद्यायामसौवा आदित्यो देवमध्वित्यादिना मध्वादिपदार्थतया परमात्मोपासनोपदेशेऽपि न लौकिकमध्वादिवाचकाभावेन तदभावविरोधः। अन्यत्ररूढिमनिवार्यैव महायोगवृत्त्या मध्वादिशब्दानामीश्वरादौ वृत्यभ्युपगमात्। एवं सर्वशब्दवाच्यत्वे परमात्मनोऽभ्युपगतेऽपि न कर्मादिविरोधः। ज्योतिरादिशब्दानामन्यत्र रूढिर्योगो योगरूढीरूढोपचारोरूढलक्षणोपचारो लक्षणेति वृत्तीरभ्युपेत्य महायोगवृत्त्येश्वरवाचित्वाभ्युपगमात्। सर्वशब्दवाच्यत्वमीश्वरस्य चोपासनार्थमेव ह्युपदिश्यते 'प्राण ब्रह्म इत्येव विद्यात्' इत्यादेः॥ उपासना च महायोगवृत्त्या सर्वशब्दार्थगुणत्वेनैव न तु संकेतमात्रेणेति भावः। चशब्द एवार्थः(र्थे)। विरोधश्च नेति वा। प्रयोगबाहुल्यं रूढिः। यथा घटादिशब्दानां कुम्भादौ। प्रवृत्तिनिमित्तमात्रमपेक्ष्य वृत्तिर्योगः। यथा धूमध्वजादिशब्दानामग्न्यादौ। (यथा पङ्कजादिशब्दानां भेकादौ) प्रवृत्तिनिमित्तं प्रयोगबाहुल्यं च योगरूढिः। यथा पंकजादिशब्दानां पद्मादौ। मुख्यार्थस्य शब्दप्रवृत्तिनिमित्तातिरिक्तगुणयोगेन वृत्तिरुपचारः। तत्र च प्रयोगबाहुल्यं रूढोपचारः। यथा लिखितसिंहादौ सिंहादिशब्दानाम्। वाच्यार्थानुपपत्त्या योग्येऽवाच्ये वृत्तिर्लक्षणा। तत्र च प्रयोगबाहुल्ये रूढलक्षणा। यथा ग्रामो गच्छतीत्यत्र ग्रामसंबंधिपुरुषे (षु) ग्रामशब्दस्य। उपचारमात्रं यथा पैङ्गल्यादियुते माणवकेऽग्निशब्दस्य। लक्षणामात्रं यथा नदीशब्दस्य तीरे। एताः वृत्तयो लोके। हरौ तु महायोगो महारूढियोगश्च। तत्र तदितरत्र प्रसिद्धशब्दानां महायोगः। निरतिशयप्रवृत्तिनिमित्तसद्भावात्। तदेकनिष्ठानां महारूढियोगः। नारायणादिशब्दानां तत्र बहु प्रयोगयुक्तत्वान्निरतिशयप्रवृत्तिनिमित्तसद्भावाच्च। स्तम्भादिशब्दानां हरौ विद्वद्रूढिसद्भावेऽपि सार्वजनीनताभावेनाऽमहत्त्वाद्भेदः। अतः कर्मतदंगवाचिशब्दवाच्यो हरिरिति सिद्धम् ॥ ११ ॥ अ० २ ॥

भावदीपः—

॥ ॐ कल्पनोपदेशाच्च० ॐ ॥ ११ ॥ मध्वित्यादिभाष्यमाकांक्षाक्रमेण व्याचष्टे ॥ सर्वशब्दानामिति ॥ न कर्मक्रमादिविरोध इति भाष्यं व्युत्पत्तेरप्यशक्यतेत्यनुभाष्योक्तस्य उपलक्षणमिति भावः ॥ यथेति ॥ छांदोग्ये तृतीयाध्यायोक्त मधुविद्यायामित्यर्थः। कल्पनोपदेशादित्यत्र कल्पनं लोकतः क्लृप्तं तत्तद्वाचित्वमनिवार्यैव लोकात्क्लृप्तमहायोगवृत्तेः कल्पनाया व्युत्पादनेन। उपदेशादिति अर्थद्वयमुपेत्य हेत्वंशं दृष्टांतेऽपि योजयति ॥ अन्यत्रेति ॥ उक्त हेतुं परामृश्य दार्ष्टांतिकं योजयति ॥ एवमिति ॥ कथमित्याकांक्षायां रूढी रूढियोगो महायोगो महारूढियोगो रूढोपचारो

रूढलक्षणा उपचारो लक्षणेति शब्दवृत्तिभेदात् रूढिपूर्वकत्वेन महायोगवृत्त्या परमेश्वरेऽखिलशब्दव्युत्पत्त्युपपत्तेरिति न्यायविवरणोक्तमुपलक्षणं मत्वा लोकविषयं वृत्तिसप्तकं दर्शयन्नेव तद्विवृण्वान एवमित्युक्तं व्यनक्ति ॥ज्योतिरादीति॥ महायोगेति॥ प्रवृत्तिनिमित्ताधिक्यादिति भाव । भाष्ये प्राग्रूढ इत्येव विद्यादिति वाक्यशेषोक्त्यनुरोधेन कल्पनोपदेशादित्यस्य सर्वशब्द वाच्यत्वेन कल्पनाया उपदेशादित्यर्थांतरं चाह ॥ सर्वशब्दवाच्यत्वमिति ॥ वाच्यत्वं चेति चान्वयः ॥ च शब्द इति ॥ लोकसिद्धवृत्तीरनिवार्यैवेति सर्वशब्दार्थगुणत्वेनैवेति वाऽध्याहृतेनान्वय इति भावः॥ विरोधश्चेति ॥ न केवलं तथा ह्यधीयत इत्युक्तसाधकमस्तीति समुच्चयार्थ इत्यर्थः। न्यायविवरणोक्तं वृत्त्यष्टकं योगवृत्तेरुपलक्षणमिति भावेन लक्षणोदाहरणाभ्यां वृत्तिनवकं व्यनक्ति ॥ प्रयोगमात्रेति ॥ प्रयोगमात्रव हुल्यं रूढिरित्यभिधीयत इत्याद्यनुभाष्योक्तेरिति भावः। मात्रेति अवयवार्थस्यादृश्यादिसापेक्षत्वव्युदासः। व्यक्तमेतत्सर्वं तर्कतांडवे द्वितीयपरिच्छेदे ॥ मुख्यार्थस्येति ॥ गुणयोगेनेत्यन्वयः ॥ तदितरत्रेति ॥ स्तंभेंद्रादिशब्दानामित्यर्थ। महारूढिस्तु हरौ न संभवति विद्वद्रूढिर्वैदिका स्यात्सा योगादेव लभ्यत इत्यनुभाष्ये ब्रह्मणि योगं विना विद्वद्रूढेरभावोक्तेरिति भावः। हरावुक्ता वृत्तिद्वयस्य सांकर्यमाशंक्य भेदमाह ॥ स्तंभादीति ॥ तद्भेदः महारूढियोगाद्भेदः। महायोग इत्यर्थः ॥ अत इति ॥ साधकभावात् बाधकाभावाच्चेत्यर्थः ॥ ११ ॥ अ० २ ॥

सूत्रभाष्यम्—

**॥ ॐ न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च ॐ ॥ १२ ॥**

'यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठित' (बृ. उ. ६-४-१७) इत्यादिषु बहुसङ्ख्योपसङ्ग्रहेऽपि न विरोधः। तस्यैवाकाशादिषु नानाभावात्तदतिरिक्तस्वरूपत्वाच्च॥१२॥

तत्वप्रकाशिका—

अत्राधाराधेयत्वादिलिंगेनान्यत्रैव प्रसिद्धानां पञ्चजनादिशब्दानां हरौ समन्वयप्रतिपादनादस्ति शास्त्रादिसंगतिः। समन्वयसूत्रे सर्वशब्दानां परमात्मपरत्वमुक्तम्। सर्वान्तर्गताश्च पञ्चजनादिशब्दा वाचसनेयके श्रूयन्ते। "यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः॥ तमेव मन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम्॥ इति। सर्वशरी

रेषु अनुवृत्त्यर्थं पञ्च पञ्चजनेति। तद्वाच्यं विष्णोरन्यच्चेत्तर्हि समन्वयसूत्रानुपपत्तिरित्यवश्यं निर्णेतव्यम्। तत्पञ्चजनादिशब्दवाच्यं विषयः। विष्णुरन्यद्वेति संदेहः। समन्वयसूत्रमन्यत्रैव प्रसिद्धिश्च संदेहबीजम्। न पंचजनादिशब्दवाच्यो विष्णुरिति पूर्वः पक्षः। तच्छब्दस्य बहुत्वसंख्याविशिष्टवस्तुवाचित्वात्। बहुत्वस्य चेश्वरे विरुद्धत्वात्। 'एकमेवाद्वितीयमि' त्यादिश्रुतेः। न च स्वस्य ईश्वरस्य बहुत्वाभावेऽप्यन्यगतबहुत्वस्य तदधीनत्वेन बहुत्वसंख्यावाचिशब्दवृत्तिः। वशीकृतबहुजनेऽपि राजनि तददर्शनात्। अयनादिशब्दवदन्यत्रादृष्टत्वेऽपि वृत्तिः किं न स्यादिति चेन्न। तत्र हेत्वन्तरेण सिद्धायां वृत्तौ निमित्तमात्रान्वेषणात्। न चात्रास्ति तादृशं नियामकम्। न च 'सर्वे वेदा' इति श्रुतिर्नियामिका। तस्याः संकोचसंभवात्। 'ऋतं पिबंतौ' इत्यादाविव स्वगतभेदशून्यस्यापि परमात्मनो बहुरूपत्वेन बहुत्वोक्तिः किं न स्यादिति चेन्न। प्रतिशरीरमात्मान्तरात्मनद्बहुत्वे मानाभावात्। यस्मिन्निति सप्तम्या निर्दिष्टस्य वाक्यशेषबलेन परमात्मत्वाच्च न तदाधेयानां पञ्चजनाकाशानां परमात्मत्वम्। न ह्येकस्यैवाधाराधेयभावो युज्यते। हरेराधेयत्वं (एव) च नास्ति किमुत विरुद्धं स्वाधारत्वम्। अतस्तस्य पञ्चजनादिशब्दवाच्यतासंभवान्न युक्तं समन्वयसूत्रमिति। एवं प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ नेति ॥ अपिपदेन पूर्वसूत्राद्विरोधपदाकर्षणम्। युक्तमेव पञ्चजनाऽऽकाशशब्दवाच्यत्वं भगवतः। स्वगतभेदशून्यस्यापि नानारूपत्वेन बहुत्वसंख्योपसंग्रहाविरोधात्। न च प्रतिशरीरं परमात्मनो बहुरूपत्वमप्रमाणिकम्। शरीरान्तर्गताकाशप्राणादिपञ्चजननियामकत्वेन तेषु नानाभावस्य न्यायप्राप्तत्वात्। न च यस्मिन्नित्याधारस्य विष्णुत्वात्पञ्चजनादीनामाधेयानाम् विष्णुत्वम्। आकाशादिजलरूपेभ्योऽतिरिक्तस्य शरीरनियामकरूपस्य तत्रोक्तेः। शरीरनियामकेश्वराधाराकाशादिषु भगवतोऽवस्थानमात्रेण आधाराधेयभावोऽपि युज्यते। अतः परमात्मनः पञ्चजनादिशब्दवाच्यत्वाद्युक्तं समन्वयसूत्रमिति भावः ॥ १२ ॥

भावदीपः—

॥ ॐ न संख्योपसंग्रहादपि० ॐ ॥ १२ ॥ अधिकरणाधेयत्वादिकमिति न्यायविवरणसूचितलिङ्गेन अन्यत्रैव प्रसिद्धिमाह ॥ अत्राधाराधेयत्वेति ॥ बहुत्वमादिपदार्थः। अन्यत्रैव प्राणचक्षुःप्रभृतिषु। भाष्ये पंचजनशब्दो बहुत्ववाचिशब्दमात्रोपलक्षणं। विरोधिसर्वबाहुल्येत्यनुभाष्योक्तेरिति भावेनाह ॥ पञ्चजनादिशब्दानामिति ॥ आनुमानिकनयभाष्येण तुल्यन्यायतया सूचिते श्रुत्यधिकरणसंगती स्वयमाह ॥ सम-

न्वयेति ।। श्रूयंत इति ।। षष्ठेऽध्याये । यस्मिन्निति सप्तम्यंतस्य सर्वप्राणिशरीरवाचिनः शरीरनियामकतया सर्वशरीरेषु विन्यस्तभगवद्रूपपरत्वं द्योतयितुं तमेवेति श्रुतिलिंगोक्तिपरवाक्यशेषोद्धारः । स्युः पुमांसः पंचजना इत्युक्तेः समस्तपदमिति भ्रमं निरस्यन् पंचपंचेति वीप्सायाः कृत्यमाह ।। सर्वेति ।। सर्वमानैर्विरोधश्च व्युत्पत्तेरप्यशक्यता । परस्परविरोधश्च विरोधः कार्य तद्वतोरित्याद्यनुभाष्ये परस्परविरोध इत्युक्तं विवृण्वानः बहुसंख्योपसंग्रहेऽपीति भाष्यसूचितयुक्तिमाह ।। तच्छब्दस्येति ।। तदधीनत्वादर्थवदित्यनेन गतार्थत्वमाशंक्याह ।। न च स्वस्येति ।। ।। वशीकृतेति ।। ननु जनानां राजवशत्वेऽपि न तद्गतं बहुत्वं राजाधीनम्। अस्तु वा कथंचिद्बहुत्वं राजाधीनम्। तथापि भृत्यगतदुःखनिगडबंधादेः राजाधीनत्वेऽपि राज्ञि दुःखिबद्धादिपदाप्रयोगवदुपपत्तेर्नव्यभिचार इति चेत्। अत्रोक्तं चंद्रिकायाम्। तदधीनत्वन्याये सत्यपि हरौ बहुत्वमस्ति न वेति विचारात्तदाच्छादन एव तात्पर्यमिति वा बहुत्ववाचिशब्देषु स्वातंत्र्यस्य निमित्तत्वे 'असंगलत्वाच्छब्दानां राज्ञो योगादमंगले । अप्रियत्वात्तु शब्दस्य स्यात्प्रयोगनिवर्तन'मित्यनुभाष्योक्तदिशा बद्धादिशब्दवदमंगलत्वाभावात् वशीकृतबहुजनेऽपि राज्ञि तत्प्रयोगोपपत्तेः न तन्निमित्तमित्यभिप्रायो वेति ।। हेत्वंतरेणेति ।। नामानि सर्वाणि। सोऽवरः सोऽनित्य इति प्रमाणांतरेणेत्यर्थः। ननु गुहां प्रविष्टावित्यत्रोक्तन्यायेन हरौ द्वित्ववद्बहुत्वमपि सिद्धम्। एकत्वविरोधित्वे द्वित्वबहुत्वयोरविशेषादिति भावेन तेनास्य गतार्थत्वमाशंक्य निराह ।। ऋतं पिबंता वित्यादाविवेति ।। द्वितीयसूत्रव्यावर्त्य हेतुमाह ।। मानाभावादिति ।। तत्र तु "घर्मा समंता त्रिवृतं व्यापतुः", "आत्मांतरात्मे"ति हरिरिति मानमस्तीति भावः। एकस्यानेकत्वं विरुद्धमित्युत्सर्गस्य क्वचिन्मानेनाऽन्यथात्वेऽपि न सर्वत्रेति भावः। परस्परविरोधश्चेत्येतद्भाष्यदिशा एकस्यानेकत्वं विरुद्धमिति व्याख्यायेदानीं न्यायविवरणदिशा प्रकारांतरेण व्याख्यातुमाह ।। यस्मिन्निति ।। तमेवेति वाक्यशेषबलेनेत्यर्थः ।। हरेरिति ।। "एको दाधारे"त्यादिना हरेरेव सर्वाधारत्वादिति भावः ।। अत इति ।। बहुत्वादिविरोधादित्यर्थः ।। छ ।। असूत्रितं विरोध इत्येतत्किमिति भाषितमित्यत आह ।। अपिपदेनेति ।। बुद्धिविभागेनेति भावः। समन्वयपरत्वं स्फोरयन् शेषोक्त्या भाष्यं हेतुत्वेन व्याचष्टे ।। युक्तमिति ।। तस्यैव इत्येवकारसूचितमाह ।। स्वगतभेद शून्यस्यापीति ।। नानाभावान्न विरोध इत्यंशस्यार्थो नानेत्यादि। आकाशादिष्विति भाष्योक्तेरुप-

योगाय मानाभावादिति प्रागुक्तशंकामनूद्योत्तरसूत्रतात्पर्यलब्धमाह ॥ न च प्रतिशरीरमिति ॥ एतेन बहुरूपत्वादधिकरणाधेयत्वं तस्यैव युज्यत इत्यंशं विवृण्वानः तत्र हेत्वाकांक्षायां तस्यैवातिरिक्तस्वरूपत्वाच्च इति भाष्योक्तं हेतुं योजयन्नुक्तशंकामनूद्य निराह ॥ न च यस्मिन्निति ॥ इदानीं न्यायविवरणं संगमयति ॥ शरीरेति ॥ ॥ अत इति ॥ बाधकाभावादित्यर्थः ॥ १२ ॥

सूत्रभाष्यम्——

पञ्चजनानाह—

## ॥ ॐ प्राणादयो वाक्यशेषात् ॐ ॥ १३ ॥

'प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो मन' इति वाक्यशेषात् ॥ १३ ॥

तत्त्वप्रकाशिका——

ननु भवेदियं बहुत्वादिसंभवविषया चिन्ता यदि पञ्चजनादीनां विष्णुत्वे भवेद्विशेषहेतुः न चासावस्ति । श्रुत्यंतराणां साधारणत्वात् । अतो बहुत्वादिसंभवेऽपि न पञ्चजनादिशब्दवाच्यो हरिरित्याशङ्कां परिहरत्सूत्रमवतार्य व्याचष्टे ॥ पञ्चेति ॥ पञ्चजनलिंगोक्त्योक्तशंकां परिहर्तुं पञ्चजनस्वरूपमाह सूत्रकार इति संबन्धभाष्यार्थः एते पञ्चजनाः तावत्प्राणादीनां प्राणत्वादिप्रदाः । 'प्राणस्य प्राणम्' इति वाक्यशेषात् । प्राणादीनां प्राणत्वादिप्रदत्वं भगवत एव संभवति । 'यच्छ्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं स उ प्राणस्य प्राणश्चक्षुषश्चक्षुः' इति श्रुतेः । अतो भगवल्लिंगसद्भावात् तस्यैव पञ्चजनत्वमिति भावः ॥ १३ ॥

भावदीपः——

॥ ॐ प्राणादयोवाक्यशेषात् ॐ ॥ १३ ॥ विशेषहेतुरित्युक्तविशेषपदकृत्यं व्यनक्ति ॥ श्रुत्यंतराणामिति ॥ नामानि सर्वाणि, सर्वे वेदास्सर्वे घोषा इत्यादीनामित्यर्थः ॥ अत इति ॥ विशेषहेत्वभावादित्यर्थः । सूत्रस्य न्यायनिबंधनरूपत्वात् पंचजनस्वरूपोक्तिरयुक्तेत्यतो व्याचष्टे ॥ पंचजनेति ॥ द्वितीयांतप्राणादीनां शब्दतोऽर्थतश्च प्राधान्यात् तेषामेव पंचजनशब्देन ग्रहणं न षष्ठीनिर्दिष्टानामिति भावेन पंचजनलिंगोक्त्येत्युक्तम् । वाक्यशेषोक्त्या किं लिंगमुक्तमित्यतो व्यनक्ति ॥ एत इति ॥ ॥ इति श्रुतेरिति ॥ तलवकारश्रुतेरित्यर्थः ॥ १३ ॥

सूत्रभाष्यम्—

॥ ॐ ज्योतिषैकेषामसत्यन्ने ॐ ॥ १४ ॥

'तद्देवा ज्योतिषां ज्योति' (काण्वपाठः) रित्यनन काण्वानां पञ्चकम् ॥ १४ ॥

॥ इति नसङ्ख्योपसङ्ग्रहाधिकरणम् ॥ ३ ॥

तत्वप्रकाशिका—

ननु वाक्यशेषोक्तानां प्राणादीनां विष्णुत्वेऽपि न पञ्चजनानां विष्णुत्वम्। वाक्यशेषे चतुर्णामिवोक्तत्वेन तस्य पूर्ववाक्यतो भिन्नार्थत्वादित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ ज्योतिषेति ॥ न वाक्यशेषे चतुर्णामिवोक्तिः। माध्यंदिनशाखायां पञ्चजनानामप्युक्तेः। काण्वानां शाखायामन्नस्यान्नत्वप्रदातृरूपे तत्रैवाऽकथिते सत्यपि 'यस्मादर्वाक् संवत्सरोऽहोभिः परिवर्तते तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्' इति किंचिद्दूरोक्तेन ज्योतिषां ज्योतिषा पञ्चत्वसंभवात्। अतो वाक्यशेषस्य भिन्नार्थत्वाभावात्तद्बलेन युक्तं पञ्चजनानां विष्णुत्वमिति भाव.। अत्र ज्योतिरन्नशब्दयोरेकार्थत्वं पृथक् पञ्चकं वेत्युपपन्नम्। अतो बहुत्वसंख्याविशिष्टवाचिशब्दवाच्यो हरिरेवेति सिद्धम् ॥ १४ ॥ अ० ३ ॥

भावदीपः—

॥ ॐ ज्योतिषैकेषामसत्यन्ने ॐ ॥ १४ ॥ चतुर्णामिवेति ॥ भाष्ये वाक्यशेषे पंचानामप्युक्तिर्माध्यंदिनशाखाशयेन। न तु वाजसनेयवाक्यशेषाभिप्रायेणेति भावः। पूर्ववाक्यतः यस्मिन्पंचपंचजना इति वाक्यतः। ननु अन्नेन क्वचित्पंचकं क्वचिज्ज्योतिषा सह। तथा च विरोध इत्यत आह ॥ अत्रेति ॥ एकार्थत्वं एकरूपवाचित्वमित्यर्थः ॥ पृथगिति ॥ रूपभेदेऽपि अधिकारिभेदात् अन्नाख्यरूपेण सह भगवद्रूपपंचकं माध्यंदिनादिभिरुपास्यम्। ज्योतिराख्यरूपेण सह रूपपंचकं काण्वादिभिरुपास्यमिति वर्गद्वयमविरुद्धमित्यर्थः ॥अत इति॥ साधकभावाद्बाधकाभावाच्च इत्यर्थः ॥हरिरेवेति॥ परममुख्यवृत्त्येति योज्यम्। मुख्यवृत्त्याऽन्यदपि वाच्यम्। कल्पनोपदेशादिति न्यायादिति ध्येयम् ॥ १४ ॥ अ ० ३ ॥

सूत्रभाष्यम्--

अवान्तरकारणत्वेनापि स एवोच्यत इति वक्ति--

॥ ॐ कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॐ ॥१५॥

आकाशादिष्ववान्तरकारणत्वेन स एव स्थितः। यथाव्यपदिष्टस्यैव परस्य 'य आकाशे तिष्ठन्नि' (अथ यां जीवो जहाति. पा.) त्यादिना आकाशादिषूक्तेः ॥ १५ ॥

॥ इति आकाशाधिकरणम् ॥ ४ ॥

तत्वप्रकाशिका--

अत्रोत्पत्तिमत्त्वलिंगेनान्यत्रैव प्रसिद्धानामाकाशादिशब्दानां परमात्मनि समन्वयप्रतिपादनादस्ति शास्त्रादिसंगतिः। समन्वयसूत्रे सर्वशब्दानां परमात्मवाचित्वमुक्तम्। सर्वमध्यपतिताश्चाकाशादिशब्दास्तैत्तिरीयादिश्रुतौ पठ्यन्ते। 'आत्मन आकाशः संभूतः आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी पृथिव्या ओषधयः ओषधीभ्योऽन्नम् अन्नात्पुरुषः' इति। तद्वाच्यस्य विष्णोरन्यत्वे न तस्याशेषशास्त्रयोनित्वं संभवतीत्यवश्यं निर्धार्यता। तदाकाशादिशब्दवाच्यं विषयः। विष्णुरन्यद्वेति संदेहः। समन्वयसूत्रमन्यत्रैव प्रसिद्धिश्च संदेहबीजम्। न विष्णुरिति पूर्वः पक्षः। आकाशादीनां आत्मादिकार्यत्वश्रवणात्। परमात्मनश्च कार्यत्वायोगात्। 'न जायते म्रियते' इत्यादेः। यदा तु भगवति कार्यत्वमेवायुक्तं तदा स्वस्यैव कार्यकारणभावो लोकेऽप्यसंभावितो नितरां विरुद्धः स्यात्। न च आकाशादिसंभवस्य तदधीनत्वेन संभूतशब्दोपपत्तिः। सुतोत्पत्तौ जनके जातशब्दप्रयोगादर्शनात्। निमित्तविशेषादर्शनाच्च वाक्ययोजनानुपपत्तेश्च। तस्मादात्मशब्दोदितस्य मुख्यकारणस्यैव विष्णुत्वं न त्ववांतरकारणानामाकाशादीनामिति न समन्वयसूत्रं युक्तमिति। एवं प्राप्ते सिद्धान्तयत्सूत्रमवतारयति ॥ अवान्तरेति ॥ एतत्पूर्वपक्षनिरासायावान्तरकारणत्वेन विष्णुरेवाकाशादिशब्दैरुच्यत इति सूत्रकारो वक्तीत्यर्थः। सूत्रं व्याचष्टे ॥ आकाशादिष्विति ॥ न केवलं मूलकारणवाचकात्मशब्दवाच्यो हरिरपि तु कार्यत्वे सति कारणमवान्तरकारणं तद्वाचकाकाशादिशब्दवाच्यश्च। न च कार्यकारणभावविरोधः। आकाशादिषु तस्य स्थितत्वात्। 'य आकाशे तिष्ठन्' 'यो वायौ तिष्ठन्' 'यस्तेजसि तिष्ठन्' 'योऽप्सु तिष्ठन्' 'यः पृथिव्यां तिष्ठन्' इत्यादिनाऽऽकाशादिषु स्थितत्वोक्तेः। न च तत्रापि विष्णुः कुतः इति वाच्यम्। यथा 'स योऽतोऽश्रुतः' इत्यादौ विष्णुरविदितत्वादिरूपेण व्यपदिष्टस्तादृशस्यैवाकाशादिषु 'यमाकाशो न वेद'

इत्यादिनोक्तत्वात्। तथा चाऽऽकाशाद्युत्पत्तावाकाशाद्यन्तर्गतत्वेन भगवतोऽभिव्यक्त्या वाय्वादिगतस्वरूपाभिव्यक्तिहेतुत्वेन चावान्तरकारणत्वमुपपन्नम्। अतोऽवान्तरकारणाभिधायकशब्दवाच्यत्वाद्विष्णोर्युक्तं समन्वयसूत्रमिति भावः। स्थितस्तच्छब्दैरुच्यत इति शेषः। न च वक्तव्यमस्त्वेवमवान्तरकारणत्वं विष्णोर्युक्तम्। तथापि तच्छब्दवाच्यत्वे विशेषहेतुर्वाच्य इति। नामानि सर्वाणीत्याद्युक्तरीत्या परमात्मनि सिद्धेऽखिलशब्दसमन्वये तत्र प्रतीतविरोधाभासनिरासेनैव सूत्रकृतश्चरितार्थत्वात्। यत्तु (युक्ति) विशेषं च वक्ति स त्वधिको लाभः। (समाकर्षाधिकरणे भिन्नाधिकरणपक्षे पाठस्तु स त्वधिको लाभः)। अतोऽवान्तरकारणवाचिनामपि शब्दानां परमात्मपरत्वाद्युक्तं समन्वयसूत्रमिति सिद्धम्॥ १५॥ अ० ४॥

भावदीपः—

॥ ॐ कारणत्वेन च० ॐ॥ १५॥ व्यक्त्यपेक्षया कार्यत्वं चेति न्यायविवरणेन अवांतरेण इत्यादिभाष्येण वा सूचितलिंगेनान्यत्रैव प्रसिद्धिमाह॥ अत्रोत्पत्तिमत्त्वेति॥ यद्यपि द्युभ्वादिनय एव प्रादुर्भावरूपा हरेरुत्पत्तिर्निर्णीता। अन्यथा तत्र श्रुतजायमानशब्दस्योक्तरूपजन्मवति विष्णौ सावकाशत्वाभावे अतच्छब्दात्प्राणभृच्च नेति जीवनिरासायोगात्। उक्तं च भाष्ये। अजायमानो बहुधा विजायत इति तस्यैव बहुधा जन्मोक्तेरिति। तथाप्येकदेशोक्त्या कारणत्वे सत्युत्पत्तिमत्त्वरूपावांतरकारणत्वलिंगेन इत्यत्र तात्पर्यम्। कारणत्वांशस्तु अविरुद्ध इति नोक्तः। कार्यत्वायोगादित्याद्यग्रेतनटीकावाक्यं तु प्रादुर्भावरूपं जन्मेति पूर्वं भाष्ये स्पष्टमुक्तत्वाद्व्यक्त्यपेक्षया कार्यत्वमिति स्पष्टमत्रन्यायविवरणेऽभिहितत्वात् तद्व्यावर्त्योक्त्यर्थं न तु उत्पत्तिमत्त्वमेवायुक्तमिति भावेन। अत एवानुभाष्यविरोधः कार्यतद्वतोरित्येव पूर्वपक्षयुक्तिरुक्ता। न तु कार्यत्वविरोध इति। श्रुत्यादिसंगतिमाह॥ समन्वयेति॥ व्यक्त्यपेक्षया कार्यत्वमिति न्यायविवरणस्वारस्याय तद्व्यावर्त्यमाह॥ आकाशादीनामिति॥ विरोधः कार्यतद्वतोरित्यनुभाष्योक्तमाह॥ स्वस्यैवेति॥ तदधीनत्वादर्थवदित्यनेन गतार्थतामाशंक्य निराह॥ न चेति॥ सुतोत्पत्ताविति पूर्वोक्ताकाशयोरत्राप्यनुसंधेयः। अवरादिशब्दवदन्यत्रादृष्टत्वेऽपि वृत्तिः किं न स्यादित्यत आह॥ निमित्तेति॥ विशेषकारणाभावाच्चेत्यर्थः। नामानि सर्वाणीत्यादिश्रुतीनां साधारण्येन संकोचसंभवादिति भावः॥ वाक्ययोजनेति॥ हरेरेवात्माकाशादिशब्दवाच्यत्वे तस्यैकत्वेन क्रमाभावादात्मन आकाश आकाशाद्वायुरित्यादिक्रमप्रतिपादकवाक्ययोजनानुपपत्तेश्चे-

त्यर्थः ॥ तस्मादिति ॥ विशेषहेत्वभावात् । बाधकभावाच्चेत्यर्थः ॥ अवांतरेति ॥ कार्यत्वे सति कारणानामित्यर्थः । वायुकारणाकाशकारणस्य वायुकारणत्वं विरुद्धमिति चोद्यं तु आनुमानिकनयोक्तन्यायेन महतः परस्मात्परस्य महतः परत्ववदपरिहृतमिति नैवोद्घाटितम् ॥ छ ॥ हरेरवांतरकारणत्ववचनं सूत्रे न संगतमिति भ्रमनिरासाय शेषपूर्त्या संबंधभाष्यं व्याचष्टे ॥ एतत्पूर्वपक्षेति ॥ कारणत्वेन चेति सूत्रांशं संबंधभाष्येण विवृतं मत्वात्र शब्दसमुच्चेयं व्याचष्टे ॥ न केवलमिति ॥ सौत्रकारणत्वशब्द एवावांतरकारणत्वपर इति वा कार्यत्वेन चेत्यपि समुच्चीयत इति वा भावेन अवांतरकारणत्वेनेत्युक्तं भाष्य इत्यभिप्रेत्यार्थमाह ॥ कार्यत्वे सतीति ॥ वाच्यश्चेति ॥ एतेन भाष्ये अपिशब्दो व्याख्यातः । आकाशादिष्वित्यादिभाष्यं व्याकुर्वन् सूत्रशेषमवतार्य व्याचष्टे ॥ न चेति ॥ भाष्ये स एव स्थित इत्येतत्तस्य स्थितत्वादिति व्याख्यातम् । सूत्रेऽध्याहृतहेतोरसिद्धिनिरासाय आकाशे तिष्ठन्नित्यादिभाष्यं व्याचष्टे ॥ य इति ॥ एतेनाकाशादिषूक्तेरित्यपि सूत्रेऽन्वयो दर्शितः । यथेत्यादिभाष्यं व्याचष्टे ॥ न चेत्यादिना ॥ तावता कथमुक्तविरोधनिरास इत्यतो व्यवत्यपेक्षया कार्यत्वं चेति न्यायविवरणोक्तदिशा कार्यत्वविरोधं परिहरन् आकाशादिषु स्थित इत्यादिभाष्यतात्पर्योक्त्या कार्यकारणभावविरोधं च निराह ॥ तथा चेति ॥ अत इति ॥ विरोधाभावादित्यर्थः । सूत्रस्य समन्वयपरत्वस्फोरणाय भाष्ये शेषमाह ॥ स्थित इति ॥ भाष्यस्थानुवादः तच्छब्दैराकाशादिशब्दैरित्यर्थः । अवांतरं कारणं चेति संक्षेपभाष्ये अवांतरकारणत्वलिंगसमन्वयोक्तावपीह नामसमन्वयपरत्वोक्तिः नामानि सर्वाणीति वक्ष्यमाणसमाधानाय समाकर्षाद्युक्त्युपयोगाय चेत्याहुः । निमित्तविशेषादर्शनाच्चेति प्रागुक्तचोद्यमनूद्य निराह ॥ न च वक्तव्यमिति ॥ इत्याद्युक्तेति ॥ आकाशनय आदिपदार्थः । नन्वेवं पूर्वत्र प्राणप्राणदत्वादिविशेषहेतुरग्रे प्रतिज्ञादृष्टांतानुपरोधादिश्च न वाच्यः स्यादित्यत आह ॥ यत्तु विशेषं च वक्तीति ॥ १५ ॥ अ०–४ ॥

सूत्रभाष्यम्—

सर्वशब्दानां परमात्मवाचकत्वे कथमन्यत्र व्यवहार इत्यतो ब्रवीति—

॥ ॐ समाकर्षात् ॐ ॥ १६ ॥

परमात्मवाचिनः शब्दा अन्यत्र समाकृष्य व्यवह्रियन्ते ।

'परस्य वाचकाश्शब्दा समाकृष्येतरेष्वपि ।
व्यवह्रियन्ते सततं लोकवेदानुसारतः ॥ इति पाद्मे ॥ १६ ॥

तत्वप्रकाशिका—

अत्र व्यवहारविलोपप्रसङ्गेनाऽन्यत्रैव प्रसिद्धानां सर्वशब्दानां परमात्मैकवाचित्वसमर्थनादस्ति शास्त्रादिसंगतिः । समन्वयसूत्रे सर्वेषां शब्दानां भगवद्वाचित्वमुक्तम् । तच्चानुपपत्तिग्रस्तत्वेऽसत्स्यादित्यारम्भणीयमेतत् । लौकिकावैदिकाश्च शब्दा विषयाः । भगवदेकवाचिनो न वेति संदेहः । पूर्वोक्तमेव संदेहबीजम् । पूर्वपक्षयति ॥ सर्वेति ॥* यदुक्तं सर्वशब्दानां परमात्मैकवाचित्वं तदयुक्तम् । तथात्वेऽन्यत्र व्यवहाराभावापातात् यदपि साक्षादप्यविरोधमित्युक्तत्वस्य समाधानं तदयुक्तम् । अवाचकैर्व्यवहारेऽव्यवस्थ.पातात् । यदप्यत्रोक्तं शरीररूपकविन्यस्तेतीश्वरसंबन्धादन्यत्रशब्दप्रवृत्तिरिति तदपि न साधु । तथा सति लोके लक्षणेतरवृत्त्यभावापत्तेः । यत्तुकल्पनोपदेशादित्यत्र रूढ्याद्यभ्युपेत्य समाधानं तदपि न शोभां बिभर्ति । तथा सत्यन्यस्यापि मुख्यवाच्यत्वप्रसङ्गेन परमात्मन एव मुख्यवाच्यत्वमिति प्रतिज्ञाव्याघातात् । योगरूढ्योरेव मुख्यवृत्तित्वात् । न ह्यक्षादिशब्दानां रूढ्यादिनैवानेकवाचिना क्वचिन्मुख्यता क्वचिन्नेत्यस्ति । अतः सर्वशब्दानां मुख्यवृत्त्या परमात्मैकवाचित्वेऽन्यत्र व्यवहारलोपापातात् । तस्य चानिष्टत्वान्न परमात्मैव मुख्यतः सर्वशब्दवाच्य इति (शङ्कार्थः) । सूत्रं व्याचष्टे ॥ परमात्मेति ॥ सिद्धांतयत्सूत्रमवतार्य व्याचष्टे । ॥ अत इति ॥ न परमात्मनो मुख्यतः सर्वशब्दवाच्यत्वेऽन्यत्र व्यवहारलोपः । तत्र रूढ्यादेरभ्युपगमात् । तथा सत्युभयोर्मुख्यवाच्यत्वं प्राप्तमिति चेन्मैवम् । भवेदेतद्यद्यक्षादिशब्दवदुभयत्रान्योन्यनिरपेक्षा शब्दप्रवृत्तिः । न चैवम् । किंतु स्वतो मुख्यवृत्त्या परमात्मैकवाचिनांशब्दानां व्यवहारसिद्ध्यर्थं ततः समाकृष्याऽन्यत्र रूढत्वेन संकेतितत्वात् । अल्पप्रवृत्तिनिमित्तानां च तदधीनत्वादिति भावः । अन्योन्यनिरपेक्षतयैव कुतो न शब्दवृत्तिरित्यतः स्मृतेरेवेत्याह ॥ परस्येति ॥ लोकवेदानुसारत इति लौकिकवैदिकव्यवहारसिद्ध्यनुसारतः । न च प्राचीनसूत्रविरोधः । प्रथमसूत्रे स्वातंन्त्र्येण वाच्यत्वाभावस्याभिप्रेतत्वात् । द्वितीये परमात्मसंबन्धोक्त्याऽत्रोक्तस्यैवाभिसंहितत्वात् । तृतीये चाऽविवेचितरूढ्यादिमात्राभ्युपगतेः । अत्र पुनस्तस्यैव विवेचनादिति ॥ १६ ॥

भावदीपः—

॥ॐ समाकर्षात् ॐ ॥ १६ ॥ अत्रानुव्याख्याने त्रिरोधिसर्वबाहुल्यकारणस्त्रीनिषेधिनामित्यादिना एतत्पादीयाधिकरणोपाध्युक्त्यनुरोधेन प्राचीनैस्समाकर्षादित्यादिसूत्राष्टकस्य पूर्वशेषत्वोक्तावपीह पृथगधिकरणांतरत्वेन योजनं तु पृथक्

न्यायसूचकत्वं दर्शयितुमित्युक्तं चंद्रिकायाम् । एवं हरावन्यत्र च मुख्यवृत्तौ सिद्ध.यामस्य विचारस्यावसरप्राप्तिमाह ।। अथेति ।। प्रकारांतरेणेति । सर्वमानविरोधकर्मक्रमादिविरोधबहुत्वसंख्यादिविरोधोत्पत्तिमत्त्वादिविरोधरूपप्रागुक्तप्रकारापेक्षय.मुख्यवृत्तेर्हरौ तदन्यत्र च तुल्यतापत्तिरूपान्यप्रकारेणेत्यर्थः ।। सर्वशब्देति ।। ज्योतिरधिकरणविषयोपाधिरेवास्यापि विषय इति सूचितम् । तेनैव गतार्थमिदमित्यतः प्रकारांतरेणेत्याद्युक्तम् । अत्र शास्त्रसंगत्यादिकमूह्यम् । यदा तु अत्र व्यवहारविलोपप्रसंगेन अन्यत्रैव प्रसिद्धानां सर्वशब्दानां परमात्मैकवाचित्वसमर्थनादित्यादिना पूर्वोत्तराधिकरणेष्विव शास्त्रादिसंगत्याद्युपपादनपरग्रंथपाठोऽप्यत्र नये क्वचित्कोशेषूपलभ्यते तदा तु व्यक्तमेव । भाष्योक्तापादकस्यासिद्धिनिरासाय प्राक्तनं स्मारयन्व्याचष्टे ।। यदुक्तमिति ।। पूर्वनयैरित्यर्थः। ननु भाष्ये कथमन्यत्र व्यवहार इति चोद्यमयुक्तम् । साक्षादपीत्यादि सूत्रैरेवास्य निरस्तत्वादित्यत आह ।। यद्पीति ।। विष्णुवाचकैरेव अनन्यगत्या हानाद्यर्थमन्यत्र व्यवहार इति यदुक्तं लिंगपादांत्यनय इत्यर्थः ।। अव्यवस्थेति ।। वह्निपदेन जलादिव्यवहारस्याप्यापातादित्यर्थः ।। यद्प्यत्रेति ।। आनुमानिकसूत्रे तत्तच्छब्दवाच्येश्वरसंबंधात्तत्र तत्र तच्छब्दव्यवहारो गंगासंबंधाद्गंगापदस्य तीर इवेति यदुक्तमत्र चोद्ये समाधानमित्यर्थः ।। रूढ्या ( द्यम्यु ) द्युपेत्येति ।। अन्यत्रेत्यनुषंगः । एतेन प्रसंगात्सूत्राणामपौनरुक्त्यं दर्शितम् ।। प्रतिज्ञेति ।। समन्वयसूत्रोक्तप्रतिज्ञेत्यर्थः । तत्रोक्तसप्तवृत्तीनामपि मुख्यत्वाभावात्कथमेवमित्यतो व्यनक्ति ।। योगरूढ्योरेवेति ।। योगरूढिरप्यत्रोपलक्ष्या महायोगविद्वद्रूढ्योरीशे सिद्धांत्यभिमतयोर्व्यवच्छेदायैवकारः । एवमभिप्रायं वर्णयित्वोपसंहाररूपेण भाष्यं योजयति ।। अत इति ।। योगरूढिव्यतिरिक्तमुख्यवृत्तेरभावादित्यर्थः । मुख्यवृत्त्येति शेषोक्तिः । योगरूढिरूपयेत्यर्थः । स्वातंत्र्यं तद्गतत्वं च शब्दवृत्तेर्हि कारणम् । स्वातंत्र्यं तत्र मुख्यं स्यादिति तदधीनत्वसूत्रानुव्याख्यानोक्तस्वातंत्र्यनिमित्तकमुख्यवृत्त्या शब्दानामीश्वरवाचित्वे बाधकाभावेऽपि तद्गतत्वनिमित्तकमुख्यवृत्त्येश्वरवाचित्वेऽन्यत्र व्यवहारलोपः स्यादेव । लोके योगरूढिरूपमुख्यवृत्तेरभावस्य प्राप्तत्वादिति भावः ।। छ ।। उक्तशंकां निषेधन् तत्र परंपराहेतुत्वेन भाष्यं व्याचष्टे ।। न परमात्मन इति ।। मुख्यतः योगादिवृत्त्या । तत्र लोके ।। उभयोरिति ।। ब्रह्मतदन्ययोरित्यर्थः । तथा च तस्यैवत्यवधारणायोगो नामानि विश्वाभि न सति लोके यो देवानां नामधा एक एवेत्याद्ययोगश्चेति भावः ।। स्वत इति ।।

अनन्यापेक्षयेत्यर्थः । मुख्यवृत्त्या महायोगविद्वद्रूढिवृत्त्येत्यर्थः ॥ व्यवहारेति ॥ हालादिव्यवहारेत्यर्थः ॥ अल्पेति ॥ अन्यत्रेत्यनुषंगः। भाष्योक्तिरुपलक्षणमिति भावः ॥ प्राचीनेति ॥ पूर्वोदाहृतैः साक्षादपीत्यादिसूत्रैर्विरोध इत्यर्थः। द्वितीये आनुमानिकसूत्रे अत्रोक्तस्य मुख्यत्वमात्रस्य। तृतीये कल्पनेतिसूत्रे ॥ अविवेचितेति ॥ भगवति महायोगविद्वद्रूढी। अन्यत्र तु रूढ्यादिमात्रमित्येवंरूपेणेत्यर्थः। एतेन पूर्वाधिकरणेषु तत्र तत्र विष्णौ शब्दानां महायोगविद्वद्रूढिभ्यां मुख्यत्वकीर्तनं त्वत्रत्यन्यायानुसंधानेनेति दर्शितम्। इतिशब्दः समाप्तौ ॥ १६ ॥

सूत्रभाष्यम्—

तर्हि कथं तेषां शब्दानां जगति प्रसिद्धिः?

**॥ ॐ जगद्वाचित्वात् ॐ ॥ १७ ॥**

जगति व्यवहारो लोकस्य। न तु परमात्मनि तथा। अतो जगति प्रसिद्धिः शब्दानाम् ॥ १७ ॥

तत्वप्रकाशिका—

यदि शब्दाः परमात्मन्येव मुख्याः अन्यत्र तु ततः समाकृष्य संकेतितत्वेनाऽमुख्यास्तर्हि तेषां मुख्यार्थे परमात्मन्येव प्रसिद्धिः स्यान्न त्वमुख्यार्थे जगति। अग्निशब्दस्य माणवके प्रसिद्ध्यदर्शनात्। अस्ति चासौ जगति। अतस्तदन्यथानुपपत्त्याऽन्यस्यैव मुख्यवाच्यत्वमिति भावेनाऽऽशङ्कते ॥ तर्हीति॥ तत्परिहारत्वेन सूत्रं पठित्वा व्याचष्टे ॥ जगदिति ॥ न प्रसिद्ध्यन्यथानुपपत्त्याऽन्यस्यैव मुख्यवाच्यत्वं कल्प्यम्। लोकस्य जगत्येव शब्दव्यवहारेण तत्रैव तच्छ्रोतॄणां व्युत्पत्तेः। परमात्मनि तथा बहुलव्यवहाराभावेन व्युत्पत्त्यभावाच्च जगति प्रसिद्धेरन्यथोपपत्तेः। अग्निर्माणवक इति व्यवहारादनवगताग्निशब्दमुख्यार्थस्य माणवकेऽग्निशब्दव्युत्पत्तिसंभवादिति भावः ॥ १७ ॥

भावदीपः—

॥ ॐ जगद्वाचित्वात् ॐ ॥ १७ ॥ मुख्या इति ॥ परममुख्या इत्यर्थः ॥ अमुख्या इति ॥ अपरममुख्या इत्यर्थः। एवमग्रेऽपि ॥ अग्नीति ॥ हीनवृत्तिमात्रे दृष्टांतः। असौ प्रसिद्धिरित्यर्थः। पूर्वशंकां निषेधंस्तत्र हेतुत्वेन भाष्यं योजयति

॥ न प्रसिद्धीति ॥ भाष्यस्थव्यवहारपदस्यावृत्तिमभ्युपेत्य द्वितीयस्य वाच्यवाचकभावज्ञानरूपव्युत्पत्तिपरत्वं चाभ्युपेत्यार्थमाह ॥ लोकस्येति ॥ एतेन सूत्रमप्यावृत्य योज्यमिति दर्शितम्। तथापदस्य प्रागुक्तव्यवहारपरामर्शित्वमुपेत्य तदनूद्य व्याचष्टे ॥ परमात्मनि तथेति ॥ अत इत्यस्यार्थः पंचम्यंतैर्दर्शितः ॥ अन्यथेति ॥ हरौ मुख्यत्वाज्ञानमूलकत्वेनेत्यर्थः। तत्रप्रसिध्द्यर्थकहिशब्दसूचितं दृष्टांतमाह ॥ अग्निरिति ॥ ॥ १७ ॥

सूत्रभाष्यम्—

॥ ॐ जीवमुख्यप्राणलिङ्गादिति
चेन्न(न्न त)द्व्याख्यातम् ॐ ॥ १८ ॥

तदधीनत्वात्तच्छब्दवाच्यत्वमित्युक्तम्। तज्जीवमुख्यप्राणयोर्लिङ्गम्। 'अस्य यदेकां शाखां जीवो जहात्यथ (अथ यां जीवो जहाति. पा.) सा शुष्यति' (छां. उ. ६–११–२) 'वायुना हि लोका नेनीयन्त' इत्यादि श्रुतिभ्य इति चेन्न। उपसात्रैविध्यादिति व्याख्यातत्वात् ॥ १८ ॥

तत्वप्रकाशिका—

विष्णोरेव मुख्यतः शब्दार्थत्वमाक्षिप्य समादधत्सूत्रमुपन्यस्याऽऽक्षेपांशं तावद्व्याचष्टे ॥ जीवेति ॥ यदुक्तं विष्णोरेव सर्वशब्दमुख्यार्थत्वमिति तदयुक्तम्। सर्वपदार्थानां परमात्माधीनत्वादेव हि सर्वशब्दमुख्यार्थत्वं तस्योक्तं तच्च सर्वस्य तदधीनत्वाख्यं लिङ्गं जीवमुख्यप्राणयोरप्यस्ति। 'अस्य यदेकां शाखाम्' इति श्रुतौ वृक्षादीनां जीवाधीनत्वावगमात्। 'वायुना इति श्रुतौ च सर्वस्य मुख्यप्राणाधीनत्वावगतेः अतस्तयोरपि मुख्यवाच्यत्वम्। न च वक्तव्यं प्रयोगे सत्येव निमित्तानुसरणं न तु निमित्तमात्रेण वाच्यत्वकल्पनमिति। निमित्तसद्भावेन व्यवहारापादनस्यैव न्यायत्वेन वाच्यत्वकल्पने बाधकाभावादिति भावः। परिहारांशं व्याचष्टे ॥ नेति ॥ न सर्वस्य जीवमुख्यप्राणाधीनत्वलिङ्गेन तयोर्मुख्यवाच्यत्वं कल्प्यम्। तल्लिगाभिधायकश्रुतीनां तदन्तर्यामिभगवत्संबन्धितया व्याख्यातत्वात्। 'यद्यद्विभूतिमत्सत्वं श्रीमदूर्जितमेव वा। तत्तदेवावगच्छ त्वं मम तेजोंशसंभवम्' इत्यादेश्च। तथा च तल्लिगवतोऽन्तर्यामिण एव मुख्यवाच्यत्वं भवेदितिभावः ॥ १८ ॥

भावदीपः—

॥ ॐ जीवमुख्यप्राणलिंगात्० ॐ ॥ १८ ॥ आक्षेपस्य फलं दर्शयन् भाष्यं व्याचष्टे ॥ यदुक्तमिति ॥ परमात्माधीनत्वाद्वेति ॥ यद्यपि तद्गतत्वादपि मुख्यार्थत्वमुक्तम् । तथापि स्वातंत्र्यं तद्गतत्वं च शब्दवृत्तेर्हि कारणम् । स्वातंत्र्यं तत्र मुख्यं स्यादित्यनुभाष्योक्तमुख्यत्वमुपेत्याऽवधारणप्रयोगः । तज्जीवेत्यादिव्याचष्टे ॥ तच्चेत्यादिना ॥ लिंगं प्रवृत्तिनिमित्तमित्यर्थः । सर्वस्य तदधीनत्वाख्यमित्यत्र प्रयुक्तसर्वपदं जीवे संभावितसर्वपरम् । वायौ त्वसंकुचितसर्वपरमिति भावेन व्यनक्ति ॥ वृक्षादीनामिति ॥ सर्वस्येति च ॥ अत इति ॥ स्वातंत्र्यरूपनिमित्तसद्भावादित्यर्थः । ननु भृत्यबंधादिकं राज्ञि राज्ञो बंधादियोग्यतः । कारणं संशयस्य स्यादिति नैव प्रयुज्यते । अमंगलत्वाच्छब्दानां राज्ञो योगादमंगले । अप्रियत्वात्तु शब्दस्य स्यात्प्रयोगनिवर्तनमित्यनुभाष्योक्तदिशा सत्यपि निमित्ते राज्ञि निगडबद्धादिपदावाच्यत्वमिव जीवादावप्यस्तु सर्वशब्दमुख्यावाच्यत्वमिति भावेनोक्तहेतोरप्रयोजकत्वमाशंक्य लिंगपदभावोक्त्या निराह ॥ न च वक्तव्यमिति ॥ न त्विति ॥ बद्धादिपदानां राज्ञि व्यभिचारादिति भावः ॥ न्यायत्वेनेति ॥ मुख्यप्रयोगे तु निमित्तमेव सामग्रीत्यानुमानिकनयसुधोक्त्या तस्य व्यवहारेषु पुष्कलकारणत्वादिति भावः ॥ बाधकेति ॥ उत्सर्गतः प्राप्तस्य बाधकैकापोद्यत्वादिह चामंगलत्वादिरूपस्य वाच्यत्वकल्पनबाधकस्याभावात् स्यादेव वाच्यत्वे तदधीनत्वहेतुः प्रयोजक इत्यर्थः । प्रयोगे सतीति न्यायस्तु अमुख्यविषयः । तथैवानुमानिकनयसुधोक्तेरिति भावः । यद्यपि जीवशब्दस्यानुमानिकसूत्रे श्रौतस्मार्तप्रयोगेण प्राणधारकत्वरूपप्रवृत्तिनिमित्तेन च हरौ मुख्यत्वमुक्तम् । वायुशब्दस्यांतर्नयन्यायेन वैष्णवत्वं सिद्धम् । तथापि शरीररूपकविन्यस्तगृहीतेरिति न्यायेन जीवो जहातीत्याद्युदाहृतश्रुतिष्वन्यपरत्वस्यापि सत्त्वेनेयमाशंका युक्ता । अत एव तयोरपीत्युक्तिः । अत एव च द्युभ्वादिनये वायुसमाख्यात्वेनेयं श्रुतिरुदाहृतेति भावः । वक्ष्यति च द्वितीये भाष्यकारोऽन्यस्यापि वाच्यत्वादसतः प्राप्तिरिति लिंगेनैव नञोऽन्वयभ्रांतिनिरासाय लिंगसाध्येनाऽन्वयमाह ॥ न सर्वस्येति ॥ उपासात्रैविध्यादिति भाष्योपात्तसूत्रखंडाभिमतयुक्तिमाह ॥ तल्लिंगेति ॥ तथा व्याख्यानं निर्बीजमित्यत आह ॥ यद्यदिति ॥ गीतायां दशमे यद्यपि भाष्ये यद्यद्विभूतिमदिति विस्तारः विष्ण्वादीनि स्वरूपाण्येवेत्युक्त्या यद्यद्विभूत्यादिमत्सत्त्वं विष्णुकपिलरामकृष्णादिकं तत्तन्मम तेजोंऽशसंभवं प्रादुर्भावात्मकमित्यर्थ उक्तः । तथापि

तत्रैवान्यानि तु तेजोयुक्तानीत्यप्युक्त्या मम तेजोंऽशेन संयुक्तं भवतीति गीतातात्पर्योक्त्या चार्थांतरमुपेत्यात्रैतदुक्तिः ॥ १८ ॥

सूत्रभाष्यम्—

॥ ॐ अन्यार्थं तु जैमिनिः
प्रश्नव्याख्यानाभ्यामपि चैवमेके ॐ ॥ १९ ॥

परमात्मज्ञानर्थं कर्मादिकमपि वदतीति जैमिनिः । 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति । तस्मै स होवाच द्वे विद्ये वेदितव्ये' (मु. उ. १-१३-४) 'कथं नु भगवः स आदेशो भवतीति । यथा सौम्यैकेन मृत्पिण्डेने' (छां. उ. ६-१-३-४) त्यादिप्रश्नव्याख्यानाभ्याम् । एवमपि चैके पठन्ति 'यस्तन्न वेद किमृचा करिष्यती'ति (ऋ. सं १-१६४-३९) ॥ १९ ॥

तत्वप्रकाशिका—

यदुक्तं सर्वशब्दा अन्यत्र समाकृष्य व्यवह्रियन्त इति न तद्युक्तम् । वैदिकानां शब्दानां कर्मादौ समाकर्षे प्रयोजनाभावात् । न च कर्मसिद्धिरेव प्रयोजनम् । भगवज्ज्ञानमात्रेणैव पुरुषार्थसिद्धौ तद्वैयर्थ्यात् । वेदानां च काम्यफलार्थमप्रवृत्तेः । अतो वैदिकानां शब्दानामन्यत्र समाकर्षे प्रयोजनाभावान्मुख्यत एवाऽन्यवाचकत्वमित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ अन्यार्थमिति ॥ समाकर्षेण वेदः कर्मदेवतादिकमपि वदतीति युक्तमेव । कर्मादिज्ञानस्यापि परमात्मज्ञानार्थत्वादिति जैमिनिराचार्यो मन्यत इत्यर्थः । अन्यज्ञानस्य परमात्मज्ञानार्थत्वं कुत इत्यत आह ॥ कस्मिन्निति ॥ सर्वमिदं कर्मादिकं कस्मिन् विज्ञाते विज्ञातं भवति । विज्ञातस्याप्यस्य फलं कस्मिन् ज्ञाते भवति। एतज्ज्ञानमात्रस्याऽफलत्वादिति शौनकप्रश्ने सर्वमपरविद्यया विज्ञातं भवति विज्ञातं च परविद्याविषयपरमात्मज्ञानेन सफलं भवत्यतो द्वे विद्ये वेदितव्ये इत्यङ्गिरसोव्याख्यानात् । तथा यस्मिन्परमात्मनि ज्ञाते सर्वं कर्मादिकं ज्ञातमपि सफलं स्यात्तद्विषय उपदेशः कथं स्यात् तं प्रकारं कथमहं जानीयामिति श्वेतकेतुप्रश्ने यथैकेन मृत्पिण्डेन ज्ञातेन ज्ञातमपि घटादिकं ज्ञातफलं भवति विशेषज्ञानात्। एवं परमात्मनि ज्ञाते सर्वं ज्ञातफलं भवतीत्युद्दालकव्याख्यानात्। अन्यज्ञानस्य परमात्मज्ञानार्थत्वं ज्ञायत इति भावः। अपि च न केवलमर्थादेवमन्यज्ञानस्य परमात्मज्ञानार्थत्वसिद्धिः किं तु स्पष्टं चैवमेके शाखिनः पठन्तीत्याह ॥ एवमिति ॥ तदक्षरं यो न वेद स कर्मादि-

विषयर्चा किं करिष्यति। यतः सर्वाऋचः परमे व्याप्ते अक्षरे तज्ज्ञानार्थमेव कर्मादिकं वदन्ति। तस्यैव सर्वदेवाधारत्वात्। ये पुनस्तदक्षरं विदुस्ते सम्यगासत इत्यर्थः॥ १९॥

भावदीपः—

॥ ॐ अन्यार्थं तु जैमिनिः ० ॐ ॥ १९॥ लौकिकानामन्यत्र व्यवहारार्थं समाकर्षमुपेत्याह ॥ वैदिकानामिति ॥ मुमुक्षुं प्रतीतिशेषः। ननु तमेवं विद्वानमृत इत्यादेः ज्ञानान्मोक्षसिद्धावपि पशुपुत्रस्वर्गादिफलप्राप्त्यर्थं कर्मसिद्धिर्न स्यादित्यत आह ॥ वेदानां चेति ॥ मुमुक्षुं प्रतीतिशेषः। रोचनार्थं फलश्रुतिरित्येकादशस्कंधोक्तेः। न तादृशी प्रीतिरीड्यस्य विष्णोर्गुणोत्कर्षज्ञातरि यादृशी स्यात्। तत्प्रीणनान्मोक्षमाप्नोति सर्वस्ततो वेदास्तत्परास्सर्व एवेत्यादि श्रुतेश्चेति भावः। यद्यपि सर्वपुरुषार्थनये ज्ञानादेवाऽशेषपुरुषार्थप्राप्तिर्वक्ष्यते। तथाप्यभ्युपेत्यवादेन वाऽनुत्तमाधिकारिणामुत्तमानामपि प्रबलप्रतिबंधकवतां कर्मसापेक्षत्वाद्वा एवमुक्तमिति ध्येयम् ॥ अत इति ॥ ज्ञानमात्रेण पुरुषार्थासिद्धेरित्यर्थः। कर्मादिकमपि वदतीति भाष्यमादिपदार्थं वदन् शेषपूर्त्या व्याचष्टे ॥ समाकर्षणेति ॥ सूत्रेऽन्यपदेन प्रस्तुतजीवाद्यन्यपरमात्मवाचिना तज्ज्ञानं लक्ष्यत इति भावेन भाष्ये परमात्मज्ञानार्थमित्युक्तं हेतुगर्भं मत्वा व्याचष्टे ॥ कर्मादीति ॥ भाष्ये वदतीत्युक्तावपि ज्ञानस्येत्युक्तिः दृष्टांतानुसारात्। अन्यज्ञानेनान्यज्ञानाऽयोगात् फललक्षणामुपेत्य प्रकृतोपयोगित्वया तात्पर्यमाह ॥ विज्ञातस्यापीति ॥ फलप्रश्ने बीजमाह ॥ एतादिति ॥ शौनको ह वै महाशालोंऽगिरसं विधिवदुपसन्नः पप्रच्छेति पूर्वत्र श्रवणादाह ॥ शौनकेति ॥ द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदंति। परा चैवापरा च। तत्रापरा। ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छंदो ज्योतिषमिति। अथ परा। यया तदक्षरमधिगम्यत इत्यस्य वाक्यस्य भावमाह ॥ सर्वमिति ॥ सफलमिति ॥ परीक्ष्य लोकानिति श्रुत्युक्तदिशा परमात्मज्ञानांगवैराग्योत्पादनेन विविदिषंति यज्ञेन दानेनेत्युक्तदिशाऽतःकरणशुद्ध्युत्पादनेन वा एष सेतुरित्याद्युक्तदिशा ब्रह्मज्ञाने प्रकाररूपविषयार्पणेन वा सफलमित्यर्थः। एवमग्रेऽपि। स आदेश इति तच्छब्दपरामर्शं विवृण्वन् येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं भवतीति छांदोग्यषष्ठस्थपूर्ववाक्यैकदेशं व्याकुर्वन्नेव भाष्योपात्तवाक्यार्थमाह ॥ तथा यस्मिन्निति ॥ ज्ञातफलमिति ॥ घटादिकारणत्वेन मृत्पिंडज्ञाने एतावन्मृण्मयं भवतीति

विशेषज्ञानादपेक्षितमृणमयसंपादनसंभवादित्यर्थः ।। एवमिति ।। वैराग्याद्युत्पादनद्वारा सर्वकारणत्वसर्वाधारत्वसर्वसंहर्तृत्वसर्वनियंतृत्वादिना परमात्मज्ञाने तज्जन्यत्वपरतंत्रत्वादिविशेषज्ञानादीश्वरप्रीत्या पुरुषार्थप्राप्तेरिति भावः । सूत्रभाष्ययोरपि चेत्खंडनिपात इति भावेनानूद्यार्थं वदन्नेवावतारयति ।। अपि चेति ।। एवमित्यनुवादः । अन्येत्यादिव्याख्या ।। स्पष्टं चेति ।। तथा च प्रश्नाद्युक्त्यैव पूर्वेरेतदुक्तिर्व्यर्थेति न शंक्यमिति भावः । ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधि विश्वे निषेदुः । यस्तन्नवेद किमृचा करिष्यति य इत्तद्विदुरत इमे समासते इति समग्रमंत्रार्थमाह ।। तदक्षरमिति ।। विषयर्चेति ।। समासांतोऽनित्यत्वान्न श्रितः । व्योमन्नित्यस्य व्याप्त इत्यर्थः ।। अक्षर इति ।। ज्ञानलक्षणया निमित्तसप्तमीति मत्वा फलितमाह ।। तज्ज्ञानार्थमेवेति ।। यस्मिन् देवा इति वाक्यशेषानुरोधादाह ।। कर्मादिकमिति ।। तत्र हेतुत्वेन वाक्यशेषार्थमाह ।। तस्यैवेति ।। १९ ।।

सूत्रभाष्यम्––

।। ॐ वाक्यान्वयात् ॐ ।। २० ।।

वाक्यस्याप्येवमन्वयो युज्यते पृथक्पृथक्स्थितस्यापि परमात्मना ।। २० ।।

तत्वप्रकाशिका––

न परमात्मज्ञानार्थं कर्मादिकं वेदेन वक्तव्यम् । अन्यदनुक्त्वा परमात्ममात्रकथनेऽपि तज्ज्ञानसंभवात् । न च व्युत्पत्त्यनुपपत्तिः । खण्डपदानामन्यवाचकत्वेन तदुपपत्तेः । ततोऽन्यकथने प्रयोजनाभावान्नतत्र समाकर्ष इत्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ।। वाक्येति ।। सत्यमन्यावचनेऽपि भगवज्ज्ञानं भवतीति । तथाप्यन्यावचने पदान्वय एव युज्यते न वाक्यान्वयः । एवमन्यस्यापि वाच्यस्याभ्युपगमे तु वाक्यस्यापि परमात्मनाऽन्वयो युज्यते । वाक्यान्वयो नाम पृथक् पृथगर्थेषु वाचकतया स्थितवाक्यस्याऽन्ततो भगवत्परत्वम् । अतो वाक्यान्वयसिद्ध्यर्थमन्यवचनं युक्तमेव । न च वाच्यं परमात्मज्ञानस्यैव प्रयोजनत्वात् किं वाक्यान्वयेनापीति । विना वाक्यान्वयमुत्तमाधिकारिव्यतिरिक्तानां ज्ञानस्यैवासंभवेन जिज्ञासायां वैमुख्यप्रसङ्गात् । 'कश्छन्दसां योगमावेद धीर' इति श्रुतेरिति भावः ।। २० ।।

भावदीपः––

।। ॐ वाक्यन्वयात् ॐ ।। २० ।। परमात्ममात्रेति ।। पदसमन्वयविधयेत्यर्थः । ।। खंडेति ।। समुदायावयवपदानामित्यर्थः । परिष्कारपूर्वं वाक्यस्येति भाष्यं

व्याचष्टे ॥ सत्यमिति ॥ एवमित्यनुवादः । अन्यस्यापीत्यादिव्याख्या ॥ पृथक्पृथगिति ॥ विस्तृतश्चाऽयं तत्वनिर्णयटीकायां कार्यान्विते व्युत्पत्तिरिति प्राभाकरमतखंडनप्रस्तावे इयं माता अयं पिता सुरूपोऽसीत्येतद्वाक्यव्याख्यावसरे। वाक्यान्वयादिति सूत्रे निमित्तपंचमी जगद्वाचित्वेऽपीति वर्तते इति मत्वा सूत्रार्थं निगमयति ॥ अत इति ॥ अन्यवचन एव वाक्यान्वयसंभवादित्यर्थः। ज्योतिर्नये अत्र चोक्तयोः पदवाक्यसमन्वययोरधिकारिभेदेन सार्थक्यं विवक्षुः। अन्वयः सर्वशब्दानामशक्यो ज्ञातुमंजसा। इति यल्लोकवैमुख्यं जैमिन्यादिमतं वदन्। विद्याधि (राजो) नाथो भगवानपाचक्रे स्वयं प्रभुरित्यनुभाष्योक्तमत्र संयोजयितुं शंकामाह ॥ न चेति ॥ हरेर्जगद्धेतुत्वसर्वशब्दवाच्यत्वादेः तथा श्रवणादिविधेरुत्तमाधिकारिस्वरूपादेश्च असिद्धिप्रसंगादित्यपि ध्येयम्। पदसमन्वयोऽसर्वाधिकारिक इत्यत्र श्रुतिमाह ॥ क इति ॥ अंगीकृतेऽपि नैवास्ति दोषो वाक्यसमन्वये। तदर्थत्वेन कर्मादिः संभवादल्पबुद्धये। कश्छंदसां योगमिति श्रुतेर्योगार्थतत्ववित्। ब्रह्मैको नैव चान्योऽस्ति क इत्यस्योभयार्थत इत्यनुभाष्योक्तेरिति भावः ॥ २० ॥

सूत्रभाष्यम्—

॥ ॐ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॐ ॥ २१ ॥

'नान्यः पन्था अयनाय विद्यत' (तै. आ. ३–१२–७) इति प्रतिज्ञासिद्धेर्लिङ्गत्वेन कर्मादिकमुच्यत इत्याश्मरथ्यः। यस्मादेवमनित्यफलमन्यत्तस्मान्नान्यः पन्था इति ॥ २१ ॥

तत्वप्रकाशिका—

यदन्यवचनस्यापि परमात्मज्ञानार्थत्वमुक्तं तत्केन प्रकारेणेत्याकांक्षायां तत्प्रदर्शनाय सूत्रमुपन्यस्य व्याचष्टे ॥ प्रतिज्ञेति ॥ ज्ञानमेव मोक्षसाधनं नान्यदिति प्रतिज्ञाते कुतो ज्ञानमेव मुक्तिहेतुरित्याकांक्षायां तत्प्रतिज्ञासिद्ध्यर्थं हेतुत्वेन सविस्तरं श्रुत्या सपरिकरं कर्माद्युच्यते। अतो ज्ञानमवश्यमापाद्यमित्येवमाकारेण कर्मादिवचनस्य ज्ञानोपयोगित्वमित्याश्मरथ्याचार्यो मन्यत इति भावः। कर्मादिवचनं कथमुक्तप्रतिज्ञायां हेतुरित्यत आह ॥ यस्मादिति ॥ विस्तरेण सपरिकरं कर्माद्युक्त्वा 'अमृतो वाव सोमपो भवति यावदिन्द्रः' इत्यादिना तस्य दुःखसंभिन्नं विनाशिफलमुच्यते तत् परामृश्य यस्मादेवं कर्माद्यनित्यफलं तस्मान्न तन्मोक्षसाधनम्। तस्य दुःखासंभिन्न

नित्यसुखरूपत्वात् । अतो ज्ञानान्नान्यः पन्था मोक्षायेति प्रतिज्ञा युक्तैवेत्येवं रूपेण कर्मादिवचनस्य हेतुत्वमिति भावः । तथा च श्रुतिः 'परीक्ष्यलोकान् कर्मचितान् ब्राह्मणः' इत्यादि ॥ २१ ॥

भावदीपः--

॥ ॐ प्रतिज्ञासिद्धेर्लिंगं० ॐ ॥ २१ ॥ सपरिकरमिति ॥ फलेतिकर्तव्यता-सहितमित्यर्थः । कर्मादिवचनस्य ज्ञानमेव मुक्तिहेतुरित्यस्य च हेतुहेतुमद्भावं सामान्यतो व्यनक्ति ॥ अत इति ॥ एतच्चाग्रे व्यक्तम् ॥ इत्यादिनेति ॥ भक्तं वानात्मवित्त्वादित्यत्र तृतीयाद्यपादे भाष्योक्तवचनेनेत्यर्थः । आदिपदेन एतच्छ्रेयो येऽभिनंदंति मूढा जरामृत्युं पुनरेवापियंति । इष्टापूर्तं मन्यमाना वरिष्ठमित्यादि ग्रहः । तत्परामृश्य तदालोच्येत्यर्थः । एवं परिष्कृत्य यस्मादित्यादिभाष्यं योजयति ॥ यस्मादिति ॥ एवमित्यनुवादः कर्मादीति व्याख्या ॥ अत इति ॥ कर्मणोऽनित्य-फलकत्वादित्यर्थः । युक्त्यैवेतीत्यनंतरं प्रत्येतीति शेषः । तेन परामृश्येति साधु । उक्तं वैराग्यजननद्वारा ब्रह्मज्ञानार्थत्वं श्रुत्या संवादयति ॥ तथा चेति ॥ व्याख्यातैषा श्रुतिराद्यनये ॥ २१ ॥

सूत्रभाष्यम्--

**॥ ॐ उत्क्रमिष्यत एवं भावादित्यौडुलोमिः ॐ ॥ २२ ॥**

उत्क्रमिष्यतो मुमुक्षोः कर्मादिना भाव्यं (साधन) साधनत्वेन अतस्तद्वक्तीत्यौडुलोमि-र्मन्यते ॥ २२ ॥

तत्वप्रकाशिका--

प्रकारान्तरेणाऽन्यवचनस्य ज्ञानोपयोगित्वं दर्शयत्सूत्रमुपन्यस्य व्याचष्टे ॥ उत्क्रमिष्यत इति ॥ मोक्षार्थं ज्ञानमेवावश्यमपेक्षितमिति सिद्धे तत्केन साधनेन सिद्ध्यतीत्यपेक्षायां कर्मादिकमुच्यते । ज्ञानेन मोक्षमिच्छतो ज्ञानसाधनतया कर्मा-देरपि भाव्यत्वात् । न च फलोक्तिविरोधः । तस्या रुचिमात्रार्थत्वात् । 'रोचनार्थं फलश्रुतिः इत्यादेः । अत एवं ज्ञानोत्पत्तौ कर्मादेरुपयोगित्वेन वेदस्तद्वक्तीत्यौडुलोमि-राचार्यो मन्यत इति भावः ॥ २२ ॥

भावदीपः--

॥ ॐ उत्क्रमिष्यतः० ॐ ॥ २२ ॥ प्रकारांतरेणेति ॥ कर्मादेर्ज्ञानसाधनत्वेन प्रकारेणेत्यर्थः । मुमुक्षोरित्यादिभाष्यं शेषपूर्त्या व्याचष्टे ॥ ज्ञानेनेति ॥ अत इति भाष्यस्थानुवादः । एवमित्यादिव्याख्यानं । कर्मणो ज्ञानोपयोगित्वं च भावत्तं वेत्यत्र सर्वापेक्षा च यज्ञादिश्रुतेरश्ववदित्यत्र जिज्ञासासूत्रे च भाष्योक्तदिशाऽन्तःकरणशुद्धिद्वारेति व्यक्तमिति भावः ॥ २२ ॥

सूत्रभाष्यम्--

**॥ ॐ अवस्थितेरिति काशकृत्स्नः ॐ ॥ २३ ॥**

सर्वं परमात्मन्यवस्थितमिति यत्तु तद्वचनमिति काशकृत्स्नः ।

'कृष्णद्वैपायनमतादेकदेशविदः परे ।
वदन्ति ते यथाप्रज्ञं न विरोधः कथञ्चन ॥ इति पाद्मे ॥ २३ ॥

॥ इति समाकर्षाधिकरणम् ॥ ५ ॥

तत्वप्रकाशिका--

रीत्यन्तरेण कर्मादिवचनस्य भगवज्ज्ञानोपयोगं प्रदर्शयत्सूत्रमुपन्यस्य व्याचष्टे ॥ अवस्थितेरिति ॥ मोक्षार्थं सर्वथा ज्ञानमपेक्षितं तच्च कर्मादिनाऽन्तःकरणशुद्ध्या भवतीति सिद्धे कथं ज्ञातव्यो हरिरित्याकाङ्क्षायां सर्वं कर्मादिकं तस्मिन्परमात्मनि स्थितं स सर्वाधारत्वादिरूपेण ज्ञातव्य इति 'एष सेतुर्विध(धा)रणः' इत्यादौ वक्तुमाधेयादिरूपं कर्मादि वेदेनोच्यत इति वा साक्षात्परमात्मज्ञानोपयोगित्वमन्यवचनस्येति काशकृत्स्नाचार्यो मन्यत इति भावः । एवं जैमिन्यादिमतान्युपन्यस्य स्वमतं किं नोच्यते सूत्रकारेण । एतेषामेव स्वमतत्वे जैमिन्यादिग्रहणवैयर्थ्यम् । विरुद्धानां च नैकमतत्वम् । एकस्यैव वेदस्यानेकाभिप्रायताऽयोगादित्यत आह ॥ कृष्णेति ॥ मुनिमतानां भगवन्मतत्वमेव । तथापि तत्तद्विदितात्ममतैकदेशाभिप्रायेण शिष्यप्रसिद्ध्यर्थं जैमिन्यादिग्रहणं युज्यते । अनेकाधिकारिविषयत्वान्न विरोधोऽपीति भावः । अतो भगवज्ज्ञानाद्यर्थं वैदिकादिशब्दानामन्यत्र समाकर्षेण व्यवहारोपपत्तेर्युक्तं हरेः सकलशब्दपरममुख्यार्थत्वमिति सिद्धम् ॥ २३ ॥ अ० ५ ॥

भावदीपः—

॥ ॐ अवस्थितेरिति काशकृत्स्नः ॐ ॥ २३ ॥ रीत्यंतरेणेति ॥ भगवज्ज्ञाने विशेषणरूपविषयार्पकतयेत्यर्थः। इतिसिद्धौ पूर्वसूत्रेणेत्यर्थः। सर्वमित्यादिभाष्यानुवादः। स सर्वेत्यादिव्याख्या। एष इत्यादि शेषोक्तिः। जैमिन्यादिग्रहणस्य प्रसिध्द्यर्थत्वेन सावकाशत्वं मन्वान आह ॥ विरुद्धानां चेति ॥ स्वशिष्याणां प्रसिध्द्यर्थं मतमात्मीयमंशतः। विज्ञातं तैर्जगादात्र तारतम्यं नृणां वदन्नित्यनुभाष्यदिशा स्मृतितात्पर्यमाह ॥ मुनिमतानामिति ॥ अनेकेति ॥ जैमिनिमतस्य पदसमन्वयायोग्यमंदाधिकारिकवाक्यसमन्वयार्थत्वात्। तत्राप्याश्मरथ्यमतस्य वैराग्यसंपत्तिप्रागवस्थाविशिष्टाधिकारिकत्वात्। औडुलोमिमतस्य ज्ञानसंपत्तिप्रागवस्थाविशिष्टाधिकारिकत्वात्। काशकृत्स्नमतस्य ज्ञानसंपत्त्यवस्थाविशिष्टाधिकारिकत्वादित्यर्थः। उक्तं च सुधायां। नृणामल्पाधिकारिणामवस्थातारतम्यं वदन्निति ॥ अत इति ॥ भगवतः सर्वशब्दमुख्यार्थत्वे बाधकाभावादित्यर्थः ॥ २३ ॥ अ० ५ ॥

सूत्रभाष्यम्—

स्त्रीशब्दा अपि तस्मिन्नेवेत्याह—

॥ ॐ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॐ ॥ २४ ॥

'हन्तैतमेव पुरुषं सर्वाणि नामान्यभिवदन्ति यथा नद्यस्स्यन्दमानाः समुद्रायणाः समुद्रमभिविशन्त्येवमेवैतानि नामानि सर्वाणि पुरुषमभिविशन्ती'ति प्रतिज्ञादृष्टान्तानुपरोधात्प्रकृतिशब्दवाच्योऽपि स एव ॥ २४ ॥

तत्वप्रकाशिका—

अत्र स्त्रीलिङ्गत्वलिङ्गेनान्यत्रैव प्रसिद्धानां स्त्रीशब्दानां परमात्मनि समन्वयप्रतिपादनादस्ति शास्त्रादिसंगतिः। समन्वयसूत्रे सर्वशब्दानां भगवत्परत्वमुक्तम्। सर्वान्तर्गताः प्रकृत्यादिशब्दाः श्रूयन्ते 'एषा ह्येव प्रकृतिरविकृतिर्या प्राणेन संविशत्यदितिर्देवतामयी' इत्यादौ। तेषां चान्यपरत्वे न सर्वशब्दाभिधेयत्वं परमात्मनः सिध्यतीत्यवश्यं निर्णेयता। तत्प्रकृत्यादिशब्दवाच्यं विषयः। किं विष्णुरन्यद्वेति सन्देहः। समन्वयसूत्रमन्यत्रैव प्रसिद्धिश्च सन्देहबीजम्। न प्रकृत्यादिशब्दवाच्यो हरिरिति पूर्वः पक्षः। प्रकृत्यादिशब्दानां स्त्रीलिंगत्वात्। परमपुरुषे च तदयोगात्। न च रूपविशेषापेक्षयोपपत्तिः। 'नैनं वाचा स्त्रियं ब्रुवन्' इति तस्य स्त्रीत्वनिषेधात्।

न च नपुंसकशब्दप्रवृत्तिवत्परमात्मनि स्त्रीशब्दप्रवृत्तिः । नियामकविशेषाभावेन कल्पनाऽयोगात् । न चाऽस्त्यस्त्रीभूतस्यापि स्त्रीनियामकत्वेन तच्छब्दवाच्यत्वोपपत्तिः । वशीकृतभार्येऽपि भर्तरि तत्प्रयोगादर्शनात् । न च नामानि सर्वाणीत्यादिविरोधः । उक्तन्यायविरोधेन तत्संकोचोपपत्तेः । अतः प्रकृत्यादिशब्दानां परमात्मवाचित्वाभावान्न समन्वयसूत्रमुपपन्नमिति । सिद्धान्तयत्सूत्रमवतारयति ॥ स्त्रीशब्दा इति ॥ एवं प्राप्तं पूर्वपक्षं प्रतिक्षेप्तुं स्त्रीशब्दा अपि परमात्मनि प्रवर्तन्त इति साधयत्यत्र सूत्रकारः इत्यर्थः । सूत्रं व्याचष्टे ॥ हन्तेति ॥ प्रकृत्यादिस्त्रीशब्दवाच्यश्चेश्वरो भवति । 'हन्तैतमेव पुरुषम्' इति श्रुतौ (परम) पुरुषस्याशेषनामवाच्यतां प्रतिज्ञाय तत्रैव नदीसमुद्रदृष्टांतस्योक्तत्वात् । प्रकृत्यादिस्त्रीशब्दवाच्यताभ्युपगमे प्रतिज्ञादृष्टान्तानुपरोधादन्यथा तदुपरोधादिति भावः । हन्तेत्यास्वादने । प्रकृतिपदमन्योपलक्षकम् । प्रधानस्त्रीनामत्वात्तद्ग्रहणम् ॥ २४ ॥

भावदीपः—

॥ ॐ प्रकृतिश्च० ॐ ॥ २४ ॥ स्त्रीलिंगत्वमित्यनुभाष्यसूचितलिंगेनाऽन्यत्रैव प्रसिद्धिमाह ॥ स्त्रीलिंगत्वेति ॥ अत्र अधिकरणे । स्त्रीशब्दानां स्त्रीलिंगशब्दानामित्यर्थ । तत्तु समन्वयादिति सर्वशब्दानां परमेश्वरे समन्वय उक्त इत्यानुमानिकसूत्रभाष्येणोक्तप्रायत्वादत्र भाष्येऽनुक्तां पूर्वसंगतिं स्वयमाह ॥ समन्वयसूत्र इति ॥ श्रूयंते श्रुतौ प्रतीयंते ॥ एषेति ॥ यद्यपीयं श्रुतिः तृतीये कामादितरत्र तत्र चायतनादिभ्य इत्यत्र भाष्ये श्रीतत्वपरत्वेनोदाहृता तथाप्येतत्पादीयोदाहरणानां मुख्यवृत्त्याऽन्यपराणामपि सतां परममुख्यवृत्त्या ब्रह्मपरत्वस्याभिमतत्वादियमत्रोदाहृता । अत एव द्वितीये तेजोऽतस्तथाह्याहेत्यादौ भूतपरत्वेनोदाहृतैव कारणत्वेन च इत्यत्राप्युदाहृतेति ध्येयम् । या प्राणेनेति काठके अदितिशब्दः । न केवलं सिद्धांतेऽप्यन्यपरा एवाऽत्रोदाहरणं किंतु अन्यपरत्वरहिता उपनिषदादिगता भगवन्मात्रपराऽपि स्त्रीलिंगशब्दयुक्ताः श्रुतय इति सूचयितुमेतच्छ्रुत्युक्तिः । तेन छंदोनयाह्युक्तगायत्र्यादिश्रुतिरप्यनेन रूपेणात्रोदाहरणमिति सूचितम् । अन्यपरत्वे अन्यमात्रपरत्वे । औपनिषदशब्दाभिप्राये तु यथाश्रुतमेव योज्यम् । यद्वाऽन्यपरत्वेऽपि विष्णुपरत्वाभाव इत्येवार्थः । विष्णुरन्यद्वेति संशयेऽपि विष्णुर्भवति न वेत्येवार्थः । अत एव न प्रकृत्यादिशब्दवाच्यो हरिरित्येव पूर्वपक्षकोटिरग्रे वक्ष्यते । तथाऽन्यपरभगवन्मात्रपरद्विविधवाक्यसाधारणमेतदिति ध्येयम् । अनुभाष्योक्तां

युक्तिमाह ।। स्त्रीलिंगत्वादिति ।। स्त्रीलिंगवाचित्वादित्यर्थः । नारायण्यादिरूपविशेषे स्त्रीलिंगत्वं युज्यत इत्याशंक्य तत्र श्रुतिविरोधमाह ।। न च रूपेति ।। ननु नैनं वाचा स्त्रियं ब्रुवन्नैनमस्त्री पुमान्ब्रुवन् । पुमांसं न ब्रुवन्नेनं वदन्वदति कश्चनेति मंत्रे पुमांसं स्त्रियं च वदन्नेव न वदतीत्युक्तत्वादुभयात्मकं स्वरूपं प्रतीयते । अस्त्रीपुमानिति ब्रुवन्नपि न वदतीत्युक्तत्वात् स्त्रीत्वं पुंस्त्वं च प्रतीयते । विष्णोर्लौकिकस्त्रीपुंविलक्षणत्वादस्त्रीपुमानित्यपि वदन्नपि वदतीत्यादैतरेयभाष्योक्त्या केवलस्य लौकिकस्य वाऽस्त्रीत्वस्य निषेधपरं तद्वाक्यम्। अन्यथा नैनमस्त्री पुमान् ब्रुवन्नित्युत्तरवाक्यविरोधात् । तथा च रूपविशेषस्य स्त्रीत्वे श्रुतिविरोधाभावात्तदपेक्षया प्रकृत्यादिशब्दोपपत्तिरिति चेन्न पुंरूपे स्त्रीशब्दाप्रयोगापातात् । तथा च त्रिपादस्यामृतं दिवीत्युक्तश्वेतद्वीपादिस्थनारायणादिपुंरूपे छंदोनयोक्तगायत्र्यादिशब्दोक्तिर्न स्यादिति तात्पर्यात् । ननु देवतादिखट्वादिशब्दवाच्येषु स्त्रीलिंगाभावेऽपि स्त्रीलिंगशब्दवाच्यत्वं शब्दसाधुत्वमात्रेण युक्तं तद्वदिह स्यादिति चोद्यं सदृष्टांतमुक्त्वा प्रतिज्ञादृष्टांतेत्यादिसूत्रत्रयोक्तहेतुव्यावर्त्यहेतुना निराह ।। न च नपुंसकेति ।। ननु चमसवदविशेषादित्यादावुक्तस्य नामानि सर्वाणि इत्यादेरेव नियामकत्वादित्यतो विशेषेत्युक्तम् । तत्तु सामान्यं वक्ष्यमाणदिशा संकुचितसर्वनामपरमिति भावः । यद्वा बृहंतो ह्यस्मिन्गुणा इत्यादेर्गुणपूर्णत्वरूपब्रह्मपदवाच्यत्वनियामकस्येवेह प्रकृत्यादिस्त्रीलिंगशब्दप्रवृत्तिनिमित्तरूपनियामकविशेषस्याभावादित्यात्मकृतेरित्यादिसूत्रद्वयव्यावर्त्योक्तिः । तदधीनत्वसूत्रेण गतार्थत्वमाशंक्य निराह ।। न चाऽस्त्रीभूतस्यापीति ।। एतद्वाक्यं पूर्ववद्द्वेधा व्याख्येयम्।। उक्तेति ।। स्त्रीलिंगायोगरूपन्यायेनेत्यर्थः ।। अत इति ।। साधकाभावादित्यर्थः । पूर्वपक्षफलमाह ।। नेति ।। छ ।। हरौ स्त्रीशब्दप्रवृत्त्युक्तेरसांगत्यनिरासाय भाष्यार्थमाह ।। एवमिति ।। आकांक्षाक्रमेण भाष्यं व्याचष्टे ।। प्रकृत्यादीति ।। सूत्रभाष्ययोः प्रकृतिशब्दस्तदादिस्त्रीलिंगशब्दमात्रोपलक्षणमित्यग्रे व्यक्तत्वादादिपदं ।। वाच्यश्चेति ।। न केवलं प्रागुक्तलिंगशब्दवाच्यश्चेति सौत्रचशब्दार्थोक्तिपरभाष्यस्थापिशब्दार्थो दर्शितः । ननु सर्वस्त्रीशब्दसमुच्चायकश्चशब्द इति तत्त्वप्रदीपोक्तेरत्र पुनः सर्वपुंल्लिंगशब्दसमुच्चायकत्वोक्तौ कथं सर्वस्त्रीशब्दलाभ इत्यतोऽस्मिन् व्याख्याने तल्लाभप्रकारमाह ।।प्रकृतिपदमिति ।। एतेन स्त्रीशब्दा अपीति संबन्धभाष्यमुपपादितमिति ध्येयम् ।। २४ ।।

सूत्रभाष्यम्––

॥ ॐ अभिध्योपदेशाच्च ॐ ॥ २५ ॥

'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' (श्वे. उ. ४–१०)।

'महामायेत्यविद्येति नियतिर्मोहिनीति च।
प्रकृतिर्वासनेत्येवं तवेच्छाऽनन्त कथ्यते' ॥ इति

वचनात्तदभिध्यैव (च) प्रकृतिशब्देनोच्यते। 'सोऽभिध्या स जूतिः स प्रज्ञा स आनन्द' इति श्रुतेरभिध्या च स्वरूपमेव।

'ध्यायति ध्यानरूपोऽसौ सुखी सुखमतीव च।
परमैश्वर्ययोगेन विरुद्धार्थतयेष्यते' ॥ इति ब्रह्माण्डे ॥ २५ ॥

तत्वप्रकाशिका––

युक्त्यन्तरेण हरेः प्रकृतिशब्दवाच्यतां प्रतिपादयत्सूत्रमुपन्यस्य व्याचष्टे ॥ अभिध्येति ॥ 'मायां तु प्रकृतिं विद्यात्' इति श्रुतौ 'प्रकृतिर्वासनेत्येवं तवेच्छाऽनन्त कथ्यते' इति स्मृतौ च परमेश्वरेच्छायाः प्रकृतिशब्दवाच्यत्वोपदेशाच्चासौ प्रकृतिशब्दवाच्यो भवति। न च वाच्यं श्रुतौ मायाया एव प्रकृतिशब्दवाच्यत्वं ज्ञायते नेच्छाया इति। महामायेति स्मृतौ मायाशब्दस्यापीच्छावाचकत्वोक्तेः। न चात्रोपचारः शङ्कनीयः। श्रुतिस्मृत्योरनुशासनरूपत्वादिति भावः। इच्छायाः प्रकृतिशब्दवाच्यत्वेऽपि कुतः परमात्मनस्तदित्यत आह ॥ स इति ॥ जूतिः प्रेरणा। नेच्छा भगवत्स्वरूपम्। मायिनं तवेच्छेति तत्संबन्धोपदेशादित्यत आह ॥ ध्यायतीति ॥ २५ ॥

भावदीपः––

॥ ॐ अभिध्योपदेशाच्च ॐ ॥ २५ ॥ युक्त्यंतरेणेति ॥ न केवलं प्रतिज्ञादृष्टांतोक्तिरूपयुक्त्येत्यर्थः। तथा च नियामकविशेषाभावेनेति प्रागुक्तं प्रत्युक्तमिति भावः ॥ प्रकृतिशब्देति ॥ तदुपलक्षितस्त्रीशब्दमात्रवाचितायां तु प्रागुक्तं सामान्यरूपमेकं साक्षाच्चेत्यत्र वक्ष्यमाण(णा)साधारणश्रुतिश्च नियामकप्रमाणमिति भावः। भाष्ये इति वचनादित्युक्त्या सर्वमेकमिति प्रतीयते। तदपि किं श्रुतिरूपमुतस्मृतिरूपमिति न ज्ञायतेऽतस्तद्विवेचयन्नभिध्यैव चेत्यादिभाष्यवाक्येन च सूत्रे अभिध्यायाः

प्रकृतित्वोपदेशाच्चेत्यर्थो विवृत इति भावेन सूत्रार्थमाह ।। मायां त्विति ।। स्मृतौ महामायेति पूर्वार्धोक्तेरुपयोगं शंकापूर्वं व्यनक्ति ।। न चेति ।। स्पष्टत्वाय स्मृतेरपि भाषणमिति भावः । उच्यत इत्युक्तेर्भावमाह ।। न चेत्यादिना ।। कुतः परमात्मनस्तदिति । एतेन परमात्मनोऽभिध्यात्वोपदेशात्प्रकृतिशब्दवाच्यत्वमित्यपि सूत्रार्थो दर्शितः ।। तत्संबंधेति ।। मायिनमित्यत्र तदस्यास्त्यस्मिन्निति मतुबर्थे अत इति ठनौ व्रीह्यादिभ्यश्चेति षष्ठ्याद्यर्थकेनप्रत्ययांतस्य संबंधवाचित्वात् । तवेति षष्ठ्याः षष्ठी शेष इति संबंधे विधानादिति भावः ।। अत आहेति ।। एतच्चोभयव्यपदेशात्त्वहिकुंडलवदित्यत्र तृतीये स्पष्टयिष्यत इति भावः ।। २५ ।।

सूत्रभाष्यम्——

## ।। ॐ साक्षाच्चोभयाम्नानात् ॐ ।। २६ ।।

'एष स्त्र्येष पुरुष एष प्रकृतिरेष आत्मैष ब्रह्मैष लोक एष आलोको योऽसौ हरिरादिरनादिरनन्तोऽन्तः परमः पराऽभिरूप' इति पैङ्गिश्रुतौ साक्षादेव प्रकृतिपुरुषत्वाम्नानात् ।। २६ ।।

तत्त्वप्रकाशिका——

तथापि नेश्वरस्य प्रकृतिशब्दवाच्यत्वम् । सर्वाणि नामानीत्येवंरूपेण विना साक्षात्प्रकृतिशब्दवाच्यत्वे श्रुत्याद्यभावात् । सर्वशब्दस्य तु संकोचसंभवात् । न चातीतसूत्रे तदप्युक्तमिति वाच्यम् । इच्छाद्वारैव प्रकृतिशब्दवाच्यतां विना साक्षादीश्वरस्यैव तदभावादित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ।। साक्षाच्चेति ।। नेश्वरस्योक्तरीत्या प्रकृतिशब्दवाच्यताऽभावः शङ्कनीयः । 'एष स्त्र्येष पुरुषः' इति श्रुतौ साधारण्येन विना साक्षादेवेच्छाद्वारमन्तराऽपि प्रकृतिपुरुषशब्दवाच्यताम्नानादिति भावः । लोक आधारः । आलोकः प्रकाशरूपः ।। २६ ।।

भावदीपः——

।। ॐ साक्षाच्चोभया० ॐ ।। २६ ।। एवंरूपेणेति ।। प्रकृतिश्चेत्यत्रोक्तसामान्यरूपेण विना साक्षाद्विशिष्येत्यर्थः ।। इच्छाद्वारैवेति ।। प्रकृतिशब्दवाच्येच्छास्वरूपत्वात्प्रकृतिशब्दवाच्य इत्येवंरूपेणेत्यर्थः । साक्षात्पदेन प्रागुक्तं सामान्यपारंपर्यरूपद्वयमपि व्यावर्त्यमिति व्यनक्ति ।। साधारण्येन विनेति ।। चशब्द एवार्थ इति

भावेन भाष्योक्तमनुवदति ॥ साक्षाद्देवेति ॥ प्रकृतीति ॥ स्त्रीशब्दमात्रोपलक्षणमेतत् ॥ पुरुषशब्देति ॥ पुंल्लिगशब्देत्यर्थः ॥ नहीति ॥ गुणपूर्त्यर्थत्वात् समन्वयस्येति भावः। भाष्ये चशब्दोऽवधारण इति भावेन पंचम्या योग्यसाध्येनान्वयमाह ॥ नेत्यादिना ॥ २६ ॥

सूत्रभाष्यम्—

॥ ॐ आत्मकृतेः परिणामात् ॐ ॥ २७ ॥

प्रकर्षेण करोतीति प्रकृतिरिति योगाच्च। प्रकृतावनुप्रविश्य तां परिणाम्य (तत्परिणामनियामकतया तत्र) तत्परिणामेषु स्थित्वाऽऽत्मनो बहुधाकरणात्। 'अथ हैष आत्मा प्रकृतिमनुप्रविश्याऽऽत्मानं बहुधा चकार। तस्मात्प्रकृतिरित्याचक्षत' इति भाल्लवेयश्रुतिः।

'अविकारोऽपि परमः प्रकृतिं तु विकारिणीम्।
अनुप्रविश्य गोविन्दः प्रकृतिश्चाभिधीयते' ॥

इति नारदीये। न चान्यत्कल्प्यम्, अप्रामाणिकत्वात् (अप्रमाणत्वात्. पा)॥ २७ ॥

तत्वप्रकाशिका—

नन्वेवं प्रकृतिशब्दवाच्यत्वे हरेः श्रुत्युक्तेऽपि कथं तद्युज्यते निमित्ताभावात्। न हि संकेतमात्रमभ्युपगम्यत इत्याशंकां परिहरत्सूत्रं पठित्वा फलितं तावदाह ॥ आत्मेति ॥ न परमात्मनि प्रकृतिशब्दवृत्तौ निमित्ताभावः। प्रकृष्टा कृतिर्यस्येति योगस्यैव भावादित्यर्थः। कथं प्रकृष्टेश्वरस्य कृतिरित्यतः सूत्रं व्याचष्टे ॥ प्रकृताविति ॥ प्रकृतेः स्वतः परिणामसामर्थ्याभावात्तदनुकूलतया तां प्रविश्य महदादिरूपेण परिणामयतीति प्रकृतिपरिणामादनन्तरं आत्मानं च महदादिप्रेरणाय बहुधा करोतीति प्रकर्षेण कृतिर्विष्णोरित्यर्थः। सूत्रार्थे श्रुतिस्मृती चाऽऽह ॥ अथेति ॥ प्रकृतिमनुप्रविश्य तां परिणाम्य तत्परिणामप्रेरकत्वेन आत्मानं बहुधा चकार तस्मात्प्रकृतिशब्दवाच्यः। यस्मात् प्रकृतिशब्दवाच्यः तस्मात्प्रकृतिरित्याचक्षत इत्यर्थः। स्मृतिरप्येवं व्याख्येया। अपव्याख्यां दूषयति ॥ न चेति ॥ ब्रह्मण एव जगदुपादानत्वं प्रकृतिश्चेत्यादिसूत्रैरुच्यत इति यद् ब्रह्मणः परिणामित्वं सूत्रार्थतया कल्प्यते। न तद्युक्तम्। ब्रह्मणो जगदुपादानत्वे प्रमाणाभावादित्यर्थः। न चैकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय मृत्पिण्डादिदृष्टान्तोक्त्यैव तत्सिद्धिः। तस्यान्यार्थमिति सूत्रव्याख्याने

सम्यग्व्याख्याततत्वात् । किं चात्र ब्रह्मणः परिणामित्वोक्तिरसंगतेव भवति । एतदध्यायस्याशेषशास्त्रस्य ब्रह्मणि समन्वयप्रतिपादनाय प्रवृत्तत्वात् । स्यादेतत् । श्रुतीनां प्रधानपरत्वं वदति सांख्ये निरस्ते कथं प्रधानाभावे जगदुत्पत्तिरिति शङ्का भवत्येव तन्निरासाय ब्रह्मणो जगदुपादानत्वोक्तिः संगतेति । मैवम् । किं प्रधानस्य शास्त्रप्रतिपाद्यतामात्रं प्राङ् निषिद्धं तत्स्वरूपमेव वा । आद्ये का ब्रह्मणो जगदुपादानत्वोक्तेः संगतिः । न ह्याकाशादिशब्दानां औपनिषदानां ब्रह्मणि समन्वयेऽभिहिते कथं तर्हि जगदवकाश इति शङ्कोत्पन्ना नापि सूत्रकृता पराकृता । न द्वितीयः । तदुक्तेरेवाऽत्राऽसंगतत्वात् । ब्रह्मणो जगत्कारणत्वसिध्यर्थं तदुक्तिरिति चेन्न । निमित्तत्वेन तदुपपत्तेः । अथापि स्यात् प्रधानप्रतिपादकवाक्यस्य ब्रह्मणि समन्वयेऽभिहिते तत्प्रमाणाभावेनाऽभावः प्राप्त इति । मैवम् । तथाऽऽकाशाद्यभावप्राप्तेरपि प्रसङ्गात् । प्रमाणान्तरेण तत्सिद्धिरिति चेत्तममत्रापीत्यलम् ॥ २७ ॥

भावदीपः—

॥ ॐ आत्मकृतेः परिणामात् ॐ ॥ २७ ॥ प्रवेशावैयर्थ्यं वदन् शब्दार्थमाह ॥ प्रकृतेरिति ॥ सूत्रे परिणामादिति पंचमी ल्यब्लोपनिमित्तेति भावेन भाष्ये परिणाम्येत्युक्तम् । तत्र ल्यबादेशस्थानिनः पूर्वकालार्थक्त्वाप्रत्ययस्यार्थमाह ॥ प्रकृतिपरिणामादनंतरमिति ॥ आत्मकृतिर्व्यर्थेत्यतः तत्र परिणामेषु स्थित्वेति भाष्यम् । तदर्थमाह ॥ महदादीति ॥ श्रुतौ शेषमाह ॥ तामित्यादिना ॥ द्विरुक्तेरपौनरुक्त्यायाऽर्थभेदमाह ॥ तस्मादिति ॥ एवमिति ॥ अनुप्रविश्येत्यनंतरं तामित्यादिशेषो ध्येय इत्यर्थः । अप्रतीतेराह ॥ अपव्याख्यामिति ॥ अप्रामाणिकत्वमसंगतेरुपलक्षणमिति भावेनाह ॥ किं चेति ॥ न चाऽव्यक्तस्वरूपं भगवता निषिद्धम् । भारतादौ साधितत्वादिति द्वादशगीताभाष्योक्तमिह संगमयितुं शंकामाह ॥ स्यादेतदिति ॥ वदतीति सप्तम्यंतम् ॥ निरस्त इति ॥ आनुमानिकाद्यधिकरणत्रयेण परभाष्योक्तदिशा निरस्त इत्यर्थः । पराकृता अवकाशाभावशंकेत्यनुकर्षः ॥ तदुक्तेरेव ॥ प्रधानस्वरूपनिषेधोक्तेरेव इत्यर्थः ॥ जगत्कारणत्वेति ॥ जगदुपादानत्वेनेति योज्यम् ॥ तदिति ॥ ब्रह्मणो जगत् कारणत्वोपपत्तेः इत्यर्थः । एतेन न चेत्यादिभाष्यं ब्रह्मणो जगत्कारणत्वसिद्ध्यर्थं प्रधानस्वरूपमेव प्राक्प्रकृतं सूत्रकृता निषिध्यत इति यत्कल्प्यते तन्न युक्तम् । जगत्कारणत्वस्य अन्यथोपपत्त्या प्रधानस्वरूपनिरासस्याऽ-

प्रामाणिकत्वादित्यपि व्याख्यातं भवति । तथा प्रधानस्याऽप्रामाणिकत्वाद्ब्रह्मैवोपादानमित्येत्सूत्रार्थतया यत्कल्प्यते न तद्युक्तम् । प्रधानाभावस्याऽप्रामाणिकत्वादित्यपि भाष्यार्थं मत्वा शंकांतरं निराह ॥ अथापि स्यादिति ॥ २७ ॥

सूत्रभाष्यम्--

॥ ॐ योनिश्च हि गीयते ॐ ॥ २८ ॥

अव्यवधानेनोत्पत्तिद्वारत्वं (च) प्रकृतित्वम् । तच्चास्यैव हि गीयते 'यद्भूतयोनिं परिपश्यन्ति धीरा' (मुं. उ. १-१-६) इति ।

'व्यवधानेन सूतिस्तु पुंस्त्वं विद्वद्भिरुच्यते ।
सूतिरव्यवधानेन प्रकृतित्वमिति स्थितिः ॥
उभयात्मकसूतित्वाद्वासुदेवः परः पुमान् ।
प्रकृतिः पुरुषश्चेति शब्दैरेकोऽभिधीयत' ॥ इति ब्रह्माण्डे ॥ २८ ॥

॥ इति प्रकृत्यधिकरणम् ॥ ६ ॥

तत्वप्रकाशिका--

तथापि न प्रकृतिशब्दवाच्यत्वं परमात्मनो युज्यते । तस्य स्त्रीलिंगत्वादित्याशंकां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ योनिश्चेति ॥ स्वदेहादेवापत्योत्पादकत्वं हि प्रकृत्यादिस्त्रीलिंगप्रयोगे निमित्तम् । स्वदेहादेवोत्पादकश्च परमात्मा 'यद्भूतयोनिम्' इति श्रुतौ गीयते । योनिशब्दस्य तदर्थत्वात् । अतः स्त्रीलिंगप्रयोगोऽपीश्वरे युज्यत इति भावः । अव्यवधानेनोत्पत्तिकर्तृत्वं प्रकृत्यादिस्त्रीलिङ्गप्रयोगनिमित्तं कुत इत्याशङ्कां परिहर्तुं सूत्रार्थे स्मृतिं चाऽऽह ॥ व्यवधानेनेति ॥ सूतिः सूतिकर्तृत्वं भगवतः । स्त्रीरूपत्वाच्च तच्छब्दोपपत्तिः । निषेधस्त्वज्ञेयतामात्रार्थः । तस्मात् विष्णुरेवाशेषस्त्रीशब्दवाच्य इति युक्तमेव तत्समन्वयसूत्रमिति सिद्धम् ॥ २८ ॥ ॥ अ० ६ ॥

भावदीपः--

॥ ॐ योनिश्च हि गीयते ॐ ॥ २८ ॥ अव्यवधानेनेत्यादिभाष्यं उत्पादनं स्वदेहाच्चेत्यनुभाष्यदिशा व्याचष्टे ॥ स्वदेहादेवेति ॥ प्रलये स्वोदरे निवेशितस्य

ब्रह्मादिप्राणिजातस्य स्थूलदेहविशिष्टतया जनकत्वमित्यर्थः। प्रकृतित्वमित्येतदुपलक्षणमिति भावेनाह ॥ प्रकृत्यादीति ॥ नैनं वाचेति श्रुतिविरोधं निराह ॥ निषेधस्त्विति ॥ तस्मादिति ॥ साधकभावाद्बाधकाभावाच्चेत्यर्थः। युक्तमेवेति फलोक्तिः ॥ २८ ॥ अ० ६ ॥

सूत्रभाष्यम्—

ॐ एतेन सर्वे व्याख्याता व्याख्याताः ॐ ॥ २९ ॥

एतेन सर्वे शून्यादिशब्दा अपि व्याख्याताः। 'एष ह्येव शून्य एष ह्येव तुच्छ एष ह्येवाभाव एष ह्येवाव्यक्तोऽदृश्योऽचिन्त्यो निर्गुणश्चे'ति महोपनिषदि।

'शमूनं कुरुते विष्णुरदृश्यः सन्परः स्वयम्।
तस्माच्छून्य इति प्रोक्तस्तोदनात्तुच्छ उच्यते ॥
नैष भावयितुं योग्यः केनचित्पुरुषोत्तमः।
अतोऽभावं वदन्त्येनं नाश्यत्वान्नाश इत्यपि ॥
सर्वस्य तदधीनत्वात्तत्तच्छब्दाभिधेयता।
अन्येषां व्यवहारार्थमिष्यते व्यवहर्तृभिः' ॥

इति महाकौर्मे। एतेन तदधीनत्वाद्युक्तयुक्तिसमुदायेन।

'अवधारणार्थं सर्वस्याऽप्युक्तस्याऽध्यायमूलतः।
द्विरुक्तिं कुर्वते प्राज्ञा अध्यायान्ते विनिर्णये' ॥

इति वाराहसंहितायाम् ॥ २९ ॥ एतेन सर्वेव्याख्याताधिकरणम् (सर्वव्याख्यानाधिकरणं. प्रा.) ॥ इति समन्वयाध्यायस्समाप्तः ॥ ७ ॥

॥ श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये
प्रथमाध्यायस्य चतुर्थः पादः ॥

तत्वप्रकाशिका—

अत्र निषेधमुखवेद्यत्वादिनाऽन्यत्रैव प्रसिद्धानामसदादिशब्दानां भगवति समन्वयप्रतिपादनादस्ति शास्त्रादि संगतिः। समन्वयसूत्रे सर्वशब्दानां परमात्मवाचित्वमु-

क्तम्। सर्वमध्यपतिता असदादिशब्दाः श्रुतिषु श्रूयन्ते। 'असद्वा इदमग्र आसीत्' इत्यादौ। तेषां चान्यपरत्वे समन्वयसूत्रमयुक्तं स्यादित्यवश्यनिर्णेयता। तदसदादिशब्दवाच्यं विषयः। किं विष्णुरन्यद्वेति संदेहः। समन्वयसूत्रमन्यत्रैव प्रसिद्धिश्च संदेहबीजम्। न विष्णुरसदादिशब्दवाच्य इति पूर्वः पक्षः। तेषां निषेधमुखवेद्यवस्तुवाचित्वात्। परमात्मनश्च भावरूपत्वेन तदयोगात्। न च स्वयं निषेधमुखवेद्यताभावेऽपि तद्वतोऽसतः परमात्माधीनत्वेन तस्यासदादिशब्दवाच्यतेति वाच्यम्। स्वरूपशून्यस्य नियम्यताऽभावेन पराधीनताऽयोगात्। अभावे तत्संभवेऽपि प्रयोगादर्शनात्। अतः शून्यादिशब्दानां परमात्मवाचित्वाभावात्समन्वयसूत्रं न युक्तमिति। सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ एतेनेति ॥ पूर्वोक्तहेतुनैव सर्वे शून्यादिशब्दा भगवद्विषया एवेति प्रतिपादिता इत्यर्थः। नन्वसदादिशब्दानां निषेधमुखवेद्यवस्तुवाचित्वात् कथं परमात्मनस्तद्वाच्यत्वमित्यत आह ॥ एष ह्येवेति ॥ दुर्जनानामव्यक्तत्वादिना शमूनं कुरुत इत्यादि योगेन चेश्वरे निषेधमुखवेद्यवस्तुवाचिशब्दप्रवृत्त्युपपत्तिरिति भावः। शमूनं कुरुते स्वसुखादन्यसुखमल्पं करोति। तोदनात्तुत्। अदृश्यः छः छन्नत्वात्। भावयितुमुत्पादयितुम्। नाश्यत्वादभक्ष्यत्वात्। सर्वस्य तदधीनत्वादित्युभयत्र संबध्यते। एतेनेति परामृष्टमेव हेतुं दर्शयति ॥ एतेनेति ॥ आदिपदेन 'ज्योतिरुपक्रमात् तथाह्यधीयत एके' 'प्रतिज्ञादृष्टान्तानुपरोधात्' इत्यादेः संग्रहः। न चासतोऽन्याधीनत्वायोगः। सर्वस्य तदधीनत्वादिति स्मृतेः। निषेधमुखवेद्यत्वादीनामपि भगवत्प्रेरणामन्तरेणानुपपत्तेः। न हि कारणमन्तरेण तत्रैव तदुपपद्यते। ईश्वरस्य स्वातन्त्र्याददोषः। ननु किमर्थेयं सूत्रपदस्य द्विरुक्तिः। अध्यायसमाप्तेरर्थभेदेनैव ज्ञातुं शक्यत्वात्। अन्यथा पादान्तेऽपि तत्प्रसङ्गादित्यत आह ॥ अवधारणार्थमिति ॥ विनिर्णये निर्णयग्रन्थे। अतोऽसदादिशब्दवाच्यत्वस्य हरेरुपपन्नत्वाद्युक्तमशेषस्वरवर्णपदवाक्यात्मकशास्त्रयोनित्वम्। ततो जगज्जन्मादिकर्तृत्वप्रमुख्या(खा)नन्तगुणत्वं च सिद्धमिति ॥ २९ ॥ अ ० ७ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्रभाष्यस्य टीकायां श्रीमज्जयतीर्थमुनिविरचितायां तत्त्वप्रकाशिकायां प्रथमाध्यायस्य चतुर्थः पादः ॥

॥ श्रीरस्तु ॥

भावदीपः—

॥ ॐ एतेन सर्वे व्याख्याता व्याख्याताः ॐ ॥ २९ ॥ स्त्रीनिषेधिनामित्यनुभाष्योक्तलिंगेन अन्यत्रैव प्रसिद्धिमाह ॥ अत्र निषेधमुखेति ॥ निस्स्वरूपत्वमादिपदार्थः ॥ श्रूयंत इति ॥ तैत्तिरीयादाविर्त्यर्थः। निषेधश्चेत्यनुभाष्योक्तयुक्तिमाह ॥ तेषामिति ॥ प्रथमप्रतीताविति योज्यम् ॥ तद्योगादिति ॥ यद्यपि भावस्याऽप्यभावो नेत्यादिद्वितीयप्रतिपत्तौ निषेधमुखवेद्यवस्तुत्वमस्ति। तथापि प्रथमप्रतीतावयोगादिति भावः ॥ स्वयमिति ॥ षष्ठ्यर्थेऽव्ययम् ॥ अत इति ॥ हरेर्निषेधमुखवेद्यवस्तुत्वायोगात् तेषां च तादृशवस्तुवाचित्वादित्यर्थः। प्रसिद्धश्रुत्यनुरोधेन असदादिशब्दा इत्युपक्रमेऽपि भाष्यानुरोधाच्छून्यादिशब्दानामित्युपसंहारः। समन्वयेत्यादिफलोक्तिः ॥ छ ॥ भाष्येऽनूदितसौत्रैतच्छब्दार्थं वदन् भाष्यसूत्रयोरर्थमाह ॥ पूर्वोक्तेति ॥ भाष्यस्थस्मृत्युक्तो योगो दुर्जनाव्यक्तता तथेत्यनुभाष्योक्तनिमित्तस्याप्युपलक्षणमिति मत्वाऽऽह ॥ दुर्जनेति ॥ प्रसिद्धनिमित्तस्य हरावयोगेऽपि स्मृत्यादिप्रसिद्धं लोकतोऽप्रसिद्धं तु निमित्तं हरौ युज्यत इति तच्छब्दवाच्यत्वं स्यादेवेत्याकूतम्। स्मृत्युक्तयोग एव श्रुतौ ग्राह्य इत्यस्य कंपनादित्यत्र निर्णीतत्वादिति भावः। तुच्छशब्दे तुदित्यस्यार्थमाह ॥ तोदनात्तुदिति ॥ छइत्यस्यार्थमाह ॥ अदृश्यः छइति ॥ अश भोजन इत्यतोऽश्यत्वादिति रूपं तस्य नञाऽन्वय इति अभक्ष्यत्वादित्यर्थमाह ॥ नाश्यत्वादिति ॥ ॥ उभयत्रेति ॥ असद्वाचिशब्देषु अभाववाचिशब्देषु च इत्यर्थः। युक्तिं चाऽऽह ॥ निषेधेति ॥ ईश्वरो वा कथं तत्रैव तत्करोतीत्यत आह ॥ ईश्वरस्येति ॥ फलोक्त्या सूत्रार्थमुपसंहरति ॥ अत इति ॥ साधकभावात् बाधकाभावाच्चेत्यर्थः। समन्वयसूत्रे तत्तु शास्त्रयोनीति प्रतिज्ञांशं विवृण्वन्नेव तत्समर्थनमस्य फलमिति दर्शयति ॥ युक्तमिति ॥ तस्याऽपि जन्मादिसूत्रार्थसिद्धिद्वारा जिज्ञासासूत्रस्थब्रह्मशब्दार्थसिद्धिः फलमित्युपेत्याह ॥ तत इति ॥ अनंतगुणत्वं चेति ॥ हरेरित्यनुकर्षः। एतच्च समन्वयाधिकरणांत एव विवृतम् ॥ २९ ॥ अ० ७ ॥

इति श्रीमद्भाष्यटीकाभावदीपे राघवेन्द्रयतिकृते प्रथमाध्याये चतुर्थः पादः।

॥ प्रथमाध्यायः संपूर्णः ॥

॥ श्रीकृष्णार्पणमस्तु ॥

## ॥ ब्रह्मसूत्रानुक्रमणिका ॥

### ( प्रथमाध्यायः )

॥ श्री ॥

# शुद्धिपत्रिका

(Only glaring printing errors are noticed in the list given below. Readers are requested to correct the other minor errors themselves as they go on reading.)

| प. सं. | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 2 | 10 | व्याकुर्वं | व्याकुर्वें |
| 4 | 23 | मलतया | मूलतया |
| 5 | 11 | ध्वान्तकृन्तने | ध्वान्तनिकृन्तने |
| 7 | 9 | न्नैतन्ना | नैतन्ना |
| 8 | 12 | युक्यादि | युक्त्यादि |
| 13 | 20 | उत्सन्ना | उत्सन्ना |
| 14 | 2 | कृस्ण | कृष्ण |
| 15 | 17 | विशष | विशेष |
| 19 | 2 | सूत्रिष्वति | सूत्रेष्विति |
| 19 | 13 | शास्त्रेऽत | शास्त्रैंऽत |
| 19 | 14 | ववर्थं | व्यर्थं |
| 39 | 1 | क्कचिच्छान्तो | क्वचिच्छान्तो |
| 39 | 8 | दियुक्ते | दित्युक्ते |
| 39 | 14 | तीती गीता | तीति गीता |
| 43 | 20 | वस्तुतो येन | वस्तु तोयेन |
| 46 | 11 | तच्यैष | तच्चैष |
| 48 | 22 | सिद्धान्तश्च | सिद्धान्त |
| 54 | 4 | प्राप्नोतिति | प्राप्नोतीति |
| 54 | 13 | श्रत्युक्तं | श्रुत्युक्तं |
| 77 | 5 | धीयत | धीयते |
| 80 | 27 | हेयत्वावचनान्न | हेयत्ववचनान्न |
| 86 | 27 | हेतुनिगुण | हेतुर्निर्गुण |
| 96 | 23 | र्त कारत्वात् | तद्धिकारत्वात् |
| 104 | 10 | श्रुतावयविन | श्रुताववयविन |

| | | | |
|---|---|---|---|
| 109 | 18 | व्यवस्विति | व्यवस्थिति |
| 110 | 28 | वह्मैवेति | ब्रह्मैवेति |
| 111 | 5 | प्रामाण | प्रमाण |
| 111 | 13 | चशब्दा | चशब्द |
| 117 | 25 | कवया | कवयो |
| 117 | 27 | इित्था | इत्यादि |
| 121 | 11 | हृदय | हृदयं |
| 127 | 18 | वाभ्याधिक | वाभ्यधिक |
| 127 | 25 | रूढ्या | रूढ्या |
| 128 | 7 | क कः | कं क्रः |
| 128 | 25 | परमुख्य | परममुख्य |
| 137 | 28 | तत्विस्यो | तत्त्वित्यस्यो |
| 152 | 7 | त्राणो | प्राणो |
| 152 | 24 | प्राणसा | प्राणस्या |
| 156 | 16 | रूपपदषूयपदेषु | रुपपदेषु |
| 156 | 17 | तद्वृतौ | तद्वृत्तौ |
| 157 | 22 | समादितः | समाहितः |
| 159 | 23 | मन्वाम | मन्वान |
| 160 | 1 | उक्तिप्रयो | उक्तप्रयो |
| 160 | 12 | नन्वत्रोपसान | नन्वत्रोपासन |
| 162 | 3 | मनो यो | मनोमयो |
| 166 | 17 | न चाऽदि | न चाऽऽदि |
| 166 | 22 | कि | किं |
| 170 | 27 | आत्मनोऽअनादि | आत्मनोऽनादि |
| 171 | 2 | रोपितत्वेनऽऽरो | रोपितत्वेनाऽऽरो |
| 172 | 8 | ह्यपर | ह्यपरि |
| 173 | 9 | विवृत्त | विवृत |
| 175 | 15 | दवोवर | देववरः |
| 176 | 20 | आयुरथे | आयुरर्थे |

| | | | |
|---|---|---|---|
| 178 | 4 | भाष्ये | भाष्येण |
| 180 | 5 | योबद | योवेद |
| 184 | 16 | मैवाऽरुवव्यो | मैवाऽऽरुवण्यो |
| 187 | 23 | ग्नेरेवऽऽदि | ग्नेरेवाऽऽदि |
| 190 | 10 | तथाप्याग्नि | तथाप्यग्नि |
| 198 | 5 | प्युपपदितं | प्युपपादितं |
| 199 | 13 | ग्निर्भर्वेत् | ग्निर्भवेत् |
| 201 | 11 | न विष्णोः | न हि विष्णो : |
| 201 | 14 | पृथिवी | यं पृथिवी |
| 202 | 19 | पृद्यथिव्यादिजीवाविदितत्वं | पृथिव्यादिजीवाद्य-विदितत्वं |
| 204 | 3 | ा ा वः | भाव. |
| 204 | 10 | सप्त्यमर्थे | सप्तम्यर्थे |
| 204 | 23 | नति | नेति |
| 206 | 15 | भाव्यामान | भाव्यमान |
| 207 | 2 | भाष्यो | भाष्ययो |
| 207 | 18 | तद्दॆह | तद्देह |
| 208 | 3 | यद्भूतयानि | यद्भूतयोनि |
| 208 | 8 | धमाक्तः | धर्मोक्तेः |
| 208 | 9 | अक्षरात्ससम्भ | अक्षरात्सम्भ |
| 214 | 23 | अदृश्य | इति अदृश्य |
| 216 | 13 | वैश्वानर | वैश्वानर |
| 216 | 15 | ग्रसिद्ध | प्रसिद्ध |
| 221 | 29 | भूमिरजायत | भूमिः |
| 228 | 14 | भानदीपः | भावदीपः |
| 245 | 12 | मुक्त्या | मुक्त्वा |
| 248 | 1 | विष्णुरेवेति | विष्णोरेवेति |
| 250 | 16 | एतास्मिन् | एतस्मिन् |
| 251 | 8 | प्रथमप्रतीते | प्रथमाप्रतीते |

| | | | |
|---|---|---|---|
| 251 | 16 | मध्यमैवोच्यत | मध्यममेवोच्यत |
| 251 | 27 | तद्बे | तद्बै |
| 252 | 19 | पाठ | पाठः |
| 252 | 25 | अदृष्ट | अदृश्य |
| 254 | 5 | विष्सुः | विष्णुः |
| 254 | 12 | प्रणोऽत | प्राणोऽत |
| 254 | 15 | यष्मिर्न्निति | यस्मिन्निति |
| 254 | 23 | प्राशासनात् | प्रशासनात् |
| 254 | 25 | बृ० वि० | बृ० उ० |
| 255 | 1 | चर्तुमिः | चतुर्भिः |
| 255 | 8 | सर्वधार | सर्वाधार |
| 256 | 3 | नणुरूपा | नणुरूपो |
| 256 | 8 | अभिवदन्त्य | अभिवदन्ति |
| 256 | 13 | भाननो | भावेनो |
| 256 | 17 | तदत्येश्नाति | तदश्नाति |
| 256 | 17 | इत्वेतदपि | इत्येतदपि |
| 256 | 19 | तस्यादक्षरं | तस्मादक्षरं |
| 256 | 26 | स्थौल्यादेरप | स्थौल्यादेरुप |
| 258 | 22 | नवेतत्स्थाने | नन्वेतत्स्थाने |
| 259 | 15 | सष्टौ | सृष्टौ |
| 260 | 2 | प्रतमत | प्रथमत |
| 260 | 5 | व्यख्याति | व्याख्याति |
| 260 | 12 | ज्ञानहेनुत्वा | ज्ञानहेतुत्वा |
| 260 | 15 | माणनेक | माणानेक |
| 261 | 10 | भोष्यो | भाष्यो |
| 261 | 23 | निदैश | निर्देश |
| 262 | 15 | यादिरैक | यादिरेक |
| 264 | 9 | तत्रोक्तं | तत्रोक्तं तथापि |
| 269 | 8 | सूचितस्मृति | सूचितश्रुति |

| | | | |
|---|---|---|---|
| 270 | 3 | एव | एष |
| 271 | 6 | श्रुत्यंतरणां | श्रुत्यंतराणां |
| 271 | 25 | दहं | दह्लं |
| 272 | 29 | सहस्त्र | सह्स्र |
| 277 | 12 | हृत्यद्मस्थ | हृत्पद्मस्थ |
| 279 | 19 | सुखस्य | सुखस्यै |
| 280 | 23 | नीयमि | नीयामि |
| 280 | 24 | लब्धसाधारण्यं | लब्धं साधारण्यं |
| 281 | 11 | स्मरणात्। विजा- नीयामिति लिङ् | स्मरणात् विजानीयामिति लिङ् |
| 282 | 1 | मत्रे | मंत्रे |
| 292 | 11 | (अव्याप्य ा ूतानेक) | (अव्याप्यभूतानेक) |
| 293 | 11 | पूनरर्थ | पुनरर्थ |
| 297 | 3 | सादश्ये | सादृश्ये |
| 298 | 25 | पक्षात्रवव्याप्य | पक्षात्स्वव्याप्य |
| 303 | 11 | वेदनित्यत्वे | वेदानित्यत्वे |
| 304 | 23 | प्रामण्यमेव | प्रामाण्यमेव |
| 310 | 22 | स्मृतश्चे | स्मृतेश्च |
| 313 | 16 | यद्य– | तद्य– |
| 314 | 6 | विद्यारवधिकारो | विद्यास्वधिकारो |
| 319 | 20 | रूपमिर्त्थः | रूपमित्यर्थः |
| 324 | 14 | शूद्रस्यैन | शूद्रस्यैव |
| 327 | 11 | श्रुतिर्लिगो ा योक्ते | श्रुतिर्लिंगोभयोक्ते |
| 327 | 26 | यतीप्रयत्न | यती प्रयत्न |
| 330 | 21 | समानत्वायोगत् | समानत्वायोगात् |
| 331 | 2 | लाका | लोका |
| 331 | 25 | कित्योतिरयं | किं ज्योतिरयं |
| 331 | 27 | हृद्यं तज्योति | हृद्यंतर्ज्योति |
| 334 | 1 | यौगिकत्वात् | तत्र तस्य यौगिकत्वात् |

| | | | |
|---|---|---|---|
| 336 | 23 | स्वप्रादि | स्वप्नादि |
| 338 | 21 | द्रष्टृरूप | द्रष्टृस्वरूप |
| 341 | 16 | सर्वश्वर | सर्वेश्वर |
| 342 | 25 | परमात्मनो भेदं | परमात्मनोऽभेदं |
| 342 | 25 | दर्थादप्राप्ति | दर्थादभेदप्राप्ति |
| 343 | 6 | रप्यु लक्षणमिति | रप्युपलक्षणमिति |
| 343 | 18 | अयं ब्रह्मणो | अयं ब्राह्मणो |
| 343 | 25 | शाखान्तरणा | शाखांतराणा |
| 343 | 28 | वर्नमान | वर्तमानमिति |
| 345 | 19 | श्रीमद्धनु | श्रीमद्धनुम |
| 346 | 3 | (न्यत्रान्यौवे | (न्यत्रान्यत्रैवे |
| 346 | 15 | कांक्षयां | कांक्षायां |
| 349 | 27 | एवेत्य दि भष्ये | एवेत्यादिभाष्ये |
| 353 | 5 | हि प्रवृत्ति | हिशब्दप्रवृत्ति |
| 353 | 24 | सं मवो | संभवो |
| 358 | 11 | धीयत | धीयते |
| 358 | 15 | तत्त्रय | एतत्त्रय |
| 358 | 21 | इत्यधियत | इत्यभिधीयत |
| 358 | 21 | वेत्यज्ञातं | वेत्यविज्ञातं |
| 358 | 22 | वजतान्न | वचनान्न |
| 359 | 22 | पत्तिरिति | पत्तेरिति |
| 360 | 6 | न चान्यन्यत्रेति | न चान्यत्रेति |
| 360 | 26 | इत्याकांक्षां | इत्याशंकां |
| 361 | 10 | शासनरूपत्वेन | शासनरूपत्वे |
| 361 | 10 | तद्वदस्या | तद्वदस्य |
| 362 | 17 | तज्जयो | तज्ज्यो |
| 362 | 22 | तत्प्रामाणा | तत्प्रमाणा |
| 363 | 7 | मभ्यर्चेत् | मभ्यार्चत् |
| 363 | 11 | रूढेर्दृश्यते | रूढेर्दृश्यते |

| | | | |
|---|---|---|---|
| 363 | 16 | आपि | अपि |
| 366 | 12 | वृत्तिरूपचारः | वृत्तिरुपचारः |
| 366 | 15 | माणा | माण |
| 366 | 17 | प्रसिद्ध् | प्रसिद्ध |
| 366 | 20 | वाजि | वाचि |
| 367 | 13 | मित्यर्थ | मित्यर्थः |
| 369 | 20 | क्वचिन्म नेना | क्वचिन्मानेना |
| 369 | 22 | व्य ख्यातुमाह | व्याख्यातुमाह |
| 373 | 7 | भिन्नाकिकरण | भिन्नाधिकरण |
| 373 | 13 | निर्गीता | निर्णीता |
| 375 | 2 | नाऽयत्रैव | नाऽन्यत्रैव |
| 375 | 18 | द्यज्ञादि | द्यक्षादि |
| 376 | 14 | वाच्चे | वाच्ये |
| 378 | 12 | हि लोका | हि सर्वे लोका |
| 378 | 12 | उपसा | उपासा |
| 380 | 6 | ज्ञानर्थं | ज्ञानार्थं |
| 380 | 12 | व्यवहियन्त | व्यवह्रियन्त |
| 380 | 24 | मत्पिण्डेन | मृत्पिण्डेन |
| 387 | 2 | चाऽस्त्यस्त्री | चाऽस्त्री |
| 390 | 5 | अत इति ठनौ | अत इनि ठनौ |
| 390 | 18 | तत्रैव | तत्रेव |
| 390 | 22 | प्रमुख्या | मुख्या |
| 18 | 14 | मानत्वे | मानत्वे– |
| 88 | 24–25 | सूत्रार्थोनक | सूत्रार्थोनेक– |
| | | मानेतः | सूत्रार्थोनेक– |

103 18 'न चोक्तप्राप्त्या विरिञ्चादिरुच्यते' पंक्तिः 107 पृष्ठे सूत्रात् प्राक् पठनीया ।

—o—

द्वैतसिद्धांतप्रतिष्ठापनाचार्यश्रीमन्मध्वाचार्यकृतं

# ब्रह्मसूत्रभाष्यम्

( द्वितीयाध्यायः )

श्रीजयतीर्थकृत-तत्वप्रकाशिकाख्यटीकया तदुपरि
श्रीराघवेंद्रयतिकृतभावदीपाख्यटिप्पण्या च समलंकृतम् ॥

# Brahma Sutra Bhashya

*of*

**Sri Madhvacharya**

*with the commentary*

**Tatva-Prakasika** of Sri Jayatirtha

*and a gloss thereon*

**Bhavadipa** of Sri Raghavendratirtha

*Edited*

with Critical Text, Introduction and Appendices etc.,

*by*

Mahamahimopadhyaya Vidyaratna

**R. S. Panchamukhi,** *M.A.*

Director and Chief Editor, Karnatak Historical Research Society,
Dharwad

**Raghavendra Tirtha Pratishthana**

Karnataka Historical Research Society, Dharwad

**1980**

*Published by*

Vidyaratna **Sri R. S. Panchamukhi**, M. A.
Chairman and Chief Editor
Karnatak Historical Research Society, Dharwad

Price : **Rs.**



Published with the financial help from The Ministry of Education (Sanskrit Division) Govt. of India New Delhi, under their Scheme for Editing and Publication of rare Sanskrit Manuscripts.

*Printed by :*

**Pavamana Printing Press**
Research and Publication Centre,
College Road, Dharwad

# CONTENTS





---

# PREFACE

The editing and printing of the first Adhyaya is completed. According to our plan the whole work of four Adhyayas will be published in four volumes-each volume for each Adhyaya; the last Adhyaya will contain an exhaustive general introduction with Appendices to explain the special features of the commentaries and glosses.

The subject matter of this Adhyaya is the removal of the objections to the conclusion of the first Adhyaya viz.: guna-purnatva of Vishnu (Brahman). This is derived from the innumerable properties (Pravritti-Nimitta) implied in the rich vedic vocabulary, employed to describe and denote Vishnu—Brahman. (ब्रह्मशब्दश्च विष्णावेव)

The objections to the above conclusion are classified under four categories.: 1) Yukti-Virodha (logical Contradiction), 2) Samaya-Virodha (technical and philosophical contradiction), 3) Contradictions in Sruti texts and 4) Contradictions supported by scriptural reasons (श्रौतयुक्ति) in sruti texts. It is true that logical contradictions are implied in the first adhyaya also as in
eg,:

विकारशब्दान्नेति चेन्नप्राचुर्यात् ।
उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ।
साक्षादप्यविरोधं जैमिनिः ।
कल्पनोपदेशाच्च मध्वादिवदविरोधः ।

but this is found only in few instances and not regularly as in the present section (तथाऽपि क्वचित् क्वचिदेव । अत्र तु सर्वथेति भावदीपे सुधावचनम् ।)

One may object to this classification on the ground of the reader's mental facility. The vedas teach Gunapurnatva of Vishnu in the first Adhyaya, but this is against the Vedas themselves (श्रुतिविरोध and युक्त्युपेतश्रुतिविरोध). These two objections should be removed first. Then should be treated Yukti Virodha and Samaya Virodha. But this involves a serious psychological error. It may be noted that the Sutrakara wants to convey the objections as direct (साक्षात्). and indirect (परंपरया).

Under the first category (direct – (साक्षात्) come the Yukti virodha and Samaya virodha. The Sruti Virodha and Yuktyupeta Sruti Virodha are indirect for they prove first the contradictions in the srutis and thus condemn them as untrustworthy unauthentic–thus not competent to prove anything. Thus the order of classification is quite logical and scientific.

By removing all the objections implied in the four sections of the chapter Yukti, Samaya, Sruti, and shrout Yuktyupeta Sruti, the main conclusion of the first Adhyaya ie. the Gunapurnatva of Vishnu, is established and remains unchallenged.

It should be observed that the effect (कार्य) follows the removal of obstacles (प्रतिबंधकाभाव / प्रतिबंधकनिवृत्ति) and so the two objections ( प्रतिबंधक ) are removed in the first two sections. Though this statement is correct it should be noted that (प्रतिबंधकाभाव) is not a direct cause (कारण) of effect but removes the doubts of अप्रामाण्य ( अप्रामाण्य शंकानिवृत्तिः ) to establish firmly the प्रामाण्य of the subject. Hence the two Virodhas of युक्ति and समय remove the doubts as stated above.

Chapter II, though small in extent, is very rich in its contents as several theories of astute systems of philosophy are examined and proved to be defective. The Acharya has established his own unassailable system of philosophy by which the true meaning of the sutras is understood and the correct sense of the vedas is unravelled (शास्त्रयोनित्वात्, वेदैश्च सर्वैरहमेव वेद्यः ।)

I have tried my level best to use all the exegetic materials to understand the true meaning of the sutras by comparative analysis and textual interpretation.

I have received valuable help from several Pandits and commentaries in editing this work. My thanks are due to these and other scholars who have rendered me ungrudging help in this task.

—R. S. **Panchamukhi.**

## BRAHMASUTRAS

*A Scheme of the Adhyaya, Pada and Adhikarana (with Conspectus of Contents)*

## CHAPTER II

The गुणपूर्णत्व of Vishnu was established in the first chapter after surveying and interpreting the Vedic words under three categories of अन्यत्रप्रसिद्ध, उभयत्रप्रसिद्ध and अन्यत्रैवप्रसिद्ध. This conclusion will be confirmed only when the validity of the Vedic testimony is proved and the objections on it are considered and shown to be untenable. They are comprised under four heads.—

(1) युक्तिविरोधः or objections based on reasons

(2) समयविरोधः or objections of other schools of thought.

(3) श्रुतिविरोधः or textul contradictions and

(4) युक्त्युपेतश्रुतिविरोधः or contradictions of Vedic texts which are supported by reasons recorded in them.

The Saiva and other Smritis which put forth their conclusions with apparently attractive and plausible arguments are considerd first as the Smritis embody the elements of all the four Virodhas. Being thus most powerful, they cannot be passed over. They are treated first according to the maxim of **Maha-Malla Bhanga Nyaya** (महामल्लभंगन्याय) and refuted in the beginning of the first pada (युक्तिपाद). The objections of other schools of thought like चार्वाक (Charvaka), न्यायवैशेषिक (Nyaya Vaisheshika), सांख्य (Sankhya), योग (Yoga), आर्हत (Arhata), बौद्ध (Bauddha), मीमांसक (Mimamsaka) as well as the अद्वैत (Advaita) and विशिष्टाद्वैत (Visishtadvita) thinkers have to be satisfactorily met. Some of these never accept the testimony of the Vedas,

and others, the self-validity of their authority. Further, the tenets of Samkhya, Arhata, and Bauddha etc., are quite opposed to the philosophy of Vedanta as inculcated in the Vedas. So, these Samayas or systems of philosophy are examined and proved to be faulty and defective in the second section or समयपाद. Thereafter the apparent self-contradictions in the Srutis should be removed. For, self contradictions in part or whole, will vitiate the validity of the Vedas in general. The contradictory 'Smritis' are in some cases supported by 'Yuktis' or reasons in the Srutis themselves which impart them additional strength to oppose the Vedic philosophy. These two sets of arguments of the opponents are refuted in the two sections or Padas, viz. श्रुतिविरोध and युक्त्युपेतश्रुतिविरोध respectively. When all kinds of objections are thus proved to be untenable, the conclusion of the first chapter viz. गुणपूर्णत्व and जगज्जन्मादिकर्तृत्व of Vishnu will become unchallengeable. The seeker after truth (जिज्ञासु) can now set to meditate on the auspicious qualities of Vishnu and obtain His साक्षात्कार in due course and when the preliminaries of training are fully gone through, he will attain Mukti or state of blissfulness.

1) The first section (पाद) contains eleven Adhikaranas. In the first Adhikarana the Sruti samanvaya (श्रुतिसमन्वय) interpreting the Srutis in favour of Vishnu's all powerfulness is contradicted by the Saiva and Kanada Smritis where Siva and other gods are held to be the creator of the Universe etc. This is removed by the counter—argument that the 'Pancharatra' (Vaishnava) Smritis etc., are, being derived from them, supported by the relevent Sruti texts, whereas the Saiva and other Smritis have no support of the Srutis. Why should this support impart any superiority to the Vaishnava Smritis at all ? It is replied that the invalidity of the Saiva Smritis is proved by the falsity of their contents where as the Vaishnava Smritis contain

statements which prove true, provided there are no detracting factors like कर्तृवैगुण्य or अंगवैकल्य which vitiate their charecter or validity truthfulness in some way.

(2) The superiority of the Srutis as a source of infallible knowledge which is self-valid is established in the second Adhikarana (न विलक्षणत्वादितिनय). Hence, the discrepancy in the results mentioned in the Srutis is to be assigned to the extraneous causes such as the defects in the instruments etc., and not to the inherent deficiency in the Srutis in yielding proper results. Where the defects are removed, the results are bound to happen. This argument of फलविसंवाद i. e., non-yielding of its due results, does not hold good in the case of properly qualified aspirants (अधिकारिन्) who do realise the fruit mentioned in the Srutis.

The invalidity of the Sruti is proved in the following examples by the 'Purvapakshin' (doubter) and answered in each case by the Sutrakara as follows—

(1) Adhikaranas 3 & 4—The Sruti texts मृदब्रवीत्, आप: अब्रुवन्, ता आप ऐक्षन्त etc., are incongruous as the insentient earth etc., cannot speak or see. Hence, the Sruti is invaild. To this it is replied that it is not the inanimate earth or water that is apparently assigned power of speech or sight; but it is the abiding deity in the material body that speaks or sees. This presiding deity is called the *abhimani devata* (अभिमानिदेवता); the apparent contradiction is thus removed by sublating superficial meaning प्रतीतार्थप्रच्युति of the Sruti. This argument is extended to असत् in expressions like असदेवेदमग्र आसीत् etc., असत: सदजायत etc. which is incongruous as negation असत् cannot be invested with the power of creating the world. Here it is replied that असत् is not negation but God Vishnu, understood etymologically नह्यासादयति कश्चन 'no body can reach Him'.

Adhikarana 5— In the fifth Adhikarana भोक्त्रापत्तेः etc., the identity of Isa (God Vishnu) with Jiva (individual soul) is understood in passages like परेऽव्यये सर्वं एकीभवंति and the property of creating the world vesting in 'Isa' can very well be ascribed to the individual soul who is identical with Him. This is refuted. This apparent sense of identity has to be understood in a modified way. For, two different objects can never become one. So, the एकीभाव (becoming one or union) is true as in worldly transactions (स्याल्लोकवत्); for example,
(1) यथालोके उदके उदकांतस्यैकीभावव्यवहारः water mixed with other water where both waters are separate is called one water.

(2) 'यथा प्राग्विभिन्नाः ब्राह्मणाः साँप्रतमेकीभूताः इति व्यपदेशः' Brahmins previously disunited (having different views or opinions) become united in mind. तथा प्राग्विभिन्नस्थाना भिन्नमतयो जीवाः मुक्तौ ब्रह्मणा एकस्थाना एकमतय इति स्थानैक्यादि निमित्तकः। Similarly, the Jivas in Mukti are stated to become united with God in virtue of their remaining in one place with God and thinking alike with God, being His Pratibimba. लोके अन्यद्वस्तु वस्त्वंतरेणाभेदमापन्न न दृष्टमतः प्राग्विभिन्नतया प्रतीतस्य जीवस्य मुक्तावभेदायोगाद् बाधकाभावादेवमाश्रयणं युक्तम्। न च प्राग्भेदप्रतीतिर्भ्रमः बाधकाभावादिति भावः। —तं. दी.

(II) Adhikarana 6 :— True; Brahman is the creator of the Universe but He creates the world using Mahat - tatva (महत्तत्व) and other materials which are independent of Him. The अनुमान, महदादि सृष्टिः कर्त्रन्यस्वतंत्रसाधनसापेक्षा सृष्टित्वात् पटसृष्टिवत् and the Agama अद्भ्यः संभूतः पृथिव्यै रसाच्च etc., prove this. But it is pointed out in reply that these accessories कर्तृ, करण, अधिष्ठान etc., are wholly dependent upon God Vishnu for their very existence. So the materials महत्तत्व etc., subsist only under His will and their independent existence is questioned and negatived in the Sruti किंस्विदासीदधिष्ठानमारंभणं कतमत्स्वित्कथाऽऽसीत्। (अग्रे

परिहारानुक्तेः किं शब्दो न प्रश्नार्थकः इति ध्येयम् । विद्यारण्येनाप्याक्षेपार्थत्व-स्यैवोक्तेः । — तं. दी.)

. Hence, the highest independent agency of Vishnu cannot be challenged. He creates the world making use of dependent materials out of sheer sport as a sign of His majestic power. Not only He is the independent incidental cause (निमित्त करण) like a weaver in producing the cloth but He is also the all pervading power which subsists and operates in all bodies.

(7) In the seventh Adhikarana, the contradictions of reason supported by actual experience and the Sruti and so on are removed. The Sruti जीवाद्भवंति भूतानि and the experience अहमिदं करोमि (I do this) invalidate the above conclusion and invest the individual soul with agency. No; it is not so. If Jiva is an independent agent why does he commit actions which are baneful to him and does not always do his own good? This implies his subordination to some higher Power which controls and guides his actions at Its will. This power is God Vishnu. He resides everywhere and without Him not a leaf stirs. Further. if, in the other alternative, the Jiva is the Agent, does he function with full strength in all actions such as lifting up a straw which involves best effort or operate by partial energy in bigger works? Both are incompatible. The former is against experience and the latter, contrary to the Sruti that the Jiva (अथ यः स जीवः स नित्यो निरवयवः) has no parts. Hence, the Jiva cannot be and is not an independent agent; but is subservient to God Vishnu in all actions (8–9). Such objections can not be advanced against God Vishnu in whom all contradictions are dissolved. For, he is knowable by Sruti only and is not cognisible by Pratyaksha or Anumana. The Sruti teaches that He creates the world as sport and has no selfish motive except the good of the Jivas under Him. He is invisible (इतर व्यपदेशाधिकार-णम् । श्रुतिशब्दमूलत्वाधिकरणम् । न प्रयोजनाधिकरणम्)

(10) All right, if he creates the world for the good of others, why then, do some Jivas suffer and others enjoy? Does it not suggest partiality and cruelty on his part? No. He does the creation in accordance with the previous Karma (action) and Yogyata (capacity or fitness) of the Jivas. This however, does not curtail His independence as the Karma and Yogyata etc., owe their existence to His will. This explanation dose not imply his cruelty etc., for this apparent cruelty etc., has to be accepted in the interest of larger good to his entire creation and in the defence of infallible testimony of the Vedas which proclaim the greatness of God Vishu above all gods.

Thus, it is established conclusively that God Vishnu and none else is गुणपूर्ण and दोषदूर and the arguments of the objector based on reason are untenable. The contents of the Pada are briefly set forth in the Tantradipika as follows :—

१) स्मृतिनये अश्रौतस्मृत्यप्रामाण्यं २) नविलक्षणत्वादिति नये श्रुतिश्रौतस्मृत्योः प्रामाण्यं तत्स्वतस्त्वं च । ३) अभिमानिनये अभिमानितद्विग्रह-तदंतर्धानशक्त्यादि । ४) असदितिनये लये भावसत्वं । ५) भोक्त्रितिनये मुक्तौ जीव परैक्य निरासः । ६) तदनन्यत्वनये सृष्टिसाधनानां ईशायत्तत्वम् । ७) इतरेति नये जीवस्य कर्तृत्वेऽप्यस्वातंत्र्यम् । ईशस्यानुलंपभेपि सत्वम् । ८) श्रुतेरिति नये अघटितघटकनित्यशक्तित्त्वम् । ९) नेति नये स्वभावतः सृष्टिः । १०) वैषम्यनये कर्मापेक्षत्त्वेऽपि स्वातंत्र्यम् । ११) अंत्यनये सर्वगुण-परिपूर्णत्वं सर्वदोषशून्यत्वं चेत्यादि सिद्धम् । —तंत्रदीपिका

End of the First Pada of II Adhyaya.

## II Section

### Samaya Virodha

In this Section, the opposing schools of philosophy holding divergent views are refuted. They are grouped as (1) *Vedavadins* (Vedic Rationalist philosophers) (2) *Haitukas* (Rationalists) and (3) Pashandas (Atheists). The *Vedavadins* are refuted in the first section as defective in their arguments.

अक्षपादकणादौ च सांख्ययोगौ च हैतुकाः ।
बौद्धपाशुपताद्यास्तु पाषण्डा इति कीर्तिताः ।।

The Haitukas are treated first. There are twelve *Adhikaranas* in this *Pada* which are distributed as follows :—

| | *Adhikaranas* | | *Samayas refuted* |
|---|---|---|---|
| 1 | रचनाधिकरणं | 1 | निरीश्वरसांख्यमतं |
| 2 | अन्यत्राभावाधिकरणं | 2 | सेश्वरसांख्यमतं |
| 3 | अभ्युपगमाधिकरणं | 3 | चार्वाकमतं |
| 4 | पुरुषाश्माधिकरणं | 4 | जीवगुणकप्रधानकर्तृवादः |
| 5 | अन्यथानुमित्यधिकरणं | 5 | जीवप्रधानकर्तृवादः |
| 6 | वैशेषिकाधिकरणं | 6 | वैशेषिकमतं |
| 7 | समुदायाधिकरणं | 7 | वैभाषिक सौत्रांतिकमतं (बौद्धैकदेशिनः) |
| 8 | नाऽसत इत्यधिकरणं | 8 | शून्यमतं (बौद्धाः) |
| 9 | अनुपलब्ध्यधिकरणं | 9 | विज्ञानमतं (बौद्धाः) |
| 10 | नैकस्मिन्नधिकरणं | 10 | क्षपणकमतं (जैनाः) |
| 11 | पत्युरधिकरणं | 11 | शैवमतं |
| 12 | उत्पत्त्यधिकरणं | 12 | शक्तिमतं |

Here, the first six are *Haitukas* (Rationalists) and the next ones are Pashandas (Atheists). The arguments of the first group of opponents with their refutations are summarised hereunder :—

The Samkhyas admit the validity of the Sruti. They do not admit functionary powers to Purusha but explain the creation as a result of the peculiar combination of the material elements earth, water etc. of the Prakriti, Purusha remaining silent. This is contrary to experience as an insentient thing cannot function by itself (एतस्य वा अक्षरस्य प्रशासने गार्गि.......... त्वत्क्रियते किंचनाऽऽरे । —श्रुतिः) The Purusha has to be admitted.

He cannot be a mere observer, for he permeates every thing and imparts strength of action (तृणादीनां पर्जन्य इव नेशोऽनुग्राहकमात्रं। किंतु सर्वस्वतंत्र एवेत्यर्थः।) The Charvaka who does not admit the testimony of Sruti, explains everything as a material phenomenon. This is brushed aside as not deserving serious consideration, since his plea does not rest on a firm basis of philosophical requirements of a sound thesis viz, *Adhikarin, Vishaya, Prayojana* and *sambandha*. Similarly, the joint functioning of Jiva and Pradhana—one principal and the other subsidiary–cannot satisfactorily explain the creation. For, their mutual contact itself is not possible without the help of one controlling superior Chetana (or God). Thus, the Haitukas or materialists are refuted as defective in their theories.

The Vaiseshikas who admit God but assign him only eight special qualities enunciate a novel theory of creation (परमाण्वारंभवादः). They explain the creation of the world from Paramanus (atoms) by combinations in group of two (द्व्यणुक) three (त्र्यणुक) and four (चतुरणुक). How can the Paramanus come together to form a group ? Their triple theory of causation *Samavayikarana, asamavayikarana* and *Nimittakarana,* is unprovable. The Samavaya (contact between two indissoluble or inseparable objects) is open to the defect of regress *(anavastha)*. It is absurd that God who is the creator, protector and Destroyer of the universe is endowed only with eight qualities (अष्टगुणः), while the *Jiva* is said to possess fourteen qualities. The Vaiseshika theory is thus rejected as defective. The Bauddhas who discard the Vedas, come next for consideration. The Vaishashikas and Sautrantikas explain the Universe as a mass of atoms (परमाणुपुंजवादः). But how can the atoms come together and produce an accomplished object ? They cannot account for the variety and difference in the created world as the Paramanus which are similar ought to produce

॥ दृश्यते त्विति ॥ न फलादर्शनेन श्रुत्यादेरप्रामाण्यं वक्तव्यम् । फलादर्शनस्य कर्तुरयोग्यतयोपपत्तेः । तत्कुतः कल्प्यते । योग्यानां फलदर्शनात् । न च शंकनीयं पाशुपतादिस्मृत्युक्तफलव्यभिचारस्यापि कर्तुरयोग्यतानिबंधनतोपपत्तेर्नाप्रामाण्यं योग्यानां फलदर्शनादिति । कल्पकाभावात् । वेदस्य तु निर्दोषतया स्वतःप्रामाण्ये सिद्धेऽवश्यं व्यभिचारस्य गत्यंतरं कल्पनीयम्। पाशुपतादीनां तु फलदर्शनमंतरेण प्रामाण्यसाधकाभावात् । तस्यापि स्वतःप्रामाण्यमिति चेत् । सत्यम् । निर्दोषत्वानिर्णये फलविसंवाददर्शनेनाप्रामाण्यप्राप्तेरेवोक्तत्वादिति भावः । तुशब्दः कर्तृविशेषद्योतकः । अधिकारित्वं नाम तत्फलयोग्यत्वं कर्मवैगुण्यप्रतिबंधादिशून्यत्वं वा । अधिकरणार्थे स्मृतिं चाह ॥ भविष्यत्पुराणे चेति ॥ स्वतःफलसंवादादिरहितनिर्दोषतयैव। पूर्वकर्मान्येोपलक्षणम् । इतः फलदर्शनतः । अदृश्योक्तौ अनुपलभ्यमानवचने । अतो वेदादिप्रामाण्यस्य युक्तिविरुद्धत्वाभावाद्युक्तं तेन हरेर्जगत्कारणत्वमितिसिद्धम् ॥ ५ ॥ अ० २ ॥

भावदीपः—

॥ ॐ दृश्यतेतु० ॐ ॥ ५ ॥ सूत्रे फलदृष्टयुक्तिर्नप्रामाण्यज्ञप्त्यै स्वतस्त्वभंगापत्तेः । किंतु क्वचिददृष्टेर्गतिं वक्तुं स्मृत्यनुरोधादिति भावेनोक्तशंकां निरस्यन्व्याचष्टे ॥ न फलेति ॥ योग्यानां फलाधिकारिणां प्रतिबंधकशून्यानामित्यर्थः । भाष्येऽधिकारिणामिति सौत्रतुशब्दार्थ इत्याह ॥ तु शब्द इति ॥ अधिकारित्वं नामेति ॥ कर्मवैगुण्यप्रतिबंधादिशून्यत्वरूपयोग्यत्वमधिकारित्वमित्यर्थः ॥ अधिकरणार्थ इति ॥ भाष्ये सार्धश्लोकेन स्मृतेः श्रुत्यनुसारित्वोक्तिरित्याहुः॥ अन्येति ॥ कर्मवैगुण्योपलक्षणमित्यर्थः ॥ अत इति ॥ शैवादिस्मृतिप्रामाण्यवैलक्षण्यात् विसंवादस्य वैगुण्यादिहेतुकत्वाच्चेत्यर्थः ॥ ५ ॥ अ० २ ॥

सूत्रभाष्यम्—

'मृदब्रवीत्' (श. ब्रा. ६–१–३) 'आपोऽब्रुवन्' (श. ब्रा. ६–१–३) त्यादिवचनाद्युक्तिविरुद्धो वेद इत्यतोऽब्रवीत्—

॥ ॐ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॐ ॥ ६ ॥

मृदाद्यभिमानिदेवता तत्र व्यपदिश्यते । तासां चेतरेभ्यो विशिष्टं सामर्थ्यमनुगतिश्च सर्वत्र । अतस्तासां सर्वमुक्तं युज्यते ॥ ६ ॥

तत्वप्रकाशिका—

अत्र पुनर्विष्णोःसर्वकर्तृत्वादिप्रतिपादकवेदप्रामाण्ये युक्तिविरोधपरिहारादस्ति शास्त्रादिसंगतिः। वेदप्रामाण्यात्सर्वकारणत्वं विष्णोरित्युक्तम् । तत्प्रामाण्यस्य च युक्तिविरोधे न विष्णोर्जगत्कारणत्वं सिध्यतीत्यतोऽसौ परिहार्य एव। स वेदो विषयः। प्रमाणं न वेति संदेहः। पूर्वोक्तमेवात्र संदेहबीजम्। पूर्वपक्षयति ॥ मृदिति ॥ न वेदः प्रमाणम् । मृदब्रवीदापोऽब्रुवंस्ता आप ऐक्षंत तत्तेज ऐक्षत ओषधयः संवदंत इत्यादिना मृदादीनां वचनदर्शनाद्यभिधायकत्वात् । तथात्वेऽपि कुतोऽप्रामाण्यम् । मृन्न वदति (वक्त्री) जडत्वादित्यादियुक्तिविरुद्धत्वेन मृदादिवचनादेरसत्त्वात् । असदभिधायकत्वमेवाप्रामाण्यम् । एवं च युक्तिविरुद्धार्थत्वेन वेदैकदेशस्याप्रामाण्येऽन्यस्याप्यप्रामाण्यमिति न विष्णोस्तेन जगत्कारणत्वसिद्धिरिति भावः । ननु मृदादिवचनाद्यभिधायकवाक्यस्य प्रत्यक्षविरोध एव प्रथमं स्फुरत्यतो न पादसंगतिः। मैवम्। आदिसृष्टावेव पृथिव्यादीनां तदभिधानात् । तदानींतनवचनाद्यभावस्यास्मदाद्यप्रत्यक्षत्वेन युक्तेरेवाश्रयणीयत्वात् । सिद्धांतयत्सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ तुशब्दोऽवधारणे । भवेदेतदुक्तं यद्यत्र मृदाद्येवोच्येत नैतदस्ति । मृदाद्यभिमानिनीनां देवतानामेव तत्र व्यपदेशादित्यर्थः। स्यान्मतम्। श्रुतियुक्त्योः श्रुतेरेव प्राबल्यात्तद्विरुद्धयुक्तेरेवाप्रामाण्यं वक्तव्यं किं युक्तिविरोधपरिहाराय श्रुतेरन्यार्थकल्पनया। न चोपजीव्यप्रत्यक्षविरोध इत्युक्तमिति । मैवम्। अन्यार्थकल्पने मुख्यार्थलाभात् । (ननु) नाभिमानिदेवता नाम संति। तथाहि। किं ता अभिमन्यमानव्यापिन्यःकिं वा तदेकदेशवर्तिन्यः। आद्येऽपि विग्रहवत्यो न वा । न प्रथमः। उपलंभप्रसंगात् । न द्वितीयः। वचनाद्ययोगात् । नांत्यः । तद्रहितदेशवद्देशांतरावस्थानोपपत्तौ तद्वैयर्थ्यादित्यत आह ॥ तासां चेति ॥ न चाभिमानिदेवताभावो वाच्यः। यत्प्रागुक्तं तत्रास्त्येव तासां सर्वत्रानुगतिर्विग्रहश्चेति ब्रूमः। न च दर्शनप्रसंगः सर्वगतानां विग्रहवतीनामपि तासामितरपदार्थेभ्यो विशेषसामर्थ्येनादर्शनसंभवादिति भावः। संतु देवताः प्रकृते किमायातमित्यत आह ॥ अत इति ॥ यतोऽत्र मृदादिशब्दैर्देवता व्यपदिश्यंतेऽतस्तासां चेतनत्वेन श्रुत्युक्तं सर्वं वचनादिकं युक्तमतो न युक्तिविरुद्धं वेदवाक्यमिति भावः। अत्रैकवचनस्य सूत्रगतत्वादभिमानिदेवतेत्युक्तम् । तच्च समुदायविवक्षयेतिभावेन तासामित्यादि दृश्यते चेत्युत्तरसूत्रानुगुण्येनात्रविग्रहस्य ग्राह्यत्वात् । दृश्यंते मुनिभिरिति स्मृत्यानुकूल्यान्न तत्र शक्तिमात्रमुच्यते ॥ ६ ॥

भावदीपः—

।। ॐ अभिमानि व्यपदेशस्तु० ॐ ।। ६ ।। युक्तीति ।। श्रुतेः प्रतीतार्थप्रच्यावनं विना अनुपपद्यमानत्वरूपदृढयुक्तिविरोधपरिहारादित्यर्थः। दृढयुक्तिविरोधे तु सर्वत्र न्यायईदृश इत्यनुभाष्योक्तेः। तेन न पूर्वेण गतार्थत्वमिति ज्ञेयम्। पूर्वसंगतिमाह। ।। वेदेति ।। पूर्ववद्व्याख्या। मृदादीनां वचनाद्यदृष्टिः श्रुत्यप्रामाण्यकारणमिति न्यायविवरणानुसारेण पूर्वपक्षभाष्यं व्याचष्टे ।। न वेदः प्रमाणमित्यादिना ।। मृदादिशब्दैः सर्गाद्यकालीनपृथिव्यादिकमुच्यत इत्यादिवचनादित्यस्यार्थ इत्यादिनेति। युक्तीत्यादि व्याचष्टे ।। तथात्वेपीत्यादिना ।। इत्यादीत्यादिपदेन मृत्त्वाद्घटवदिति युक्तिर्गृह्यते। मृत्वेनैव हेतुना जडत्वं सिद्धमिति भावः। भाष्ये वेदैकदेश इति वाच्ये वेद इत्युक्तेरुपपत्तिमाह ।। एवं चेति ।। तत्सामान्यादिति न्यायादिति भावः। ।। युक्तेरेवेति ।। प्रागुक्तजडत्वादियुक्तेरेवेत्यर्थः। न च युक्तेर्मृदब्रवीदित्यादिधर्मिग्राहिश्रुतिबाधः। इदानींतनमृदादिकारणत्वेनादिकालीनमृदाद्यनुमानापरसिद्धमात्रस्य पक्षीकरणाद्वा श्रुतेरनुमानधर्म्यसमर्पकत्वेन प्राबल्याभावादिति भावः ।। छ ।। तत्तन्नामान एवैते तत्तद्वस्त्वभिमानिन इत्यनुभाष्यदिशा सूत्रे तुशब्दो योग्यतयाभिमानिपदेनान्वेतीति भावेन तदर्थं योजनां च दर्शयन् भाष्यं व्याचष्टे ।। तुशब्द इति ।। भाष्येऽग्रेतनसूत्रानुरोधेन एकवचनांततया सूत्रार्थभाषणं समुदायाशयमिति भावेन देवतानामित्यादि बहुवचनप्रयोगस्तासामित्युत्तरभाष्यवाक्यानुरोधेन कृतः। दृश्यते मुतिभिश्च ता इति स्मृतौ तथा प्रयोगात् भाष्ये तासामिति बहुवचनोक्तिरिति भावः। अवधारणार्थतुशब्दसूचितमुख्यत्वव्यावर्त्यचोद्यमाह ।। स्यान्मतमिति ।। ननूपजीव्यविरोधे तु वेदस्यान्यार्थकल्पना। प्रत्यक्षमुपजीव्यं स्यात्प्रायोयुक्तिरपि क्वचिदिति पूर्वनयानुभाष्योक्त्याऽस्ति श्रुतेरप्यर्थांतरकल्पनमित्यत आह ।। न चेति ।। उपजीव्यप्रत्यक्षविरोधश्च नास्तीत्युक्तं पूर्वपक्षदशायामेवेत्यर्थः। इयं च युक्तिर्न श्रुतेरुपजीव्येति भावः ।।मुख्यार्थेति।। अभिमन्यमानगतमृत्वादिमृदादिशब्दप्रवृत्तिनिमित्तस्याभिमान्यधीनत्वेन तदधीनत्वादिति न्यायेनाभिमानिनां मृदादिशब्दमुख्यार्थत्वात्तैः शब्दैस्तेषां ग्रहणे मुख्यार्थलाभात्। युक्तिविरोधेनापातप्रतीतार्थत्यागेन तात्पर्यार्थत्याग इत्यर्थः। तथा च मृत्त्ववत्तीति जडस्य पक्षत्वे सिद्धसाधनम्। चेतनस्य पक्षत्वे हेतोरसिद्धिरित्यनुमानदूषणं व्यक्तमिति भावः। सूत्रखंडभाष्यमवतारयति ।। (ननु)नाभिमानीति ।। सूत्रभाष्ययोरनुगतिरूपलक्षणं मत्वाऽऽह।। अनुगतिर्विग्रहश्चेति ।। देहश्चेत्यर्थः। भाष्ये पूर्वोक्त

रविरोधमाशंक्याह ॥ अत्रेति ॥ भाष्य इत्यर्थः । ननु एकवचनस्य सूत्रगतत्वादित्य-सिद्धम् । अभिमानिनां व्यपदेश इत्यपि विग्रहप्रदर्शनस्य सुशकत्वादित्यत आह ॥ दृश्यते चेति ॥ विग्रहस्याभिमानिनो व्यपदेश इत्येवंरूपस्य समासार्थप्रदर्शकवा-क्यस्येत्यर्थः । ननूत्तरसूत्रे दृश्यते चाभिमानिदेवतेति यद्यर्थः स्यात्तदा तदनुसारा-त्पूर्वसूत्रेऽप्युक्तदिशा एकवचनांततया विग्रहः स्यात् । नैतदस्ति । दृश्यते च तासां सामर्थ्यं महद्भिरित्येव तत्र भाषणादित्यत आह ॥ दृश्यंत इति ॥ तत्र तासां साम-र्थ्यमिति भाष्ये न शक्तिमात्रमुच्यते किंतु देवता चेत्युपलक्ष्यते कुतः दृश्यंत इति तत्रोदाहरिष्यमाणस्मृत्यनुसारादित्यर्थः । स्मृतौ बहुवचनोक्तावपि समुदायविवक्षया दृश्यते च देवतेत्यपि विवक्षणीयमिति भावः ॥ ६ ॥

सूत्रभाष्यम्——

॥ ॐ दृश्यते च ॐ ॥ ७ ॥

तासां सामर्थ्यं महद्भिः । भविष्यत्पुराणे च—

'पृथिव्याद्यभिमानिन्यो देवताः प्रथितौजसः ।
अचिन्त्याः शक्तयस्तासां दृश्यन्ते मुनिभिश्च ताः ।
ताश्च सर्वगता नित्यं वासुदेवैकसंश्रया' इति ॥ ७ ॥

॥ इति अभिमान्यधिकरणम् ॥ ३ ॥

तत्वप्रकाशिका——

नन्वत्राप्रामाणिकदेवताकल्पनात्तासां च विशिष्टसामर्थ्यकल्पनाद्वरं वेदाप्रामाण्य-ग्रहणमेव लाघवात् । न च वेदेन तत्सिद्धिस्तत्प्रामाण्ये विवादादित्याशंकां परिहरत्सूत्रं पठित्वा तच्छेषमेव पूरयति ॥ दृश्यते चेति ॥ नाप्रामाणिकत्वमभिमानिदेवतानां तत्साम-र्थ्यस्य च महद्भिर्दृश्यमानत्वादित्यर्थः । परबुद्धेरप्रत्यक्षत्वात् कुत एतदित्यत आह। भवि-ष्यत्पुराणे चेति ता देवताः शक्तयश्च । अथवा विग्रहवतीनां सर्वगतानां तासां दर्शनप्रसंग इत्युक्ते प्रष्टव्यम् । किमज्ञैर्दृश्येरन् महद्भिर्वा । आद्यस्योत्तरं विशेषसामर्थ्यम् । द्विती-येऽभ्युपगमो दृश्यते चेति । अथवा वस्त्वंतरमधिष्ठाय तासां वचनादिकं कथमित्यस्योत्तरं तासामिति । परिच्छिन्नानामभिमानिनीनां कथमनेकाभिमन्यमानाधिष्ठातृत्वमपी-त्यस्यानुगतिरिति। अनुपलब्धिबाधपरिहाराय सूत्रमिति । न च वाच्यं देवतासद्भावेऽपि

कुतोऽत्र तद्व्यपदेशकल्पनेति । अचेतनानां वचनाद्यदृष्टचा निर्दोषवाक्यस्याप्रामाण्यादृष्टचा च तत्कल्पनोपपत्तेः । अतो वेदप्रामाण्ये युक्तिविरोधाभावाद्युक्तं तेन भगवतो जगत्कारणत्वसाधनमितिसिद्धम् ॥ ७ ॥ अ० ३ ॥

भावदीपः—

॥ ॐ दृश्यते च ॐ ॥ ७ ॥ ननु सूत्रे देवतातत्सामर्थ्ययोर्मानोक्तिर्निर्बीजा तदुक्तावपि श्रुत्युक्ति विना प्रत्यक्षोक्तिर्निर्बीजेत्यतोऽवतारयति ॥ नन्विति ॥ तत्सिद्धिः तयोः सिद्धिरित्यर्थः । देवतातच्छक्तिपरत्वेन भाष्यं सूत्रान्विततया व्याचष्टे ॥ नाप्रामाणिकत्वमिति ॥ ता इत्यनूद्यार्थमाह ॥ ता देवतास्तच्छक्तयश्चेति ॥ द्वयोरपि प्रकृतत्वादिति भावः । ननु वेदादिप्रामाण्यविवादे बीजाभावस्योक्तत्वात्तत्यागेन देवतादौ योगिप्रत्यक्षोक्तिरयुक्ता। अन्यथा योगिप्रत्यक्षे स्मृतेः प्रमाणीकरणायोगादिति पूर्वत्रारुच्याऽऽह ॥ अथवेति ॥ अत्र पक्षद्वयेऽपि विशेषानुगतिभ्यामिति हेत्वोर्न च दर्शनप्रसंग इत्याद्यध्याहृतसाध्यान्वयादरुच्याऽभिमानिव्यपदेश इति श्रुतसाध्यान्वयेन मतांतरमाह ॥ अथवा वस्त्वंतरमिति ॥ तर्हि दृश्यते चेति सूत्रं किमर्थमित्यत आह ॥ अनुपलब्धीति ॥ योगिभिरप्यनुपलभ्यमानत्वान्नास्त्यभिमानिदेवतादीत्याशंकानिरासाय दृश्यते चेति सूत्रमित्यर्थः । न मृदादीनां वचनाद्यदृष्टिः श्रुत्यप्रामाण्यकारणं अपि तु वचनादिशक्ताया मृदादिदेवतायाः शब्दैर्वाच्यत्वद्योतिकैवेति न्यायविवरणे पूर्वपक्षांशस्य भाष्यव्याख्ययैव प्राग्विवृतत्वात्सिद्धांतांशं अत्र योजयितुं शंकामाह ॥ न च वाच्यमिति ॥ अत इति ॥ मृदादिशब्दानामभिमानिदेवतापरत्वादित्यर्थः ॥ ७ ॥ अ० ३ ॥

सूत्रभाष्यम्—

'असदेवेदमग्र आसीत्' (छां. उ. ६-२-१) 'असतः सदजायत' (ऋ. सं. १०-७२-३) त्यादिनाऽसतः कारणत्वोक्तेर्विरोध इत्यतो वक्ति—

॥ ॐ असदिति चेन्न प्रतिषेधमात्रत्वात् ॐ ॥ ८ ॥

प्रतिषेधमात्रत्वान्नासतः कारणत्वं युक्तम् । असतः कारणत्वाद्युक्तिविरुद्धं वेदवाक्यमित्येतदत्र निषिध्यते । सर्वशब्दानां ब्रह्मणि समन्वयेऽपि 'तदधीनत्वादर्थवदि' (ब्र. सू. १-४-३) त्यादिनाऽमुख्यत्वेनान्यस्यापि वाच्यत्वेनाङ्गीकारादसतः प्राप्तिः । तथा (च) श्रुतिप्राप्तमेवासन्मतमत्र निषिध्यते । समयस्योपरि निषेधात् । अर्थाद्युक्तिविरोधो(ऽपि) निराक्रियते ॥ ८ ॥

तत्वप्रकाशिका—

अत्र ब्रह्मणो जगत्कारणत्वे युक्तिविरोधस्य परिह्रियमाणत्वादस्ति शास्त्रादिसंगतिः। जगत्कारणत्वं हरेरुक्तम्। तस्य युक्तिविरुद्धत्वे लक्षणासंभवात्स निराकर्तव्य एव। जगत्कारणत्वमेव विषयः। तद्विष्णोर्युक्तमयुक्तं वेति संदेहः। श्रुतिविगानं संदेहबीजम्। तत्र पूर्वपक्षयति ॥ असदेवेति ॥ न विष्णोर्जगत्कारणत्वम्। प्रमाणाभावात्। न च 'यतो वा इमानि' इत्यादिश्रुतिः प्रमाणम्। 'असदेवेदमग्र आसीत्' इत्यादिश्रुत्याऽसतोऽपि कारणत्वोक्तेः। न हि श्रुतित्वाविशेषेऽन्यया ब्रह्मणः कारणत्वं सेत्स्यत्यन्यया तु नासत इति युक्तम्। अतोऽसदेव जगत्कारणमिति न जगत्कारणत्वं ब्रह्मणः। तथा चोक्तं लक्षणं दुष्टमिति भावः। अत्र सर्वत्रासच्छब्देन प्रलयवर्तिविश्वप्रागभावोऽभिधीयते। कारणशब्देन कर्तेत्यवधेयम्। स्यादेतत्। श्रुतिद्वयेन संदेह एव नान्यतरपक्षावधारणमिति। न पूर्वपक्षे सयुक्तिकत्वस्य वक्ष्यमाणत्वादिति। सिद्धान्तयत्सूत्रमवतार्याऽऽक्षेपांशस्य पूर्वमेव विवृतत्वात्परिहारांशं व्याचष्टे ॥ अत इति ॥ युक्तमेव विष्णोर्जगत्कारणत्वं न त्वसतः। तस्याभावधर्मात्मतामन्तरेण स्वरूपत एव प्रतिषेधबुद्धिविषयत्वात्। न हि घटप्रागभावस्य कारणत्वं संभवतीति भावः (न हि शशविषाणादीनां यत्किंचित्प्रति कारणत्वं संभवतीति भावः)। नन्वेतस्मिन्नधिकरणेऽसतो जगत्कारणत्वं वदतां शून्यवादिनां समयो निराक्रियते न तु श्रुतिप्राप्तमसन्मतम्। 'एतेन सर्वे व्याख्याताः' इत्यसदादिशब्दानां ब्रह्मविषयत्वस्योक्तत्वेनासतः प्राप्त्यभावात्। अतोऽपव्याख्यानमेतदित्यत आह ॥ असत इति ॥ अत्राधिकरणेऽसतः कारणत्वप्रलयस्थितत्वाभिधायकश्रुत्या विरुद्धं विष्णोर्जगत्कारणत्वाभिधायकं वेदवाक्यमिति श्रुतिप्राप्तमेवासन्मतं निराक्रियते न तु समय इत्यर्थः। ननूक्तमेवासतो न श्रुतौ प्राप्तिरिति तत्राह ॥ सर्वेति ॥ नन्वस्त्वेवमसतः प्राप्तिस्तथापि समयोऽत्र निराक्रियत इति किं न स्यादित्यत आह ॥ तथेति ॥ अमुख्यतयेत्यर्थः। शून्यवादिसमयस्योपरितनपादे निराकरिष्यमाणत्वात्। अत्र श्रुतिप्राप्तमेवासन्मतं निराक्रियत इत्येवाङ्गीकार्यम्। अन्यथा पौनरुक्त्यापातादिति भावः। यद्यत्र ब्रह्मणो जगत्कारणत्ववाचिश्रुतेः श्रुतिप्राप्तासन्मतविरोधो निराक्रियेत तर्ह्येतदधिकरणं तृतीयपादे निबन्धनीयं न तु युक्तिविरोधपरिहारात्मकेऽस्मिन्पाद इत्यत आह ॥ अर्थादिति ॥ न केवलमत्र श्रुतिविरोधः परिह्रियते येनासंगतिः। किं नाम कारणमभिमतं प्रलयेऽसद्भवितुमर्हति वस्तुत्वात्कार्यवदित्याद्यसतः कारणत्वप्रतिपादकयुक्तिविरोधोऽपीति भावः। तथापि युक्तिविरोधमात्रपरिहारात्मके पादे श्रुति-

युक्तिविरोधपरिहारोऽसंगत इत्यतोऽर्थादित्युक्तम्। नात्र श्रुतियुक्त्योः स्वतन्त्रं विरोधद्वयं परिह्रियते किं तु श्रुतिविरोधपरिहारेणाप्यन्ततो युक्तिविरोध एव। तथा हि। अत्रासतः कारणत्वप्रतिपादकयुक्तिः पूर्ववादिनोपन्यस्यते। तस्याश्च निर्मूलाया असाधकत्वात्तन्मूलभूता च श्रुतिरुच्यते। तथा चानुपपन्नभाषित्वेन श्रुतेरर्थान्तरे प्रामाण्याभाव इति तद्विरोधे परिहृते निर्मूलयुक्तेः स्वत एवाप्रामाण्यमिति। अतोऽत्र श्रुतिविरोधपरिहारस्य युक्तिविरोधपरिहाराङ्गत्वान्नासंगतिरिति युक्तमेवोक्तव्याख्यानमिति भावः ॥ ८ ॥

भावदीप––

॥ ॐ असदिति चेन्न प्रतिषेधमात्रत्वात् ॐ ॥८॥ युक्तिविरोधो निराक्रियत इत्यादि भाष्यदिशाऽस्यांतर्भावसंगतिमाह ॥ अत्र ब्रह्मण इति ॥ युक्तीति ॥ श्रुत्युपसर्जनप्रागभावकर्तृत्वसाधकयुक्तीत्यर्थः। सा चाग्रे व्यक्ता। उक्तं चानुभाष्ये। अल्पवाक्ययुता युक्तिर्बहुलैव विरोधिनीति। अत्राल्पत्वबहुत्वे गुणत्वप्रधानत्वे इति सुधायामेवोक्तम्। पूर्वसंगतिमाह ॥ जगदिति ॥ उक्तं जन्मादिसूत्र इत्यर्थः ॥ श्रुतीति ॥ यतो वा इति असदेवेदमग्र इत्यादिश्रुतिविरोध इत्यर्थः। भाष्ये विरोध इत्यत्र यतो वा इत्यादि श्रुतेरिति शेषं मत्वा साध्योक्तिपूर्वं उक्तेरित्यंतं तावद् व्याचष्टे ॥ न विष्णोरिति ॥ अप्रयोजको हेतुरित्यतः ईश्वरस्य स्रष्टृत्ववदसतोऽपि स्रष्टृत्वं श्रूयत इति न्यायविवरणप्रयुक्तवतिप्रत्ययोक्तसाम्यं व्यनक्ति ॥ न हीति ॥ अस्त्वसतोऽपि कारणत्वोक्तिस्तावता कथं यतो वा इत्यादिश्रुतिर्न प्रमाणं येन विष्णुकारणत्वं न युक्तमित्यतः विरोध इति भाष्यांशं फलोक्त्या विवृण्वन् उपसंहरति ॥ अत इति ॥ यतो वा इत्यादिश्रुतेरसद्वा इत्यादिश्रुतिविरोधेनाप्रामाण्यादित्यर्थः। ननु निःस्वरूपस्यासतो नियतप्राक्सत्वरूपहेतुत्वायोगवदासीदिति सत्वोक्तिविरोधाच्च कथमसतः कारणत्वशंका असच्छब्दस्य प्रागभावार्थत्वेऽपि तत्कारणत्वमात्रस्य विष्णुकर्तृत्वाविरोधाच्चेत्यत आह ॥ अत्र सर्वत्रासच्छब्देन प्रलयवर्तिविश्वप्रागभावोऽभिधीयते कारणशब्देन च कर्तेत्यवधेयमिति ॥ अचेतनस्यापि कर्तृत्वं वृक्षेण स्थीयत इत्यादौ कर्त्रर्थकतृतीयाविभक्तिदर्शनाद्युज्यत इति भावः। असदेवेति प्रागुक्तावधारणमाक्षिप्य समाधत्ते ॥ स्यादेतदिति ॥ सयुक्तिकत्वस्येति ॥ तथा च भाष्ये उक्तेरित्यनंतरं युक्त्या चेत्यपि ध्येयमिति भावः। युक्तिश्च कारणं प्रलयेऽसद्भवितुमर्हति। वस्तुत्वादित्यग्रे व्यक्ता ॥ छ ॥ असतः कारणत्वं न चेदकर्तृकं जगत्स्यादित्यतो

भाष्ये साध्यभागस्यार्थमाह ।। युक्तमेवेति ।। कारणत्वं कर्तृत्वमित्यर्थः ।।न त्वसत इति ।। न विश्वप्रागभावस्येत्यर्थः । इति चेन्न निषेधैकस्वरूपस्य न कर्तृतेत्यनुभाष्योक्तेः । प्रतिषेधात्मकत्वं तु भावस्याभावधर्मतः । धर्मधर्म्यैक्यतश्चैव न तु तन्मात्रता भवेत् । अभावस्य च भावोऽपि धर्मोऽथापि हि धर्मिणः । तादृक्त्वं मात्रतेहोक्तेत्यनुभाष्यदिशा भाष्यस्थहेत्वंशं मात्रपदार्थं वदन्व्याचष्टे ।। तस्येति ।। तात्पर्यार्थः ।। स्वरूपत एवेति ।। घटाभावादिवदिति भावः । सर्वभावानामभावधर्मात्मना प्रतिषेधबुद्धिविषयत्वमस्तीति कुलालादौ व्यभिचारनिरासाय अभावधर्मात्मतामंतरेणेति मात्रपदार्थो विवृत । न हि तादृशे अभावे बुद्धिपूर्वककृति(प्रवृति)मत्त्वरूपमीश्वरगतत्वेनास्मदभिमतं कर्तृत्वं युज्यते घटाभावादावदर्शनादित्याह ।। न हीति ।। न हि शशविषाणादीनामिति पाठपक्षे तु यथा निःस्वरूपाणां शशविषाणादीनां नियतपूर्वक्षणसत्त्वस्वरूपं कारणत्वं शंकार्हं न भवति तथा बुद्धिहीने विश्वप्रागभावे बुद्धिपूर्वककृतिमत्त्वरूपकर्तृत्वं न संभवतीत्यर्थः । कारणत्वाद्युक्तिविरुद्धमिति भाष्ये कारणत्वादेरुक्तिः श्रुतिः तद्विरुद्धमिति विग्रहः । न तु कारणत्वाद्धेतोर्युक्तिविरुद्धमिति भिन्नं पदमुत्तरभाष्यविरोधादिति भावेनाह ।। कारणत्वप्रलयस्थितत्वेति ।। असन्मतमिति ।। प्रलयवृत्तिविश्वप्रागभाव एव विश्वस्योपादानं कर्ता चेत्यभावोपादानकर्तृत्वमतमित्यर्थः । असतः प्राप्तिः कर्तृत्वेनाभावस्य प्राप्तिरित्यर्थः ।। उपरितनेति ।। नासतो दृष्टत्वादित्यत्रेत्यर्थः । असन्मतमभावकर्तृत्वमतं निषिध्यत इत्यर्थः ।। अन्यथेति ।। अत्रापि समयप्राप्तस्य निषेधे प्रागभावकर्तृत्वप्रापकसमयाभावेन शून्यकारणतानिषेधस्यैव प्रसंगादिति भावः । असत्कार्यं यथादृष्टं वस्तुत्वात्कारणं तथेत्यनुभाष्योक्तदिशा असदिति चेदिति सूत्रांशसूचितां युक्तिमाह ।। कारणमिति ।। निमित्तकारणत्वेनोपादानकारणत्वेन च सिद्धांत्यभिमतमीश्वरादृष्टप्रधानादिकं प्रलयेऽसत् अविद्यमानं वस्तुत्वात्कार्यवदित्यर्थः । एवं चानया युक्त्या ईश्वरप्रभृतिभावकारणमात्रस्य प्रलयेऽभावसिद्धौ कार्यत्वस्य सोपादानत्वसकर्तृकत्वनियमात्परिशेषादभावस्यैव विश्वकर्तृत्वं विश्वोपादानत्वं च सेत्स्यतीति भावेनोक्तमित्याद्यसतः कारणत्वेत्यादिपदम् । अर्थांतरे प्रागभावकर्तृत्वादौ ।। ८ ।।

सूत्रभाष्यम्—

।। ॐ अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॐ ।। ९ ।।

असत उत्पत्तौ प्रलयेऽपि सर्वासत्त्वमेव स्यात् ।। ९ ।।

तत्वप्रकाशिका—

यदुक्तं प्रतिषेधमात्रत्वाच्छशविषाणादिवदसतो न कारणत्वमिति न तद्युक्तम्। युक्तिविरुद्धस्यापि श्रुतिबलात्कस्यचिदसतः कारणत्वस्याभ्युपगमे बाधकाभावात्। न च शशविषाणादीनामपि तथात्वप्रसङ्गः। सत्सु वैलक्षण्यवदसत्स्वपि वैलक्षण्योपपत्तेरित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ अपीताविति ॥ असतः सकाशाज्जगदुत्पत्तावभ्युपेतायां प्रलये असन्मात्रावशेषः प्रसज्जेत। कार्यनाशे कारणमात्रावशेषनियमात्। अतोऽसमञ्जसमसन्मतमित्यर्थः ॥ ९ ॥

भावदीपः—

॥ ॐ अपीतौ तद्वत्प्रसंगादसमंजसम् ॐ ॥ ९ ॥ युक्तीति ॥ प्रतिषेधमात्रत्वयुक्तीत्यर्थः। कस्यचिदसतः विश्वप्रागभावस्येत्यर्थः। आपाद्यापादकयोरसांगत्यनिरासाय शेषपूर्त्या भाष्यं व्याचष्टे ॥ असतः सकाशादिति ॥ सूत्रे अपीतिशब्दः प्रलयवाची। तच्छब्दः प्राक्प्रकृतासच्छब्दिताभावपरः सावधारणः। वदितिमतुप्प्रत्ययो न तु परमत इव वतिरिति भावेन सूत्राक्षराणि योजयति ॥ प्रलये असन्मात्रेत्यादि ॥ सर्वासत्त्वमिति भाष्यं तु तात्पर्यार्थोक्तिपरमिति भावः ॥ कार्यनाश इति ॥ यद्यपि कार्यनाशेऽपि कारणशब्देनेहाभिमतकर्तृमात्रावशेषनियमो नास्ति नष्टकर्तृकघटादिनाशे व्यभिचारात्। तथापीह पूर्ववादिना कर्त्रुपादानयोरैक्यांगीकारात्कार्यनाशे उपादानावशेषनियमात्तदभिप्रायेण कार्यनाशे कारणमात्रावशेषनियमादित्युक्तम्। असन्मतमभावमतम् ॥ ९ ॥

सूत्रभाष्यम्—

॥ ॐ न तु दृष्टान्तभावात् ॐ ॥ १० ॥

प्रलये सर्वासत्त्वं भावे दृष्टान्तभावादेव न युज्यते। सत उत्पत्तिः सशेषविनाशश्च हि लोके दृष्टः ॥ १० ॥

तत्वप्रकाशिका—

अस्माभिरपि प्रलयेऽसन्मात्रावशेषस्याभिलषितत्वान्नानिष्टापादनमेतदित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ न त्विति ॥ न प्रलये सर्वासत्त्वं युज्यते। तदा पदार्थसत्त्वस्यैव दृष्टान्तबलेन साधयितुं शक्यत्वात्। अतः परस्येष्टमपि प्रलये सर्वा-

सत्त्वापादनं प्रामाणिकपरित्यागरूपत्वाद्भवेदेवानिष्टापादनमिति भावः। कोऽसौ प्रलये पदार्थसत्त्वसाधने दृष्टान्त इति तत्राह ।। सत इति ।। अत्रैतौ प्रयोगौ भवतः। विप्रतिपन्नोत्पत्तिः सतो भवितुमर्हति। उत्पत्तित्वाद् घटोत्पत्तिवत्। विमतो विनाशः सशेषो विनाशत्वात् घटविनाशवदिति। एवं विप्रतिपन्नोत्पत्तिविनाशयोः सत्पूर्वकत्वे सशेषत्वे च सिद्धे प्रलये पदार्थसत्त्वमेव सिध्यति ।। १० ।।

भावदीपः—

।। ॐ न तु दृष्टांतभावात् ॐ ।। १० ।। सतः भावपदार्थादित्यर्थः। सत्पूर्वकत्वे भावपूर्वकत्वे ।। १० ।।

सूत्रभाष्यम्—

।। ॐ स्वपक्षदोषाच्च ॐ ।। ११ ।। दृष्टान्ताभावादेव ।। ११ ।।

तत्वप्रकाशिका—

न केवलं प्रामाणिकपरित्यागप्राप्त्या प्रलये सर्वासत्त्वमनिष्टमपि त्वप्रामाणिकत्वाच्चेत्यर्थप्रतिपादकसूत्रमुपन्यस्य व्याचष्टे ।। स्वपक्षेति ।। न तावत्प्रलये सर्वासत्त्वं प्रत्यक्षसिद्धम्। नाप्यागमेन। तस्याभावात्। अनुमानमपि किं प्रलयः सर्वासत्त्ववानित्यादिरूपेण साक्षाद्भवेत्परंपरया वा। नाद्यः। प्रलये सर्वासत्त्वपक्षे दृष्टान्ताभावेनानुमानस्य दुष्टत्वात्। व्यतिरेकेऽतिप्रसंगः। एतेन द्वितीयोऽपि परास्तः। अतः प्रलये सर्वासत्त्वस्याप्रामाणिकत्वात्तदभ्युपगमोऽनिष्ट इति भावः ।। ११ ।।

भावदीपः—

।। ॐ स्वपक्षदोषाच्च ॐ ।। ११ ।। सूत्रे चशब्दादाह ।। न केवलमिति ।। ननु दृष्टांताभावमात्रेण प्रलये सर्वासत्त्वं कथमप्रामाणिकम्। प्रमाणमात्राभाव एव तत्त्वापातादित्यतो भाष्यमुपलक्षणत्वेन व्याचष्टे ।। न तावदिति ।। परंपरया वेति ।। सर्वे भावाः प्रलये असंतः भावत्वात्। कारणं प्रलये असत् वस्तुत्वात्कार्यवदित्यादिरूपयेत्यर्थः। ननु प्रलयः सर्वाभाववान् लयकालत्वाद् व्यतिरेकेणान्यकालवदित्यनुमानं स्यादित्यत आह ।। व्यतिरेक इति ।। प्रलयः शशविषाणवान् लयकालत्वात् व्यतिरेकेणान्यकालवत् इत्यप्रामाणिकपदार्थांतरसाधनसंभवादतिप्रसंग इत्यर्थः। एतेन अतिप्रसंगेनेत्यर्थः। भावत्वादिना लये सर्वासत्त्वसाधने लयकालस्याप्यभावापत्तिप्रसंगात्। अन्यथा तत्र

हेतोर्व्यभिचार इति भावः। यद्वा एतेनानुमानस्य दुष्टत्वेनेत्यर्थः। भावत्वादेर्दुष्टत्वं च विप्रतिपन्नोत्पत्तिः सतो भवितुमर्हतीत्यादिप्रागुक्तानुमानविरुद्धत्वेनेत्यर्थः। यद्वा एतेन प्रागुक्तानुमानविरुद्धत्वेनैवेत्येवार्थः ॥ ११ ॥

सूत्रभाष्यम्—

॥ ॐ तर्काप्रतिष्ठानादप्यन्यथाऽनुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॐ ॥ १२ ॥

एतावानेव तर्क इति प्रतिष्ठापकप्रमाणाभावादुक्तादन्यथाऽप्यनुमेयमिति चेन्न, एवं सति प्रमाणसिद्धेऽपि मोक्षेऽन्यथाऽनुमेयत्वादनिर्मोक्षप्रसङ्गः। अतो यावत्प्रमाणसिद्धं तावदेवाङ्गीकर्तव्यम्। नातोऽन्यच्छङ्क्यम्।

'यावदेव प्रमाणेन सिद्धं तावदहापयन्।
स्वीकुर्यान्नैव चान्यत्र शङ्क्यं मानमृते क्वचिदि'ति वामने ॥ १२ ॥

तत्वप्रकाशिका—

तर्केण सदसतोः कारणत्वसाधनबाधने आक्षिप्य समादधत्सूत्रमुपन्यस्याऽऽक्षेपांशं तावद् व्याचष्टे ॥ तर्केति ॥ यत्तर्कबलेन सतः कारणत्वसाधनमसतश्च तद्बाधनं तदयुक्तम्। यद्यत्तर्केण साध्यते तस्मादुक्तात्तर्केण साधितादन्यथापि प्रतितर्केण साधयितुं शक्यत्वेन तर्कस्याप्रामाण्यात्। न हि प्रतितर्क एतावानेवैतादृशं तर्कं प्रति विरोधितया वर्तते नैतादृशमिति नियामकमस्ति। अतः सर्वानुमानेषु प्रतितर्कस्यानिवारणीयत्वेन तेषामप्रामाण्यान्न तद्बलात्सत्कारणत्वसाधनादि युक्तमिति भावः। परिहारांशं व्याचष्टे ॥ नेति ॥ तर्कसिद्धं सर्वं प्रतितर्केण दूषयितुं शक्यत इति वदन् प्रष्टव्यो जायते। किं प्रामाणिकं तर्कसिद्धं प्रतितर्केण दूषयितुं शक्यमप्रामाणिकं वेति। द्वितीयस्तु युक्त एव। प्रथमेऽपि प्रष्टव्यं किमेवं वादिनो मते मोक्षोऽस्ति न वेति। न चेन्नासौ वादी प्रयोजनांतरस्य शास्त्रमंतरेणापि सिद्धेः। अस्ति चेत्किं विप्रतिपन्नं प्रत्यागमेनैव साध्यते उत तर्केण। नाद्यः। अनिर्मोक्षवादिनाऽऽगमप्रामाण्यानभ्युपगमात्। अतो द्वितीयपक्ष एवांगीकार्यः। तथा च प्रामाणिकस्यापि तर्कसिद्धस्य प्रतितर्केण बाधे सोऽपि चार्वाकतर्केण बाधितः स्यादिति मतं व्यर्थमेव भवेत्। न च परं प्रति प्रतिपादनोपायाभावेऽपि स्वस्यागमेन मोक्षसिद्धिरिति वाच्यम्। विप्रतिपन्नप्रमेये स्वस्यापि केवलागमेनानध्यवसायादिति भावः। एवं सर्वतर्केऽपि प्रतितर्कः प्रसरतीत्यंगीकारेऽतिप्रसंगमु-

क्त्वा विपर्यये पर्यवसानं दर्शयति ॥ अत इति ॥ यत एवं प्रामाणिकतर्कस्यापि प्रतितर्केण बाधाभ्युपगमेऽतिप्रसंगोऽतः प्रामाणिकमेव तर्केणांगीकार्यमप्रामाणिकं न शंक्यम् । प्रमाणसाहाय्ययुक्तः प्रतितर्कोऽप्रामाणिकतर्कं बाधते न त्वप्रमाणिकः प्रामाणिकम् । अत्रैतौ प्रयोगौ भवत इत्यत्र उक्ततर्कद्वयस्य प्रलयः सर्वासत्त्ववानित्यादिविरुद्धतर्कौ तूभावपि न प्रामाणिकौ । प्रकृततर्कश्च प्रामाणिको नाप्रामाणिकेन निषेद्धुं शक्यत इति भावः । अत्र स्मृतिसंमतिं चाह ॥ यावदिति ॥ अन्यत्रान्यत् ॥ १२ ॥

भावदीपः—

॥ ॐ तर्काप्रतिष्ठानात्० ॐ ॥ १२ ॥ सदसतोर्भावाभावयोः । कारणत्वसाधनबाधने निरंतरसूत्रद्वयोक्ते इति भावः । साध्यं पूरयन्नुक्तादित्यादिभाष्यं हेतुतया व्याचष्टे ॥ यत्तर्केति ॥ एतावानित्यादि व्याचष्टे ॥ नहीति ॥ सूत्रे एवमपीत्यस्यैवं सति तर्कसिद्धस्य प्रतितर्केण बाधे सतीति भाषितस्यापादकस्याप्रयोजकत्वनिरासाय तथाऽऽपाद्यस्येष्टापत्तिनिरासाय चोभयत्र विकल्पपूर्वं तर्कस्वरूपं निर्धारयन् भाष्यं व्याचष्टे॥तर्कसिद्धमित्यादिना॥युक्त एवेति॥तथा च कामाच्च नानुमानापेक्षेत्यनेन न विरोध इति भावः॥ प्रयोजनांतरस्येति ॥ पशुपुत्रादेः ॥ अनभ्युपगमादिति ॥ तत्प्रामाण्यप्रसाधनं च तर्केणैवेति भावः। एवं परिष्कृत्यैवं सतीत्यादि भाष्यं व्याचष्टे ॥ तथा चेति ॥ अनिर्मोक्षप्रसंगे किमनिष्टमित्यत आह ॥ मतं व्यर्थमेवेति ॥ विरुद्धतर्काविति ॥ प्रमाणेनेति शेषः । अन्यत्रेति स्मार्तपदानुवादेनान्यदिति व्याख्या ॥ १२ ॥

सूत्रभाष्यम्—

**॥ ॐ एतेन शिष्टा अपरिग्रहा अपि व्याख्याताः ॐ ॥ १३ ॥**

एतेन दृष्टान्तभावेनाभावेन चावशिष्टा अप्यपरिग्रहा विरुद्धसिद्धान्ता अकर्तृकत्वाचेतनकर्तृकत्वजीवकर्तृकत्वाद्योऽपि । 'अकस्माद्धीदमाविरासीदकस्मात्तिष्ठत्यकस्माल्लयमभ्युपैति'

'प्रधानादिदमुत्पन्नं प्रधानमधितिष्ठति ।
प्रधाने लयमभ्येति न ह्यन्यत्कारणं मतम्' ॥
'जीवाद्भवन्ति भूतानि जीवे तिष्ठन्त्यचञ्चलाः ।
जीवे तु लयमृच्छन्ति न जीवात्कारणं परमि'त्यादि श्रुतिप्राप्ता निराकृताः ।

यथा दुःखादिषु जीवस्यास्वातन्त्र्यमेवमन्येष्वपीति दृष्टान्तः। श्रुतिगतिस्तु ब्रह्मवाचकत्वेन प्रदर्शिता। यत्रान्यवाचकत्वेऽप्यविरोधस्तत्रान्यदप्यमुख्यतयोच्यते, यत्र विरोधस्तत्र ब्रह्मैवोच्यत इति नियमः ॥ १३ ॥ इति असदधिकरणम् ॥ ४ ॥

तत्वप्रकाशिका—

मास्त्वसत्कारणं जगतस्तथापि न विष्णोर्जगत्कारणत्वं संभवति। विप्रतिपन्नं निष्कारणमचेतनकारणं जीवकारणं वा कार्यत्वात् कूलपतनदध्यादिवदिति निष्कारणत्वादिसाधकयुक्तिविरोधात्। न च निर्मूलयुक्तेरसाधकत्वम्। 'अकस्मात्' इत्यादि श्रुतिमूलत्वादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ एतेनेति ॥ सत्कारणत्वादौ दृष्टान्तभावेन निष्कारणत्वादौ दृष्टान्ताभावेनेत्यर्थः। कूलपतनादीनामपि निष्कारणत्वादि(कं) न संमतमिति भावः। अत्र निष्कारणत्वादिनिरासे वक्ष्यमाणचार्वाकसांख्यनिषेधस्य पौनरुक्त्यं प्रसज्जत इत्यत उक्तं॥ श्रुतिप्राप्ता इति ॥ तृतीयानुप्रवेशादि तु पूर्ववत्परिहरणीयम्। नन्वस्तु सत्कारणत्वादौ घटादिदृष्टान्तभावो निष्कारणत्वादौ दृष्टान्ताभावश्च तथापि कथमजीवकर्तृत्वे दृष्टान्तः कथं च जीवकर्तृत्वे दृष्टान्ताभावो घटादीनां जीवकर्तृत्वदर्शनादित्यत आह ॥ यथेति ॥ दुःखादिकार्येषु जीवस्य कर्तृत्वाभावेनाजीवकर्तृत्वेऽस्ति दृष्टान्तः एवमन्येष्वपि कार्येषु तत्साध्यम्। ततश्च जीवकर्तृत्वे दृष्टान्ताभाव इति भावः। घटादीनां जीवकर्तृत्वाभावे नचेतनकर्तृकत्वे दृष्टान्तोऽचेतनकर्तृकत्वनिषेधार्थमित्यतोऽकर्तृत्वमित्यनुक्त्वाऽस्वातन्त्र्यमित्युक्तम्। नन्वेव चेदसत्कारणत्वादिश्रुतीनां का गतिरित्यत आह ॥ श्रुतीति ॥ श्रुतीनां ब्रह्मवाचकत्वेऽप्यसदादिवाचकत्वममुख्यतयाऽभ्युपगम्यत एवातस्तद्विरोध इत्यत आह ॥ यत्रेति ॥ अतो युक्त्यादेराभासत्वेनाविरोधकत्वाद्युक्तं जन्मादिकारणत्वं ब्रह्मणो लक्षणमिति स्थितम् ॥ १३ ॥ अ० ४ ॥

भावदीपः—

॥ ॐ एतेन शिष्टा अपरिग्रहा अपि व्याख्याताः ॐ ॥ १३ ॥ भाष्ये श्रुतिप्राप्ता इत्यस्य श्रुतिमूलयुक्तिप्राप्ता इत्यर्थमभिप्रेत्य तद्दर्शयति॥ विप्रतिपन्नमित्यादिना॥ ॥ कूलेति ॥ कूलपतनं निष्कारणकं पय एव दधि जायत इति दध्यचेतनकारणकम्। घटादिर्जीवकारणकः। शेषोक्त्या भाष्यं व्याचष्टे ॥ सत्कारणत्वादाविति ॥ ननूक्तं निष्कारणत्वादौ कूलपतनादिदृष्टांत इति तत्राह ॥ कूलेति ॥ पयोंऽबुवच्चेत्तत्रापी-

त्यादौ समयपादे कूलपतनादावपि ईशप्रवृत्तेर्वक्ष्यमाणत्वादिति भावः॥ वक्ष्यमाणेति ॥ समयपादे ॥ श्रुतिप्राप्ता इतीति ॥ तत्र तु समयप्राप्ता इति भावः । ननु श्रुतिप्राप्तस्य निराकरणे तृतीयपादे निवेशः स्यात् प्रथमपादे निवेशश्च न स्यादित्यत आह॥तृतीयेति॥ पूर्ववदर्थाद्युक्तिविरोधोऽपि निराक्रियत इत्यत्रोक्तरीत्या श्रुतिमूलकयुक्तिप्राप्तत्वव्युत्पादनेनेत्यर्थः। अत एव विप्रतिपन्नमित्यादिना श्रुतिमूलकयुक्तिप्राप्तत्वप्रदर्शनं प्राक्कृतमिति भावः। भाष्ये यथेत्येकपक्ष एव दृष्टांतप्रदर्शनमयुक्तमित्यतोऽन्यत्र स्फुटत्वान्नायुक्तमिति भावेन तदनुवदन्नवतारयति॥ नन्वस्त्विति ॥ स्वतंत्रः कर्तेति पाणिन्युक्तेरस्वतंत्रत्वमित्यस्याकर्तृत्वमर्थ इति भावेन योजयति॥ जीवस्य कर्तृत्वाभावेनाजीवकर्तृत्व इति ॥ सतीति शेषः । दुःखादिर्दृष्टांतोऽस्तीत्यर्थः । अन्येषु घटादिकार्येष्वित्यर्थः । ननु दुःखादिदृष्टांतेन घटादिष्वपि जीवकर्तृत्वाभावे साध्यमाने महदादिकमचेतनकर्तृकं न। किंतु चेतनकर्तृकमेव कार्यत्वादित्यत्र घटादिर्दृष्टांतो न स्यादित्याशंकामनूद्य भाष्योक्त्या तन्निराह। घटादीनां जीवकर्तृत्वाभाव इति॥ नचेतनकर्तृत्व इति ॥ जगत इति शेषः । कुतो जगतश्चेतनकर्तृत्वे दृष्टांतेन भाव्यं येन तदभावोऽनिष्ट इत्यत आह ॥ अचेतनेति ॥ अस्वातंत्र्यमित्युक्तमिति ॥ तथा च घटादौ कर्ता शास्त्रार्थवत्त्वादिति वक्ष्यमाणन्यायेन जीवस्य कर्तृत्वे सत्यपि पराधीनमेव तत्। न स्वतंत्रम्। तथा च जगत्स्वतंत्रजीवकर्तृकमित्यत्र दृष्टांताभावः। स्वातंत्र्ये । जीवकर्तृकं नेत्यत्र दृष्टांतभावः। जगदचेतनकर्तृकं न किंतु चेतनकर्तृकमेव कार्यत्वादित्यादौ घटादिदृष्टांतभावश्च नानुपपन्न इति भावः। भाष्ये श्रुतिगतिरित्यत्र श्रुतिशब्दो नाव्यवहितश्रुतिमात्रपरः। किं तु सोऽसच्छब्दो ब्रह्मशब्दवदेव ब्रह्मवाचक इति न्यायविवरणानुरोधात्प्रागुक्तश्रुतिपरोऽपीति भावेनाह ॥ असत्कारणत्वादीति ॥ तन्मात्रपरत्वभ्रांतिनिरासायादिपदम् । अत एव भाष्यस्थश्रुतिपदस्य श्रुतीनामिति बहुवचनेन निर्देशः । न्यायविवरणस्थासत्पदमुपलक्षणमिति भावः । साक्षात्परंपराफलयोरुक्त्या सर्वसूत्रार्थमुपसंहरति ॥ अत इति ॥ प्रतिषेधमात्रत्वरूपयुक्तिविरुद्धत्वात्तद्वत्प्रसंगरूपबाधकादपि तौ भावपदार्थसत्त्वे दृष्टांतभावाद्वैपरीत्ये दृष्टांताभावात्सत्तर्कस्य सु(प्रतिष्ठित)प्रमितत्वाच्चेत्यर्थः ॥ युक्त्यादेरिति ॥ श्रुतिरादिपदार्थः। श्रुतेराभासत्वं च पूर्ववाद्युक्तार्थ एवेति ध्येयम्॥१३॥अ.४॥

सूत्रभाष्यम्——

॥ ॐ भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॐ ॥ १४ ॥

'कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ती' ति (मुं. उ. ३-२-७)

मुक्तजीवस्य परापत्तिरुच्यते । अतस्तयोरविभागः । अतः पूर्वमपि स एव । न ह्यन्यस्यान्यत्वं युज्यत इति चेन्न । स्याल्लोकवत् । यथा लोके उदके उदकान्तरस्यैकीभावव्यवहारेऽप्यन्तर्भेदोऽस्त्येव, एवं स्यादत्रापि । तथा च श्रुतिः 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवती' (क. उ. ४–१५) ति । स्कान्दे च—

'उदकं तूदके सिक्तं मिश्रमेव यथा भवेत् ।
न चैतदेव भवति यतो वृद्धिः प्रदृश्यते ॥
एवमेव हि जीवोऽपि तादात्म्यं परमात्मना ।
प्राप्तोऽपि नासौ भवति स्वातन्त्र्यादिविशेषणादि'ति ।
'ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुं नैव शक्यते ।
तद्यत्स्वभावः कैवल्यं स भवान् केवलो हर' इति च ।

'न ते महित्वमन्वश्नुवन्ति' (ऋ. सं. ७–९९–१) 'न ते विष्णो जायमानो न जात' (ऋ. सं. ७–९९–२) इत्यादि च । फलत्वेऽपि युक्तिविरोधेऽन्तर्भावादत्रोक्तम् ॥१४॥

॥ इति भोक्त्रधिकरणम् ॥ ५ ॥

तत्वप्रकाशिका–

अत्र पुनर्विष्णोर्जगत्कारणत्वादौ युक्तिविरोधस्य परिह्रियमाणत्वादस्ति शास्त्रादिसंगतिः । विष्णोर्जगत्कर्तृत्वादिपूर्वमभिहितं तस्य च युक्तिविरुद्धत्वे लक्षणमसंभवि स्यादतोऽसौ निराकरणीय एव । जगज्जन्मादिकर्तृत्वं विषयः । परमात्मनो युक्तमयुक्तं चेति संदेहः । वादिविवादः संदेहबीजम् । पूर्वपक्षस्य सूत्र एवोक्तत्वात्तदुपन्यस्य पूर्वपक्षांशं तावद् व्याचष्टे ॥ भोक्त्रापत्तेरिति ॥ न विष्णोर्जगत्कर्तृत्वादि युक्तम् । तस्य जीवाभिन्नत्वात् । न हि जीवाभिन्नस्य जगत्कर्तृत्वाद्युपपद्यते जीवाभेदो ह्युभयगतविरुद्धधर्मपरित्यागेन जीवस्येश्वरसालक्षण्यग्रहणेनेश्वरस्य जीवसालक्षण्यग्रहणेन वा संभवति । सर्वथा न जगत्कारणत्वादीश्वरैकनिष्ठं संभवति । तस्य जीवाभेद एव कुत इति चेत् । कर्माणि विज्ञानमयश्च आत्मेत्यादौ मुक्तजीवस्य परमात्मस्वप्राप्तिः श्रूयते । किं चातः । तेनैव हेतुना मुक्तेश्वरयोरभेदसिद्धिः । यो यथा श्रूयते स तथेति व्याप्तेः । मुक्तजीवाभिन्नस्यापि कथंचिज्जगत्कारणत्वं निर्वोढुं शक्यमिति चेन्न । मुक्तावैक्ये संसारेऽप्यैक्यस्याऽऽवश्यकत्वात् । न हि भिन्नमभिन्नतां यातीति

युक्तम्। अतो जीवाभिन्नत्वादीश्वरस्यैव परमार्थतो जगत्कारणत्वाद्यनुपपन्नमिति लक्षणसूत्रं न युक्तमिति भावः। नञध्याहारेण सिद्धांतांशं व्याचष्टे ॥ नेति ॥ जीवेशयोरभेदाभावान्नेश्वरस्य जगत्कारणत्वादि विरुद्धं ऐक्येनोक्तत्वान्मुक्तजीवस्य परमात्माभिन्नत्वेन तत्सिद्धिरिति चेन्न। एकीभूतत्वेनोक्तजलेऽतर्भेददर्शनेन व्यभिचारात्। ऐक्योक्तिस्तु स्थानैक्याद्यालंबनत्वेन जलैकीभावोक्तिवदुपचरिता स्यादिति भावः। न श्रुतेः स्वातंत्र्येणोपचरितार्थत्वकल्पनं किंतु श्रुत्याप्युक्तमित्याह ॥ तथा चेति ॥ एवं मुनेर्विजानत आत्मा भवति गौतमेति वाक्यशेषः। एतेन बाधकं विनोपचारकल्पनमयुक्तमित्येतदपि परास्तम्। निरंजनः परमं साम्यमुपैति परात्परं पुरुषमुपैति दिव्यमित्यादिसन्निहितवाक्यविरोधाच्च। जलयोरप्यैक्यान्न व्यभिचार (रादित्यत) इत्यत उक्तार्थे स्मृतिं चाह ॥ स्कांदे चेति ॥ तादात्म्यं परमात्मना प्राप्त इत्युक्तोऽपीत्यर्थः। मुक्तोऽपीति वा। हरौ नियतचित्तत्वाद् ग्रहवत्तत्प्रवेशनात्। मोक्षं तादात्म्यमित्याहुर्न तु तद्रूपतः क्वचिदिति वचनात्। अल्पमुक्तानामेतदस्त्वित्यत आह ॥ ब्रह्मेति ॥ वर्तमाननिषेधात्स्यादुत्तरत्रेत्यत आह ॥ नेति ॥ ननु मुक्तेश्वरयोर्भेदसमर्थनं फलाध्यायसंगतमतो नैतत्सूत्रार्थःकिंतु चेतनाचेतनात्मकप्रपंचस्य ब्रह्मात्मकत्वे विषयस्य विषयित्वं स्यात्। तथा च विषयविषयिविभागो न स्यादित्याशंकां समुद्रात्मनामपि फेनतरंगादीनां विभागवदुपपद्यत इति अत्र निरस्यत इत्यत आह ॥ फलत्वेऽपीति ॥ एतदधिकरणस्य फलाध्यायसंगतत्वेऽप्यत्र नासंगतिर्येनान्यार्थकल्पनम्। उक्तरीत्या युक्तिविरोधपरिहारेऽप्यंतर्भावात्। अन्यथोभयांतर्गतस्यैकत्राप्यनुक्तिप्रसंग इति भावः। अर्थांतरं तु प्रपंचस्य ब्रह्मात्मकत्वनिरासेन निरस्तम्। भोक्तृत्वापत्तेरिति भावप्रधाननिर्देशाभावाच्च। अतो विष्णोर्जगत्कारणत्वादौ युक्तिविरोधाभावादुपपन्नं लक्षणसूत्रमिति सिद्धम् ॥ १४ ॥ अ० ५ ॥

भावदीपः—

॥ ॐ भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॐ ॥ १४ ॥ युक्तीति ॥ पूर्वं श्रुतिसंवादितया प्रबलयुक्त्या विरोध उक्तः। अत्र तु बहुश्रुतिसिद्धतया प्रबलयुक्त्यविरोध उच्यत इति सुधोक्तदिशा एकीभवंतीत्यादि बह्वभेदश्रुतिसिद्धजीवाभिन्नत्वरूपयुक्तिविरोधस्येत्यर्थः। एतावता पादसंगतिसिद्धेर्युक्तीत्येवोक्तम्। तदपेक्षयैव पुनरित्युक्तिः। पूर्वसंगतिमाह ॥ विष्णोरिति ॥ जन्मादिसूत्र इति भावः ॥ वादीति ॥ भेदाभेदवादीत्यर्थः। भाष्यं युक्तेरसिद्धिनिरसनपरतया व्याकुर्व-

न्विरोधियुक्तिं व्यनक्ति ॥ न विष्णोरिति ॥ इयं च युक्तिः पूर्णगुणत्वस्यापि विरोधिनीत्यादिपदम् । युक्तेरप्रयोजकत्वं निराह ॥ न हीति ॥ कुत इत्यतः साध्येन विना हेतोरनुपपत्तिं व्यनक्ति ॥ जीवेति ॥ उभयगतविरुद्धधर्मत्यागेन वेत्यग्रेतनो वाशब्दोऽत्राप्यनुषंजनीय इति चंद्रिका । एवं चाद्यतृतीयपक्षयोर्लक्षणमसंभवि द्वितीये त्वतिव्याप्तमिति भावेनाह ॥ सर्वथा न जगत्कारणत्वादीश्वरैकनिष्ठं संभवतीति ॥ इदानीं भाष्यमवतारयति ॥ तस्येति ॥ विज्ञानमयशब्दितो जीवात्मा परेऽव्यये परमात्मनीति वाच्ये एकीभवंतीति बहुवचनघटनाय कर्माणीत्यंशोक्तिः । कर्मणामेकीभावो निवृत्तिरेव पूर्वपक्षे श्रूयते आथर्वण इत्यर्थः । अतस्तयोरविभाग इति भाष्यमवतारयति ॥ किं चात इति ॥ यो यथा श्रूयत इति ॥ तात्पर्येण श्रुत्योच्यत इत्यर्थः । तेन मृदब्रवीदित्यादौ न व्यभिचारः । ऐक्यं च तात्पर्यविषय इति शंकितुर्भावः । यद्वा वेदेन सह वादो यो वेदवाद इतीरित इत्याद्युक्तलक्षणवेदवादिनामत्र निरस्यत्वात् । वेदे आपातप्रतीतस्यैव तदर्थत्वेन स्वीकाराच्छ्रूयत इत्येवोक्तम् । अत एव पूर्वत्रापि भाष्ये श्रुतिप्राप्ता इत्येवोक्तिः । भेदपक्ष एव जगद्व्यापारवर्जमिति विश्वकर्तृत्वस्य निषेत्स्यमानत्वादभेदपक्षे मुक्तस्य विश्वकर्तृत्वेऽक्षादिविरोधाभावात् । तादृशमुक्तजीवाभिन्नस्य विष्णोर्विश्वकारणत्वमविरुद्धमिति भावेनाशंक्यातः पूर्वमपीत्यादि भाष्यं तन्निरासकत्वेन व्याचष्टे॥ मुक्तजीवाभिन्नस्यापीति ॥ पूर्वपक्षभाष्यं फलोक्त्योपसंहरति ॥ अत इति ॥ उक्तश्रुतिबलादित्यर्थः। ननु श्रुतिबलात्परमार्थतो जीवाभिन्नत्वेऽपि ईश्वरस्य काल्पनिकभेदेन जगत्कारणत्वं स्यादित्यत उक्तं ॥ परमार्थत इति ॥ परमार्थतो ब्रह्मैव कारणत्वादिमत् न तु जीव इति यत्सिद्धांतिनोऽभिमतं तदनुपपन्नमित्यर्थः। भाष्ये ऐक्यश्रुतेः सावकाशत्वोक्तिर्युक्तेरसिद्ध्यभिप्रायेणेति भावेन तत्तात्पर्यमाह ॥जीवेशयोरिति॥ ऐक्यश्रुतेः कागतिरित्यत एकीभावशब्दस्तु सान्निध्येऽपि भवतीति न्यायविवरणानुरोधेन गतिमाह ॥ऐक्योक्तिस्त्विति॥ सान्निध्यपदस्य मत्यैक्यमप्यर्थ इति भावेनादिपदप्रयोगः। अत एव तत्रोभयानुगुण्येन एकीभूता तु सा सेना पांडवानभ्यवर्ततेतिवदित्युक्तमिति भावः । भाष्ये दृष्टांतभागमात्रस्योक्तत्वेऽपि न्यायविवरणे शेषस्याप्युक्त्यात्रापि दार्ष्टांतिकांशोऽप्यभिमत इति भावेन तदानुगुण्येनैव भाष्यमवतार्य शेषमाह ॥ न श्रुतेरिति ॥ एकीभवंतीति श्रुतेरित्यर्थः ॥ एवमिति ॥ विजानतो मुनेरात्मा स्वरूपमप्येवं भवतीत्यर्थः। (एवमेव हि जीवोऽपीति स्मृत्युक्तेः अत्र काठकभाष्योक्तब्रह्मार्थग्रहणे तु ब्रह्मेशानादिभिरिति स्मृत्युक्तिरयुक्ता स्यात् । एवमेव

छांदोग्यभाष्यटीकोक्तेश्च) ॥ एतेनेति ॥ सदृष्टांतजीवेशभेदबोधकश्रुत्युदाहरणेनेत्यर्थः । न्यायविवरणोक्तपूर्वोत्तरवाक्यविरोधं चाह ॥ निरंजन इति ॥ उपलक्षणमेतत् । विष्णुतत्वनिर्णयतट्टीकाद्युक्तबाधकांतराण्यपि ध्येयानीति । व्याख्यातैषा श्रुतिः सम्यक्तत्रैव टीकादौ प्रथमपरिच्छेदांतिमभागे । आथर्वणभाष्ये च व्याघातनिरासायाह ॥ इत्युक्तोऽपीति ॥ तादात्म्यं मुक्तिरित्यत्र मानमाह ॥ हराविति ॥ तादात्म्यमिति ॥ हरिणेति योज्यम् ॥ इति वचनादिति ॥ चतुर्थस्कंधतात्पर्योक्तादिति ज्ञेयम् ॥ अल्पेति ॥ असायुज्यमुक्तानामेतत् । नासौ भवतीति स्मृत्युक्तं प्रमेयमित्यर्थः ॥ वर्तमानेति ॥ नान्वश्नुवंतीति वर्तमाननिषेधादित्यर्थः । न ते विष्णाविति श्रुतिः प्राग्जन्मादिसूत्रे व्याख्यातेति भावः । तर्ह्यनर्थकं सूत्रं स्यादिति शंकते ॥ किं त्विति ॥ ब्रह्मण उपादानत्वे भोक्तुः शारीरस्य भोग्यत्वापत्तेर्भोग्यस्य च शब्दादेर्भोक्तृत्वापत्तेस्तयोरविभागः स्यात् द्वयोरपि परमकारणब्रह्मणोऽनन्यत्वादित्यादिना मायावाद्युक्तं सूत्रार्थमाह ॥ चेतनेति ॥ विषयस्य शब्दादेरित्यर्थः । विषयित्वं भोक्तृत्वम् ॥ ब्रह्मात्मकत्वनिरासेनेति ॥ उत्तरनये न चान्यत्रेत्यादिना भाष्ये करिष्यमाणेनेति भावः। भोक्तृत्वापत्तिरिति तु यन्मतं तत्कुतो हरिः। भोक्त्रापत्तेरिति प्राहेत्यनुभाष्योक्तमाह ॥ भोक्तृत्वेति ॥ अवांतरफलोक्तिपूर्वं प्रधानफलोक्त्या सूत्रार्थमुपसंहरति ॥अत इति ॥ जीवेश्वरयोरैक्याभावादित्यर्थः ॥ १४ ॥ अ० ५ ॥

सूत्रभाष्यम्—

॥ ॐ तदनन्यत्वमारम्भणशब्दादिभ्यः ॐ ॥ १५ ॥

स्वतन्त्रबहुसाधना सृष्टिर्लोके दृष्टा । नैवं ब्रह्मणः । (किन्तु) स्वरूपसामर्थ्यादेव तस्य सृष्टिः। 'किं स्विदासीदधिष्ठानमारम्भणं कतमत्स्वित्कथाऽऽसीदि'(ऋ. सं १०-८१-२) ति ह्याक्षेपः । अधिष्ठानाद्यनुक्तेः। आदिशब्दाद्युक्तिभिश्च।

'परतन्त्रो ह्यपेक्षेत स्वतन्त्रः किमपेक्षते ।
साधनानां साधनत्वं यतः किं तस्य साधनै' रित्यादिभिः ॥ १५ ॥

तत्वप्रकाशिका—

अत्र हरेः स्वातन्त्र्येण जगत्कारणत्वे युक्तिविरोधपरिहारादस्ति शास्त्रादिसंगतः । विष्णुर्जगत्सृष्ट्यादिकर्तेत्युक्तम् । तस्य च स्वतन्त्रसाधनानपेक्षत्वे युक्ति-

विरोधप्राप्तौ न सर्वगुणत्वं तेन सिध्यतीत्यसौ निराकर्तव्य एव। तज्जगत्सृष्ट्यादिकं विषयः। किं स्वतन्त्रसाधनसापेक्षं न वेति संशयः। लोकदृष्टिरलौकिकत्वं च संदेहबीजम्। स्वतन्त्रसाधनसापेक्षमिति पूर्वः पक्षः। विप्रतिपन्ना सृष्टिः कर्तृव्यतिरिक्तस्वतन्त्रसाधनसापेक्षा सृष्टित्वात् घटादिसृष्टिवदिति युक्तिसिद्धत्वात्। अन्यथा तद्विरोधात्। घटसृष्टौ मृदादीनि खलु स्वतन्त्रसाधनानि। तानि विना सृष्ट्यनुपपत्तेः। अतो ब्रह्म स्वतन्त्रसाधनसापेक्षमेव सृष्ट्यादिकर्त्रिति न तस्य जगज्जन्मादिकारणत्वेन सर्वगुणपूर्णत्वसिद्धिरिति प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ तदनन्यत्वमिति ॥ यद्यपि घटादिसृष्टिः स्वतन्त्रबहुसाधनसापेक्षा दृष्टा तथापि नैतद्दृष्टान्तेन ब्रह्मणो जगत्सृष्टिस्तथा कल्प्या किं तु स्वतन्त्रसाधनस्य तदनन्यत्वम्। किमुक्तं भवति। स्वरूपसामर्थ्यादेव तस्य सृष्टिः। कुतः। यतः किंस्विदिति श्रुतावधिष्ठानादिसाधनाद्याक्षेपः क्रियते। आक्षेपस्य विपर्यये पर्यवसानात्। अनुमानं तु श्रुतिविरोधादप्रमाणमेवेति भावः। ईश्वरसृष्टेः स्वतन्त्रसाधनसापेक्षत्वमात्रसाधने सिद्धसाधनता स्यादिति बह्वित्युक्तम्। विश्वकर्मा हरिः यतो येनाधिष्ठानादिना भूमिं द्यां च जनयन् जनयिता विशेषेण बभूव। येन च महिम्ना विश्वतश्चक्षुरावृणोत्तदधिष्ठानं किमासीत्। आरभ्यतेऽनेनेत्यारम्भणं साधनं वा कतमदासीत्। कथंरूपं चासीत्। न किंचित्कथमपीत्यर्थः। किंशब्दस्य प्रश्नाक्षेपयोः समत्वात्प्रश्नोऽयं किं न स्यादित्यत आह ॥ अधिष्ठानादिति ॥ प्रश्नश्चेत्परिहारो वक्तव्यः। किंस्विद्धिमस्य भेषजमित्यादिवत्। अत्र परिहारायाधिष्ठानाद्यनुवर्तेर्नायं प्रश्नः किं त्वाक्षेप एवेति भावः। युक्तिविरुद्धं चानुमानमिति भावेनाह ॥ आदीति ॥ अत्रापरतन्त्रत्वात्स्वतन्त्रत्वात्साधनसत्ताप्रदत्वादिति व्यतिरेकिहेतुत्रयं सूचितं भवति ॥ १५ ॥

भावदीपः—

॥ ॐ तदनन्यत्वमारंभणशब्दादिभ्यः ॐ ॥ १५ ॥ युक्तीति ॥ साधनातराणां सत्ताशक्त्यादेः स्वातंत्र्यसाधकबहुयुक्तिविरोधपरिहारादित्यर्थः। तेन जगत्सृष्ट्यादिकर्तृत्वेनेत्यर्थः। तादृशसाधनसापेक्षकर्तरि ब्रह्मादौ सर्वगुणत्वादृष्टेरिति भावः। अत्र जन्मादिसूत्रे विवक्षितं स्वतंत्रसाधनांतरानपेक्षकर्तृत्वं न सिद्ध्यतीत्येवोक्त्वा जन्मादिसूत्रेणास्य संगतत्वे वाच्ये तेन सर्वगुणत्वं न सिध्यतीति जिज्ञासासूत्रस्थब्रह्मपदोक्तगुणपूर्त्यसिद्ध्युक्तिस्तु जन्मादिसूत्रे तादृशकर्तृत्वविवक्षाभावे गुणपूर्त्यसिद्ध्या जिज्ञासाया एवासिद्धिरिति बाधकोपदर्शनमुखेन तत्सूत्रेण तादृशकर्तृत्वस्य

विवक्षितत्वं दर्शयितुम् ॥ स्वतंत्रेति ॥ कर्त्रन्येति योज्यम् । स्वातंत्र्यं च कर्त्रनधीन-सत्तादिमत्त्वम् ॥ अलौकिकत्वमिति ॥ अन्यभावव्यावृत्तेश्चेत्यत्रोक्तदिशा स्रष्टुरीशस्या-लौकिकत्वाद्वा परमतस्सेतून्मानसंबंधभेदव्यपदेशेभ्य इत्यत्र वक्ष्यमाणदिशा सृष्ट्यादी-शगुणजातस्यालौकिकत्वाद्वा उत्ताना वै देवगवा वहंतीत्यादेरलौकिकानां देवगवानां उत्तानानामेव वहनमिव स्वतंत्रसाधनानपेक्षमपि सृष्ट्यादिकं संभाव्यत इति भावः । लौकिककार्याणामनुसारेणाकर्तृतंत्रत्वमिति न्यायविवरणेऽकर्तृतंत्रत्वमित्यस्य कर्तृव्यतिरिक्तस्वतंत्रसाधनाधीनत्वमित्यर्थमुपेत्य दृष्टांतोऽक्तिपरस्वतंत्रेत्यादिभाष्य-सूचितां युक्तिमाह ॥ विप्रतिपन्नेति ॥ सिद्धसाधनतानिरासाय साध्यविशेषणम् । अत्र भाष्यदिशा स्वतंत्रबहुसाधनसापेक्षेति साध्ये निर्देष्टव्ये न्यायविवरणरीत्या साध्यनिर्देशस्तु ज्ञानेच्छादिकमादाय सिद्धसाधनताव्युदासाय । कर्मनिर्णयटीकायां कर्तृत्वं च कार्यकारणक्रियाफलाभिज्ञानतदिच्छाप्रयत्नपूर्वकः स्पंद इत्युक्तेः कर्तृव्य-तिरिक्तेत्युक्त्यैव ज्ञानेच्छाद्यन्यस्वतंत्रसाधनसापेक्षेत्यर्थलाभ इति भावः । अत्र साध्ये स्वतंत्रेत्यनंतरं सत्ताकेतिप्रवृत्तिकेत्यादिपदप्रक्षेपेण तथा पक्षे सृष्टिपदस्थाने स्थिति-संहृत्यादिपदप्रक्षेपेण च युक्तेर्बाहुल्यं बोध्यम् । वियत्पादे तु श्रुतिप्राप्तं साधनांतर-सत्तादेः स्वातंत्र्यं निरसिष्यते । अत्र तु युक्तिप्राप्तमिति भावेनोक्तम् ॥ युक्तिसिद्ध-त्वादिति ॥ स्वतंत्रसाधनसापेक्षत्वस्येति योज्यम् । अन्यथा तादृक्साधनानपेक्षत्वे । भाष्योक्तं दृष्टांतांशं व्यनक्ति ॥ घटेति ॥ साधनतां तावद्व्यनक्ति ॥ तानीति ॥ मृदादिसत्ताशक्त्यादेः कुलालानधीनत्वस्य स्फुटत्वात्स्वातंत्र्यांशो नोपपादितः ॥ अत इति ॥ युक्तिसिद्धत्वादित्यर्थः ॥ छ ॥ विरोधनिरासाय भाष्यं व्याचष्टे ॥ यद्यपीति ॥ नैवमित्यादेरर्थो न तद्दृष्टांतेनेत्यादि । शेषोक्त्या सूत्राक्षरार्थमाह ॥ स्वतंत्रसाधनस्य तदनन्यत्वमिति ॥ भाष्यं तु पर्यवसितव्याख्यानमिति भावेनावता-रयति ॥ किमुक्तं भवतीति ॥ न तु स्वतंत्रमन्यदपेक्ष्येत्येवार्थः । हिर्हेताविति मत्वा भाष्यशेषमवतार्य व्याचष्टे ॥ कुतो यत इति ॥ सूत्रे आरंभणशब्द आरभ्यते येनेति व्युत्पत्त्या साधनजातपर इति भावेनोक्तम् ॥ अधिष्ठानादीति ॥ कथमेतावता उक्तार्थः सिद्ध इत्यत आह ॥ विपर्यय इति ॥ नास्त्यधिष्ठानादिकं किमप्यतः स्वरूप-सामर्थ्यादेव सृष्टिरिति पर्यवसानादित्यर्थः ॥ अप्रमाणमेवेति ॥ प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतमित्युक्तेरिति भावः ॥ बह्वित्युक्तमिति ॥ बहुसाधनेति भाष्ये

साधनस्य बहुत्वं ज्ञानेच्छाद्यन्यद्दंडादिस्थानीयसाधनबहुत्वं विवक्षितमिति भावः। सृष्टौ साधनाक्षेपपरत्वप्रतीत्यर्थं यतो भूमिं जनयन्विश्वकर्मा वि द्यामौर्णोन्महिना विश्वचक्षा इत्युत्तरार्धं वदन् किंस्विदित्यस्यार्थमाह ॥ विश्वकर्मा हरिरिति ॥ वि इत्यस्य विशेषेण बभूवेति और्णोदित्यस्यावृणोदित्यर्थः। विपर्यये पर्यवसानमाह ॥ न किंचिदिति ॥ अत्र साधनस्वरूपमात्रनिषेधप्रतीतावपि धर्मांतरेण वाक्यशेषादिति न्यायेन साधकसत्त्वावेदकवक्ष्यमाणानेकवचनबलात्स्वातंत्र्येण न किंचिदित्यर्थो लभ्यत इति भावः ॥ किंस्विदिति ॥ तैत्तिरीये किंस्विद्धिमस्य भेषजमित्यस्याग्निर्हिमस्य भेषजमिति यथा परिहारस्तथेत्यर्थः ॥ युक्तिविरुद्धं चेति ॥ यद्यपि श्रुतेर्युक्तीनां च स्वरूपसामर्थ्यादेव सृष्टिरिति भाष्योक्तसाध्येनैवान्वयो भाति। तथा सर्वकर्तृविलक्षणसर्वशक्तित्वमेवाशेषयुक्तिश्रुत्यनुसारीति न्यायविवरणोक्तेश्च। अत एव प्राकृतो यत इत्यादिना भाष्यशेषस्तथैव व्याख्यातः। तथा च सामर्थ्यादेव सृष्टिरित्येतद्युक्तिभिरपि साधयतीति वक्तव्यम्। तथापि तस्य स्फुटत्वात्तावता प्रागुक्तानुमानस्य दूषणाप्राप्तेः। युक्तिमात्राच्छ्रुतियुक्ता हि युक्तिर्बलवतीति न्यायविवरणानुरोधेन युक्तिविरुद्धं चेति भावार्थोक्तिः। अत एव इति भावेनेत्युक्तिः पूर्वत्र श्रुतिविरोधादप्रमाणमेवेति भाव इत्युक्तिः। हेतुत्रयमिति। स्वतंत्रसाधनांतरनिरपेक्षत्वरूपसाध्य इति भावः ॥ १५ ॥

सूत्रभाष्यम्—

॥ ओँ भावे चोपलब्धेः ओँ ॥ १६ ॥

स्वतन्त्रसाधनभावे प्रमाणैरुपलभ्येत।

'अनुक्तं पञ्चभिर्वेदैर्न वस्त्वस्ति कुतश्चन।
अतो वेदत्वमेतेषां यतस्ते सर्ववेदका' इति स्कान्दे ॥ १६ ॥

तत्वप्रकाशिका—

युक्त्यंतरेण स्वतंत्रसाधनं प्रतिक्षिपत्सूत्रमुपन्यस्य व्याचष्टे ॥ भावे चेति ॥ यदि भगवत्सृष्टौ तदतिरिक्तं स्वतंत्रसाधनमस्ति तर्हि वेदादिप्रमाणैरुपलभ्येत न चोपलभ्यते। अतो नास्तीत्यर्थः। प्रमाणानुपलब्धमपि किं न स्यादित्यत आह ॥ अनुक्तमिति ॥ भगवद्गुणादिकं च सामान्यतस्तदुक्तमेवेत्यदोषः ॥ १६ ॥

भावदीपः—

॥ ॐ भावे चोपलब्धेः ॐ ॥ १६ ॥ सूत्रे चशब्दः प्रागुक्तहेतूनां विपक्षे बाधकरूपयुक्तिसमुच्चय इति भावेनाह ॥ युक्त्यंतरेणेति ॥ तर्के बाधवारणायापादकं विशिनष्टि ॥ तदतिरिक्तमिति ॥ अनुक्तमितीति ॥ इतिहासपुराणयोः पंचमवेदत्व-प्रसिद्धेः स्मृतौ पंचभिरित्युक्तमिति भावः । सत्यश्रुता इति वक्ष्यमाणश्रुतिविरोध इत्यत आह ॥ भगवद्गुणादिकं चेति ॥ १६ ॥

सूत्रभाष्यम्—

'अद्भ्यः सम्भूतः पृथिव्यै रसाच्च' (तै. आ. ३-१३) त्यादिना साधनान्तर-प्रतीतेः कथमनुपलब्धिरित्यत आह—

**॥ ॐ सत्वाच्चावरस्य ॐ ॥ १७ ॥**

अवरस्य तदधीनस्य साधनस्य सत्त्वात् । 'काल आसीत्पुरुष आसीत्परम आसीत्तद्यदा-सीत्तदावृतमासीत्तदधीनमासीदथ ह्येक एव परम आसीद्यस्यैतदासीन्न ह्येतदासीदि'ति (हि)काषायणश्रुतिः ॥ १७ ॥

तत्वप्रकाशिका—

नन्वद्भ्यः संभूत इति श्रुतौ 'प्रकृतिं स्वामवष्टभ्य विसृजामि' इति स्मृतौ च भगवदितरस्वतंत्रसाधनप्रतीतेर्न तदनुपलब्धिरित्याशंक्य तत्परिहारत्वेन सूत्रमवतार्य व्याचष्टे ॥ अद्भ्य इति ॥ नात्र स्वतन्त्रसाधनमुच्यते किं तु भगवदधीनमेव । तदधी-नसाधनस्य सत्त्वाभ्युपगमान्नोक्तविरोध इति भावः । तत्पुरुषाख्यो हिरण्यगर्भो विश्व-कर्मणो हरेः सकाशादबाद्युपलक्षितभूतैः रसोपलक्षिततन्मात्राभिश्चोत्पन्नः । सर्व-स्मादधिकत्वेन समवर्तत । तस्य तत्पुरुषस्याग्रत एव जातं विश्वं ब्रह्माण्डाख्यं रूपं त्वष्टा भगवान् धारयन् वर्तत इत्यर्थः । ननु साधनमात्रमत्र प्रतीयते न तु तदधी-नमिति तच्च लोकानुसारात्स्वतन्त्रमेव किं न स्यादित्यत आह ॥ काल इति ॥ यस्मा-त्तदा यदासीत्तद्भगवदधीनमासीत्तस्मादेक एव परम आसीदित्युच्यते । कीदृशोऽसौ यस्य सकाशादेतदासीत् । कुतः । न ह्येतत्पूर्वमासीदित्यर्थः । साधनाद्याक्षेपतत्सद्भा-वोक्त्यन्यथानुपपत्तिश्चास्य समाधानम् ॥ १७ ॥

भावदीपः—

॥ ॐ सत्वाच्चावरस्य ॐ ॥ १७ ॥ पूर्वाक्षेपरूपताद्योतनाय शेषोक्त्याऽर्थं वदन्नेव भाष्यमवतारयति ॥ नन्वद्भ्य इति ॥ आदिपदोपात्तमाह ॥ प्रकृतिमिति ॥ गीतास्मृतौ नवम इत्यर्थः ॥ स्वतंत्रेति ॥ पारतंत्र्यानुक्त्यैव लोक इव स्वातंत्र्यसिद्धेरिति भावः। सूत्रभाष्ययोरुक्तसत्त्वादिति हेतोरर्थः ॥ सत्त्वाभ्युपगमादिति ॥ ईश्वरसृष्टिपरत्वद्योतनाय अद्भ्यः संभूतः पृथिव्यै रसाच्च। विश्वकर्मणः समवर्तताधि। तस्य त्वष्टा विदधद्रूपमेति। तत्पुरुषस्य विश्वमाजानमग्र इति श्रुत्यर्थमाह ॥ तत्पुरुषाख्य इति ॥ अद्भ्यः पृथिव्या इति पंचमीचतुर्थ्यौ तृतीयार्थ इति भावेनोक्तम् ॥ अबाद्युपलक्षितभूतैरिति ॥ संभूतपदार्थ उत्पन्न इति। आजानमग्र इत्यस्याग्र एव जातमिति। विदधदित्यस्यार्थो धारयन्निति एतीत्यस्य वर्तत इति। यत्तदोरावृत्त्याऽर्थमाह ॥ यस्मात्तदा यदासीत्तदिति ॥ भगवदिति ॥ तदावृतमिति तच्छब्दः प्रकृतपरमपदोक्तस्य परामर्शक इति भावः। यद्वा यस्मात्तस्मादिति तात्पर्योक्तिः। भगवदिति योग्यतयान्वयः। नन्वेतावता ननु साधनमात्रमिति कृतचोद्यस्य किमुत्तरमित्यत आह ॥ साधनादीति ॥ यथोत्तरसूत्रे तम आसीदित्युक्तिबलान्नासदासीदित्यस्य पारतंत्र्यादियुक्तसाधनसत्त्वपरत्वं कल्प्यते। तथा अद्भ्य इत्यादेरपि किं स्विदिति वाक्यबलात्परतंत्रसाधनसत्त्वपरत्वम्। किं स्विदित्यस्य तु स्वातंत्र्याक्षेपपरत्वं च कल्पनीयम्। अन्यथा वाक्यद्वयायोगात्। व्यावहारिकादिपरत्वकल्पनं तु अप्रामाण्यापत्त्यादिना न युक्तमिति भावः। एतेन किं स्विदित्यस्य स्वरूपाक्षेपपरत्वेन प्रतीतस्य स्वातंत्र्याक्षेपपरत्वमुपपादितं ध्येयम् ॥ १७ ॥

सूत्रभाष्यम्—

## ॥ ॐ असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॐ ॥ १८ ॥

'नासदासीन्नो सदासी' (ऋ. सं. १०-१२९-१) दिति सर्वस्यासत्त्वव्यपदेशान्नेति चेन्न। अव्यक्तत्वपारतन्त्र्यादिधर्मान्तरेण हि तदुच्यते। 'तम आसीदि'( ऋ. सं.- १०-१२९-३) ति वाक्यशेषात्। न चान्यत्र प्रमाणमस्ति। 'अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः'(म. ना. उ. १०-५)।

'अनाद्यनन्तं जगदेतदीदृक् प्रवर्तते नात्र विचार्यमस्ति ।
न चान्यथा क्वापि च कस्य चेदमभूत्पुरा नापि तथा भविष्यत्' ॥

'असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्' (भ. गी. १६-८)। 'असत्यमाहुर्जगदेतदज्ञाः शक्तिं हरेर्ये न विदुः परां हि' 'यस्सत्यरूपं जगदेतदीदृक् सृष्ट्वा त्वभूत्सत्यकर्मा महात्मा'। 'अथैनमाहुस्सत्यकर्मेति, सत्यं ह्येवेदं विश्वमसौ सृजते । अथैनमाहुर्नित्यकर्मेति नित्यं ह्येवासौ कुरुते'। 'यच्चिकेत सत्यमित्तन्न मोघमि' (ऋ. सं. १०-५५-६) त्यादि श्रुतिस्मृतिभ्यः।

'परस्परविरोधे तु वाक्यानां यत्र युक्तता ।
तथैवार्थः परिज्ञेयो नावाक्या युक्तिरिष्यत' इति बृहत्संहितायाम् ।

'विरुद्धवत्प्रतीयन्त आगमा यत्र वै मिथः ।
तत्र दृष्टानुसारेण तेषामर्थोऽन्ववेक्ष्यत' इति च ।

'ईशोऽनीशो जगन्मिथ्या न पूज्यो गुरुरित्यपि ।
इत्यादिवद्विरुद्धानि वचनान्यथ युक्तयः ।
प्रमाणैर्बहुभिर्ज्ञेया आभासा इति वैदिकैः ॥

वेदवेदानुसारेषु विरोधेऽन्यार्थकल्पना ।
अन्येषां तु विरुद्धानां विप्रलम्भोऽथवा भ्रम' इति च भागवततन्त्रे ।

'शास्त्रार्थयुक्तोऽनुभवः प्रमाणं तूत्तमं मतम् ।
मध्यमं त्वागमो ज्ञेयः प्रत्यक्षमधमं स्मृतम् ॥
प्रत्यक्षयोरागमयोर्विरोधे निश्चयाय तु ।
अनुसाध्या न स्वतन्त्राः प्रमाणपदवीं ययुरि'ति पुरुषोत्तमतन्त्रे ॥ १८ ॥

तत्वप्रकाशिका–

उक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्याक्षेपांशं तावद् व्याचष्टे ॥ असदिति ॥ साधनान्तरसत्त्वमभ्युपेत्य तस्येश्वराधीनत्वं यदुदितं न तद्युक्तम् । 'नासदासीत्' इति श्रुतौ प्रलये सर्वस्यासत्त्वव्यपदेशात् । साधनान्तरस्यैवाभावे परमात्माधीनतावर्णनं तु सुतरामयुक्तमिति भावः । तदानीं प्रलये पञ्च भूतानि नासुः । गुणत्रयं यच्च

परं व्योम प्रकृतिर्मृत्युरमृतं दिवारात्र्योश्च प्रभावो नासीत्। एतदभावात्किं कुत्र कस्य सुखार्थमावृणोत्। न किमपि। यच्चेतनप्रकृतिरूपमम्भस्तदप्यासीत्किं नैवासीत्। किं तु निवातं ब्रह्मैकमेव स्वसामर्थ्येनाचेष्टत न तु तस्मादन्यत्परमासेत्यर्थः। परिहारांशं व्याचष्टे ॥ नेति ॥ भवेदेतद्यदि तस्यां श्रुतौ साधनानां स्वरूपासत्त्वाभिप्रायेणासत्त्वव्यपदेशो भवेत्। नैतदस्ति। साधनानामव्यक्तत्वपरतन्त्रत्वाधमत्वविकृतरूपविनाशादिधर्मान्तरापेक्षयाऽसत्त्वस्य व्यपदिष्टत्वात्। अव्यक्तादौ तद्व्यपदेशस्य लोके दृष्टत्वात्। न च वाच्यं स्वरूपासत्त्वाभिप्रायेणासत्त्वोक्तिः किं न स्यादिति। वाक्यशेषे प्रकृत्यादिसत्त्वश्रवणादिति भावः। यत्तमोऽपरिमितं सलिलं भूत्वाऽऽसीत्प्रकृत्याख्यं तेनेदं सर्वं गूहितमासीदित्यर्थः। अन्यथा तस्माद्धान्यन्न परः किंचनासेति परशब्दवैयर्थ्यम्। अथ परकृतापव्याख्यां निराचष्टे ॥ न चेति ॥ अतीताधिकरणे व्यवहारमभ्युपेत्य चेतनाचेतनविभागो निरूपितः। इदानीं तु पारमार्थिकीं दशामवलम्ब्य चेतनाचेतनस्य ब्रह्मानन्यत्वमुच्यते। 'वाचारम्भणम्' इत्यादिश्रुतेरिति व्याख्यानं न युक्तम्। प्रपञ्चस्य ब्रह्मानन्यत्वे प्रमाणाभावादिति भावः। न केवलं चेतनानामचेतनानां चानन्यत्वे प्रमाणाभावः। किं तु प्रमाणविरुद्धं चेति भावेनाह ॥ अजो हीति ॥ रजःसत्त्वतमोगुणात्मिकां स्वसदृशमहदादिकार्याणि जनयन्तीं प्रकृतिं सेवमानः कश्चिज्जीवोऽनुवर्तते। कश्चिदस्यां भोगान्भुक्त्वा जहातीति मुक्तामुक्तयोः परस्परं भेदः श्रूयते। अत्रेश्वरोऽपि मुक्त उच्यते। अचेतनप्रपञ्चस्य ब्रह्मानन्यत्वं नाम बाधितत्वं विवक्षितं परस्य तच्च प्रमाणविरुद्धमिति भावेनाह ॥ अनादीति ॥ नित्यमबाध्यं जीवो न ब्रह्मणो भिद्यते चेतनत्वात् ब्रह्मवत्। प्रपञ्चो बाध्यो दृश्यत्वाच्छुक्तिरजतवदित्यादियुक्तिसद्भावात्कथं प्रमाणाभाव इत्यत आह ॥ परस्परेति ॥ वाक्यानां विरोध एवैकवाक्यानुसारियुक्तिसिद्धार्थो ग्राह्यो न केवलयुक्तिसिद्धार्थ इत्यर्थः। सन्तु तर्हि वाचारम्भणमित्यादिश्रुतिस्मृतयः प्रमाणमत्रेत्यत आह ॥ विरुद्धवदिति ॥ नैताभिः श्रुतिभिरनन्यत्वं सिध्यति उदाहृतश्रुतिविरोधात्। न च तर्हि परस्परविरोधादप्रामाण्यम्। विरोधे प्रत्यक्षानुसारेण तद्विरुद्धानन्यत्वश्रुत्यादेर्व्याख्येयत्वादिति भावः। एतेन श्रुतियुक्तिभ्य मनन्यत्वसिद्धिरित्यपास्तम्। प्रत्यक्षस्य ततोऽपि बलवत्त्वाद्युक्तीनामाभासत्वाच्च द्रष्टुमिति प्रबलबहुप्रमाणदर्शनं वा। स्मर्यते च प्रपञ्चमिथ्यात्ववादिश्रुत्यादेरप्यन्यार्थवर्णनमिति भावेनाह ॥ ईश इति ॥ आभासत्वमेव विभज्याह ॥ वेदेति ॥ वेदादेस्तदर्थ एवाभासत्वमन्यार्थकल्पना तु कर्तव्यैव। तदितरेषां विप्रलम्भोऽथ वा भ्रमः कारणं कल्प-

नीयम् । ननु प्रमाणत्वाविशेषात्कुतो न युक्तेरर्थसाधकत्वमित्यत आह ।। शास्त्रार्थेति ।। तदनुकूलः साक्षादर्थविषयत्वात् । यथार्थज्ञानमुत्तमं प्रमाणम् । आगमस्य तत्साधनभूतस्य सर्वविषयत्वान्मध्यमत्वम् । प्रत्यक्षस्यानुप्रमाणस्यासर्वविषयस्यावरत्वम् । अनुप्रमाणमनुमानं प्रमाणान्तरसाहाय्ययुक्तमसर्वविषयमिति सर्वावरमिति । अतोऽर्थान्तरस्याप्रामाणिकत्वात्प्रमाणविरुद्धत्वाच्चोक्त एव सूत्रार्थ इति स्थितम् ।। १८ ।।

भावदीपः—

।। ॐ असद्व्यपदेशा० ॐ ।। १८ ।। शंकास्थनञोऽन्वयमाह ।। न तद्युक्तमिति ।। असत्त्वेति ।। सूत्रे असच्छब्दो भावप्रधान इति दर्शितम् । असत्त्वतो ह्यस्य प्रकृतसंगतिमाह ।। साधनांतरस्यैवाभाव इति ।। अद्भ्य इत्यादिप्राचीनवाक्यं तु सुधोक्तदिशा हिरण्यगर्भपरं न त्वीशपरमिति भावः । यदन्यद्द्यावोश्चांतरिक्षाच्चैतत्सदित्यादितत्त्वोद्योताद्युक्त्या सदसच्छब्दयोरर्थमाह ।। पंचभूतानीति ।। रजःपदमुपलक्षणं मत्वाह ।। गुणत्रयमिति ।। किमावरीवः कुह कस्य शर्मन्नंभः किमासीद्गहनं गभीरम् । न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः । आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किंचनास । इति मंत्रशेषस्यान्वयाय व्युत्क्रमेणार्थमाह ।।मृत्युरिति ।। प्रकेतः प्रभाव इत्यर्थः । कुह कुत्र । शर्मन् शर्मणि । निमित्तसप्तमीति भावेनाह ।। सुखार्थमिति ।। आवरीव इत्यस्यार्थ आवृणोदिति । वृञ्वरणेयङ्लुकि रूपमिति भावः । अवातं निवातम् । वातप्रेरणां विना । तच्छब्दार्थो ब्रह्मेति । स्वधया स्वसामर्थ्येनानीदचेष्टत । अनचेष्टायाम् । तस्मात् ह अन्यदिति पदच्छेदः । सिद्धांतोपयोगाय शेषार्थोक्तिः । यद्वा अन्यत्किंचिन्नासेति सर्वासत्त्वोक्तेः शंकोपयोगित्वेनैवेति ज्ञेयम् । अत एव भाष्ये सर्वस्येत्युक्तिः । चोद्यमनूद्य नञोऽन्वयमाह । ।। भवेदेतदित्यादिना ।। सूत्रे असद्व्यपदेशादित्येतत्सिद्धांतभागेऽप्यनुषज्यत इति भावेन तदुच्यत इत्युक्तं दर्शयन् शेषोक्त्या भाष्यं व्याचष्टे ।। साधनानामिति ।। हिशब्दोक्तप्रसिद्धिं व्यनक्ति ।। अव्यक्तादाविति ।। हेत्वंशं व्यनक्ति ।। न चेत्यादिना ।। ।। सत्वश्रवणादिति ।। तथा च प्रागुक्तदिशा तत्सद्भावोक्त्यनुपपत्त्या न स्वरूपासत्वव्यपदेश इति भावः । प्रकृत्यादिसत्वोक्तिस्फोरणाय तम आसीत्तमसा गूळ्हमग्रेऽप्रकेतं सलिलं सर्वमा इदमिति शेषार्थमाह ।। यत्तम इति ।। अप्रकेतमित्यस्यार्थो परिमितमिति । आः इत्यस्यार्थ आसीदिति । अस्तेर्लङि तिपि बहुलं छंदसीतीडभावे हल्ङ्या-

भ्य इति लोपे तिप्यनस्तेरिरिति दत्वाभावे रूपम्। उक्तं चोनार्थे चोनमिष्यत इत्यत्र ऋग्भाष्यटीकायाम्। गूळ्हं गूहितम्॥ अन्यथेति॥ स्वरूपासत्त्वाभिप्राय इत्यर्थः। तथा च वाक्यशेषे परशब्दान्यथानुपपत्त्या च न स्वरूपासत्त्वमर्थ इति भावः। यद्वा तद्वशस्य भावो न पर इत्यनुव्याख्यानसुधयो रीत्या न परः किंचनासेति वाक्यशेषे साक्षादेव स्वातंत्र्यनिषेधाद्धर्मांतरेणैवासत्त्वव्यपदेश इति भावेनोक्तमन्यथेति। तेन भाष्यस्थादिपदार्थो विवृतो ध्येयः॥ अथेति॥ प्रकरणविच्छेदार्थोऽर्थांतरपरः। ॥ निरूपित इति॥ स्याल्लोकवदित्यनेनेति भावः। चेतनाचेतनस्येति समाहारः। ॥ प्रमाणाभावादिति॥ स्पष्टयिष्यते चायं हेतुरनुपदमिति भावः। उत्तरार्धस्थक्रिययोर्विशेष्यभूतकर्माकांक्षां पूरयितुं अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयंतीं सरूपामिति पूर्वार्धमपि व्याचष्टे॥ रजस्सत्वेति॥ तावता जीवब्रह्माभेदे किं बाधकमित्यत आह॥ अत्रेश्वरोऽपीति॥ अद्वैतिमते मुक्तेश्वरयोरभेदादजोऽन्य इति श्रुत्यैव ब्रह्मणः संसारिभ्यो भेदोऽपि सिद्ध इति भावः॥ विवक्षितमिति॥ अनृतस्य विश्वस्य सत्यब्रह्माभेदायोगादिति भावः। नित्यं ह्येवेति वाक्यस्य प्रकृतोपयोगायार्थमाह ॥ नित्यमबाध्यमिति॥ तुरेवार्थ इति भावेनाह॥ विरोध एवेति॥ उदाहृतेति॥ अजो ह्येक इत्यादीत्यर्थः। उत्तरार्धव्यावर्त्यमाह॥ न चेति॥ तत्रेत्यस्यार्थो विरोध इति॥ प्रत्यक्षेति॥ साक्ष्यनुभवादिरूपेत्यर्थः। ननु नावाक्या युक्तिरिष्यत इत्युक्त्या अजो ह्येक इत्यादिश्रुतिविरोधेन केवलश्रुत्या चानन्यत्वासिद्धावपि वाचारंभणमित्यादिश्रुतिसहितया प्रागुक्तयुक्त्या तत्सिद्धिरस्त्वित्यत आह॥ एतेनेति॥ दृष्टानुसारेणेति वचनेनेत्यर्थः॥ श्रुतियुक्तिभ्यामिति॥ अन्योन्यसहिताभ्यामित्यर्थः। एतेनेत्युक्तं व्यनक्ति॥ प्रत्यक्षस्येति॥ प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतमित्यलौकिकविषयं साक्ष्यन्यप्रत्यक्षापेक्षं चेति भावः॥ आभासत्वाच्चेति॥ तच्च तत्वनिर्णयादावन्यत्र विस्तृतमिति भावः। साक्षिप्रत्यक्षस्य सर्वस्मात्प्रबलत्वेऽपि प्रत्यक्षमात्रस्य श्रुतितो दुर्बलत्वात् पूर्वत्रारुच्या दृष्टशब्दं प्रकारांतरेण व्याचष्टे॥ दृष्टमितीति॥ तदर्थ एव विरुद्धार्थ एव। कारणमिति शेषोक्तिः। शास्त्रमात्रविषय इति भ्रांतिनिरासाय शास्त्रार्थयुक्तशब्दार्थमाह॥ तदनुकूल इति॥ तेन तात्पर्यलिंगाद्यनुभवोऽपि संगृहीतः। साक्षीति भ्रांतिनिरासाय वा भ्रमसाधारण्यस्य वा निरासाय स्मृत्यन्यज्ञानभ्रमनिरासाय वाऽनुभवशब्दार्थमाह॥ यथार्थज्ञानमिति॥ केवलप्रमाण-

रूपमित्यर्थः। उत्तमत्वे हेतुः। साक्षादर्थविषयत्वादिति। यद्यप्यनुप्रमाणान्यपि साक्षादेव वस्तुविषयकाणि न तु परंपरया। यथोक्तं सुधायां न विलक्षणत्वादिति-नये अनुप्रमाणमेतानि ह्यक्षयुक्तिवचांस्यत इत्येतद्व्याख्यावसरे ज्ञानविषय एव हि करणानां विषय इत्यादि। तथाप्यत्रार्थशब्दस्य ज्ञेयवाचित्वाज्ज्ञेयविषयत्वं चानु-प्रमाणानां ज्ञानोपाधिकत्वेन न साक्षात्। ज्ञानस्य तु आत्मोपाधिकत्वेन न तु स्वव्यतिरिक्तोपाधिकत्वेनेति तात्पर्यकत्वं ध्येयम्। उक्तं च तत्रैव सुधायां यथार्थज्ञान-जनका यथार्थयुक्तयः स्मृता इत्येतद्व्याख्यावसरे ज्ञानमेव हि विषयस्य ज्ञेयतायां साक्षादुपाधिरित्यादि। यत्तु प्रमाणपद्धताविदं च साक्षाज्ज्ञेयविषयीकारित्वात्केवल-मित्युच्यत इत्यादिवाक्यं तदप्येवं नेयम्॥ अनुप्रमाणस्येति॥ यथार्थज्ञानसाधनस्ये-त्यर्थः। भाष्ये अनुमाद्या इत्याद्यशब्दोऽनुमाविशेषार्थापत्त्यादिपर इति भावेनाह॥ अनुप्रमाणमनुमानमिति॥ यथार्थज्ञानसाधनमनुमानमित्यर्थः॥ १८॥

सूत्रभाष्यम्—

॥ ॐ युक्तेः शब्दान्तराच्च ॐ॥ १९॥

'साधनानां साधनत्वं यदात्माधीनमिष्यते।

तदा साधनसम्पत्तिरैश्वर्यद्योतिका भवेदि'त्यादेः साधनान्तरेण सृष्टिर्युक्ता।

'अद्भ्यः सम्भूतो हिरण्यगर्भ इत्यष्टावि' (म.ना.उ. १-१२) त्यादि शब्दान्तराच्च॥ १९॥

तत्वप्रकाशिका—

ननु साधनान्तरमभ्युपगम्य तस्येश्वराधीनत्वकथनाद्वरं साधनाभावकथनमेव साधनशून्यस्य सृष्ट्यादिकर्तृत्वाभ्युपगमे महिमाधिक्यलाभादित्याशङ्कां परिहरत्सूत्र-मुपन्यस्य व्याचष्टे॥ युक्तेरिति॥ न महिमाधिक्यलाभाय साधनाभावोऽभ्युपेयः। साधनान्तरेण सृष्टेरपि युक्तत्वात् महिमाविरोधित्वात् स्वाधीनसाधनैः प्रवृत्तेरप्यैश्व-र्यद्योतकत्वस्य साधनानामिति वाक्यसिद्धत्वाल्लोकसिद्धत्वाच्च। तर्ह्युभयथापि महिमोत्कर्षसिद्धौ किं साधनसत्त्वपक्षाग्रहेणेति चेन्न। निरपेक्षतया स्रष्टृत्वस्योभय-पक्षेऽपि साम्येन महिमोत्कर्षलाभसाम्येऽपि साधनसत्त्वाभ्युपगमेनैकाकिनः सकाशात्सो-पस्करस्याधिकोत्कर्षलाभात् 'अदभ्यः संभूतः' इत्यादौ प्रतीतेश्च तत्राग्रह इति भावः।

भावदीपः—

॥ ॐ युक्तेः शब्दांतराच्च ॐ ॥ १९ ॥ युक्तेरिति सौत्रहेतोर्योग्यसाध्यान्वयायोक्तचोद्यं निराह ॥ न महिमेति ॥ भाष्यं सौत्रानुगुण्याय हेतुत्वेन व्याचष्टे ॥ साधनांतरेणेति ॥ युक्तत्वादित्येतद्वचनक्ति ॥ महिमेति ॥ कुत इत्यत इत्यादेरित्यंतभाष्यार्थमाह ॥ स्वाधीनेति ॥ आदिपदार्थमाह ॥ लोकेति ॥ लोके नाना शिल्पेषु निपुणस्य स्वयमेव साधनसंपादनेन कार्यकारणदर्शनादिति भावः ॥ प्राचीनेति ॥ सत्वाच्चेत्यत्रोक्ताद्भ्यः संभूतः पृथिव्यै रसाच्चेति श्रुते तथा तम आसीदिति श्रुतेश्च संग्रहार्थमित्यर्थः । प्राचीनश्रुतिसत्वेऽप्येतदुक्तिः सुधोक्तदिशा कथंचित्प्राचीनश्रुतेरन्यथानयनशंकायामपि नेह तथा हिरण्यगर्भसृष्टावेवाबादि साधनप्रतीतेरिति सूचनायेति भावः। (हिरण्यगर्भः अद्भ्यः संभूतः इत्यष्टौ दिक्पाला अपि अद्भ्यः संभूता इति तत्वप्रदीपे ।) ॥ १९ ॥

सूत्रभाष्यम्—

॥ ॐ पटवच्च ॐ ॥ २० ॥

साधनान्तरेण हि पटादिसृष्टिर्दृष्टा ॥ २० ॥

तत्वप्रकाशिका—

साधनसद्भावस्य युक्तिसिद्धत्वाच्च तत्राग्रह इत्यर्थप्रतिपादकं सूत्रमुपन्यस्य व्याचष्टे ॥ पटवच्चेति ॥ विप्रतिपन्ना सृष्टिः कर्तृव्यतिरिक्तसाधनसाध्या सृष्टित्वात्पटसृष्टिवदित्यर्थः ॥ २० ॥

भावदीपः— ॥ ॐ पटवच्च ॐ ॥ २० ॥

सूत्रभाष्यम्—

॥ ॐ यथा प्राणादिः ॐ ॥ २१ ॥

तच्च साधनजातं तेनानुप्रविष्टमेव यथा शरीरेन्द्रियादिः ।

'प्रकृतिं पुरुषं चैवं प्रविश्य पुरुषोत्तमः ।
क्षोभयामास भगवान् सृष्ट्यर्थं जगतो विभुरि' ति कौर्मे ॥ २१ ॥

॥ इति आरम्भणाधिकरणम् ॥ ६ ॥

तत्वप्रकाशिका—

तर्हि विमता सृष्टिः कर्तृव्यतिरिक्तस्वतन्त्रसाधनसापेक्षा सृष्टित्वात्पटसृष्टिवदिति । विप्रतिपन्नं वा साधनं स्वतन्त्रं साधनत्वात्तुर्यादिवदित्यपि स्यादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ यथेति ॥ न तत्साधनं स्वतंत्रं प्रेरणार्थं भगवताऽनुप्रविष्टत्वात् यथा शरीरेन्द्रियप्राणादिः । 'यः प्राणे तिष्ठन्' इत्यादेरीश्वरेणानुप्रविष्टत्वान्न स्वतन्त्रम् । अन्यथाऽनुप्रवेशवैयर्थ्यादिति भावः । साधनानां भगवदनुप्रविष्टत्वमेव कुत इत्यत आह ॥ प्रकृतिमिति ॥ क्षोभयामास उन्मुखीचकार । अतो भगवतः स्वातंत्र्येण सर्वकर्तृत्वे विरोधगन्धाभावाद्युक्तं सर्वगुणपूर्णत्वमिति सिद्धम् ॥ २१ ॥ अ० ॥ ६ ॥

भावदीपः—

॥ ॐ यथा प्राणादिः ॐ ॥ २१ ॥ पटादिसृष्टिरिति पूर्वभाष्यानुरोधादाह ॥विमता सृष्टिरिति ॥तच्च साधनजातमिति भाष्यदिशाऽऽह॥ विप्रतिपन्नं वा साधनमिति॥ ॥ न स्वतंत्रमिति ॥ तथा च प्राचीनानुमानस्यैतदनुमानबाध इति भावः । समस्तसूत्रार्थं फलोक्त्योपसंहरति ॥ अत इति ॥ कर्त्रन्यसाधने स्वातंत्र्यस्याप्रामाणिकत्वाच्छ्रुतियुक्तिबाधितत्वात्। साधनश्रुतेरीशाधीनसाधनपरत्वात्तदभावपरश्रुतेः स्वातंत्र्यादिधर्मपरत्वात् । साधनसद्भावस्य च श्रुतियुक्तिसिद्धत्वात्स्वाधीनसाधनैः सृष्टेर्युक्तत्वाच्चेत्यर्थः ॥ विरोधगंधेति ॥ साधनस्वातंत्र्ययुक्तिविरोधो वा अद्भ्य इत्यादिसाधनसत्वश्रुतिविरोधो वा महिमोत्कर्षविरोधादिर्वा कोऽपि नास्तीत्यर्थः ॥ २१ ॥ अ० ६ ॥

सूत्रभाष्यम्—

जीवकर्तृत्वपक्षः श्रुतिप्राप्तो विस्तरान्निराक्रियते ।

॥ ॐ इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॐ ॥ २२ ॥

जीवकर्तृत्वपक्षे हिताकरणमहितकरणं च न स्यात् ॥ २२ ॥

तत्वप्रकाशिका—

अन्यथानुमितौ च ज्ञशक्तिवियोगादिति जीवकर्तृत्वस्य निराकरिष्यमाणत्वादेतेन शिष्टा अपरिग्रहा अपि व्याख्याता इति निराकृतत्वाच्च नैतदधिकरणारंभो युक्त इत्याशङ्कापरिहारायाधिकरणार्थमाह ॥ जीवेति ॥ अत्र 'जीवाद्भवंति भूतानि'

इति श्रुतिप्राप्तो जीवकर्तृत्वपक्षो निराक्रियते । उत्तरत्र तु समयप्राप्त इत्यर्थभेदः । श्रुतिप्राप्तस्य संक्षेपतो निरस्तस्य विस्तरान्निराकरणाच्चावैयर्थ्यमिति भावः । न च वाच्यं तदनंतरमेव निराक्रियतामिति । अत्र 'यथा प्राणादिः' इत्युक्ते पुनराशङ्कोदयात् । अत एवात्र विष्णोर्जगत्कारणत्वे जीवकर्तृत्वसाधकयुक्तिविरोधस्य परिह्रियमाणत्वादस्ति शास्त्रादिसंगतिः । विष्णोर्जगत्स्रष्टृत्वादिकमुक्तम् । तस्य च जीवकर्तृत्वसाधकयुक्तिविरोधे लक्षणत्वायोगात्स निराकार्य एव । तज्जगत्कर्तृत्वादिविषयः । विष्णोर्युक्तमयुक्तं वेति संदेहः । श्रुतिविप्रतिपत्तिः श्रुत्यनुभवविप्रतिपत्तिर्वा संदेहबीजम् । न विष्णोर्जगत्कर्तृत्वं युक्तमिति पूर्वः पक्षः । जीवस्यैव कर्तृत्वानुभवात् । स हि यत्कार्यमारभते तत्समापयतीत्युनुभूयते । न चायमनुभवो भ्रान्तः । बाधकाभावात् । न च वाच्यमस्तु जीवस्य कर्तृत्वम् । तच्चेश्वरप्रेरितमिति । कल्पनागौरवापत्तेः । तथा हि ईश्वरस्तावदनुपलभ्यमानो नास्त्येव स च कल्पनीयस्तस्य च जीवप्रेरकत्वं कल्पनीयमप्रामाणिकमिति जीवस्यैव स्वतंत्रकर्तृत्वाङ्गीकारे लाघवम् । एवं च परिदृश्यमानकार्याणां स्वतंत्रजीवकर्तृत्वे समस्तजगतोऽपि तथात्वं सिद्धयति । तथा च श्रुतिः । 'जीवाद्भवन्ति भूतानि' इत्यादि । न चेश्वरविषयत्वं श्रुतेः । तस्यैवाभावात् । अतः श्रुत्यादिबलाज्जीवस्यैव स्वतन्त्रकर्तृत्वादसंभवि जन्मादिकारणत्वलक्षणं ब्रह्मण इति प्राप्ते सिद्धांतयत्सूत्रमुपन्यस्य व्याचष्टे ॥ इतरेति ॥ यदि जीवकर्तृत्वस्य श्रुतौ व्यपदेशादिसिद्धत्वाज्जीवः स्वतंत्रकर्तेत्युच्यते तर्हि तस्य हिताकरणमहितकरणं च न स्यात् । न हि स्वतंत्रस्य ते संभवतः । विद्येते च ते जीवे अतोऽसौ न स्वतंत्रकर्ता अपि तु परमेश्वर एवेति भावः ॥ २२ ॥

भावदीपः—

॥ ॐ इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॐ ॥ २२ ॥ भाष्ये श्रुतिप्राप्त इति विस्तरादिति चोक्तपदद्वयव्यावर्त्यं क्रमेणाह ॥ अन्यथेति ॥ समयपाद इत्यर्थः ॥ श्रुतिप्राप्त इति ॥ आपाततः श्रुतिमूलयुक्तिप्राप्त इत्यर्थः । वेदवादरतो न स्यान्न पाषंडी न हैतुकीत्युक्तवेदवादनिरासद्योतनाय श्रुतिप्राप्त इत्येवानुवादः कृतः ॥ पुनराशंकोदयादिति ॥ यथा प्राणादिरिति पूर्वाधिकरणोक्तं प्राणादिजीवानामस्वातंत्र्यं न युक्तम् । जीवकर्तृत्वस्यानुभवादिति शंकोदयादव्यवधानेनात्र निराकरणमित्यर्थः । एतेन विस्तरेण निराकरणं व्यर्थमिति प्रत्युक्तम् । अत एव शंकाया उत्पन्नत्वादेवेत्यर्थः । ॥ युक्तिमिति ॥ श्रुत्यनुभवसंवादियुक्तीत्यर्थः । व्यपदेशादिति सौत्रोक्त्यनुरोधादाह

॥ श्रुतीति ॥ यतो वा इमानि भूतानि जायंत इति जीवाद्भवंति भूतानीति श्रुत्योर्विप्रतिपत्तिर्विरोध इत्यर्थः । उपसंहारदर्शनादित्युक्त्यनुरोधादाह ॥ श्रुत्यनुभवेति ॥ उपसंहारसूत्रे भाष्योक्तं हेतुं तद्भाष्यं विवृण्वन्नाह ॥ जीवस्यैवेति ॥ ईश्वरत्यागेन जीवस्यैव कर्तृत्वांगीकारे कल्पनालाघवमिति न्यायविवरणोक्तं च हेतुं देवादिवदिति सूत्रव्यावर्त्यमत्र योजयितुं व्यावर्त्यशंकामाह ॥ न च वाच्यमिति ॥ कर्ता शास्त्रार्थवत्त्वादित्यत्र तथा वक्ष्यमाणत्वादिति भावः ॥ कल्पनेति ॥ एतेन कर्ता शास्त्रार्थवत्त्वादिति वक्ष्यमाणन्यायेन जीवस्य कर्तृत्वेऽप्यनुभवादिसामंजस्येनेश्वरकर्तृत्वे विरोधाभावादयं विचारो व्यर्थ इति परास्तम् । तस्यैवेह गौरवेणाक्षेपादिति भाव. । कर्तुरीश्वरस्य दृष्टिविरोध इति भाष्यदिशा विवृणोति ॥ तथा हीति ॥ नास्त्येवेति ॥ अनुपलब्धिर्हि धर्मादिवदयोग्यत्वाद्वा मेर्वादिवद्देशकालादिव्यवहितत्वेन वाऽभिमानिनयन्यायेनांतर्धानशक्त्या वा शशशृंगादिवदसत्त्वेन वा । नाद्यः । आपरोक्ष्याभावापातात् । न द्वितीयः । अदृश्यत्वनयोक्तदिशा नित्यसर्वगतत्वात् । न तृतीयः । तदव्यक्तमाह हीत्यव्यक्तैकस्वभावत्वोपगमात् । अतः परिशेषादसत्त्वमेवेति भावः । ननु जीवकर्तृत्वपक्षे अनवस्थितेरसंभवाच्च नेतर इत्युक्तदोषः स्यादित्यत उक्तम् ॥ जीवस्यैव स्वतंत्रेति ॥ एतेन न्यायविवरणे स्वतंत्रेति विशेषणं योज्यमिति दर्शितम् । एतेन वक्ष्यमाणचेतनत्वयुक्तेरनुकूलतर्को दर्शितः । कार्यत्वयुक्तेर्दृष्टांतश्चोपपादितः । अस्त्वेवं घटादौ जीवः कर्ता महदादौ क इत्यत आह ॥ एवं चेति ॥ महदादिकं जीवकर्तृकं कार्यत्वात् घटवदिति भावः । युक्तिसंवादिनीं श्रुतिमाह ॥ तथा चेति ॥ इयं च एतेन शिष्टा अपरिग्रहा इत्यत्र भाष्योक्ता ॥ तस्यैवेति ॥ एतेन युक्तेः श्रुतिबाधोऽपि परास्तः । अत इत्यस्यार्थः श्रुत्यादीति । यद्वा ईश्वरस्यैवाभावेन श्रुतेस्तत्परत्वायोगादित्यर्थः । आदिपदेन युक्त्यनुभवौ ग्राह्यौ । न ह्यत्राधिकरणे पूर्वपक्षिणा महदादिसकलकार्यकर्तृत्वं जीवस्यैव शंकितमिति सुधावाक्याविरोधश्चंद्रिकायां स्फुटः ॥ छ ॥ जीवकर्तृत्व इति भाष्यस्थमापादकं सूत्रारूढं कुर्वन्सूत्रार्थमाह ॥ यदीति ॥ असद्व्यपदेशान्नेति चेदित्यतश्चेदिति वर्तते । स च यद्यर्थः । यदितर्ह्योश्च नित्यान्वय इति भावः । श्रुतौ व्यपदेशादीति नित्यसाकांक्षत्वात्समासः । आदिपदेन वक्ष्यमाणयुक्त्यनुभवौ ग्राह्यौ । एतेन हिताकरणादिदोषापादनं श्रुत्यनुभवयुक्तीनां तिसृणामप्याभासत्वसाधकं तासां स्वतो जीवकर्तृत्वविषयकत्व इति सूचितं इष्टापत्तिं निराह॥ विद्येते चेति ॥ अन्यथा सर्वो जनः पूर्णानंदो निर्दुःखश्च सदा स्यादिति भावः । तर्ह्यनवस्थितेरसंभवाच्चेत्युक्तदोषः स्यादित्याशंक्याह ॥ अपि त्विति ॥ २२ ॥

सूत्रभाष्यम्—

॥ ॐ अधिकं तु भेदनिर्देशात् ॐ ॥ २३ ॥

न च ब्रह्मणः श्रमचिन्तादिदोषप्राप्तिः । अधिकशक्तित्वात् । 'श्रोता मन्ता द्रष्टाऽऽदेष्टा घोष्टा विज्ञाता सर्वेषां भूतानामन्तरपुरुषः'(ऐ. आ. ३-२-४) 'एष त आत्मा सर्वान्तरः' (बृ. उ. ५-५-१) 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येती' (बृ. उ. ५-५-१)त्यादिविशेषनिर्देशात् ॥ २३ ॥

तत्वप्रकाशिका–

यदि यत्किंचिद्दोषमात्रेण जीवकर्तृता निराक्रियते तर्हि ब्रह्मणोऽपि कर्तृत्वं न प्राप्नोति । तस्यापि श्रमादिदोषनियमात् । एवं च पक्षयोः साम्ये-नुभवादिसिद्धं जीवकर्तृत्वमेवाश्रयणीयमित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ अधिकमिति ॥ तुशब्दः साम्यव्यावर्तकः। भवेद् ब्रह्मप्रतिबन्धा जीवस्य कर्तृत्वसमर्थनम्। यदि ब्रह्मणि श्रमचिन्तासाधनास्मरणदुःखादिदोषा भवेयुः । न च ते तत्र सन्ति । श्रुतिषु तस्य सर्वेभ्योऽखिलश्रोतृत्वान्तर्यामित्वाशनायाद्यतीतत्वाद्यतिशयस्य निर्देशात् । न ह्येवंविधस्य ते दोषाः शङ्कितुमपि शक्यन्त इति भावः ॥ २३ ॥

भावदीपः—

॥ ॐ अधिकं तु भेदनिर्देशात् ॐ ॥ २३ ॥ सौत्रतुशब्दव्यावर्त्यं व्यंजयन्नवतारयति । यदि यत्किंचिदिति । न च ब्रह्मणः श्रमचिंतादिदोषप्राप्तिरिति भाष्यमुत्सूत्रमिति भ्रमनिरासायाह । तुशब्द इति । एतमेवार्थं भाष्यविवरणेन व्यनक्ति । भवेदिति। आदिपदार्थोक्तिः साधनेत्यादि। आत्मेत्यस्यार्थं अंतर्यामित्वेति ॥ २३ ॥

सूत्रभाष्यम्—

॥ ॐ अश्मादिवच्च तदनुपपत्तिः ॐ ॥ २४ ॥

चेतनत्वेऽप्यश्मादिवदस्वतन्त्रत्वात्स्वतः कर्तृत्वानुपपत्तिर्जीवस्य।

'यथा दारुमयीं योषां नरः स्थिरसमाहितः।
इङ्गयत्यङ्गमङ्गानि तथा राजन्निमाः प्रजाः' इति भारते ॥ २४ ॥

तत्त्वप्रकाशिका—

अथापि जीवोऽन्यनिरपेक्षतया कर्ता चेतनत्वादीश्वरवदिति किं न स्यात् । न चेश्वराभ्युपगमानभ्युपगमाभ्यां विरोधः । परसिद्धेनैव न्यायेन परस्य बोधनादित्या-

शङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ।। अस्मादिवच्चेति ।। न चेतनत्वहेतुना जीवस्यान्यानपेक्षकर्तृत्वं साध्यम्। अस्वातंत्र्येण हेतुना अस्मादिवत्तदभावस्यापि साधयितुं शक्यत्वात् । स्वतंत्रो ह्यन्यनिरपेक्षः कार्यं करोति चेतनत्वं त्वप्रयोजकमिति भावः । चोऽपि शब्दार्थः । एतेन कर्मसापेक्षतया हिताक्रियादिदोषपरिहारोऽपि परास्तः । तस्याप्यस्वतन्त्रत्वात् । अस्वातंत्र्यमेव जीवस्य कुत इत्यत आह ।। यथेति ।। अस्वातंत्र्यस्य हिताक्रियादिनैव सिद्धौ सूत्रार्थे संमतिर्वा ।। २४ ।।

भावदीपः—

।। ॐ अस्मादिवच्च तदनुपपत्तिः ॐ ।। २४ ।। विरोध इति ।। अभ्युपगमे अन्यनिरपेक्षतयेत्युक्तिविरोधः । अनभ्युपगमे ईश्वरवदित्युक्तिविरोध इत्यर्थः । भाष्यं व्याचष्टे ।। न चेतनत्वेति ।। स्वतःशब्दार्थोऽन्यानपेक्षेति । हेतोरप्रयोजकत्वमाशंक्यानुपपत्तिपदतात्पर्यमाह ।। स्वतंत्रो हीति ।। हेतूच्छित्तिरेव विपक्षे बाधिकेति भावः । उक्तहेतोः कागतिरित्यत आह ।। चेतनत्वं त्विति ।। प्रागुक्तलाघवतर्कस्तु निरसिष्यत इति भावः। चेतनत्वेऽपीति भाष्यमुत्सूत्रमिति भ्रमनिरासायाह ।।चोऽपीति।। अनुक्तसमुच्चय इति भावः ।। एतेनेति ।। अस्मादिवदित्युक्तिलब्धास्वातंत्र्यहेतुनेत्यर्थः ।। २४ ।।

सूत्रभाष्यम्—

।। ॐ उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॐ ।। २५ ।।

जीवेन कार्योपसंहारदर्शनात्तस्य कर्तृत्वमिति चेन्न । यथा गोषु क्षीरं दृश्यमानमपि प्राणादेव जायते, 'अन्नं रसादिरूपेण प्राणः परिणयत्यसा'विति वचनात् । एवं जीवे दृश्यमानोऽपि कार्योपसंहारोऽस्वातन्त्र्यात्परकृत एव । 'य आत्मानमन्तरो यमयति' (बृ. उ. माध्यंदिन पाठः) । 'नाहं कर्ता न कर्ता त्वं कर्ता यस्तु सदा प्रभुरि' त्यादेः ।। २५ ।।

तत्वप्रकाशिका—

जीवस्य स्वतःकर्तृत्वाभावमाक्षिप्य समादधत्सूत्रं पठित्वाऽऽक्षेपांशं तावद् व्याचष्टे ।। उपसंहारेति ।। न जीवस्य स्वतः कर्तृत्वाभावो वक्तव्यः । अनुभवविरोधात् । स हि यत्कर्तुमारभते तदवसाययतीत्यनुभूयत इत्यर्थः। परिहारांशं व्याचष्टे ।। नेति ।।

कार्योपसंहारदर्शनेन जीवस्यान्यानपेक्षतया न कर्तृत्वसिद्धिः। तत्कार्योपसंहारस्येऽश्वरनिमित्तत्वात्। न च जीवे दृश्यमानत्वेन जीवस्यैवासाविति वाच्यम्। गोषु वर्तमानस्यापि क्षीरस्यान्नं रसादिरूपेणेति वचनात्प्राणाधीनत्ववदत्राप्युपपत्तेः। न च बाधकवचनबलात्क्षीरस्याऽन्याधीनत्वेऽपि कार्योपसंहारस्य बाधकाभावाज्जीवकर्तृत्वमिति वक्तव्यम्। जीवस्यास्वातंत्र्येण कार्योपसंहारकर्तृत्वानुपपत्तेरेव बाधकत्वादिति भावः। ननु जीवस्यास्वातंत्र्यात्कार्योपसंहारकर्तृत्वाभावेऽपि कुतोऽसावीश्वरकृत इत्यत आह॥ य इति॥ २५॥

भावदीपः—

॥ ॐ उपसंहारद० ॐ॥ २५॥ भाष्ये साक्षात्सौत्रहेत्वन्वयाय तस्य कर्तृत्वमिति साध्योक्तिः फलगत्येति मत्वा सूत्रे अनुवृत्ततदनुपपत्तिपदेन नञन्वयमुपेत्य तत्र सौत्रहेतुं परंपरया योजयन्सूत्रार्थमाह॥ न जीवस्येति॥ भाष्ये इति चेन्नेत्यध्याहृत्योक्तनञा प्राचीनभाष्यस्यान्वयमाह॥ कार्येति॥ अन्यानपेक्षतयेति। भाष्ये स्वतःपदानुवृत्तिरिति भावः। एवं जीव इत्यादिभाष्योक्तमेव हेतुमाह॥ तत्कार्येति॥ यथेत्यादिभाष्यदिशा क्षीरवदिति सूत्रांशार्थमाह॥ गोष्विति॥ एवं जीव इत्यादिभाष्यतात्पर्यमत्राप्युपपत्तेरिति। अस्वातंत्र्यादिति भाष्योक्तं हेतुमवतार्यव्याचष्टे॥ न च बाधकेति॥ अयं च हेतुरश्मादिवच्चेति सूत्रलब्ध इति भावेनानुपपत्तेरेवेत्येवकारप्रयोगः॥ २५॥

सूत्रभाष्यम्—

॥ ॐ देवादिवदपि लोके ॐ॥ २६॥

न च कर्तुरीश्वरस्यादृष्टिविरोधः। देवादिवददृश्यत्वशक्तियोगात्। लोकेऽपि पिशाचादीनां तादृशी शक्तिर्दृष्टा, किम्वीश्वरस्य।

'न युक्तियोगाद्वाक्यानि निराकार्याण्यपि क्वचित्।
विरोध एव वाक्यानां युक्तयो न तु युक्तय' इति बृहत्संहितायाम्॥ २६॥

तत्वप्रकाशिका—

न जीवस्येऽश्वराधीनकर्तृत्वं वाच्यम्। तस्यैवाभावात्। न च श्रुत्या तत्सिद्धिः। तस्यानुपलब्धिबाधितत्वात्। अथ च कल्पने गौरवं स्यात्। अतो जीव एव लाघवाज्जगत्कर्तेत्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे॥ देवेति॥ नेश्वरस्य

कर्तृत्वाङ्गीकारे गौरवम् । स हि कर्तेत्यादि श्रुतिसिद्धत्वात् । नाप्यनुपलब्धिविरोधः । अदृष्टानामपि देवादीनां विद्यमानत्वात् तच्च प्रतिपादितम् । देवादीनामदृश्यत्वशक्तिमत्त्वाद्युक्तानुपलब्धिरिति चेत् सममीश्वरस्यापि । तादृशशक्तियुक्तत्वात् । कुतः । लोके पिशाचादीनामनीश्वराणां तादृशशक्तिमत्वे सर्वेश्वरस्य सुतरां तत्सिद्धेः। अतो नेश्वरस्य कर्तृत्वाङ्गीकारे गौरवं किं त्वश्रौतजीवकर्तृत्वाङ्गीकार एव तद्भवति । तदभावात्सिद्धांते लाघवमेवेति भावः । यदभिप्रेतं श्रुतिसिद्धः परमेश्वरो नानुपलब्धियुक्त्या निराकार्य इति तत्र स्मृतिं चाह ॥ नेति ॥ युक्तियोगाद्युक्त्युपायात् । वाक्यानां विरोधे युक्तीनां जाते सति ता एव युक्तयो न युक्तयः किंत्वाभासा इत्यर्थः। वाक्यानां परस्परविरोधे युक्तयोऽर्थसाधिका न तु केवलयुक्तय इति वा ॥ २६ ॥

भावदीपः—

॥ ॐ देवादिवदपि लोके ॐ ॥ २६ ॥ नन्वाद्ये सर्ववेदसमन्वयोक्त्या ईश्वरस्य सिद्धत्वादत्र पुनस्तदभावशंका न युक्तेति भावेनाशंक्य कर्तुरीश्वरस्यादृष्टिविरोध इति भाष्योक्तं हेतुमाह ॥ न च श्रुत्येति ॥ बाधितत्वादिति ॥ प्रागुक्तरीत्या तदभावनिश्चयादिति तात्पर्यं बोध्यम्। तथा च प्रागुक्तस्यैवात्राक्षेप इति भावः। न चेत्यादिभाष्यात्पूर्वश्रुतिसिद्धत्वेनाकल्पनादिति न्यायविवरणं साध्योक्तिपूर्वं योजयति ॥ नेश्वरस्येति ॥ न्यायविवरणे नान्यः कर्तेत्यादेरिव साक्षात्कर्तृश्रुतेरनुक्तेः स्वयमाह ॥ स हि कर्तेति ॥ न च कर्तुरित्यादिभाष्यं व्याचष्टे ॥ नापीति ॥ प्रतिपादितमिति ॥ अभिमानिनय इति भावः । अपिशब्दार्थमाह ॥ अनीश्वराणामिति ॥ अत इति ॥ श्रुतिसिद्धत्वादित्यर्थः । अश्रौतजीवकर्तृत्वांगीकारे गौरवमेव । तदभावादेव सिद्धांते लघुतेति न्यायविवरणं योजयति ॥ किं त्विति ॥ प्रकृतोपयोगितयार्थमाह ॥ युक्तीनां जाते सतीति ॥ एवकारो युक्तय एवेत्यन्वेतीति भावेनाह ॥ ता एवेति ॥ तर्हि मीमांसाव्याघात इत्यत आह ॥ वाक्यानामिति ॥ परस्परेति ॥ न तु वाक्यांतरविरोधे वा एकवाक्येऽपि पूर्वोत्तरविरोधे वा इत्यर्थः। अर्थसाधिकेति शेषोक्तिः ॥ २६ ॥

सूत्रभाष्यम्—

**॥ ॐ कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॐ ॥ २७ ॥**

**अयं च दोषो जीवकर्तृत्वपक्षे । एकेनाङ्गुलिमात्रेण प्रवर्तमानोऽपि पूर्णप्रवृत्तिस्स्यात् । न च तद्युज्यते, सामर्थ्यैकदेशदर्शनात् । न चैकदेशेन, निरवयवत्वात् । 'अथ यः**

स जीवः स नित्यो निरवयवो ज्ञाताऽज्ञाता सुखी दुःखी शरीरेंद्रियस्थ' इति भाल्लवेयश्रुतिः । न चोपाधिकृतोंऽशः स एवांश उपहित इति, द्वित्वापेक्षत्वात् न चान्यत्कल्प्यम् । 'यद्धि युक्त्या विरुध्येत तदीशकृतमेव ही'ति गत्यन्तरोक्तेः ॥ २७ ॥

॥ इति इतरव्यपदेशाधिकरणम् ॥ ७ ॥

तत्वप्रकाशिका—

युक्त्यन्तरेण जीवस्य स्वतःकर्तृत्वं निराकुर्वत्सूत्रमुपन्यस्य व्याचष्टे ॥ कृत्स्नेति ॥ न केवलं हिताक्रियादिदोषो जीवस्य स्वतःकर्तृत्वे किं त्वयं वक्ष्यमाणश्च । तथा हि । किं जीवः सर्वकार्येषु सर्वसामर्थ्येन प्रवर्ततेंऽशेन वा । नाद्यः । एकेनाङ्गुलिमात्रेण तृणादानादावपि पूर्णशक्त्या प्रवृत्तिप्रसक्तेः । न च स्यादेवमिति वाच्यम् । अनुभवविरोधात् । न द्वितीयः । अंशाभावात् । न च सांशत्वमङ्गीकर्तुं शक्यम् । अथेति निरवयवत्वश्रुतिव्याकोपात् । एतेन कार्यानुसारेण प्रवृत्तिरित्यपि निरस्तमिति भावः । न जीवस्य स्वतःकर्तृत्वेऽपि दोषावकाशः । तस्योपाधिकृतांशवत्त्वेन कृत्स्नप्रसक्त्ययोगात् । स्वाभाविकांशाभावेन श्रुतिविरोधाभावादिति चेत् तत्र प्रष्टव्यम् । किं जीवः सर्वोऽप्युपहितस्तदंशो वा । आद्यं निराह ॥ न चेति ॥ स एव समस्तो जीव उपहितश्चेत्तर्हि उपाधिकृतांशो न भवति । सर्वस्य ग्रस्तत्वादिति भावः । द्वितीयं पराह ॥ अंश इति ॥ अंश उपहित इति च न युक्तम् । उपाधिसंबंधार्थं स्वाभाविकद्वित्वापेक्षत्वात् । तथा च श्रुतिविरोधः । तस्याप्यौपाधिकत्वेऽनवस्थेति भावः । तर्ह्येतज्जीवस्य कर्तृत्वं युक्तिविरुद्धत्वादविचारितरमणीयाविद्यानिमित्तमस्त्वित्यत आह ॥ न चेति ॥ यत्प्रतीतमपि युक्तिविरुद्धं तदीश्वरकृतमिति न्यायेन जीवकर्तृत्वमयुक्तं चेत्तस्येऽश्वराधीनत्वेनोपपत्तेस्तदेव प्रामाणिकं ग्राह्यं न त्वप्रमाणिकमविद्यानिमित्तं नापि तेनोपपत्तिरिति भावः । यद्वा महदादिकार्यकारणत्वमीश्वरस्याङ्गीकृत्य घटादिविषय एव पूर्वः पक्षः सिद्धांतश्च प्रवृत्त इति ज्ञातव्यम् । तस्माज्जीवस्य स्वतःकर्तृत्वानुपपत्तेर्युक्तं हरेर्जन्मादिकारणत्वलक्षणमिति सिद्धम् ॥ २७ ॥ अ० ७ ॥

भावदीपः—

॥ ॐ कृत्स्नप्रसक्ति० ॐ ॥ २७ ॥ अयं चेति भाष्योक्तेराह ॥ युक्त्यंतरेणेति ॥ भाष्योक्तचशब्दसमुच्चेयमाह ॥ न केवलमिति ॥ सौत्रवाशब्दसूचितपक्षभेदं व्यंजयन् भाष्यं व्याचष्टे ॥ किं जीव इति ॥ न चैकदेशेनेत्यादि व्याचष्टे ॥ न द्वितीय इति ॥

न चोपाधिकृतोंशः स एवोपहित इत्येतद् व्याचष्टे ।। स एवेति ।। तस्यार्थः समस्तो जीव इति ।। इति च न युक्तमिति ।। न चेत्यस्यावृत्तिरितिभावः ।। स्वाभाविकेति ।। विवृतमेतदुपाधिखंडनतट्टीकादाविति भावः। एतेनोपाधेः कृत्स्नप्रसक्तिः सर्वजीवसंबंधः स्यात्। अंशसंबंधे निरवयवत्वशब्दकोपोत्रेति सूत्रस्य वृत्त्यंतरं दर्शितम् ।। ईश्वराधीनत्वेनेति ।। ईश्वरस्य वक्ष्यमाणदिशाऽघटितघटकाचिंत्यानेकशक्तित्वादिति भावः। पूर्वं परिदृश्यमानकार्याणां स्वतंत्रजीवकर्तृत्वे समस्तजगतोऽपि तथात्वं सिध्यतीत्यनेनेन घटादौ महदादौ च सर्वत्र जीव एव कर्ता नत्वीश्वरः। तस्यैवानुपलब्धाऽभावादिति पूर्वपक्षं कृत्वा अनुपलब्धस्यापि देवादिवच्छ्रुतिप्रमितत्वात् स एव सर्वजगतः कर्तेति सिद्धांतः कृतः। अधुना महदादावस्त्वीश्वरः कर्ता घटादौ जीव एव न त्वीश्वरोऽपि कर्ता। तस्य तत्र कर्तृत्वे नानुपलब्धिबाधितस्य कर्तृत्वेन कल्पने कल्पनागौरवात् जीवमात्रकर्तृत्वस्यानुभवसिद्धस्य कल्पने लाघवादिति पूर्वपक्षे अनुपलब्धोपि स हि सर्वस्य कर्ता नान्यःकर्तेत्यादिश्रुतिसिद्धत्वाद्घटादावपीश्वर एव स्वतंत्रकर्ता न जीव इति महदादावीशकर्तृत्वमुपेत्य घटादावेवेशकर्तृत्वाक्षेपसमाधिपरत्वेनाधिकरणं योज्यमित्याह ।। यद्वेति ।। ईश्वरत्यागेन जीवस्यैव कर्तृत्वांगीकारे कल्पनालाघवमिति न्यायविवरणस्य जीवकर्तृत्वेत्यादिभाष्यस्य च पक्षद्वयेपि साम्यादिति भावः। अत्र प्राचीनपक्षे जीवस्य महदादिकर्तृत्वेऽनुभवविरोधः। अस्मिन्पक्षे तु नेत्येतत्पक्षोत्थापनमिति बोध्यम् ।। तस्मादिति ।। हिताक्रियादि कृत्स्नप्रसक्त्यादिबाधकभावात्। अनुभवादेराभासत्वेन साधकाभावाच्चेत्यर्थः ।। २७ ।। अ० ७ ।।

सूत्रभाष्यम्––

।। ॐ श्रुतेस्तु शब्दमूलत्वात् ॐ ।। २८ ।।

न चेश्वरपक्षेऽयं विरोधः। 'योऽसौ विरुद्धोऽविरुद्धो मनुरमनुरवाग्वागिन्द्रोऽनिन्द्रः प्रवृत्तिरप्रवृत्तिः स परः परमात्मे'ति पैङ्ग्यादिश्रुतेरेव। शब्दमूलत्वाच्च न युक्तिविरोधः।

'यद्वाक्योक्तं न तद्युक्तिर्विरोद्धुं शक्नुयात्क्वचित्।
विरोधे वाक्ययोः क्वापि किञ्चित्साद्गुण्यकारणमि'ति ।।

पुरुषोत्तमतन्त्रे ।। २८ ।।

तत्वप्रकाशिका---

अत्र विष्णोः सर्वकर्तृत्वे कृत्स्नप्रसक्त्यादियुक्तिविरोधपरिहारादस्ति शास्त्रादिसंगतिः। सर्वकर्तृत्वं विष्णोरुक्तम्। तस्य च युक्तिविरोधे लक्षणसूत्रानुपपत्तेरवश्यमसौ निराकर्तव्यः। तत्स्रष्टृत्वं विषयः। किं विष्णोर्युक्तमयुक्तं वेति संदेहः। उक्तन्यायो दोषदर्शनं च संदेहबीजम्। न युक्तमिति पूर्वः पक्षः। जीवकर्तृत्वपक्षोक्तदोषस्यात्रापि संभवात्। तथा हि। किमीश्वरः कार्येषु सर्वशक्त्या प्रवर्तते तदेकदेशेन वा। नाद्यः। तृणादानादावपि कृत्स्नप्रसक्तेः। न द्वितीयः। 'नेह नानास्ति किंचन' इत्यादि श्रुतिव्याकोपात्। न हि वक्तुं युक्तमयं दोषो जीवपक्ष एव नेश्वरपक्ष इति। ईश्वरे तदस्पर्शनिमित्तस्य जीवादतिशयस्यादर्शनात्। विशेषमन्तरेणापि दोषास्पर्शे किं जीवेनापराद्धम्। एतेन जीवस्येऽश्वराधीनकर्तृत्वाङ्गीकारेण कृत्स्नप्रसक्त्यादिदोषपरिहारः प्रागुक्तोऽप्ययुक्तः। अतो युक्तिविरोधान्न विष्णोर्जगत्कर्तृत्वलक्षणं युक्तमिति प्राप्ते सिद्धांतयत्सूत्रमुपन्यस्य व्याचष्टे ॥ श्रुतेरिति ॥ नेश्वरकर्तृत्वे युक्तिविरोधः। 'योऽसौ विरुद्धः' इत्यादि श्रुतौ लोकविरुद्धधर्माणामीश्वरेऽविरुद्धतयावस्थानोक्तेः। ननु श्रुत्युक्तत्वेऽपि युक्तिविरुद्धं कथमुपैतुं शक्यम्। अन्यथा जीवेऽपि प्रत्यक्षबलादभ्युपगन्तव्यमविशेषादिति चेत्। मैवम्। भवेज्जीवप्रतिबन्द्येश्वरे युक्तिविरोधो यदि विशेषाभावो भवेत्। न चैवं शब्दैकसमधिगम्यत्वस्य युक्तिविरोधपरिहारोपयोगिनः परमेश्वरे श्रुत्यादिसिद्धत्वाज्जीवे तदभावात्। न हि शब्दैकसमधिगम्यवस्तुनि युक्तिविरोधः। यथा प्रत्यक्षाविषये न प्रत्यक्षविरोध इति भावः। विरुद्धो लोकदृष्ट्या अविरुद्धः प्रमाणैः न मन्ता वक्ता स्वामी प्रवर्तको यस्यासौ तथोक्तः। शब्दैकसमधिगम्ये न युक्तिविरोध इत्यत्र स्मृतिं चाह ॥ यदिति ॥ २८ ॥

भावदीपः---

॥ ॐ श्रुतेस्तु शब्दमूलत्वात् ॐ ॥ २८ ॥ ईश्वरपक्षेऽयं विरोध इति भाष्यानुरोधादाह ॥ कृत्स्नप्रसक्त्यादीति ॥ निरवयवत्वमादिपदार्थः ॥ युक्तीति ॥ व्याघातपर्यवसायियुक्तीत्यर्थः। एतच्चिताया: संगतिसाफल्ये वक्ति ॥ सर्वकर्तृत्वमिति ॥ न चेश्वरपक्षेऽयं विरोध इति भाष्यं नञ्परित्यागेन व्याचष्टे ॥ जीवकर्तृत्वेति ॥ कृत्स्नप्रसक्तेरिति ॥ न चेष्टापत्तिः। प्रेक्षावत्त्वभंगप्रसंगादिति भावः। जीवाद्विशेषादर्शनं परमेश्वर इति न्यायविवरणस्य शब्दमूलत्वादित्यादि सूत्रव्यावर्त्य-

मत्र शंकापूर्वं योजयति ॥ न हीति ॥ नन्वेवं यद्धि युक्त्या विरुध्येत तदीशकृतमेव हीति प्राचीननयभाष्येण कथं जीवकर्तृत्वोपपत्तिरुक्तेत्यत आह ॥ एतेनेति ॥ ईश्वरे जीवाद्विशेषादर्शनेनेत्यर्थः। एतत्सिद्धांतसिद्धमचिंत्यशक्तित्वं तस्योपेत्य तदीशकृतमेवेति समाधानस्य शिष्यहितार्थं तत्रोक्तावप्यत्र पूर्वपक्षे तस्यासंमतेरिति भावः ॥ अत इति ॥ कृत्स्नप्रसक्त्यादिदोषसंभवात्तदपवादकस्य विशेषस्य चादर्शनादित्यर्थः। यद्वा जीवाद्विशेषादर्शनेन कृत्स्नप्रसक्त्यादियुक्तिविरोधादित्यर्थः ॥ छ ॥ पूर्ववदत्रापि तु शब्दो जीवसाम्यव्यावर्तक इति भावेन न चेश्वरेत्यादिभाष्यं तस्य प्रागेव विवृतत्वात्तद्भावविवरणफलं न युक्तिविरोध इत्येददेवानुवदन् भाष्यं व्यनक्ति ॥ नेश्वरेति ॥ शब्दैकसमधिगम्यत्वसर्वशक्तित्वादीनां विशेषाणामदर्शनं जीवे। न जीवाद्विशेषादर्शनं परमेश्वरे विशेषश्रुतेरेवेति न्यायविवरणरीत्या शब्दमूलत्वाच्चेत्येतच्छंकापूर्वं व्यनक्ति ॥ नन्विति ॥ श्रुत्यादीति ॥ नावेदविन्मनुते तमित्यादि श्रुतिस्मृतिसिद्धत्वादित्यर्थः। एतेन विशेषश्रुतेरेवेति श्रुतिपदमुपलक्षणमिति दर्शितम्। भाष्योक्तश्रुत्यर्थमाह ॥ विरुद्ध इति ॥ तथोक्त इति ॥ अमनुरवागनिंद्रोऽप्रवृत्तिरित्युक्त इत्यर्थः ॥ २८ ॥

सूत्रभाष्यम्—

## ॥ ॐ आत्मनि चैवं विचित्राश्च हि ॐ ॥ २९ ॥

परमात्मनो विचित्राश्च शक्तयस्सान्ति, नान्येषाम्।

'विचित्रशक्तिः पुरुषः पुराणो न चान्येषां शक्तयस्तादृशाः(शः) स्युः।
एको वशी सर्वभूतान्तरात्मा सर्वान्देवानेक एवानुविष्ट' ॥

इति श्वेताश्वतरश्रुतिः ॥ २९ ॥

तत्वप्रकाशिका—

जीव एव युक्तिविरोधो नेश्वर इत्येतमर्थं युक्त्यन्तरेण प्रतिपादयत्सूत्रमुपन्यस्य व्याचष्टे ॥ आत्मनीति ॥ युक्तिविरोधनिरासकविचित्रशक्तिसद्भावादीश्वरे न युक्तिविरोधः। तदभावाज्जीव एव चासावित्यर्थः। आद्यश्चशब्द एवार्थः। तेन नान्येषामिति सिद्ध्यति। तदुक्तम्। 'अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्'। इति ईश्वरस्यैव विचित्रशक्तित्वं नान्येषामित्येतत्कुत इत्यतो हीति सूचितां श्रुतिं दर्शयति ॥ विचित्रेति ॥ २९ ॥

भावदीपः—

॥ ॐ आत्मनि चैवंवि० ॐ ॥ २९ ॥ विचित्राश्चेति चशब्दादाह ॥ युक्त्यंतरेणेति ॥ न केवलं शब्दमूलत्वादित्यर्थः। सौत्रैवंशब्दार्थमाह ॥ युक्तिविरोधनिरासकेति ॥ न युक्तिविरोध इति पूर्वभाष्योक्तसाध्ये परमात्मन इत्यादिभाष्यं हेतुत्वेन व्याचष्टे ॥ विचित्रेत्यादिना ॥ नान्येषामित्येतत्सूत्रारूढं करोति ॥ आद्य इति ॥ उक्तहेत्वोरप्रयोजकत्वशंकानिरासाय नियामकमाह ॥ तदुक्तमिति ॥ एकादशगीताभाष्योक्तविष्णुपुराणवाक्य इत्यर्थः ॥ श्रुतिं दर्शयतीति ॥ एतेन विशेषश्रुतेरेवेत्येतद्विवृतं ध्येयम्।

सूत्रभाष्यम्— ॥ ॐ **स्वपक्षदोषाच्च** ॐ ॥ ३० ॥

'ये दोषा इतरत्रापि ते गुणाः परमे मताः।
न दोषः परमे कश्चिद्गुणा एव निरन्तरा'

इति वचनाज्जीवपक्ष एव दोषो न परपक्षे। 'अथ यस्सदोषः साञ्जनः सजनिः स जीवोऽथ यः स निर्दोषो निष्कलः सगुणः परः परमात्मे'ति काषायणश्रुतिः ॥ ३० ॥

तत्वप्रकाशिका—

ननु यथा शब्दैकसमधिगम्यत्वादिना विष्णोर्युक्तिविरोधोऽप्यविरोधतां नीयते तथा चेतनत्वादिना जीवेऽपि किं न नीयते। अन्यथेश्वरेऽपि न नेतव्य इत्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ स्वपक्षेति ॥ जीवपक्षे युक्तिविरोधो दोष एव न त्वदोषतां नेतव्यः किं तु परमेश्वरपक्ष एव। कुतः। 'ये दोषाः' इति वचनेन सयुक्तिकमुक्तत्वादिति भावः। दोषा भगवदितरत्र प्रतीताश्चेत्तर्हि ते दोषा एव न तु कयाचन विधया दोषतां नेतव्याः। तत्र दोषाणां संभवेन कल्पकाभावात्। त एव चेद्विष्णौ प्रतीयन्ते तर्हि तेऽचिन्त्यशक्त्यादिना गुणा एव कल्पनीया न दोषाः। भगवतो निर्दोषनिर्भेदगुणतया श्रुतिसिद्धत्वेन कल्पकसद्भावादिति वचनार्थः। ईश्वरवज्जीवस्यापि निर्दोषत्वात्तत्र प्रतीतदोषोऽन्यथैव नेतव्य इत्यत आह ॥ अथेति ॥ साञ्जनः पुण्यपापादिलेपयुक्तः। च शब्द एवार्थोऽतो न परपक्ष इत्याह ॥ ३० ॥

भावदीपः—

॥ ॐ स्वपक्ष इति० ॐ ॥ ३० ॥ सौत्रचशब्दोऽवधारणे भाष्ये च भिन्नक्रम इति भावेन जीवपक्ष एवेत्यादिवाक्यं व्याचष्टे ॥ जीवपक्ष इति ॥ अप्रतीतेरुक्तार्थपरतया श्रुतिं योजयति ॥ दोषा इति ॥ निरंतरा इत्यस्यार्थो ॥ निर्भेदेति ॥ ३० ॥

सूत्रभाष्यम्--

॥ ॐ सर्वोपेता च तद्दर्शनात् ॐ ॥ ३१ ॥

'सर्वैर्युक्ता शक्तिभिर्देवता सा परेति यां प्राहुरजस्रशक्तिम् ।

नित्यानन्दा, नित्यरूपाऽजरा च या शाश्वताऽत्मेति च यां वदन्ति' ॥

इति च चतुर्वेदशिखायाम् ॥ अतो न केवलं विचित्रशक्तिः, किन्तु सर्वशक्तिरेव ॥३१॥

तत्वप्रकाशिका--

यदुक्तं विचित्रशक्तित्वान्नेश्वरे विरोध इति तदसत् । सा विचित्रशक्तिर्यदाल्पविषया भवति यदा च नश्यति तदा तत्र विरोधनियमादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ सर्वेति ॥ न केवलं सामान्यतो विचित्रशक्तिरीश्वरः किं तु सर्वविषये सर्वदाविद्यमानविचित्रशक्तिः । यतः । 'सर्वैर्युक्ते'ति श्रुतौ तथोक्तमिति भावः । सर्वैः सर्वविषयाभिः । अजस्रशक्ति नित्यशक्तिम् । श्रुत्यनुसारेण स्त्रीलिङ्गप्रयोगः ॥ ३१ ॥

भावदीपः--

॥ ॐ सर्वोपेता च तद्दर्शनात् ॐ ॥ ३१ ॥ व्युत्क्रमेण भाष्यं व्याकुर्वन् सूत्रार्थमाह ॥ न केवलमिति ॥ चः समुच्चय इति भावः । प्रकृतोपयोगितां श्रुतेर्दर्शयितुं पदद्वयार्थमाह ॥ सर्वैरिति ॥ आत्मनीतिप्रकृतत्वात्कथं सर्वोपेतेति सूत्रे प्रयोग इत्यत आह ॥ श्रुतीति ॥

सूत्रभाष्यम्--

॥ ॐ विकरणत्वान्नेति चेत्तदुक्तम् ॐ ॥ ३२ ॥

न च करणाभावादनुपपत्तिरिति युक्तम् ।

'अपाणिपादो जवनो गृहीता पश्यत्यचक्षुः स श्रृणोत्यकर्णः ।

स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम्' ।

(श्वे. उ. ३-१९)

'न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते ।

पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च'

(श्वे.उ.६–८)त्यादि श्रुतिभ्यः। 'सर्वोपेता चे'ति सामान्यपरिहारेऽपि विशेषयुक्त्यर्थं पुनराशङ्का ॥ ३२ ॥ इति शब्दमूलत्वाधिकरणम् ॥ ८ ॥

तत्वप्रकाशिका—

विष्णोर्जगत्कर्तृत्वमाक्षिप्य समाधत्सूत्रमुपन्यस्य व्याचष्टे ॥ विकरणत्वादिति ॥ नेश्वरस्य कर्तृत्वं युक्तम्। 'अचक्षुः श्रोत्रं तदपाणिपादम्' इति श्रुतेस्तस्य हस्तादि-करणशून्यत्वात्। न हि हस्तादिविरहिणो मृतस्य कर्तृत्वमिति न मन्तव्यम्। 'अपाणिपादम्' इति श्रुतौ पाण्यादिविरहिणोऽपि हरेर्ग्रहणादिकमुक्त्वा 'न तस्य कार्यम्' इति पाण्यादिरहितत्वस्य प्राकृतविषयत्वेन सर्वोत्तमत्वेन परमशक्तित्वेन चोपपादित त्वादिति भावः। ननु पूर्व सूत्र एव विचित्रशेषशक्तिबलेन निखिलविरोधानां परिहृतत्वा त्कथमेतच्छङ्कावकाश इत्यत आह ॥ सर्वेति ॥ सामान्यतः सर्वविरोधानां परिहृतत्वेऽपि विशेषतोऽस्यैव चोद्यस्य परिहाराय युक्तिबुभुत्सया पुनः शङ्केत्याशयः। विशेषयुक्तिस्तु प्राकृतशरीराभावेऽपि चिदानन्दाद्यात्मकविग्रहत्वादिः प्रमाणविशेष एव वा। अतो विष्णोर्जगत्कारणत्वे विरोधाभावाद्युक्तं लक्षणसूत्रमितिसिद्धम् ॥ ३२ ॥ अ० ८ ॥

भावदीपः—

॥ ॐ विकरणत्वा ० ॐ ॥ ३२ ॥ करणाभावादनुपपत्तिरिति भाष्यं विवृण्वन् विकरणत्वान्नेति सूत्रखंडार्थमाह ॥ नेश्वरस्येति ॥ इति श्रुतेरिति ॥ तद्दर्शनादित्यनुवृत्ति वा तात्पर्यलब्धतां वा मत्वैवमुक्तम्। मृतस्य त्यक्तदेहस्य न च युक्तमित्यस्यार्थो न मंतव्यमिति। सूत्रे नञः आवृत्तिर्वा अध्याहारो वेति भावः। भाष्योक्तवाक्यचतुष्टय-स्याप्युपयोगमाह ॥ अपाणिपाद इतीति ॥ प्रमाणविशेष एवेति ॥ विशेषयुक्तिशब्दार्थ इति शेषः। अपाणिपाद इत्याद्युक्तरूप इति भावः। अन्यभावव्यावृत्तेश्चेत्यत्राप्राकृत-विग्रहस्योक्तत्वाशयेन द्वितीयपक्षोक्तिः ॥ अत इति ॥ श्रौतत्वशब्दमूलत्वादेर्जीवादति-शयस्य भावादित्यर्थः ॥ ३२ ॥ अ० ८ ॥

सूत्रभाष्यम्—

यत्प्रयोजनार्थं सृष्ट्यादिस्तदूनत्वान्न पूर्णतेत्यत आह—

॥ ॐ न प्रयोजनत्वात् ॐ ॥ ३३ ॥

'अथैष एव परम आनन्द'(बृ.उ.६–३–३३) इत्यादिना कृतकृत्यत्वान्न प्रयोजनाय सृष्टिः ॥ ३३ ॥

तत्वप्रकाशिका—

अत्रेश्वरस्य जगत्कर्तृत्वे निष्फलत्वादियुक्तिविरोधपरिहारादस्ति शास्त्रादिसंगतिः। जगत्कर्तेश्वर इत्यभिहितम्। तस्य च युक्तिविरुद्धत्वे लक्षणासंभवप्रसङ्गादसौ निराकरणीयः। जन्मादिकर्तृत्वं विषयः। ईश्वरस्य युक्तमयुक्तं वेति संशयः। उक्तरीतिरफलत्वं च संदेहबीजम्। सयुक्तिकं पूर्वपक्षयति ॥ यदिति ॥ न विष्णोः स्रष्टृत्वादि युक्तम्। तथा हि। किमसौ प्रयोजनमपेक्ष्य सृष्ट्यादिकं करोति प्रयोजनमनपेक्ष्यैव वा। नोभयथापि सर्वकर्तृत्वम्। प्रयोजनापेक्षितत्वे सृष्ट्यादेः पूर्वमपूर्णत्वप्रसङ्गात्। अपूर्णस्य च न सर्वकर्तृत्वं यज्ञदत्तवत्। प्रयोजनानुद्देशेन प्रवृत्तिरेव न दृष्टा कुतः सर्वकर्तृत्वम्। अतः प्रकारद्वयेनापि विष्णोः सर्वकर्तृत्वाद्यनुपपत्तेर्विधान्तरस्य चाभावादयुक्तं जन्मादिकारणत्वलक्षणमिति भावः। सिद्धांतयत्सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ युक्तमेव विष्णोः सर्वकर्तृत्वादि। न चोक्तदोषः। तस्य पूर्णानन्दत्वेन प्राप्तप्राप्तव्यत्वात्फलानुद्देशेन (नैव) प्रवृत्त्यभ्युपगमादित्यर्थः ॥३३॥

भावदीपः—

॥ ॐ न प्रयोजनवत्त्वात् ॐ ॥ ३३ ॥ निष्फलत्वादीति ॥ भाष्योक्तापूर्णत्वयुक्तिरादिपदार्थः। अग्न्यादेः स्वभावादेवोर्ध्वज्वलनादिप्रवृत्तिनिवृत्तिवदप्रयोजनसृष्ट्यादेरपि संभवेन फलनिर्धारणेन कथं भाष्ये अपूर्णतापादनमित्यतो विकल्प्याद्येफला(पे)कांक्षिणस्त्वपूर्णत्वादेव न सर्वकर्तृत्वादिशक्तिरिति न्यायविवरणरीत्या भाष्यभावमाह ॥ किमसावित्यादिना ॥ द्वितीये प्रयोजनाभावो कर्तृत्वे कारणमिति न्यायविवरणभावमाह। प्रयोजनेति ॥ प्रवृत्तिरेव न दृष्टेति ॥ चेतनस्य प्रेक्षावतो निष्फलप्रवृत्तेरदर्शनादित्यर्थः ॥ अत इति ॥ फलोद्देशेऽनुद्देशे च सृष्टेर्युक्तिविरुद्धत्वादित्यर्थः ॥ छ ॥ इतरस्य पूर्णत्वादेवानंतशक्तित्वाल्लीलयैव कर्तृत्वमिति न्यायविवरणदिशा साध्यमध्याहृत्योक्तशंकानिरासकत्वेन भाष्यं योजयति ॥ युक्तमिति ॥ प्रयोजनवत्त्वादिति सौत्रपदस्य भाष्यं कृतकृत्यत्वादिति। तस्य व्याख्याप्राप्तप्राप्तव्यत्वादिति। अथैष इति वाक्यस्यार्थः पूर्णानंदत्वेनेति। नेत्यस्य भाष्यं न प्रयोजनाय सृष्टिरिति। तस्यार्थः फलानुद्देशेनेति ॥ ३३ ॥

सूत्रभाष्यम्— ॥ ॐ लोकवत्तु लीलाकैवल्यम् ॐ ॥ ३४ ॥

यथा लोके मत्तस्य सुखोद्रेकादेव नृत्तगानादिलीला न तु प्रयोजनापेक्षया, एवमेवेश्वरस्य ॥ नारायणसंहितायां च—

'सृष्ट्यादिकं हरिर्नैव प्रयोजनमपेक्ष्य तु ।
कुरुते केवलानन्दाद्यथा मत्तस्य नर्तनम् ॥
पूर्णानन्दस्य तस्येह प्रयोजनमतिः कुतः ।
मुक्ता अप्याप्तकामाः स्युः किमु तस्याखिलात्मन' इति ॥

'देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहे'(मां. उ. २-९) ति च श्रुतिः ॥ ३४ ॥

॥ इति नप्रयोजनाधिकरणम् ॥ ९ ॥

तत्वप्रकाशिका—

फलानुद्देशे प्रवृत्त्यनुपपत्तिरिति भावेन पृच्छति ॥ किं त्विति ॥ तत्परिहाराय सूत्रमुपन्यस्य व्याचष्टे ॥ लोकवदिति ॥ प्रयोजनानुद्देशे कीदृशी प्रवृत्तिरिति चेत्पृच्छसि तर्हि तस्याः केवललीलात्वं ब्रूमः । न हि लीला प्रयोजनान्तराय भवति । मत्तादिलीलायाः फलानुद्देशेन सुखोद्रेकादेव दर्शनात् । अतः पूर्णानन्दोऽपि भगवान् लोकानुग्रहाय सृष्टयादिक्रीडां करोतीति न किंचिदयुक्तमिति भावः । अत्रैव स्मृतिश्रुती दर्शयति ॥ नारायणेति ॥ अखिलस्वामिनस्तस्याप्तकामता किमु वक्तव्येत्यर्थः । तस्माद्विरोधाभावाद्युक्तं लक्षणमिति सिद्धम् ॥ ३४ ॥ अ० ९ ॥

भावदीपः—

॥ ॐ लोकवत्तु लीला० ॐ ॥ ३४ ॥ एवमेवेश्वरस्येति भाष्यरीत्या लीलाकैवल्यमिति सूत्रांशस्यार्थमाह ॥ तस्या इति ॥ यथेत्यादेरर्थो मत्तेति । सौत्रस्तुरेवार्थ इति भावेन सुखोद्रेकादेवेत्युक्तम् । तस्य विवरणं फलानुद्देशेनेति । सर्वथा नैष्फल्यभ्रमं निरस्यन्समग्रभाष्यभावमाह ॥ अत इति ॥ प्राप्तप्राप्तव्यत्वादित्यर्थः ॥ लोकेति ॥ स्वप्रयोजनार्थत्वाभावेऽपि दयालुप्रवृत्ताविव परप्रयोजनार्थत्वमस्तीति भावः। किमु तस्याखिलात्मन इत्यस्यार्थोऽखिलेति ॥ तस्मादिति ॥ ईशप्रवृत्तेः केवल लीलात्वोपगमादित्यर्थः ॥ ३४ ॥ अ० ९ ॥

सूत्रभाष्यम्— सर्वकर्तृत्वे वैषम्यनैर्घृण्ये तस्येत्यतो वक्ति—

**॥ ॐ वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॐ ॥ ३५ ॥**

कर्मापेक्षया फलदातृत्वान्न तस्य वैषम्यनैर्घृण्ये । 'पुण्येन पुण्यं लोकं नयति पापेन पापमि(प्र. उ. ३-७)ति हि श्रुतिः ॥ ३५ ॥

तत्वप्रकाशिका–

अत्र विष्णोः सर्वकर्तृत्वे वैषम्यादिदोषप्राप्तियुक्तिविरोधपरिहारादस्ति शास्त्रादिसंगतिः। जगज्जन्मादिकर्तृत्वं हरेरुक्तम्। तस्य युक्तिविरोधे लक्षणस्यासंभवित्वं स्यादतोऽसौ निराकर्तव्य एव। जन्मादिकर्तृत्वमेव विषयः। ईश्वरस्य युक्तमयुक्तं वेति संदेहः। श्रुतिविरोधदर्शनं च संदेहबीजम्। सयुक्तिकं पूर्वपक्षयति ॥ सर्वेति ॥ न विष्णोः सर्वकर्तृत्वं युक्तम्। तथा हि। किमसौ प्राणिकर्मसापेक्षः सृष्ट्यादि करोति तदनपेक्षो वा। नाद्यः। नियमेन कर्मापेक्षया प्रवर्तमानस्यास्वातन्त्र्यापातात्। अस्वतन्त्रस्य च सर्वकर्तृत्वानुपपत्तिः। द्वितीये वैषम्यनैर्घृण्ये स्याताम्। निर्निमित्तं विभागेन सुखादिप्रदानात्। वैषम्यादिदोषवतश्च न सर्वकर्तृत्वम्। कर्मानपेक्षया सर्वकर्तृत्वे च 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादिवेदाप्रामाण्यं च स्यात्। अतो हरेः सर्वकर्तृत्वायोगान्न युक्तं लक्षणमिति भावः। सिद्धांतयत्सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ युक्तमेव विष्णोः सर्वकर्तृत्वम्। न चोक्तदोषप्रसङ्गः। कर्मापेक्षया फलदातृत्वाङ्गीकारे वैषम्यादिदोषाभावादिति भावः ॥ ३५ ॥

भावदीपः—

॥ ॐ वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॐ ॥ ३५ ॥ युक्तीति ॥ कर्मसापेक्षत्वेऽनपेक्षत्वे च दोषप्राप्तिरिति बहुमुखदृढयुक्तीत्यर्थः। सापेक्षत्वेन वैषम्यादिनिराससंभवात्कथं भाष्ये दोषनिर्धारणमित्यतः कर्मसापेक्षत्वेऽनीश्वरत्वमनपेक्षत्वे श्रुतेरप्रामाण्यमिति न्यायविवरणं विवृण्वन्पक्षभेदेन भाष्यं योजयितुं विकल्पयति ॥ किमसाविति ॥ कर्मसापेक्षत्वेनेश्वरस्यास्वातंत्र्यमिति वक्ष्यमाणदिशाऽस्वातंत्र्यापातादित्युक्तम्। भाष्ये सर्वकर्तृत्वे इत्युक्तेराह ॥ सर्वकर्तृत्वानुपपत्तिरिति ॥ पूर्णत्वासिद्धिरिति न्यायविवरणोक्तिस्तु सर्वकर्तृत्वानुपपत्तिफलाशयेति भावः। भाष्यं योजयति ॥ द्वितीय इति ॥ अन्यत्रोक्तं दोषांतरं चाह ॥ कर्मेति ॥ अप्रामाण्यं चेति समुच्चयोक्त्याऽनपेक्षत्वपक्षे दोषभेदोक्तिपरयोर्ग्रंथयोरविरोधश्चोक्तो ध्येयः ॥ अत इति ॥ कर्मसापेक्षत्वेऽनपेक्षत्वे च युक्तिविरोधादित्यर्थः ॥ छ ॥ उक्तदोषनिरासकतया भाष्यसूत्रे तात्पर्यतो व्याचष्टे ॥ कर्मेति ॥ अत्रोक्तदोषोऽग्रे निरसिष्यत इति भावः ॥ ३५ ॥

सूत्रभाष्यम्—

॥ ॐ न कर्माविभागादिति चेन्नानादित्वात् ॐ ॥ ३६ ॥

यदपेक्षयाऽसौ फलं ददाति न तत्कर्म । 'एष ह्येवैनं साधुकर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत एष उ एवासाधुकर्म कारयति तं यमधो निनीषत' (कौ. उ. ३-८) इति श्रुतेः कर्मणोऽपि तन्निमित्तत्वादिति चेन्न । तस्यापि पूर्वकर्म कारणमित्यनादित्वात्कर्मणः । भविष्यत्पुराणे च—

'पुण्यपापादिकं विष्णुः कारयेत्पूर्वकर्मणा ।
अनादित्वात्कर्मणश्च न विरोधः कथञ्चने'ति ॥ ३६ ॥

तत्वप्रकाशिका—

कर्मापेक्षया फलदातृत्वमाक्षिप्य समादधत्सूत्रमुपन्यस्याक्षेपांशं तावद्व्याचष्टे ॥ न कर्मेति ॥ कर्मापेक्षया फलं ददातीश्वर इत्ययुक्तम् । यदपेक्षया फलं दद्यात् तस्यापेक्ष्यस्य कर्मण एवाभावात् । अस्ति पूर्वं कर्मेति चेत् । सत्यम् । तस्याप्येष ह्येवेति श्रुतौ भगवदधीनत्वश्रवणात्स्वकृतापेक्षया फलदानेन वैषम्यादेर्निस्तारात् । अतो न कर्मापेक्षा संभवतीति भावः । उन्निनीषते ऊर्ध्वं नेतुमिच्छति । परिहारांशं व्याचष्टे ॥ नेति ॥ नापेक्ष्य कर्माभावो वक्तव्यः । पूर्वकर्मणः सत्त्वात् । न च वाच्यं तस्यापि भगवन्निमित्तत्वेनानपेक्ष्यतेति । भवेदेतद्यदि पूर्वतनं कर्मेश्वरेण निरपेक्षेण क्रियेत । नै(न)तदस्ति । ततोऽपि पूर्वतनकर्मापेक्षया तस्य कारितत्वात् । तादृशस्य चापेक्ष्यतोपपत्तेः । न च पूर्वतरस्यापीश्वरनिर्मितत्वादनपेक्षता । तस्यापि पूर्वतनकर्मापेक्षयैव कारितत्वात् । न च मन्तव्यं यत्रैव पर्यवसानं तदारभ्य दोष इति । अनादित्वात्कर्मपरम्पराया इति भावः ॥ ३६ ॥

भावदीपः—

॥ ॐ न कर्माविभागादिति० ॐ ॥ ३६ ॥ असंगतिनिरासाय शेषपूर्त्या भाष्यं व्यनक्ति ॥ कर्मेति ॥ लोकेऽविभक्ते स्वतंत्र इति प्रयोगादविभागादिति पदस्य कर्मणोऽपि तन्निमित्तत्वादिति भाष्यम् । तदर्थः भगवदधीनत्वेति । नञो न कर्मेत्यनेनान्वयमुपेत्याह ॥ नापेक्ष्य कर्माभावो वक्तव्य इति ॥ ३६ ॥

सूत्रभाष्यम्—

॥ ॐ उपपद्यते चाप्युपलभ्यते च ॐ ॥ ३७ ॥

न च कर्मापेक्षत्वेनेश्वरस्यास्वातन्त्र्यम् ।

'द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ।
यदनुग्रहतः सन्ति न सन्ति यदुपेक्षये'

त्यादिना कर्मादीनां सत्त्वस्यापि तदधीनत्वात् । न च पुनर्वैषम्याद्यापातेन दोषः । तादृशवैषम्यादेरुपलभ्यमानत्वात् ।

'स कारयेत्पुण्यमथापि पापं न तावता दोषवानीशिताऽपि ।
ईशो यतो गुणदोषादिसत्त्वे स्वयं परोऽनादिरादिः प्रजानामि'ति

चतुर्वेदशिखायाम् ॥ ३७ ॥ इति वैषम्यनैर्घृण्याधिकरणम् ॥ १० ॥

तत्वप्रकाशिका—

तथापि नियमेन कर्मापेक्षयैव फलदातुरीश्वरस्यास्वातन्त्र्यं प्रसज्जत इत्यादिशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ उपपद्यत इति ॥ नेश्वरस्य कर्मापेक्षयाऽस्वातन्त्र्यं किं तूपपद्यते च तत् । अपेक्ष्यकर्मसत्तादेरपि स्वाधीनत्वात् । नहि स्वाधीनसत्तादिमदपेक्षायामस्वातन्त्र्यं भवति । अपेक्षा तु वैषम्याद्यप्राप्तये स्वेच्छानिमित्तैव । यदि कर्मादिसत्तापि तदधीना तर्हि तदपेक्षा नामानपेक्षैवार्थाद्भवति । तथा च पुनर्वैषम्याद्यापातः स्यात् । तेन च दोषित्वमिति चेन्न । स्वाधीनकर्मापेक्षया फलदानरूपवैषम्यादेरीश्वरेऽदोषतयैव श्रुतावुपलभ्यमानत्वादिति भावः । कासौ श्रुतिरिति तामुदाहरति ॥ स इति ॥ स स्वाधीनकर्मापेक्षया पुण्यादि कारयेत् । एवं तस्य कर्मण ईशितापि तावता न वैषम्यादिदोषवानित्यर्थः । एवं तर्हि कर्मापेक्षाऽपि निष्फला तदभावेऽपि दोषाभावसंभवादिति । मैवम् । कर्मानपेक्षत्वे वेदाप्रामाण्यप्रसङ्गात् । तदुक्तम् । 'वैषम्यं निर्घृणत्वं च वेदाप्रामाण्यकारणम् । नाङ्गीकार्यमतोऽन्यत्तु न वैषम्यादिनामकम्' इति । अतो हरेः सर्वकर्तृत्वे विरोधाभावाद्युक्तं लक्षणमिति सिद्धम् ॥ ३७ ॥ अ० १० ॥

भावदीपः—

॥ ॐ उपपद्यते चाप्युपलभ्यते च ॐ ॥ ३७ ॥ पूर्वोक्तचोद्यमाशंकते ॥ तथापीति ॥ सापेक्षत्वांगीकारेण वैषम्यादिदोषनिरासेऽपीत्यर्थः । भाष्यमनुवदन् तच्छेषतया सूत्रांशं योजयति ॥ नेश्वरस्येति ॥ भाष्यशेषं व्याचष्टे ॥ अपेक्ष्येति ॥ किमर्थं नियमेन तदपेक्षत इत्यत आह ॥ अपेक्षा त्विति ॥ न च पुनरित्यादिभाष्यं व्याचष्टे ॥ यदीति ॥ कर्मणोऽपि तदधीनत्वं तथापि तदनुसारेण फलदानमित्यंगीकार एव

श्रुतिप्रामाण्यसिद्धिरिति न्यायविवरणं शंकापूर्वं व्यतिरेकमुखेनोपपादयति ।। एवं तर्हीति ।। वेदेति ।। ज्योतिष्टोमेन स्वर्गकाम इत्यादिवेदेत्यर्थः । तदुक्तं अनुव्याख्यान इत्यर्थः ।। अत इति ।। स्वाधीनकर्मापेक्षयैवेश्वरस्य फलदातृत्वांगीकारात् तन्निमित्तवैषम्यादेरदोषत्वाच्चेत्यर्थः ।। ३७ ।। अ० १० ।।

सूत्रभाष्यम्—

अवशिष्टैरुपसंहरति—

।। ॐ सर्वधर्मोपपत्तेश्च ॐ ।। ३८ ।।

'गुणाः श्रुताः सुविरुद्धाश्च देवे सन्त्यश्रुता अपि नैवात्र शङ्का ।
चिन्त्या अचिन्त्याश्च तथैव दोषाः श्रुताश्च नाङ्गैर्हि तथा प्रतीता'

इति सर्वगुणोपपत्तिश्रुतेश्च (पा. सर्वधर्मोपपत्तेरिति) ।। ३८ ।।

।। इति सर्वधर्मोपपत्त्यधिकरणम् ।। ११ ।।

।। इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये द्वितीयाध्यायस्य प्रथमः पादः ।।

तत्वप्रकाशिका—

सर्वेषां युक्तिविरोधानां परिहृतत्वात्किमुत्तरसूत्रेणेत्यतस्तात्पर्यमाह ।। अवशिष्टैरिति ।। विशिष्य प्रतिपादितेभ्यः स्रष्टृत्वादिगुणेभ्योऽवशिष्टैः सर्वगुणैः प्रतिपादितैरुपसंहरति । किमुक्तं भवति । उक्तावशिष्टान् सर्वगुणान् युक्तिविरोधपरिहारेण समर्थ्य विष्णोः पूर्णगुणत्वं निगमयत्यत्र सूत्रकर्तेत्यर्थः । अत एवात्र विष्णोः पूर्णगुणत्वे युक्तिविरोधपरिहारादस्ति शास्त्रादिसंगतिः । समस्तगुणसंपूर्णो विष्णुरित्युक्तम् । तस्य च युक्तिविरुद्धत्वे पूर्वाध्यायो बाधितः स्यात् । अतोऽसौ परिहर्तव्यः । विष्णोर्गुणपूर्णत्वं विषयः । युक्तमयुक्तं वेति संदेहः । पूर्वाध्यायोऽन्यत्रादर्शनं च संदेहबीजम् । न युक्तमिति पूर्वः पक्षः । सर्वचेतनानामपूर्णत्वनियमात् । अस्यापि चेतनत्वेनापूर्णताया अवश्यंभावित्वात् । अन्यथातिप्रसङ्गादिति प्राप्ते सिद्धांतयत्सूत्रं पठित्वा व्याचष्टे ।। सर्वेति ।। नायुक्तं विष्णोः पूर्णत्वम् । तस्य चेतनत्वेऽपि स्वातंत्र्यादिना सर्वगुणोपपत्तेः । स्वातन्त्र्यादिमतः पूर्णगुणत्वनियमात् । न केवलं युक्त्या

सर्वधर्मोपपत्तिः किं तर्हि 'गुणाः श्रुताः' इति सर्वधर्मोपपादकश्रुतेश्चेति भावः। सुविरुद्धा लोकदृष्ट्या। अश्रुता अपि रमादिचिन्त्यास्तदचिन्त्याश्चेत्यर्थः। अतो विष्णोः सर्वगुणपूर्णत्वे युक्तिविरोधगन्धाभावादुक्तं सर्वमुपपन्नमिति सिद्धम् ॥ ३८ ॥ अ० ११ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्रभाष्यस्य टीकायां श्रीमज्जयतीर्थमुनिविरचितायां तत्त्वप्रकाशिकायां द्वितीयाध्यायस्य प्रथमः पादः ॥

॥ श्रीरस्तु ॥

भावदीपः—

॥ ॐ सर्वधर्मोपपत्तेश्च ॐ ॥ ३८ ॥ सर्वेषामिति ॥ स्मृतियुक्तिश्रुतिगुणयुक्तयो बहुयुक्तयः। एवं चतुर्विधा नैव विरुध्यंतेऽन्वयं प्रतीति ॥ समयपादीयानुभाष्योक्तरीत्या सर्वयुक्तिविरोधानामित्यर्थः। एतद्विवेकश्चैतत्पादांते चंद्रिकायां स्पष्टः। प्रतिपादितस्यैवोपसंहार इत्यतः ॥ प्रतिपादितैरिति॥ आद्याध्यायेऽनंतशब्दसमन्वयेनेति भावः। कथं गुणानामुपसंहारे करणत्वं कथं चास्योपसंहाररूपत्वे न्यायशास्त्रे अध्यायपादयोश्चांतर्भाव इति भावेन पृच्छति ॥ किमुक्तं भवतीति ॥ भावार्थमाह ॥ उक्तेति ॥ विरोधनिरासेन स्थापितेत्यर्थः। समर्थ्य न्यायेनोपपाद्येत्यर्थः ॥ अत एवेति ॥ सर्वगुणानां युक्त्यविरोधेन स्थापनत्वादेवेत्यर्थः। पूर्वसंगतिर्चितासाफल्ये आह ॥ समस्तेति ॥ अन्यत्र चेतनांतरे सर्वचेतना अपूर्णगुणा इति नियम इति न्यायविवरणोक्तं परंपराहेतुतया योजयति ॥ सर्वचेतनानामिति ॥ चेतनत्वेनेति ॥ विमतो पूर्णश्चेतनत्वाज्जीवचेतनवदिति भावः। हेतोरप्रयोजकत्वं निराह ॥ अन्यथेति ॥ एवं नियमे सत्यपि चेतनत्वेनापूर्णत्वानभ्युपगमे सहचारनियमवता हेतुना क्वाप्यर्थसिद्धिर्न स्यादित्यर्थः ॥ छ ॥ योग्यसाध्यमध्याहृत्य सूत्राक्षरार्थमाह ॥ नायुक्तमिति ॥ न्यायविवरणोक्तं हेतुमाह ॥ स्वातंत्र्यादिनेति ॥ सर्वकर्तृत्वविचित्रशक्तित्वादिरादिपदार्थः। स्वातंत्र्यादि च तदनन्यत्वादिनयैः समर्थितमिति भावः। कुत इत्यतः स्वतंत्रस्य पूर्णगुणत्वनियमादिति न्यायविवरणोक्तमाह ॥ स्वातंत्र्यादिमत इति ॥ स्वतंत्रस्येत्युपलक्षणमिति भावः। एतेन विष्णुः पूर्णगुणः स्वतंत्रत्वात् तत्प्रेप्सुत्वे सति तत्र शक्तत्वादित्याद्युपपत्तय उक्ता भवंति। न्यायविव-

रणरीत्या सर्वधर्मोपपत्तेरित्यंशं व्याख्याय सौत्रचशब्दव्याख्यानपरतया भाष्यं व्याचष्टे ॥ न केवलमिति ॥ युक्त्या स्वातंत्र्यादिनेत्यर्थः । नन्वश्रुता अपि रमादिचिंत्यास्तदचिंत्याश्च संतीत्ययुक्तम् । अनुक्तं पंचभिर्वेदैर्न वस्त्वस्तीत्युक्तिविरोधादिति चेत्सत्यं सामान्यतः श्रुता विशिष्याश्रुता इत्यर्थात् । उक्तं च प्राक्टीकायां गुणा अपि सामान्यतः श्रुता एवेत्यदोष इति ॥ अत इति ॥ पूर्णगुणत्वस्य श्रुतियुक्तिसिद्धत्वेन चेतनत्वयुक्तेस्तद्बाधितत्वादित्यर्थः । सर्वमुपपन्नमिति फलोक्तिः ॥ ३८ ॥ अ० ११॥

॥ इति श्रीमद्भाष्यटीकाभावदीपे राघवेंद्रयतिकृते द्वितीयाध्यायस्य प्रथमः पादः ॥

॥ श्रीकृष्णार्पणमस्तु ॥



॥ श्रीः ॥

॥ अथ द्वितीयः पादः ॥

सूत्रभाष्यम्—

॥ हरिः ॐ ॥ 'इतरेषां चानुपलब्धे'(ब्र. सू. २-१-२) रिति सामान्यनिराकरणं समयानां कृतम् । विशेषतो निराकरोत्यस्मिन्पादे ।

अचेतनप्रवृत्तिमतं प्रथमतो निराकरोति—

**॥ ॐ रचनानुपपत्तेश्च नानुमानम् ॐ ॥ १ ॥**

अचेतनस्य स्वतः प्रवृत्त्यनुपपत्तेर्नानुमानपरिकल्पितं प्रधानं जगत्कर्तृ । चशब्देन प्रमाणाभावं दर्शयति ॥ १ ॥

तत्वप्रकाशिका—

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः । एतत्पादप्रतिपाद्यं दर्शयति ॥ इतरेषामिति ॥ सर्वविरोधानां युक्तिमूलत्वेन तद्विरोधस्य प्राबल्यात्प्रथमपादे स निराकृतः । इतरविरोधत्रयेऽनादिकालानुवृत्तसमयविरोधस्यैव प्रबलत्वाच्छ्रुतिसमन्वयसिद्धे ब्रह्मणो जगत्कारणत्वे समयविरोधं परिहर्तुं तानस्मिन् पादे निराकरोति भगवान्सूत्रकारः । न च वाच्यमितरेषां चानुपलब्धेरिति कपिलकणादादिसमयानामुक्तानुपलब्ध्याऽनाप्तोक्तत्वेन निराकृतत्वाद् व्यर्थोऽयं पाद इति । तत्र सामान्यतो निराकृतानामत्र विशेषतो निराकरणात् । न ह्यनादिकालानुवृत्तानां प्रतीतिसुन्दराणां तेषां सामान्यतो निराकरणेऽधिकारिणो निःशङ्काप्रवृत्तिर्भवतीति भावः । आद्याधिकरणार्थं दर्शयति ॥ अचेतनेति ॥ समया द्विविधाः । हैतुकपाषण्डभेदात् । वेदवादिनां प्रथमपादे निराकृतत्वात् । 'अक्षपादकणादौ च सांख्ययोगौ च हैतुकाः । बौद्धपाशुपताद्यास्तु पाषण्डा इति कीर्तिताः' । तत्र पाषण्डेभ्योऽपि हैतुकाः प्रबलाः । युक्तिमत्त्वात् । तेषु च सांख्यचार्वाकसमयस्यैवातिविरोधित्वम् । ईश्वरनिरपेक्षाचेतनप्रवृत्तिवादित्वात् । तत्र चार्वाकसमयस्यातिविरोधित्वेऽप्यतितुच्छत्वेन प्रथमं निषेध्यतायोगादादौ सांख्यसमयो निराकर्तव्यः । स च द्विविधः । निरीश्वरः सेश्वरश्च । तत्र निरीश्वरस्यैवातिविरोधित्वम् । अतो निरीश्वरसांख्यमतमेवादौ निराकरोतीति भावः । अत एवात्र हरेर्जगत्कारणत्वे निरीश्वरसांख्यमतविरोधपरिहारादस्ति शास्त्रादिसंगतिः । विष्णुः सर्वकर्तेत्युक्तम् । तत्र च सांख्यमतविरोधे

लक्षणासंभवप्रसङ्गादसौ निराकर्तव्य एव। अतो विष्णोः सर्वकर्तृत्वं विषयः। युक्तं न वेति संदेहः। समयविवादः संदेहबीजम्। न युक्तमिति पूर्वः पक्षः। प्रकृतेरेव महदादिकारणत्वात्। भवितव्यं खलु कार्येण स्वसदृशकारणवतैव। अन्यथाऽतिप्रसङ्गात्। न हीश्वरस्य महदादिसारूप्यमीश्वरवादिभिरभ्युपेयते। न च प्रकृतिप्रेरकत्वेनेश्वरोऽङ्गीकर्तव्यः। केवलप्रकृतेरेव कर्तृत्वाभ्युपगमात्। न चान्यदीश्वराङ्गीकारे प्रयोजनं पश्यामः। अतः प्रकृतेरेवाशेषकर्तृत्वान्नेश्वरस्य कर्तृत्वं वास्तीत्युक्तमयुक्तमिति प्राप्ते सिद्धांतयत्सूत्रमुपन्यस्य व्याचष्टे ॥ रचनेति ॥ न कार्यं स्वसदृशकारणवत् कार्यत्वादित्यनुमानेन कारणतया कल्पितं प्रधानं जगत्कर्तृ। स्वतः प्रवृत्तिमदेव हि कर्तृ भवति। न च प्रधानस्य स्वतःप्रवृत्तिर्युक्ता अचेतनत्वाद् घटवत्। अतो युक्तं विष्णोर्जगत्कारणत्वमिति भावः। प्रामाणिकं प्रधानस्य जगत्कारणत्वं न युक्त्या निराकर्तुं शक्यमित्यत आह ॥ चशब्देनेति ॥ प्राचीनमनुमानं तु कारणत्वमात्रसाधकं न प्रकृतोपयोगि। स्वतःप्रवृत्तिसाधकं तु प्रमाणं नास्त्येवेति भावः ॥ १ ॥

भावदीपः—

श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः। वक्ष्यमाणभाष्येणैव पादार्थज्ञानसंभवादादौ तत्प्रदर्शनं व्यर्थमित्यतः संगत्यर्थत्वेन सार्थक्यमुपेत्य तथैव व्याचष्टे ॥ सर्वेति ॥ न विलक्षणत्वनयसिद्धनित्यनिर्दोषभाववेदविरोधतोऽपि सांख्यादिसमयानां कुत आदौ निरास इत्यत आह ॥ अनादीति ॥ अनादिकालतो वृत्ताः समया हि प्रवाहतः। न चोच्छेदोऽस्ति कस्यापीत्याद्यनुभाष्योक्तेरिति भावः। उक्ताहानेस्तन्निरासो व्यर्थ इत्यत आह ॥ श्रुतीति ॥ कर्माकांक्षां पूरयति ॥ तानिति ॥ विशेषतो निराकृतिर्व्यर्थेत्यत आह ॥ न हीति ॥ प्रथमतो निराकृतावचेतनपदसूचितं हेतुं वक्तुमाह ॥ समया इति ॥ ननु वेदवादरतो न स्यान्न पाषंडी न हैतुकीति समयत्रैविध्यस्य एकादशस्कंधोक्तेः कथं द्वैविध्यमित्यतोऽत्रपादे निराकार्यत्वाशयेनेति भावेनाह ॥ वेदवादिनामिति ॥ वेदेन सह वादो यो वेदवाद इतीरितः। तर्केण वेदस्यान्यार्थकल्पनं तद्विदो विदुरित्येकादशस्कंधतात्पर्योक्तलक्षणवेदवादिनामित्यर्थः। हैतुकादयः के इत्याकांक्षायां द्वितीये गीतातात्पर्योक्तनारदीयस्मृत्या दर्शयति ॥ अक्षपादेति ॥ सांख्यचार्वाकेति ॥ चार्वाकस्याहैतुकत्वेऽपि अचेतनप्रवृत्तिवादित्वसाम्यात्सांख्यमध्ये तन्निरास इति भावः ॥ निरीश्वरेति ॥ यद्यपि द्वितीयनयनिरस्यं सांख्यमतं सेश्वरं तथापि तेनेश्वरस्य स्वातंत्र्यास्वीकारेण निरीश्वरवादप्रायत्वा-

दीश्वरनिरपेक्षेत्युक्तम् ।। अतिविरोधित्वेऽपीति ।। अदृष्टमात्रानभ्युपगमादिति भावः ।। अतिविरोधित्वमिति ।। ईश्वराख्यविशेषस्यैवानभ्युपगमादिति भावः ।।अत एवेति ।। तन्मतस्यातिविरोधित्वेन तन्निराकरणस्यावश्यकत्वादेवेत्यर्थः। चिंतायाः पूर्वसंगतिसाफल्ये वक्ति ।। विष्णुरिति ।। अतः संगतिफलयोर्भावादित्यर्थः ।। समयेति ।। सांख्यवैष्णवसमयविवाद इत्यर्थः। अत्र न्यायविवरणे उक्तविरोधिनस्तत्तत्समयसिद्धाः पूर्वपक्षन्यायास्तद्विरोधिनोऽन्य इति प्रसिद्धमेवेत्युक्त्या एतत्पादीयन्यायविवरणाभावात् ।

वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य ।
पुरुषस्य विमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ।।

इति सांख्यकारिकाविवरणपरेणाचेतनस्य कर्तृत्वं स्वातंत्र्येण निगद्यत इत्यनुव्याख्यानेनोक्ततन्मतानुरोधेनानुमानपरिकल्पितं प्रधानं जगत्कर्तृ इति भाष्यं विवृण्वन्पूर्वपक्षमाह ।। प्रकृतेरिति ।। अत्रानुमानमाह ।। भवितव्यमिति ।। अनेन महदादिकं स्वसदृशकारणकं कार्यत्वात् घटवदित्यनुमानमुक्तं ध्येयम्। वृश्चिकतांडुलीयकादावपि तद्देहस्य स्वसदृशकारणकत्वमस्त्येवेति भावः। विपक्षे बाधकमाह ।। अन्यथेति ।। ।। अतिप्रसंगादिति ।। तंत्वादिनापि घटाद्युत्पत्तिप्रसंगादित्यर्थः। सिद्धसाधनतां निराह ।। नहीति ।। नन्वीश्वराभावे कस्यापि प्रवृत्त्ययोगेन प्रकृतेः कारणत्वमेव न स्यादिति तर्कपराहतिरिति भावेनाशंक्य निराह ।। न चेति ।। कर्तृत्वेति ।। स्वत एव प्रवृत्तिमत्त्वरूपकर्तृत्वाभ्युपगमादित्यर्थः ।। अत इति ।। ईश्वरांगीकारस्य निष्फलत्वादित्यर्थः ।। छ ।।

।। ॐ रचनानुपपत्तेश्च नानुमानं ॐ ।। १ ।। आकांक्षाक्रमेण भाष्यं व्याचष्टे ।। न कार्यमिति ।। उक्तसाध्ये भाष्योक्तहेतोरप्रयोजकत्वनिरासाय व्यतिरेकव्याप्तिमाह ।। स्वतः प्रवृत्तिमदेवेति ।। स्वतंत्रः कर्तेति स्मरणादिति भावः। भाष्यस्थहेतोः पक्षधर्मतामाह ।। न चेति ।। अचेतनस्येति हेतुगर्भं मत्वाह ।। अचेतनत्वादिति ।। ।। अत इति ।। प्रकृतेरेव कर्तृत्वमित्यस्यायोगादित्यर्थः। कार्यत्वमेव मानमित्यत आह ।। प्राचीनमिति ।। नास्त्येवेति ।। दृष्टांताभावात् पयोंऽब्वादेस्तु निरसिष्यमाणत्वादिति भावः। एतेनानुमानं न मानं विवक्षितार्थसाधकतया अनुमानरचनाया अनुपपत्तेरिति सूत्रस्यार्थांतरमुक्तं भवति ।। १ ।।

सूत्रभाष्यम्––

॥ ॐ प्रवृत्तेश्च ॐ ॥ २ ॥

चेतनस्य स्वतःप्रवृत्तिदर्शनाच्च ॥ २ ॥

तत्वप्रकाशिका––

एवं प्रधानस्य कारणत्वमचेतनत्वादिना निराकृत्य युक्त्यन्तरेणापि तन्निराकुर्वत्सूत्रमुपन्यस्य व्याचष्टे ॥ प्रवृत्तेश्चेति ॥ महदादिसृष्टिश्चेतनेच्छानुसारिणी सृष्टित्वात्पटसृष्टिवदित्यनुमानविरुद्धत्वाच्च नाचेतनस्य कारणत्वं संभवति । न च वाच्यं पटादिसृष्टावपि न चेतनस्य व्यापार इति। अहं करोमीति चेतनस्य प्रवृत्तिदर्शनादिति भावः । न चेदं व्यवहारमात्रमिति वाच्यम् । बाधकाभावात् । अन्यथा विशिष्टज्ञानमात्रलोपप्रसङ्गात् । प्रकृतेः कर्तृत्वं बाधकमिति चेन्न । परस्पराश्रयप्रसङ्गात् । प्रतिपादयिष्यति चैतदिति ॥ २ ॥

भावदीपः––

॥ ॐ प्रवृत्तेश्च ॐ ॥ २ ॥ अचेतनत्वादिनेति ॥ प्रमाणाभाव आदिपदार्थः। युक्त्यंतरेणेति ॥ चेतनकर्तृत्वसाधकयुक्त्या चेत्यर्थः। भाष्यं दृष्टांते साध्यवैकल्यनिरासकमिति व्याकरिष्यन् चेतनेच्छानुसारेण यदा दृष्टः पटोद्भवः । एतादृशत्वमन्यस्य वस्तुत्वात्केन वार्यत इत्यनुभाष्योक्तमनुमानमाह ॥ महदादीति ॥ दर्शनपदोक्तितात्पर्यं व्यनक्ति ॥ न चेत्यादिना ॥ दर्शनादनुभवादित्यर्थः। अनुभवासिद्धिमाशंक्य निराह ॥ न चेदमिति ॥ अहं करोमीत्येतदित्यर्थः । व्यवहारः असंसर्गाग्रहाद्युक्त इति भावः ॥ परस्परेति ॥ प्रकृतेः कर्तृत्वे सिद्धे अहं करोमीत्यस्य व्यवहारमात्रत्वेनानुमानविरोधासंभवः । सिद्धे च तस्मिन् प्रकृतेः कर्तृत्वसिद्धिरिति परस्पराश्रयेत्यर्थः। नन्वहं करोमीत्यादिप्रतीतेर्भ्रमत्वमुपेत्य घटादावपीश एव कर्ता न जीव इति प्रत्यपाद्यधस्तादुपसंहारदर्शनादित्यत्र । तथा च कथमेतदित्यत आह ॥ प्रतिपादयिष्यति चैतदिति ॥ स्वातंत्र्यधीरेव भ्रांतिर्न तु कर्तृत्वधीरपि तथा चैतत्कर्तृत्वं प्रत्यक्षोपपत्तिश्रुतिभिर्जीवस्य पारमार्थिकमेवेति प्रतिपादयिष्यते कर्ता शास्त्रार्थवत्त्वादित्यत्रोपरितनपाद इत्यर्थः । तत्वप्रदीपे तु निर्विकारस्य चेतनस्यापि प्रवृत्त्यनुपपत्तिरित्याशंक्यानुभवसिद्धत्वान्नानुपपत्तिरित्यर्थतयैतद्भाष्यं व्याख्यातम् ॥ २ ॥

सूत्रभाष्यम्—

॥ ॐ पयोऽम्बुवच्चेत्तत्रापि ॐ ॥ ३ ॥

पयोऽम्बुवद्चेतनस्यापि प्रवृत्तिर्युज्यत इति न युक्तम् ।

'एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते, याश्च श्वेतेभ्यः पर्वतेभ्यः प्रतीच्योऽन्या यां यां च दिशमनु'(बृ.उ. ५-८-९)

'एतेन ह वाव पयो मण्डं भवती'त्यादिना तत्रापीश्वरनिमित्तप्रवृत्तिश्रुतेः ॥ ३ ॥

तत्वप्रकाशिका—

उक्तमाक्षिप्य समादधत्सूत्रं पठित्वा व्याचष्टे ॥ पयोऽम्बुवदिति ॥ अपिपदं चेतनप्रवृत्तेराकर्षणार्थम् । यदुक्तमचेतनत्वान्न स्वतःप्रवृत्तिः प्रधानस्येति तदयुक्तम् । पयसोऽचेतनस्यापि दध्याकारेण परिणामदर्शनात् अचेतनस्याम्बुनो गतिदर्शनात् । तथा कूलस्य पतनदर्शनात् । अतो चेतनत्वेऽपि तद्वत्प्रधानस्यापि स्वतःप्रवृत्तिः किं न स्यादिनि न युक्तम् । पयोऽम्ब्वादिप्रवृत्तावपीश्वरनिमित्तत्वाभिधायकश्रुतिसद्भावेनाचेतनत्वहेतोर्व्यभिचाराभावात् । ततश्च न तन्निदर्शनेन प्रधानस्य स्वतःप्रवृत्तिराशासितव्येति भावः । याः काश्चित्प्राच्यां दिशि स्थिताः काश्चित्प्रतीच्यां दिशि स्थिता नद्यः श्वेतेभ्यः पर्वतेभ्यो यां यां दिशमनुस्यन्दन्ते ता एतस्यैवाक्षरस्याज्ञायां सत्यां तां तां दिशमनुस्यन्दत इत्यर्थः ॥ ३ ॥

भावदीपः—

॥ ॐ पयोंऽबुवच्चेत्तत्रापि ॐ ॥ ३ ॥ उक्ताक्षेपप्रकारं दर्शयन् भाष्यं व्याचष्टे ॥ यदुक्तमिति ॥ पयोंऽब्वादि च नोपमेत्यनुभाष्यस्थादिपदानुरोधात्सूत्रोक्तमुपलक्षणं मत्वा परोक्तमन्यदप्याह ॥ तथा कूलस्येति ॥ भाष्ये नञध्याहारेण न युक्तमित्युक्तम् । तदर्थ इति न युक्तमिति ॥ अक्षरस्येति ॥ अक्षरस्य ब्रह्मत्वमक्षरनये सिद्धम् ॥ ३ ॥

सूत्रभाष्यम्—

॥ ॐ व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॐ ॥ ४ ॥

'न ऋते त्वत्क्रियते किञ्चनार'(ऋ. सं. १०-११२-९) इति तद्व्यतिरेकेण कस्यापि कर्मणोऽनवस्थितेरनपेक्षितमेवाचेतनवादिमतम् ॥ ४ ॥

॥ इति रचनानुपपत्त्यधिकरणम् ॥ १ ॥

तत्वप्रकाशिका—

ननु श्रुतिसामर्थ्येन पयोऽम्बुनोः प्रवृत्तेरीश्वराधीनत्वेऽप्ययस्कान्ताद्यचेतनान्तरप्रवृत्तौ भविष्यति व्यभिचारः सेत्स्यति च प्रधानस्य प्रवृत्तौ निदर्शनम्। उदाहरणस्यानादरणीयत्वात्। न हि पयोऽम्बुप्रवृत्तेरीश्वराधीनत्वेऽन्यथापि तन्निमित्तया भवितव्यमित्यस्ति नियामकमित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥व्यतिरेकेति॥ सर्वप्रवृत्तीनामीश्वरनिमित्तत्वस्य श्रुतिसिद्धत्वान्न कुत्राप्युक्तहेतोर्व्यभिचारो नाप्यचेतनपवृत्तौ निदर्शनमिति। अतः प्रमाणविरुद्धं निष्प्रमाणकं च स्वतोऽचेतनप्रवृत्तिमतमनपेक्षितमेव प्रेक्षावतामिति भावः। इन्द्रियगणपते धनवन् यशस्विन् मखपते त्वमिन्द्रियगणेषु निषुसीद। तत्र च स्थित्वा महान्तं परमानन्दमाश्चर्यतमं त्वां त्वमेव पूजय। यतस्त्वमेव विशेषेण ज्ञानिनां प्रकृष्टतममाहुरतस्तवैव पूज्यत्वम्। यतश्च त्वदृते दूरे समीपे वा न केनचित्किचित्क्रियते अतस्त्वमेव पूजक इत्यर्थः। अतो निरीश्वरसांख्यमतस्याप्रमाणत्वेन तद्विरोधाभावाद्युक्तं हरेर्लक्षणमिति सिद्धम् ॥४॥अ० १॥

भावदीपः—

॥ ॐ व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॐ ॥ ४ ॥ पूर्वेणैवेदं परिहृतं किं नेत्यत आह ॥ न हीति ॥ भाष्ये पयोंऽबुविषय एव श्रुत्युक्तेरिति भावः। निषुसीद गणपते गणेषु त्वामाहुर्विप्रतमं कवीनाम्। न ऋते त्वत्क्रियते किंचनारे महामर्कं मघवन् चित्रमर्चेति समग्रमंत्रार्थमाह ॥ इंद्रियेति ॥ मघवन्नित्यस्य कर्मनिर्णयोक्तमर्थत्रयमाह ॥ धनवन्नित्यादिना ॥ महां अर्कं चित्रमिति पदत्रयार्थमाह ॥ महांतमित्यादिना ॥ अर्च पूजय। विप्रतममित्यस्यार्थः विशेषेणेत्यादि। आर इत्यस्य दूरे समीपे वेति ॥ अत इति ॥ तदुक्तप्रमेयस्याप्रामाणिकत्वात्प्रमाणविरुद्धत्वाच्चेत्यर्थः ॥४॥ अ० १ ॥

सूत्रभाष्यम्—

सेश्वरसाङ्ख्यमतं निराकरोति। यथा पृथिव्या एव पर्जन्यानुगृहीतं तृणादिकमुत्पद्यते, एवं प्रधानादीश्वरानुगृहीतं जगदित्यतो ब्रवीति—

॥ ॐ अन्यत्राभावाच्च न तृणादिवत् ॐ ॥ ५ ॥

'यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः'

ब्रह्मण्येवेदमाविरासीद्ब्रह्मणि स्थितं ब्रह्मणि(न्)लयमभ्युपैति ।
ब्रह्मैवाधस्ताद्ब्रह्मैवोपरिष्टाद्ब्रह्म मध्यतो ब्रह्म सर्वतः' ।।

'ब्रह्मैवेदं सर्वमि'(बृ. उ. ४-५-१) त्यादिश्रुतिभ्योऽन्यत्र जगतोऽभावात्तृणादीनां पर्जन्यवन्नानुग्राहकत्वमात्रमीश्वरस्य ।

'स एव भूयो निजवीर्यचोदितां स्वजीवमायां प्रकृतिं सिसृक्षतीम् ।
अनामरूपात्मनि रूपनामनी विधित्समानोऽनुससार शास्त्रकृदि'ति भागवते।

द्रव्यं कर्म च कालश्चेत्यादि च । चशब्देन प्रकृतिसत्तादिप्रदत्वं चाङ्गीकृतम् ।। ५ ।।

।। इति अन्यत्राभावाधिकरणम् ।। २ ।।

तत्वप्रकाशिका--

अधिकरणार्थं दर्शयति ।। सेश्वरेति ।। अत एवात्र विष्णोः स्वतन्त्रकर्तृत्वे सेश्वरसांख्यसमयविरोधनिरासादस्ति शास्त्रादिसंगतिः । स्वातन्त्र्येण जगत्कर्तेश्वर इति निगदितम् । तस्य च सांख्यसमयविरोधे लक्षणानुपपत्तिः स्यादित्यवश्यं निरसनीयः। तद्धरेः स्वातन्त्र्येण जगत्कारणत्वं विषयः । युक्तमयुक्तं वेति संशयः । मतविमतिः संदेहबीजम् । पूर्वपक्षयति ।। यथेति ।। नेश्वरस्य स्वतन्त्रकर्तृत्वं युक्तम् । प्रधानादेव जगदुत्पत्तेः संभवात् । न चाचेतनस्य स्वतः प्रवृत्त्यनुपपत्तिरित्युक्तमेवेति वाच्यम् । प्रधानादेव जगदुत्पत्तावीश्वरस्यानुग्राहकत्वाभ्युपगमात्। यथा खलु पृथिव्येव तृणादिकार्याणां प्रधानं कारणं पर्जन्यानुग्रहेण चोत्पादयति। तथा प्रधानस्यैव प्राधान्यमीश्वरस्त्वनुग्राहकमात्रमिति न तस्य स्वातन्त्र्येण जगत्कारणत्वलक्षणं युक्तमिति भावः । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ।। अत इति ।। युक्तमेव विष्णोर्जगत्कारणत्वं स्वातन्त्र्येण न तु यथा तृणादीनां पर्जन्योऽनुग्राहकस्तथानुग्राहकत्वमात्रम् । सर्वपदार्थानां सत्तादिप्रदानाय सर्वगतत्वोक्तेरीश्वरप्रेरणामन्तरेण कस्यापि वस्तुनः सत्त्वस्यैवाभावात् । न हि यदधीनं यस्या सत्तादि तत्तस्यानुग्राहकमात्रमिति भावः । ब्रह्मैवेदं सर्वमिति तदधीना सत्तेत्युच्यते । न केवलं कार्यस्येश्वराधीनत्वान्नानुग्राहकत्वमात्रं तस्य किं तु सर्वकारणत्वेनाभ्युपगतप्रकृतिसत्तादेरपि तदधीनत्वम्। अतश्च विष्णोरेव स्वातन्त्र्यमिति सप्रमाणकं सूत्राक्षरार्थमाह ।। स इति ।। स एवेति हर्यधीनोद्बोधत्वं प्रकृतेरुच्यते द्रव्यमिति तदधीनसत्त्वम् । स्वजीवमायां स्वाधीनां जीवबन्धिकाम् । सिसृक्षतीं सर्जनोन्मुखीम् । आत्मनि आत्माधारत्वेन। चशब्देन सूचितमिति शेषः।

अतः सेश्वरसांख्यमतस्याप्रामाणिकत्वेनाविरोधाद्युक्तं हरेर्जगत्कारणमिति सिद्धम्। ॥ ५ ॥ अ० २ ॥

भावदीपः—

॥ ॐ अन्यत्राभावाच्च न तृणादिवत् ॐ ॥ ५ ॥ अत एवेत्युक्तं व्यनक्ति ॥ अत्रेति ॥ कर्तृत्वस्य परसंमतत्वात्स्वतंत्रेत्युक्तम्। पूर्वोक्तदोषास्पृष्टतोक्तिपरतया भाष्यमवतार्य व्याचष्टे ॥ न चेति ॥ भाष्ये तृणादिवदिति सूत्रांशानुरोधेन दृष्टांते दार्ष्टांतिके च कार्यमात्रे पर्जन्याद्यनुग्रहोक्तावपि कारणेऽपि तदनुग्रहो ध्येयः सौत्रचशब्दव्यावृत्त्यर्थत्वात्तस्येति भावेन कार्यकारणयोरुभयत्रानुग्रहान्वयाय पर्जन्यानुगृहीतानामित्युक्त्वा पर्जन्यानुग्रहेणेति ईश्वरस्तदनुग्राहकमात्रमिति चोक्तम् ।।छ।। आकांक्षितं पूरयन् व्युत्क्रमेण भाष्यं व्याचष्टे ॥ युक्तमेवेति ॥ तृणादीनामित्यादेरर्थो न त्वित्यादि। यच्च किंचिदित्यादिसर्वगतत्वश्रुत्युक्तेः प्रकृतोपयोगायोक्तम् ॥ सर्वपदार्थानां सत्तादिप्रदानायेति ॥ एतल्लाभोऽग्रे व्यक्तः। श्रुतिभ्य इत्यस्य भावार्थः ॥ सर्वगतत्वोक्तेरिति ॥ अन्यत्रेत्यादेः अन्यत्रान्याधीनत्वेन राज्ञि राष्ट्रमितिवत्। ईश्वरप्रेरणामंतरेणेत्यादिरर्थः ॥ तदधीना सत्तेति ॥ यदधीना यस्य सत्ता तत्तदित्येव भण्यत इत्युक्तेरिति भावः। स एवेत्यादिभाष्यं सौत्रचशब्दव्याख्यानमित्याह ॥ न केवलमिति ॥ सत्ताप्रदत्वं चेति चशब्दार्थव्यक्तिरियं भाष्यपदमेवानुवदति ॥नानुग्राहकत्वमात्रमिति॥ नसमासेन समस्तमेतत्पदम्। अनुग्राहकत्वमात्रविरोधीत्यर्थः ॥ तदधीनत्वमिति ॥ नानुग्राहकत्वमात्रमित्यनुषंगः ॥ सूत्राक्षरेति॥ चशब्दरूपेत्यर्थः। तथा च न केवलमन्यत्राभावादित्यनेनोक्तं कार्यस्येश्वराधीनत्वमेवेश्वरसांख्योक्तस्यानुग्राहकत्वमात्रस्य विरोधि किं तु स एवेत्यादिप्रमाणसिद्धं सौत्रचशब्दसूचितं सर्वहेतुभूतप्रकृतिसत्तादेरीश्वराधीनत्वमपि विरोधीत्यर्थः ॥ सूचितमितीति ॥ तथा च प्रकृतिसत्तादिप्रदत्वं चांगीकृतं सूत्रकृतेति सौत्रचशब्देन सूचितमित्यर्थ इति भावः ॥ अत इति ॥ सर्वस्येशाधीनत्वावेदकश्रुतिस्मृतिविरोधादित्यर्थः ॥ ५ ॥ अ० २ ॥

सूत्रभाष्यम्— लोकायतिकपक्षं निराकरोति—

॥ ॐ अभ्युपगमेऽप्यर्थाभावात् ॐ ॥ ६ ॥

यस्य धर्माधर्मौ न स्तः तत्सिद्धान्ते किं प्रयोजनम्। अतः स्वव्याहतेरेवोपेक्ष्यः ॥ ६ ॥

॥ इति अभ्युपगमाधिकरणम् ॥ ३ ॥

तत्वप्रकाशिका---

अधिकरणार्थं दर्शयति ॥ लोकायतिकेति॥ अत एवात्र विष्णोर्जगत्कारणत्वे चार्वाकसमयविरोधपरिहारादस्ति शास्त्रादिसंगतिः। हरिर्जगत्कर्तेत्युक्तम्। तत्र चार्वाकमतविरोधेनाभावापत्तेस्तन्निराकार्यमेव। तदीश्वरस्य जगत्कर्तृत्वं विषयः। युक्तं न वेति संदेहः। विप्रतिपत्तिः संदेहबीजम्। न युक्तमिति पूर्वः पक्षः। अन्तरेणापीश्वरं पूर्वपूर्वस्मादुत्तरोत्तरोत्पत्तिसंभवात्। क्वचित्स्वभावादेव मदिरोत्पत्तिवदुपपत्तेश्च। न च सांख्यं प्रतीव श्रुत्यादिबाधो वक्तुं युक्तः। तस्याप्रामाण्यात्। न च धर्माद्यसिद्धिविरोधः। तदनभ्युपगमात्। न हि धर्माद्यनभ्युपगमे किंचिद्बाधं पश्यामः। न ह्येतस्याभावापराधेन सत्यामपि बाह्यसामग्र्यां कार्यानुत्पादो दृष्टो येन जानीमोऽस्त्यलौकिकं कारणमिति। अतोऽदृष्टस्य वस्तुनोऽभावान्नेश्वरस्य जगत्कारणत्वलक्षणं युक्तमिति प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ अभ्युपगमेऽपीति ॥ युक्तमेव विष्णोर्जगत्कारणत्वम्। यदुक्तमदृष्टार्थ एव नास्तीति कुतो जगदीश्वरः कुतस्तरां जगत्कारणत्वमिति। तत्र प्रष्टव्यम्। तत्सिद्धान्ते किं प्रयोजनमिति। अपेक्षितं खलु शास्त्रेऽधिकार्यादि। तत्र न तावद्धर्मस्वर्गापवर्गादि अनभ्युपगमात्। नापि दृष्टं धनादि तदभावात्। वार्तादिप्रयोजनत्वाच्च तस्य। न च धर्माद्यभावबोधनद्वारा लोकोपकारः। तदभावज्ञाने परस्परहिंसादिनापकारस्यैव प्राप्तेः। न चोपकारोऽपि स्वरूपतः प्रयोजनमिति तेनापि प्रयोजनं वाच्यम्। न तावददृष्टं तदभावात्। नापि दृष्टम्। न हि कुवर्त्मना गच्छन्तं प्रति मार्गोपदेष्टाऽपिपालो लौकिकैरदृष्टनिरपेक्षैरुपक्रियते। अतो न किंचित्समयस्य प्रयोजनम्। नापि विषयः अदृष्टाभावात्। नापि दृष्टः। अप्राप्ते शास्त्रमर्थवदिति न्यायात्। नापि धर्मादिभ्रान्तिनिरासाय तदभावः। तदुपायाभावात्। न हि प्रत्यक्षं धर्माद्यभावं गृह्णाति। अपरामर्शेऽदर्शनात्। परामर्शे दर्शनं तु नानुमानाद्भिद्यते। विषयप्रयोजनाभावे काऽधिकारिणं प्रत्याशा। माऽस्तु मत्सिद्धान्ते प्रयोजनादीति चेत्तर्हि यत्सिद्धान्तोऽसौ प्रयोजनादिमानिति नियमात्। अतः सिद्धान्तेऽपि प्रयोजनाद्यभावाद्यभ्युपगमे तस्य स्वव्याहतिः स्यात्। न ह्यभ्युपगमोऽप्रयोजनश्चेति युक्तम्। मे माता वन्ध्येतिवत् स्वव्याहतं च वदन् भवानुपेक्ष्य एव जायते न तु परिहाराय विषय इति भावः। अतश्चार्वाकसमयस्यानुपपन्नत्वेनाविरोधकत्वाद्युक्तं जगत्कारणत्वं ब्रह्मण इति सिद्धम् ॥ ६ ॥ अ० ३ ॥

भावदीपः—

॥ ॐ अभ्युपगमेऽप्यर्थाभावात् ॐ ॥ ६ ॥ अत एवेत्युक्तार्थम्। एवमग्रेपि। कथं तर्हि प्रथमोत्पत्तिरित्यत आह ॥ क्वचिदिति ॥ धान्य दितो यथा मदिरोत्पत्तिस्तथा पृथिव्यादिभूतस्वभावादेवेत्यर्थः। पूर्वोक्तदोषास्पृष्टतामाह ॥ न चेति ॥ चार्वाकैरुच्यते मानमक्षजं नापरं क्वचिदित्यनुभाष्योक्ततन्मतानुरोधेन हेतुमाह ॥ तस्येति ॥ यस्येत्यादिभाष्यसूचितमाह ॥ तदनभ्युपगमादिति ॥ कार्यानुत्पत्तिरेव बाधिकेत्यत आह ॥ न ह्येतस्येति ॥ अत इति ॥ दृष्टसामग्र्यैव कार्योत्पत्तिसंभवादित्यर्थः ॥ छ ॥ किंप्रयोजनमिति भाष्यं प्रश्नार्थत्वेन व्याचष्टे ॥ तत्र प्रष्टव्यमिति ॥ किंशब्दस्याक्षेपार्थत्वं मत्वा यस्येत्यादिभाष्यतात्पर्यमाह ॥ न तावदिति ॥ भाष्येऽधर्मशब्दो धर्मादन्यतज्जन्यस्वर्गादिपर इति दर्शितम्। एतेनाभ्युपगमेऽपि त्वदीयसिद्धांतेऽपि अर्थाभावात् धर्मादिलक्षणादृष्टरूपप्रयोजनाभावाभ्युपगमाददृष्टं प्रयोजनं नास्तीति सूत्रार्थो दर्शितः। आक्षेपार्थकभाष्यस्थकिंशब्देन सूचितं दृष्टफलाभावं च व्यनक्ति ॥ नापीत्यादिना ॥ वार्ता वाणिज्यम्। एतेनार्थाभावात् शास्त्रेण धनादिरूपदृष्टप्रयोजनाभावात्। अभ्युपगमे त्वदीयसिद्धांते दृष्टमपि प्रयोजनं नास्तीति सूत्रार्थो दर्शितः। न च तेन लोकोपकारः। धर्माद्यभावज्ञाने परस्परहिंसादिनाऽपकारस्यैव प्राप्तेरिति तत्वनिर्णयोक्तं हृदि कृत्वाह ॥ न चेति ॥ लोकोपकार इति ॥ इदानीं धर्मादिबुद्ध्या कामोपभोगोपरुद्धानां लोकानां धर्माद्यभावबोधने यथेष्टं प्रवृत्तिसंभवात् उपकारः प्रयोजनं भवतीत्यर्थः ॥ परस्परहिंसेति ॥ धनवनिताद्यपहारार्थमिति भावः। एतेनाभ्युपगमेऽपि लोकोपकारः फलमित्यंगीकारेऽपि अर्थाभावाच्छास्त्रा लोकोपकाररूपप्रयोजनस्याभावात् प्रत्युतानर्थस्यैव भावात्। तत्सिद्धांते लोकोपकारोऽपि फलं न भवतीत्यपि सूत्रवृत्तिर्दर्शिता। न चोपकारेण तस्य प्रयोजनं अदृष्टाभावादिति तत्वनिर्णयोक्त्यनुरोधेन लोकोपकारेणापि किं प्रयोजनमिति भाष्यार्थमुपेत्याह ॥ न चेति ॥ अदृष्टाभावेनैव दृष्टमपि नेत्याह ॥ नापि दृष्टमिति ॥ ननु कथं दृष्टं नास्ति। उपकारकर्तरि उपकृतो लोकः प्रत्युपकारं करिष्यति। यथा लोके अजाविपालाय तेनोपदिष्टमार्गो लोको दक्षिणादि ददाति तद्वदित्यत आह ॥ न हीति ॥ सत्यमेतदविपालो लौकिकैरुपक्रियत इति। तदुपकर्तुः प्रत्युपकाराददृष्टमस्तीत्यनुसंधानस्य सत्त्वात् त्वया तु तदनुसंधानमदृष्टाभावबोधनेन त्याजितमिति उपकृतोऽपि लोकः किमर्थं प्रत्युपकारं कुर्यादिति भावः। अयमप्यर्थः पूर्ववत्सूत्रारूढ ऊह्यः। भाष्ये

प्रयोजनपदेन प्रयुज्यते प्रवर्त्यते अधिकारी येनेति व्युत्पत्त्या विषयपरोऽपीति भावेन तद्भाष्यं विषयाक्षेपपरतया व्याचष्टे ॥ नापीति ॥ अप्राप्त इति ॥ मानांतरावेद्यस्यैव शास्त्रवेद्यत्वादित्यर्थः। एतेनार्थाभावात् दृष्टादृष्टरूपविषयाभावादिति सूत्रार्थो दर्शितः ॥ अपरामर्श इति ॥ धर्मादिकं नास्ति प्रत्यक्षेणानुपलंभादित्यादिपरामर्शाभावे धर्माद्यभावस्याप्रतीतेः ॥ परामर्श इति ॥ परामर्शे धर्माद्यभावदर्शनं त्वित्यर्थः। परामर्शपदेनानुमितिकरणस्य दर्शनपदेनानुमितेश्च त्वयैवोक्तत्वादितिभावः। अतः स्वव्याहतेरेवेति भाष्यं विवरितुमाह ॥ मास्त्विति ॥ अत इति भाष्यस्थपदानुवादः तस्यार्थः। सिद्धांतेऽपीत्यादि। एतेनाभ्युपगमेऽप्यर्थाभावादिति सूत्रमर्थगत्या व्याख्यातं भवति। स्वव्याहतिमुपपादयति ॥ न हीति ॥ मत्सिद्धांत इत्यनेन सप्रयोजनत्वाद्य-विनाभूतसिद्धांतत्वमभ्युपगम्य मास्तु प्रयोजनादीत्यनेनाप्रयोजकत्वाद्युक्तिर्व्याहतेत्यर्थः। तेनानिष्टं कथं भवेदित्यनुव्याख्यानसुधायां नञा निर्दिष्टमनित्यमित्युक्तदिशा वाक्यादौ नेति वक्तव्यमिति निषेधस्यानित्यत्वान्मे मातेति प्रयोगः साधुः। अत्र भाष्ये उपेक्ष्य इत्युक्त्या टीकायां न युक्तमित्युक्त्या सूत्रे पूर्वस्मान्नञनुवृत्तिः सूचिता ॥ अत इति ॥ स्वव्याहतत्वादित्यर्थः ॥ ६ ॥ अ० ३ ॥

सूत्रभाष्यम्—

पुरुषोपसर्जनप्रकृतिकर्तृत्ववादमपाकरोति—

**॥ ॐ पुरुषाश्मवदिति चेत्तथाऽपि ॐ ॥ ७ ॥**

यथा चेतनसम्बन्धाद्चेतनमेव शरीरमश्मादिकमादाय गच्छति, एवमचेतनाऽपि प्रकृतिः पुरुषसम्बन्धात्प्रवर्तत इति चेन्न। 'न ऋते त्वत्क्रियत' इति तत्रापि तथात्वे दृष्टान्ता-भावात् ॥ ७ ॥

तत्वप्रकाशिका—

अधिकरणप्रतिपाद्यं दर्शयति ॥ पुरुषेति ॥ अत्र विष्णोः सर्वकर्तृत्वे निरीश्वर-सांख्यैकदेशमताविरोधपरिहारादस्ति शास्त्रादिसंगतिः। विष्णोर्जगत्कारणत्वमुक्तम्। तत्रैव मतविरोधेऽसंभवप्राप्तेरवश्यनिरसनीयं तद्भवति। ईश्वरस्य जगत्कारणत्वं विषयः। युक्तमयुक्तं वेति संदेहः। समयविप्रतिपत्तिः संदेहबीजम्। पूर्वपक्षस्य सूत्र एवोक्तत्वात्तदुपन्यस्य पूर्वपक्षांशं तावद्व्याचष्टे ॥ पुरुषेति ॥ न हरेर्जगत्कारणत्वं

युक्तम् । प्रधानस्यैव कर्तृत्वेनेश्वरस्य वैयर्थ्यात् । अचेतनस्य स्वतःप्रवृत्तिर्दूषितेति चेन्न । केवलप्रधानस्य कारणत्वानुपपत्तावपि पुरुषोपसर्जनस्य तदुपपत्तेः । भवति चात्र प्रयोगः । विप्रतिपन्ना प्रवृत्तिः पुरुषोपसर्जना चेतननिमित्ता । प्रवृत्तित्वादश्मानयनादिप्रवृत्तिवदिति । न च दृष्टान्ते विवदितव्यम् । पुरुषसंबन्धेनाचेतनस्यैव शरीरस्याश्माद्यादानादिप्रवृत्तिदर्शनात् । अतो जगज्जन्मादिकारणत्वलक्षणमीश्वरस्यैवेत्येतद्दूरोत्सारितमिति भावः । सिद्धान्तांशं व्याचष्टे ।। नेति ।। युक्तमेव विष्णोः सर्वकर्तृत्वम् । पुरुषोपसर्जनप्रधानस्य जगत्कारणत्वे प्रमाणाभावात् । न चोक्तमनुमानम् । 'न ऋते त्वत्क्रियते किंचनारे' इति श्रुतेः । तत्र शरीरप्रवृत्तावपि परमात्माधीनत्वे सिद्धे सति विप्रतिपन्नप्रवृत्तेः पुरुषोपसर्जनप्रधानाधीनत्वसाधने दृष्टान्ताभावादिति भावः ।। ७ ।।

भावदीपः—

।। ॐ पुरुषाश्मवदिति चेत्तथापि ॐ ।। ७ ।। अचेतनापि प्रकृतिः प्रवर्तत इति भाष्यसूचितहेतुमाह ।। प्रधानस्येति ।। कर्तृत्वेनेति ।। स्वतः प्रवृत्तिमत्त्वेनेत्यर्थः । एवं पुरुषसंबंधादिति भाष्यमधिकाशंकोक्तिपरत्वेन व्याचष्टे ।। अचेतनस्येत्यादिना ।। यथेत्यादिभाष्यमवतार्य व्याचष्टे ।। न चेत्यादिना ।। अत इति ।। पुरुषोपसर्जनप्रकृतेरेव स्वतः प्रवृत्त्युपपत्त्या ईश्वरवैयर्थ्यादित्यर्थः । युक्तिप्राबल्यादेव च प्रागुक्तश्रुत्यादिगुणभूतपुरुषविषयमिति भावः ।। छ ।। तथात्वे दृष्टांताभावादिति भाष्यांशं दृष्टांतपदं प्रमाणपरं मत्वा व्याचष्टे ।। पुरुषेति ।। तदंशस्यार्थांतरमुपेत्य समग्रभाष्यं व्याचष्टे ।। न ऋत इति ।। सिद्धे सतीति शेषोक्तिः । तथात्वे इत्यस्यार्थांतरं चाह ।। पुरुषेत्यादि ।। ७ ।।

सूत्रभाष्यम्—

।। ॐ अङ्गित्वानुपपत्तेः ॐ ।। ८ ।।

शरीरप्रवृत्तौ पुरुषस्याङ्गित्वात् । 'अङ्गमङ्गी समादाय यथाकार्यं करोत्यसा'वित्याङ्गित्वव्यवहारोऽनुपपन्नः ।। ८ ।। इति पुरुषाश्माधिकरणम् ।। ४ ।।

तत्वप्रकाशिका—

हेतुकंमन्यश्चायं श्रुत्यवष्टम्भेनोक्तं दृष्टान्तदोषं न गणयतीत्यतो हेत्वन्तरेण दृष्टान्ते साध्यविकलतां साधयत्सूत्रमुपन्यस्य व्याचष्टे ।। अङ्गित्वेति ।। यदि शरीरमेव

पुरुषोपसर्जनं प्रवर्तेत तदा शरीरमङ्गि पुरुषोऽङ्गमित्युक्तं स्यात्। तथा च पुरुषस्याङ्गित्वेन शरीरस्याङ्गत्वेन च लौकिकपरीक्षकव्यवहारो न स्यात्। विद्यते चासावतो न पुरुषोपसर्जनशरीरस्य च प्रवृत्तिरिति दृष्टांतो न युज्यत इति भावः। अतो मतान्तरविरोधाभावाद्युक्तं जगत्कारणत्वलक्षणं विष्णोरिति सिद्धम्॥ ८॥ अ० ४॥

भावदीपः—

॥ ॐ अंगित्वानुपपत्तेः ॐ॥ ८॥ उत्तरसूत्रे समुच्चायकचशब्दाभावात्प्रागुक्तदोषस्यादृढतामाह ॥ हैतुकंमन्यश्चेति॥ एवं परिष्कृत्य भाष्यं व्याचष्टे ॥ तथा चेति ॥ अत इति ॥ अप्रामाणिकत्वात्। प्रमाणविरुद्धत्वाच्चेत्यर्थः ॥ ८॥ अ० ४॥

सूत्रभाष्यम्—

प्रकृत्युपसर्जनपुरुषकर्तृत्ववादमपाकरोति—

॥ ॐ अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात् ॐ॥ ९॥

शरीरसम्बन्धात्पुरुषः प्रवर्तत इत्यङ्गीकारेऽपि स्वतस्तस्यासामर्थ्याच्छरीरसम्बन्ध एवायुक्तः॥ ९॥

तत्वप्रकाशिका—

अधिकरणार्थं दर्शयति॥ प्रकृतीति॥ अत्र विष्णोर्जगत्कारणत्वे निरीश्वरसांख्यैकदेशविरोधपरिहारादस्ति शास्त्रादिसंगतिः। ईश्वरस्य जगत्कारणत्वमुक्तम्। तस्य च समयविरुद्धत्वे लक्षणायुक्तेरसौ परिहरणीय एव। तदीश्वरस्याखिलकारणत्वं विषयः। युक्तमयुक्तं वेति संशयः। मतविगानं संदेहबीजम्। न युक्तमिति पूर्वः पक्षः। प्रधानादेव जगदुत्पत्तिसंभवेनेश्वरानुपयोगात्। न चाचेतनस्य तदनुपपत्तिदोषः। पुरुषयुक्तस्योपपत्तेः। न चाङ्गित्वानुपपत्तिः। प्रकृत्युपसर्जनपुरुषस्य कर्तृत्वाङ्गीकारात्। तथा च प्रयोगः। विमता प्रवृत्तिरचेतनोपसर्जनपुरुषाधीना प्रवृत्तित्वादस्मानयनादिप्रवृत्तिवदिति। न च दृष्टन्तदोषः। शरीरोपसर्जनपुरुषस्य प्रवृत्तिदर्शनात्। श्रुतेश्चावज्ञानात्। अतो न जगत्कारणत्वलक्षणं ब्रह्मणो युक्तमिति प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे॥ अन्यथेति॥ चशब्देनाङ्गित्वानुपपत्तेः समाकर्षः। युक्तमीश्वरस्य जगत्कारणत्वम्। प्रकृत्युपसर्जनपुरुषस्य

कर्तृत्वे मानाभावात्। प्राचीनपक्षादन्यथानुमितमिति चेन्न। दृष्टान्ते साध्याभावात्। तथा हि। शरीरोपसर्जनः पुरुषः प्रवर्तत इति पक्षे किं पुरुषस्य प्रवृत्तिशक्तिरस्ति न वा। यद्यस्ति तर्हि शरीरवैयर्थ्यम्। यदि न शक्तिस्तर्हि पुरुषाङ्गित्वमनुपपन्नं स्यात्। शरीरसंबन्धार्थं केवलस्य पुरुषस्य शक्त्यभावात्। यदि तत्रास्ति शक्तिस्तर्ह्य-न्यत्रापि स्यादित्यन्यतरवैयर्थ्यम्। शरीरसंबन्धात्पूर्वमपि प्रकृतिसंबद्धस्यास्ति शक्ति-रिति चेत् तत्पूर्वमप्येवमित्यनवस्थापातात्। अनादित्वाश्रयणे निष्प्रकृतीनां मुक्तानां प्रवृत्तिरुदाहर्तव्या। अतो यथा पुरुषस्य शरीरसंबन्धक्रियायां न शरीरोपकृतस्य प्रवृत्तिर्नापि केवलस्येतीश्वरोऽङ्गीकार्यः। तथेश्मानयनप्रवृत्तावपीति दृष्टान्ताभाव इति भावः ॥ ९ ॥

भावदीपः––

॥ ॐ अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॐ ॥ ९ ॥ केवलाचेतनमतात् पुरुषोपसर्जनाचेतनमताच्चाधिका शंकोक्तिपरत्वेन शरीरेत्यादिभाष्यमवतार्य व्याचष्टे ॥ न चाचेतनस्येति ॥ न ऋत इति प्रागुक्तश्रुतिविरोध इत्यत आह ॥ श्रुतेश्चेति ॥ हैतुकंमन्यत्वादिति भावः ॥ अत इति ॥ अनुपयुक्ततया ईश्वरस्यैवाभावादित्यर्थः ॥ छ ॥ शरीरसंबंध एवायुक्त इति भ ष्यं सौत्रचशब्दादाकृष्टस्यांगित्वानुपपत्तेरित्यस्य व्याख्यानमिति भावेनाह ॥ चशब्देनेति ॥ शरीरेत्यादिभाष्यस्य व्याख्येयं दर्शयितुं अन्यथानुमिताविति सूत्रांशं विवृणोति ॥ प्राचीनेति ॥ विमतेत्यादिनोक्तरीत्यानु-मितमित्यर्थः। ज्ञशक्तीत्याद्यंशस्य विवृतिपरं स्वतस्तस्यासामर्थ्यादिति भाष्यं दृष्टांतेसाध्यवैकल्यसाधकत्वेन योजयितुमन्यथानुमिताविर्त्यंशार्थोक्तिपरभाष्यमनुवदति ॥ शरीरोपसर्जन इति ॥ पक्षभेदेन भाष्यं योजयितुं विकल्पयति॥ किमिति ॥ आद्यपक्षं बहिरेव निरस्यांते स्वत इत्यादिभाष्यं योजयति ॥ यदि न शक्तिस्तर्हीति ॥ शक्त्य-भावं द्रढयितुमाह ॥ यदि तत्रास्ति शक्तिरिति ॥ अन्यत्रापि। अश्मानयनादावित्यर्थः। ॥ उदाहर्तव्येति ॥ अयुक्तत्वेनोदाहर्तव्येत्यर्थः ॥ अत इति ॥ शक्त्यभावे भावे चोभयथापि दोषादित्यर्थः ॥ ९ ॥

सूत्रभाष्यम्––

॥ ॐ विप्रतिषेधाच्चासमञ्जसम् ॐ ॥ १० ॥

सकलश्रुतिस्मृतियुक्तिविरुद्धत्वाच्चानीश्वरमतमसमञ्जसम्।

'श्रुतयः स्मृतयश्चैव युक्तयश्चेश्वरं परम् ।
वदन्ति तद्विरुद्धं यो वदेत्तस्मान्न चाधम' इति पाद्मे ॥ १० ॥

॥ इति अन्यथानुमित्यधिकरणम् ॥ ५ ॥

तत्वप्रकाशिका—

एवं प्रत्येकं दूषितान्यनीश्वरमतानि सामान्यदूषणेन निराकुर्वत्सूत्रमुपन्यस्य व्याचष्टे ॥ विप्रतिषेधादिति ॥ कुतोऽनीश्वरमतानां श्रुत्यादिविरुद्धत्वमित्यत आह ॥ श्रुतय इति ॥ नात्र सेश्वरसांख्येन संतोष्टव्यम् । स्वातन्त्र्यानभ्युपगमात् । ईश्वरं परं वदन्तीति हि स्मृतिः । अतो न सांख्यादिमतविरोधेन लक्षणासंभव इति सिद्धम् ॥ १० ॥ अ० ५ ॥

भावदीपः—

॥ ॐ विप्रतिषेधाच्चासमञ्जसम् ॐ ॥ १० ॥ भाष्ये निरीश्वरमतमसमंजसमिति सामान्योक्त्यनुरोधेनाह ॥ एवं प्रत्येकं दूषितानीति ॥ अत इति ॥ सांख्यादिमतानामसमञ्जसत्वादित्यर्थः ॥ १० ॥ अ० ५ ॥

सूत्रभाष्यम्—

परमाण्वारम्भवादमपाकरोति—

॥ ॐ महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॐ ॥ ११ ॥

महत्वाद्दीर्घत्वाच्च यथा कार्यमुत्पद्यते, एवं ह्रस्वत्वात्पारिमाण्डल्याच्चोत्पद्येत । वाशब्दादन्यथैतयोरपि न स्यात्, विशेषकारणाभावात् ॥ ११ ॥

तत्वप्रकाशिका—

अधिकरणप्रतिपाद्यमाह ॥ परमाण्विति ॥ अत्र हरेः सर्वगुणपूर्णत्वे वैशेषिकादिमतविरोधपरिहारादस्ति शास्त्रादिसंगतिः । विष्णुरनन्तगुणपूर्ण इत्युक्तम् । तस्य च परमाण्वारम्भवादविरुद्धत्वेनाभावशङ्का स्यात् । अतोऽसौ पराकरणीय एव । ईश्वरस्यानन्तगुणत्वं विषयः । युक्तमयुक्तं वेति संदेहः । मतविवादः संदेहबीजम् । न युक्तमिति पूर्वः पक्षः । षट् खल्विमे भावपदार्था द्रव्यादयः । तत्र गुणाश्रयो द्रव्यं पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनोभेदेन नवविधम् । तत्राकाशादिपञ्चकं

नित्यमेव। भूतचतुष्टयं तु परमाणुरूपं नित्यमन्यदनित्यमेव। कर्मान्यत्वे सति जातिमात्राश्रया गुणाः रूपरसगंधस्पर्शशब्दसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहसंस्कारबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्माः। ते चानित्याश्रिता अनित्या एव नित्यद्रव्ये द्विविधाश्च। संयोगविभागयोरसमवायिकारणं कर्म उत्क्षेपणमपक्षेपणमाकुञ्चनं प्रसारणं गमनमिति पञ्चविधमनित्यमेव। नित्यमेकमनेकसमवेतं सामान्यमनेकविधम्। नित्यः संबन्धः समवाय एक एव। नित्यद्रव्यवृत्तयोऽन्त्या विशेषाः। एतत्त्रयं नित्यमेव। तत्रानित्यं कारणत्रितयजन्यम्। तत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणं परमाण्वादि द्रव्यमेव। आदिसृष्टौ च परमाणवो द्व्यणुकादिक्रमेणावयविनमारभन्ते। समवायिकारणप्रत्यासन्नमधृतसामर्थ्यमसमवायिकारणम्। प्रत्यासत्तिर्द्वेधा। कार्यैकार्थप्रत्यासत्ति. कारणैकार्थप्रत्यासत्तिश्चेति। तत्र कार्यद्रव्यस्यावयवसंयोग एव कार्यैकार्थप्रत्यासत्त्यासमवायिकारणं भवति। कार्यगतगुणानां च कारणगतगुणाः कर्म च कारणैकार्थप्रत्यासत्त्यादिनासमवायिकारणम्। कार्यगतकर्मणश्च कारणगतगुणकर्मणी कार्यैकार्थप्रत्यासत्त्यासमवायिकारणम्। तत्र परिमाणं कारणगतं कार्यगतपरिमाणस्यासमवायिकारणं भवति। परमाणुद्व्यणुकगतं द्व्यणुकत्र्यणुकगतपरिमाणकारणं न भवति। किं तु संख्यादिनैव तज्जन्म। एतदन्यत्कारणं निमित्तमीश्वरादृष्टकालादि। स चेश्वर आत्मविशेषः संख्यादिपञ्चगुणयुक्तः कर्तृत्वोपयोगिज्ञानेच्छाप्रयत्नशाली च। शिष्टषड्गुणायोग्य इति कथं तस्यानन्तगुणत्वं युक्तं स्यात्। अतो व्यर्थ एव पूर्वाध्याय इति प्राप्ते सिद्धांतयत्सूत्रमुपन्यस्य व्याचष्टे ॥ महदिति ॥ युक्तमेव हरेरनन्तगुणपूर्णत्वम्। वैशेषिकादीनामनुपपन्नभाषित्वेन तत्कल्पनाया अप्रामाणिकत्वात्। यथा हि। यदुच्यते परिमाणं त्र्यणुकादिगतमसमवायिकारणं भवति न परमाण्वादिगतमिति तदसत्। यथा महत्त्वाद्दीर्घत्वाच्च त्र्यणुकादिगतात्कार्ये परिमाणमुत्पद्यते तथा ह्रस्वत्वाद् द्व्यणुकगतात् त्र्यणुकगतपरिमाणोत्पत्त्युपपत्तेः। परमाणुपरिमाणश्च पारिमाण्डल्याद् द्व्यणुकगतपरिमाणोत्पत्तिसंभवादिति भावः। त्र्यणुकादिपरिमाणस्यारम्भकत्वेऽप्यस्य तन्मास्त्वित्यत आह ॥ वाशब्दादिति ॥ इति सूचितमिति शेषः। यदि ह्रस्वत्वादेर्नारम्भकत्वं तर्हि महत्वदीर्घत्वयोरपि तन्न स्यात्। कारणाविशेषाभावादित्यर्थः। न तावदसमवायिकारणलक्षणभावाभावाभ्यां विशेषः। ह्रस्वत्वादावपि तद्भावात्। अवर्जनीयप्रत्यासत्तिरेवेति चेन्न। महत्वेऽपि साम्यात्। पारिमाण्डल्यादेरारम्भकत्वे सर्वकार्याणामणुत्वप्रसङ्ग इति चेत् तत्किमिदमणुत्वं तच्छब्दवाच्यत्वं

तदत्यन्तसदृशपरिमाणत्वं वा। आद्ये नास्ति हानिः। द्वितीये महत्त्वस्याप्यनारम्भकत्वं स्यात्। न हि द्व्यणुकादिपरिमाणमत्यन्तसदृशं संकेतमात्रं त्वप्रामाणिकमिति। द्व्यणुकादिपरिमाणे कारणान्तराभावाच्च संख्यादेर्महत्त्वारम्भकत्वप्रसङ्गात्। संयोगस्य च द्रव्यनिमित्तत्वमेव किं न स्यात्। भिन्नतया प्रतीत्यभावादिति चेन्न। भिन्नतया प्रतीत्यभावेऽप्यपेक्षाबुद्धेरात्मगतद्वित्वनिमित्तत्वात्। अभ्युपगम्य चेदमुदितम्। किं तन्तूनां यथाकथंचित्संयोगः पटस्य कारणं विवक्षितो वा। नाद्यः। अनभ्युपगमात्। द्वितीये कस्येति वाच्यम्। पटस्येति चेत् कस्तदा पटोऽवशिष्यते। अतोऽसमवायिकारणं नाम न किंचिदस्तीति सिद्धम् ॥ ११ ॥

भावदीपः—

॥ ॐ महद्दीर्घवद्वा ह्रस्वपरिमंडलाभ्याम् ॐ ॥ ११ ॥ इत्युक्तमिति ॥ पूर्वाध्याये उक्तमित्यर्थः ॥ न युक्तमितीति ॥ कुतो न युक्तमित्यतो द्रव्यत्वेन परिगणितात्मविशेषस्य तस्याष्टगुणमात्रयुक्तत्वादिति वक्तुं कानि द्रव्याणि के च गुणा इत्याकांक्षायामनुव्याख्यानोक्तदिशा तदीयप्रक्रियामनुवदति ॥ षट् खल्विति ॥ एतदुक्तिः सर्वसूत्रोपयोगित्वेन द्रव्यादय इत्यादिपदार्थो गुणकर्मसामान्यविशेषसमवाया इति लक्षणवाक्यैर्विवरिष्यत इति भावः ॥ गुणाश्रय इति ॥ गुणात्यंताभावानधिकरण इत्यर्थः। तेनाद्यक्षणे नाव्याप्तिर्घटादाविति ध्येयम्। नित्यमेवेत्येवकारेण प्रवाहव्यवच्छेदेन स्वरूपस्यैव कूटस्थनित्यत्वमाह। एवमग्रेपि। अत्र नित्यानित्यविभागोक्तिः। नित्यमेव च भावात्। रूपादिमत्त्वाच्चेत्येतत्सूत्रोपयोगित्वेन महदिति सूत्रोपलक्षितद्रव्यासमवायिकारणादि खंडनाय चेति बोध्यम् ॥ जातिमात्राश्रया इति ॥ समवायवृत्त्येति योज्यम्। एतेन रूपत्वादिसमवायाश्रयो रूपादिरिति नासंभवः। गुणस्वरूपाद्युक्तिरीश्वरस्याष्टगुणत्वाद्यवधारणार्था ॥ अनित्या एवेति ॥ गुणेषु नित्यानित्यविभागोक्तिर्महदितिसूत्रोपयोगित्वेन। संयोगजनके संयोगे विभागजनके च विभागेऽतिव्याप्तिनिरासाय संयोगविभागयोरिति द्वयोरप्युक्तिः। कर्मस्वरूपाद्युक्तिरुभयथापि न कर्मेतिसूत्रोपयोगित्वेनेति ज्ञेयम्। संयोगेऽतिव्याप्तिनिरासाय सामान्यलक्षणे नित्यमिति विशेषणम्। समवाये दोषनिरासाय समवेतमित्युक्तिः। आत्मादिनित्यवस्तुगतैकत्वानां जातित्वनिवृत्त्यर्थमेकमिति ॥ अनेकविधमिति ॥ परापरजातिभेदेनेति भावः। एतदुक्तिश्च नित्यमेव चेति सूत्रोपयोगित्वेन। समवायस्वरूपोक्तिरपि समवायसूत्रोपयोगाय। अंत्याः व्यावर्त (कांतर) कशून्याः। एतत्त्रयं सामान्या-

द्वित्रयम् । नित्यानित्यविभागोक्तेरुपयोगमाह ॥ तत्रानित्यमिति ॥ त्रितयेति ॥ समवाय्यसमवायिनिमित्तकारणरूपत्रितयेत्यर्थः । परमाणव इति बहुवचनं भूतचतुष्टयापेक्षया । प्रत्येकं तु परमाणुद्वयं द्वयमेव द्व्यणुकादिकार्यारंभकमिति बोध्यम् । तंतुरूपादौ पटासमवायित्वव्यावृत्त्यर्थमवधृतेत्यादि । निमित्तादावतिव्याप्तिनिरासाय पूर्वभागः । एवं सति तंतुरूपादेः पटरूपादि प्रत्यसमवायिकारणत्वं न स्यात् । पटरूपं प्रति समवायिकारणभूते पटे तंतुरूपस्याप्रत्यासन्नत्वादित्यत आह ॥ प्रत्यासत्तिर्द्वेधेति ॥ असमवायिकारणस्य समवायिकारणे प्रत्यासत्तिर्वर्तनं द्वेधा । स्वकार्येण सहैकस्मिन्नर्थे समवायेन वर्तनं वा स्वकार्ये यत्कारणं तेन सहैकस्मिन्नर्थे वर्तनं चेत्यर्थः ॥ कारणैकार्थप्रत्यासत्त्यादिनेति ॥ कार्यगतरूपादिगुणानां कारणगतरूपादयो गुणाः कारणैकार्थप्रत्यासत्त्याऽसमवायिकारणानि । कर्म तु आदिपदोपात्तया कार्यैकार्थप्रत्यासत्त्याऽसमवायिकारणम् । संयोगादिकार्यं प्रति कारणभूतघटादिगतकर्मणः स्वकार्येण संयोगादिना एकार्थे घटादौ प्रत्यासन्नत्वादिति बोध्यम् ॥ कार्यगतेति ॥ आम्रफलादिरूपकार्यगतकर्मणः कारणभूतं यदाम्रफलादिकं तद्गताः गुरुत्वद्रवत्ववेगसंयोगरूपा गुणाः तद्गतं पूर्वपूर्वपतनादिकर्म चादिपदोक्तया कार्यैकार्थप्रत्यासत्त्याऽसमवायिकारणमित्यर्थः । कार्यगतकर्मणः अवयविगतकर्मणः तत्कारणावयवगतकर्म च कारणैकार्थप्रत्यासत्त्याऽसमवायिकारणमित्यर्थः । यद्वा सुधारीत्या कार्यगतकर्मणः कर्मकारणद्रव्यगता गुरुत्वादयो गुणाः कार्यैकार्थप्रत्यासत्त्या कर्मकारणैकार्थप्रत्यासत्त्याऽसमवायिकारणमित्यर्थः । कारणगतेत्यत्र कारणपदेन कर्मकारणस्य कर्मकारणकारणस्य च ग्रहः । गुणकर्मणी इत्यनयोः क्रमेणान्वयः । कर्मणश्च समवायिकारणस्थगुणा एवासमवायिकारणमित्युक्तेः । महदिति सूत्रनिरस्यं दर्शयति ॥ तत्र परिमाणमिति ॥ संख्येति ॥ द्व्यणुकगतं परिमाणं परमाणुगतद्वित्वसंख्यया त्र्यणुकगतं च द्व्यणुकगतबहुत्वसंख्यया जायत इत्यर्थः । आदिपदेन प्रचयग्रहणम् । तूलपिंडादिस्थपरिमाणं प्रशिथिलावयवसंयोगरूपप्रचयजन्यमित्यर्थः । उभयथापीति सूत्रनिरस्यं दर्शयति ॥ एतदन्यदिति ॥ समवायिकारणासमवायिकारणाभ्यामन्यदित्यर्थः । ईश्वरश्चेदस्ति तर्हि द्रव्यं नवविधमिति भज्यते इत्यतो वाऽष्टगुणत्वं निर्धारयितुं वाऽऽह ॥ स चेति ॥ शिष्टेति ॥ शिष्टेषु आत्मयोग्येषु चतुर्दशसु मध्ये सामान्यस्य संख्यादिपंचकस्य ज्ञानादिषु नवगुणेषु कर्तृत्वार्थं ज्ञानेच्छाप्रयत्नानामावश्यकत्वे संख्यादिसामान्यगुणपंचकातिरिक्तानां ज्ञानादि-

गुणत्रयातिरिक्तानां संस्कारसुखदुःखद्वेषधर्माधर्मरूपषड्गुणानामयोग्य इत्यर्थः । नित्य-ज्ञानस्य स्मरणहेतुसंस्काराभावादत एव मोहाभावेन तत्कार्यद्वेषधर्माधर्माणां तत्कार्य-सुखादेश्चाभावादिति भावः । सूत्रभाष्ययोः क्रियमाणमापादनं उक्तशंकाऽनिरास-कत्वादसंगतमाशंक्य परिष्कृत्य व्याचष्टे ॥ युक्तमेवेति ॥ महत्त्वादिति । प्रतियो गिनि पंचमीनिर्देशात् पंचम्यंततया विग्रहः प्रदर्शितः । पूर्ववत्सन इत्यादाविव पंचम्यं-तादपि वतिप्रत्ययसिद्धेः पंचमस्याद्यपादे तत्र तस्येवेत्यत्र मंजर्यामुक्तत्वात् । कारण-बहुत्वात्कारणमहत्त्वात्प्रचयविशेषाच्च महदिति काणादसूत्रानुसारेण सूत्रे महदित्यादि-निर्देश इति भावः । कारणविशेषाभावादिति । ननु तल्लक्षणभावाभावौ वा । सदृशस्य हि कार्यस्य नैव योगः कथंचन । अप्रत्यक्षत्वमेदस्याद्यतः कार्येष्वणुत्वत इत्यनुभाष्योक्तदिशा तत्सदृशपरिमाणत्वापत्तिरूपबाधकभावाभावौ वा विशेषकारण-मित्यत आद्यं निराह ॥ न तावदिति ॥ अवधृतसामर्थ्यं नेति शंकते ॥ अवर्जनीयेति ॥ द्वितीयमाशंक्य निराह ॥ पारिमाण्डल्यादेरिति ॥ नास्ति हानिरिति ॥ सर्वपदार्थाना-मापेक्षिकाणुत्ववत्त्वेन तच्छब्दवाच्यत्वस्येष्टत्वात् । अणुत्वं च महत्त्वं च यतो वस्तुव्यपेक्षया इत्यनुभाष्योक्तेरिति भावः । ननु परिमाणमणु महद्दीर्घं ह्रस्वं चेति चतुर्विधमित्यङ्गीकारात् त्र्यणुकादिसर्वकार्यगतं महत् । परमाणुद्व्यणुकगतं तु अणुपरिमाणमित्युपेतत्वेन कथं द्व्यणुकादिगतमत्यंतसदृशं नेत्यत आह ॥ संकेतमात्रं त्विति ॥ पारिमांडल्यादेरारंभकत्वे बाधकरूपकारणविशेषं परिहृत्यानारंभकत्वे बाधकमाह ॥ द्व्यणुकादिति ॥ एतेनान्यथा पारिमांडल्यादिना परिमाणरूपकार्यानु-त्पत्तौ एतयोर्द्व्यणुकत्र्यणुकयोरपि न स्यात् परिमाणमिति शेषः । पारिमाण्डल्यादि-तोऽन्यस्य कारणविशेषस्याभावादिति भाष्यस्यार्थांतरं दर्शितम् । अत एवैताभ्यामिति वाच्ये एतयोरित्युक्तिः । नन्वस्तु परमाणुगतद्वित्वसंख्यैव कारणान्तरमित्यत आह ॥ संख्यादेरिति ॥ परमाण्वादिगतसंख्यादेर्द्व्यणुकादिपरिमाणकारणत्वे चतुर-णुकाद्यारंभकानेकत्र्यणुकगतबहुत्वसंख्याप्रचययोश्चतुरणुकगतमहत्त्वारंभकत्वप्रसंगादि-त्यर्थः । एतेन भाष्येऽन्यथा संख्यादिनैव द्व्यणुकादिगतपरिमाणोत्पत्त्यंगोकारे एत-योर्महत्त्वदीर्घत्वयोरपि चतुरणुकादिस्थपरिमाणकारणत्वं न स्यात् । किं तु त्र्यणु-कादिगतसंख्यादेरेव स्यात् । विशेषकारणाभावादित्यपि भाष्यार्थ उक्तो भवति । सूत्रोक्तं परिमाणाख्यगुणासमवायिकारणनिराकरणमुपलक्षणमिति भावेन द्रव्यासम-वायिकारणमपि निराह ॥ संयोगस्य चेति ॥ यत्परमाण्वादिसंयोगो द्व्यणुकाद्य-

समवायिकारणमिति वैशेषिकादीनां कल्पनं तन्न । तस्य द्रव्यनिमित्तत्वमेव किं न स्यात् । अनिमित्तत्वे मानाभावात् । निमित्तत्वे बाधकाभावाच्चेति भावः । निमित्तत्वाभावे मानमाशंकते ॥ भिन्नतयेति ॥ युतसिद्धतयेत्यर्थः ॥ अभ्युपगम्येति ॥ समवायिकारणद्रव्यसंयोगात्तत्कार्यस्य पटादेर्भेदमभ्युपगम्य समवायिकारणसंयोगस्य निमित्तत्वमस्तु इत्युक्तम् । वस्तुतस्तु समवायिकारणद्रव्यसंयोगादन्यत्कार्यमेव नास्तीत्यर्थः । तदेव व्यनक्ति ॥ किं तंतूनामिति ॥ विवक्षितो वेति ॥ तंतूनां व्यतिषंगविशेषो वेत्यर्थः ॥ कस्तदा पट इति ॥ तंतुभ्योऽन्यः पटः साक्षात्कस्य दृष्टिपथं गत इत्येकादशे गीतातात्पर्योक्तब्रह्मतर्कस्मृतेरिति भावः । एवं द्रव्यगुणयोरसमवायिकारणनिरासे सति कार्यकारणयोरभेदादेव कर्मासमवायिकारणमपि निरस्तप्रायं मत्वाऽऽद्यसूत्रतात्पर्यार्थमुपसंहरति ॥ अत इति ॥ परिमाणलक्षणगुणासमवायिकारणे विशेषकल्पनस्य निर्बीजत्वात् । उपादानोपादेययोरभेदेन द्रव्यासमवायिकारणस्य कर्मासमवायिकारणस्य चायोगादित्यर्थः ॥ ११ ॥

सूत्रभाष्यम्——

॥ ॐ उभयथाऽपि न कर्मातस्तदभावः ॐ ॥ १२ ॥

ईश्वरेच्छाया नित्यत्वे तद्भावेऽपि परमाणुकर्माभावान्नेदानीमपि (तत्) स्यात् । अनित्यत्वे तत्कारणाभावात् । अतः परमाणुचेष्टाभावात्तत्कार्याभावः । वैदिकेश्वरस्य तु वेदेनैव सर्वशक्तित्वोक्तेः सर्वमुपपद्यते । स्वत एव काले विशेषा (विभेदा.पा.)ङ्गीकृतेश्च ॥ १२ ॥

तत्वप्रकाशिका——

एवमसमवायिकारणं निरस्य निमित्तकारणनिरासाय सूत्रमुपन्यस्य व्याचष्टे ॥ उभयथेति ॥ सर्वकार्याणामीश्वरेच्छानिमित्तं चेत्तत्र प्रष्टव्यम् । किमीश्वरेच्छा नित्यानित्या वेति । नाद्यः । सत्यामपीश्वरेच्छायां प्रलये परमाणुचेष्टाभावेनान्यदापि तस्यास्तदभावापातात् । तथा च द्व्यणुकादिकार्याभावः स्यात् । सति कारणे कार्यानुत्पादे तस्य कारणत्वायोगात् । न द्वितीयः । तथा सति तस्याः कार्यत्वेन निमित्तमपेक्षितं स्यात् । न च तदस्ति । तदुत्पत्तावीश्वरेच्छाया अनपेक्षायामन्यत्रापि तत्प्रसङ्गः । पूर्वेच्छानिमित्तमिति चेन्न । प्रमाणाभावात् । अतोऽनित्यत्वे तदभावेनेश्वरेच्छातः परमाणुकर्माभावान्न द्व्यणुकाद्युत्पत्तिः स्यात् । अतो द्वेधापि दुष्टत्वा-

न्नेश्वरेच्छा निमित्तमिति भावः। अत्र परिमाणाभिधानासंनिधापितं द्व्यणुकादिकं तदिति परामृशति। ईश्वरेच्छाया नित्यत्वनिमित्तत्वयोरभ्युपगमात्। समं भवतामेतद्दूषणमित्यत आह॥ वैदिकेति॥ नायमस्मत्पक्षे दोषः। सत्यामपीश्वरेच्छाया कार्यानुत्पादादेः सर्वस्येश्वराचिन्त्यशक्तित एवोपपत्तेः। सा च 'परास्य शक्तिर्विविधैव श्रूयते' इत्यादि श्रुतिसिद्धा। न च परपक्षे सममेतत्। तेनानुमानमात्रेणेश्वरमभ्युपगच्छता तस्याचिन्त्यशक्त्यनङ्गीकारादिति भावः। इतश्च नायं दोषोऽस्मत्पक्ष इत्याह॥ स्वत एवेति॥ नेश्वरेच्छामात्रं निमित्तं येन प्रलयेऽपि कार्योत्पत्तिप्रसङ्गः। किं तु कालोऽपि। न चास्ति प्रलये सोऽपीति वाच्यम्। कालविशेषस्य सृष्टिकालस्याभावात्। न चैतदन्यमतेऽपि समम्। अस्माभिः काले स्वाभाविकसृष्टिकालत्वादिविशेषाणामङ्गीकृतत्वेन तदुपपत्तेः। परेण पुनः सृष्ट्याद्युपाधित एव कालविशेषस्याङ्गीकृतत्वात्। सृष्टिमन्तरेण सृष्टिकालानुपपत्तिः। सृष्टिकालमन्तरेण तदनुपपत्तिरित्यन्योन्याश्रयापातादिति भावः। ननु सत्यामपीश्वरेच्छायां सृष्टिकालाभावेन कार्योत्पादोपरमे सा मोघा स्यादिति चेत्तत्राप्याह॥ स्वत एवेति॥ नैष दोषः। तत्तत्काल एवेश्वरेच्छाया नित्याया अपि सृष्टिविषयत्वादिविशेषाविर्भावाभ्युपगमात्। न चान्यमतेऽप्येतत्समानम्। अस्माभिस्तद्विशेषाणामनौपाधिकत्वाङ्गीकारात् परेण सृष्ट्याद्युपाधिनिबन्धनत्वाभ्युपगमात्। तथा चोक्तदोष इति भावः। कालस्य निमित्तत्वमीश्वरेच्छानिमित्तत्वनिरासन्यायेन निरस्तमित्यभिप्रेत्य तद्दोषं वा स्वपक्षे परिहरति॥ स्वत एवेति॥ नायं दोषोऽस्मत्पक्षेऽस्माभिः काले सृष्टिकालत्वादिविशेषाङ्गीकारात्। तस्यैव निमित्तत्वात्। न चैवं परपक्षे। अस्माभिः कालविशेषाणां स्वाभाविकत्वोररीकारात्। परेण सृष्ट्याद्युपाधिनिबन्धनत्वाभ्युपगतेस्तत्र चोक्तं दूषणमिति भावः। अदृष्टस्य निमित्तत्वं वा पराकृत्य तं दोषं स्वपक्षे परिहरति॥ स्वत एवेति॥ नायमस्मत्पक्षे दोषो भवति। अस्माभिः सृष्ट्यादिकाले पूर्वं सत्येवादृष्टे समुद्बोधविशेषाङ्गीकारात्। न चैतदन्यमते संभवति। अस्माभिः काले स्वाभाविकविशेषाङ्गीकारात्। परेण पुनः स्वतः काले सृष्टिकालत्वादिविशेषानङ्गीकारेण कदोद्बोध इत्यस्य परिहाराभावात्। उपाध्युक्तौ सोऽपि कदेत्यस्य परिहाराभावादिति भावः॥ १२॥

भावदीपः—

॥ ॐ उभयथापि न कर्मातस्तदभावः ॐ॥ १२॥ ईश्वरेच्छाया नित्यत्वा-

दिना दूषणोक्तेः संगत्यर्थमाह ॥ सर्वकार्याणामिति ॥ तद्भावेऽपीत्यस्यार्थः ॥ सत्यामपीश्वरेच्छायामिति ॥ नेदानीमपीत्यादेरर्थः ॥ अन्यदापीति ॥ इष्टापत्तिमाशंक्य कार्याभाव इत्यग्रेतनमत्रापि योजयति ॥ तथा चेति ॥ अन्यदापि तस्याः तदभाव इत्यत्र हेतुमाह ॥ सति कारण इति ॥ अनित्यत्व इत्यादि व्याचष्टे ॥न द्वितीय इति॥ अत इत्यस्य ईश्वरेच्छाया अभावादिति ईश्वरेच्छात इति चार्थद्वयमुपेत्यात इत्यादि व्याचष्टे ॥ अतो नित्यत्व इति ॥ तावता किं प्रकृत इत्यत आह ॥ अत इति ॥ तस्यैव विवरणम् ॥ द्वेधापि दुष्टत्वादिति ॥ तदभाव इति सूत्रस्थतच्छब्दस्याप्रकृतपरत्वशंकां निरस्यति ॥ अत्र परिमाणाभिधानेति ॥ तेन भाष्ये कार्याभाव इति व्याख्यानं युक्तमिति भावः। वैदिकपदव्यावर्त्यमाह ॥ न च परपक्ष इति ॥ स्वत एवेतिपदव्यावर्त्यमाह। न चैतदन्यमतेऽपि सममिति। एवमग्रेऽपि ॥ उक्तदोष इति ॥ अन्योन्याश्रयरूपदोष इत्यर्थः ॥ निरस्तमिति ॥ नित्योऽनित्यो वेत्याद्युक्तविकल्पदोषैरिति भावः। एवमदृष्टस्येत्यत्रापि बोध्यः ॥ १२ ॥

सूत्रभाष्यम्—

॥ ॐ समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॐ ॥ १३ ॥

कार्यकारणादीनां समवायसम्बन्धाङ्गीकारात्तस्य च भिन्नत्वसाम्यात्समवायान्तरापेक्षायामनवस्थितेः (तिः)। न च तत्प्रमाणम्। प्रथमसम्बन्धासिद्ध्यैव च तद्सिद्धिः स्वनिर्वाहकत्वे समवाय एव न स्यात् ॥ १३ ॥

तत्वप्रकाशिका—

एवं परपक्षे निमित्तकारणासंभवं दर्शयित्वा समवायिकारणनिरासाय सूत्रमुपन्यस्य व्याचष्टे ॥ समवायेति ॥ अत्र कार्यकारणपदमवयवावयविविषयम्। आदिपदेनाऽनित्यगुणक्रियातद्वतां संग्रहः। अथवा कार्यकारणपदेनैवैषां संग्रहः। आदिपदेन नित्यगुणगुणिजातिव्यक्तिविशेषविशेषिणां प्रसंगाद् ग्रहणं। परमाण्वादीनां द्रव्यादिकारणत्वं नोपपन्नम्। तेषां भिन्नत्वमभ्युपेत्य समवायाभ्युपगमात्। भिन्नयोरवयवावयवित्वादिविशेषणविशेष्यभावोपपत्तये समवायोऽगीकार्य एवातस्तदभ्युपगमे को दोष इति चेन्न। तथा सति समवायस्यापि समवायिभ्यां भिन्नत्वसाम्यान्मृद्घटसमवाय इत्यादिविशेषणविशेष्यभावोपपत्तये समवायांतरापेक्षापातात्। तत्रापि भिन्नत्वसा-

स्यात्समवायस्य समवाय इत्यादिविशेषणविशेष्यभावोपपत्तये समवायांतरापेक्षेत्यनवस्था स्यादिति भावः । संत्वनंताः समवायाः प्रामाणिकत्वान्न दोष इत्यत आह ।।न चेति।। तत्तत्र समवायानंत्ये । मूलक्षयाभावान्नानवस्थादूषणमित्यत आह ।। प्रथमेति ।। मूलभूतावयवावयव्यादिसंबंधस्यैव प्रमाणाभावेनासिद्धेस्तत्सिद्धयर्थमभ्युपगंतव्यसंबंधानां सुतरामसिद्धिरित्यस्त्येव मूलक्षतिरिति भावः । माऽस्तु तर्हि समवायपरंपरा प्रथमसमवाय एव स्वनिर्वाहक इति तत्राह ।। स्वनिर्वाहकत्व इति ।। यदि समवायः स्वस्मिन् स्वयमेव विशेषणविशेष्यभावबुद्धिजनकस्तर्हि स एव न स्यात् द्रव्यस्यैव गुणगुण्यादिरूपेण स्वनिर्वाहकत्वोपपत्तौ तद्वैयर्थ्यादिति भावः । न च संबंधत्वात्तस्य स्वनिर्वाहकत्वम् । संयोगेऽपि प्रसंगात् । न चैवमतिप्रसंगः । प्रमाणसदसद्भावेन व्यवस्थोपपत्तेः । न च समवाये प्रमाणमस्ति । रूपं नित्यसंबंधसंबद्धं गुणत्वान्महत्त्ववदित्यत्र साध्यशून्यं निदर्शनम् । विशेषणविशेष्यभावत्वेन हेतुना तस्य संबंधनिबंधनत्वसाधने व्यभिचारः । विशेषणेऽतिप्रसंगः ।। १३ ।।

भावदीपः—

।। ॐ समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॐ ।। १३ ।। समवायिकारणनिरासप्रस्तावे नित्यग्रहणं किमर्थमित्यत आह ।।प्रसंगाद्ग्रहणमिति।। तत्प्रमाणमित्यत्र तच्छब्दार्थः ।। तत् तत्रेति ।। तस्यार्थः ।। समवायानंत्य इति ।। न चैवमतिप्रसंग इति ।। संयोगसंबंधोऽपि नोपेयतामित्यर्थः। समवाये मानांतरमाशंकते।। विशेषणेति ।। ।। तस्येति ।। गुणगुण्यादिविशेषणविशेष्यभावस्येत्यर्थः ।। व्यभिचार इति ।। घटाभाववद्भूतलमिति अभावभूतलविशेषणविशेष्यभावे व्यभिचार इत्यर्थः । भावमात्रनिष्ठविशेषणविशेष्यभावत्वादिभिर्हेतुर्विशेष्यत इत्यत आह ।। विशेषण इति ।। गुणादावपि विशेषणविशेष्यभावस्याभाववदेव संबंधं विनाप्युपपत्त्याऽप्रयोजकत्वात् । अप्रयोजकेनापि साधनेऽतिप्रसंग इत्यर्थः । यद्वा अन्योन्यसंयुक्तानिष्ठत्वविशेषितेन विशेषणविशेष्यभावत्वेन हेतुना भावनिष्ठविशेषणविशेष्यभावदृष्टांतेन संबंधाभाव साधनसंभवादतिप्रसंग इत्यर्थः ।। १३ ।।

सूत्रभाष्यम्—

।। ॐ नित्यमेव च भावात् ॐ ।। १४ ।।

नित्यत्वाच्च परमाणूनां समवायस्य च तस्यैव जनित्वाङ्गीकारान्नित्यमेव कार्यं स्यात् ।
अन्यथा न कदाचित् ॥ १४ ॥

तत्वप्रकाशिका—

एवं परपक्षे कारणत्रयनिरासेन सृष्टिं निरस्य प्रलयनिरासार्थं सूत्रं पठित्वा व्याचष्टे ॥ नित्यमिति ॥ परपक्षे कार्यं नित्यदा स्यान्न तु कदाचित्प्रलयः। समवायिकारणपरमाणूनां सदा सद्भावात् निमित्तस्य चेश्वरेच्छादेर्नित्यत्वात् । असमवायिकारणसंयोगाद्यभावान्नेति चेन्न । तदनुत्पत्तावपि कारणाभावात् । तदसमवायिकारणकर्माद्यभावस्य चानुपपत्तेः । अदृष्टस्य च बाह्यसामग्रीसत्त्वे स्वाभावापराधेन कार्यनिरोधकत्वादर्शनात्। न चैवं वैयर्थ्यम्। सामग्रीसंपत्तावुपयोगादिति भावः । किं च तत्पक्षे पदार्थजनिरपि नित्या स्यात् । समवायस्य नित्यमेव भावांगीकारात् । प्रागसतः सत्ता समवायस्यैव जनित्वाभ्युपगमादिति सूत्रस्यार्थांतरम्। समवायिकारणादिसत्त्वेऽपि कार्योत्पत्त्युपरमे बाधकमाह ॥ अन्यथेति ॥ १४ ॥

भावदीपः—

॥ ॐ नित्यमेव च भावात् ॐ ॥ १४ ॥ कार्यं नित्यमेव स्यादिति भाष्यव्याघातनिरासाय व्याचष्टे ॥ कार्यं नित्यदेति ॥ सर्वैकान्यकियत्तदः काले देति दाप्रत्यये सत्यपि तदोदा चेति पुनर्दाविधिः शब्दांतरादपि यथा स्यादित्येतदर्थमिति नित्यदेति साध्वित्याहुः । एवकारव्यावर्त्यमाह ॥ न त्विति ॥ परमाणूनामित्युपलक्षणमिति भावेनाह ॥ निमित्तस्य चेति ॥ नित्येच्छत्वात्परेशस्य परमाणुसदात्वतः अदृष्टकालयोश्चैव भावात्कार्यं सदा भवेदित्यनुभाष्योक्तेरिति भावः ॥ वैयर्थ्यमिति । अदृष्टस्येत्यनुषंगः । अन्यथाशब्दस्यार्थं वदन्नेवावतारयति ॥ समवायिकारणादिसत्त्वेऽपीति ॥सति कारणे कार्यानुत्पादे तस्य कारणत्वायोगादिति भाष्याभिप्रायः ॥१४॥

सूत्रभाष्यम्—

॥ ॐ रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॐ ॥ १५ ॥

रूपादिमत्त्वाच्च परमाणूनामनित्यत्वम् । तथा दृष्टत्वाल्लोके ॥ १५ ॥

तत्वप्रकाशिका—

एवं परमाणूनां नित्यत्वमभ्युपेत्य तदारंभवादो दूषितः। इदानीं तन्नित्यत्वमपि

पराकुर्वत्सूत्रमुपन्यस्य व्याचष्टे ।। रूपादीति ।। पार्थिवादिपरमाणूनां रूपादिमत्त्वहेतुना प्रकृतनित्यत्वविपर्ययो भवति । यद्रूपादिमत्तस्य घटादेरनित्यत्वदर्शनादित्यर्थः ।। १५ ।।

भावदीपः—

।। ॐ रूपादिमत्त्वाच्च विपर्ययोऽदर्शनात् ॐ ।। १५ ।।

सूत्रभाष्यम्—

।। ॐ उभयथा च दोषात् ॐ ।। १६ ।।

नित्यत्वे परमाणूनां तद्वत्सर्वनित्यत्वं स्यात् । विशेषप्रमाणाभावात् । अनित्यत्वे कारणाभावात्तदुत्पत्त्यभावः ।। १६ ।।

तत्वप्रकाशिका—

ननु रूपादिमत्त्वेऽपि परमाणूनां नित्यत्वं किं न स्यात् अस्तु वाऽनित्यत्वं किं बाधकमित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ।।उभयथा चेति ।। यदि रूपादिमतामपि परमाणूनां नानित्यत्वं तर्हि तद्वद्घटादेरपि किं न स्यात् । न चावयवित्वादिविशेषः । रूपादिमत्त्वादेव तत्सिद्धेः । अस्त्वनित्यत्वं परमाणूनां किं बाधकमित्युक्तमेवेति चेन्न । तथा सति परपक्षे तत्समवायिकारणाभावेन तदुत्पत्त्यभावान्न द्व्यणुकादिकार्योत्पत्तिरिति भावः ।। १६ ।।

भावदीपः—

।। ॐ उभयथा च दोषात् ॐ ।।१६।। अनित्यत्वमित्यस्य व्याख्येयं दर्शयन् सूत्रार्थमाह ।। पार्थिवादीति ।। रूपादेर्भौतिकत्वलाभाय पार्थिवादीति विशेषोक्तिः । तेन नेश्वरादौ व्यभिचार इति भावः । उक्तं चैतत् । एवं चात्माकार्त्स्न्यमित्यत्रानुभाष्ये । भौतिकं त्वेव रूपादि व्याप्तं नाशेन नो मत इति ।। १६ ।।

सूत्रभाष्यम्—

।। ॐ अपरिग्रहाच्चात्यन्तमनपेक्षा ॐ ।। १७ ।।

श्रुतिस्मृत्यपरिगृहीतत्वाच्चातिशयेनानपेक्ष(क्ष्य)ता ।
'आन्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थकाम्' इति(च) मोक्षधर्मे ।।१७।।

।। इति वैशेषिकाधिकरणम् ।। ६ ।।

तत्वप्रकाशिका—

एवं प्रपंचेन दूषितं परमाण्वारंभवादमप्रामाणिकत्वेनापि दूषयत्सूत्रं पठित्वा व्याचष्टे ॥ अपरिग्रहाच्चेति ॥ न केवलं श्रुत्याद्यपरिगृहीतत्वं तस्य तद्विरुद्धत्वं चेति भावेनाह ॥ आन्वीक्षिकीमिति ॥ अहमासं पंडितको हैतुको वेदनिंदकः । आन्वीक्षिकीमित्यादि सृगालवाक्यम् । अतः परमाण्वारंभवादस्यानुपपन्नत्वेनाविरोधकत्वाद्युक्तं पूर्वाध्यायोक्तमीश्वरस्याऽनंतगुणत्वमिति सिद्धम् ॥ १७ ॥ अ० ६ ॥

भावदीपः—

॥ ॐ अपरिग्रहाच्चात्यंतमनपेक्षा ॐ ॥१७॥ तद्विरुद्धत्वं चेति ॥ सूत्रे अपरिग्रहादिति नञस्तदभावतद्विरुद्धरूपार्थद्वयमिति दर्शितम् ॥ सृगालेति ॥देवेंद्रो जंबुकरूपेणागत्य कंचित्प्रति वक्ति । अहमासमित्यादिना । तेन दृष्टवदुत्प्रेक्षारूपतर्कासक्तेः सृगालजन्महेतुत्वं सूच्यत इति भावः ॥ अत इति ॥ महदित्यादिसूत्रोक्तदूषणगणात् श्रुत्यादिप्रमाणशून्यत्वात्तद्विरुद्धत्वाच्चेत्यर्थः ॥ १७ ॥ अ० ६ ॥

सूत्रभाष्यम्—

परमाणुपुञ्जवादिमतं निरा(अपा)करोति—

॥ ॐ समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॐ ॥ १८ ॥

समुदायस्यैकहेतुकत्वं न युज्यते । उभयहेतुकेऽप्यन्योऽन्याश्रयात्तदप्राप्तिः । अन्यथा सर्वदा समुदायसत्त्वं (पा. समुदायत्वं.) स्यात् ॥ १८ ॥

तत्वप्रकाशिका—

॥ अधिकरणार्थं दर्शयति ॥ परमाणुपुंजेति ॥ द्विविधसमयिनां मध्ये हैतुकनिरासानंतरं पाषंडिनां निराकरणं प्राप्तम् । पाषंडिनोऽपि द्विविधाः । अवैदिका वैदिकाश्च । तत्रावैदिकानामतिविरोधिनां निराकरणं प्रथमप्राप्तम् । तत्र बौद्धजैनानां मध्ये बौद्धस्यैव प्राथमिकत्वादादौ तन्निराक्रिया युक्ता। बौद्धानां बहुविधत्वेऽपि परमाणुकारणताभ्युपगंतृनिराकरणसंगत्या वैभाषिकसौत्रांतिकमतमत्र निषिध्यत इति भावः। अत्र विष्णोर्जगत्कारणत्वे बौद्धमतविरोधनिरासादस्ति शास्त्रादिसंगतिः । हरिर्जगत्कर्तेत्युक्तम्। तत्र बौद्धमतविरोधेनाभावशंका स्यादिति तद्दूषणीयमेव । ईश्वरस्य जगत्कारणत्वमेव विषयः । युक्तमयुक्तं वेति संदेहः । समयविवादः संदेहबीजम् । न

युक्तमिति पूर्वपक्षः। रूपविज्ञानवेदनासंज्ञासंस्काररूपेणावस्थितं खलु जगत्परमार्थसत् तदशेषं परमाणुसमुदायमात्रं न त्ववयवी नाम कश्चिदस्ति। परमाणुसमुदाय एव घटादिबुद्ध्युपपत्तौ परमाणुपरिणामस्य तदारब्धस्य वाऽवयविनोऽभ्युपगमस्य व्यर्थत्वात्। विद्यमानं च सर्वं क्षणिकमेव एतदेव हि पदार्थानां सत्त्वं यत्कालतः क्षणिकत्वं देशतः परमाणुत्वम्। तच्चैतत्कार्यं कालकर्मनिमित्तेन भवत्यतः किमीश्वरेण। न च तदनभ्युपगमे मानविरोधः। आगमप्रामाण्यानभ्युपगमात्। अतो न लक्षणं युक्तमित्येवं प्राप्ते सिद्धांतयत्सूत्रमुपन्यस्य व्याचष्टे ॥ समुदाय इति ॥ न विष्णोर्जगत्कारणत्वमयुक्तम्। बौद्धानामनुपपन्नभाषित्वेन तत्कल्पनाया दुष्टत्वात्। तथाहि। कालकर्मादिनिमित्तेन क्षणिकः परमाणुनिमित्तकः समुदायो भवति न त्ववयवी कश्चिदस्तीति यदुक्तं तत्र प्रष्टव्यम्। किमयं समुदाय एकपरमाणुहेतुकोऽनेकपरमाणुहेतुको वेति। आद्यस्तावदनुपपन्नः। एकस्मात्समुदाय इत्यस्य व्याहतेः। द्वितीयोऽपि किं मिलितानेकहेतुको वा विरलानेकहेतुको वा। नाद्यः। मिलितानेकतः समुदायः समुदाये सति मिलितत्वमित्यन्योन्याश्रयतया समुदायानुपपत्तेः। नोत्तरः। अमिलितपरमाणूनां सदा सद्भावेन समुदायस्यापि सदातनत्वापत्त्या प्रलयाभ्युपगमविरोधापातादिति भावः। अत्रातिपीडायामनवस्थापि द्रष्टव्या ॥ १८ ॥

भावदीपः —

॥ ॐ समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॐ ॥१८॥ अत्रैतन्मतनिरासे परमाणुपुंजेतिपदप्रयोगसूचितां संगतिं वक्तुमाह ॥ द्विविधेति ॥ प्रागुक्तद्विविधेत्यर्थः। तामाह ॥ बौद्धानामिति ॥ वैभाषिकेति ॥ तन्मतयोरनतिभिन्नार्थत्वादिति भावः। आकाशे चेति सूत्रानुगुण्याय जगत्स्वरूपं व्यनक्ति ॥ रूपेति ॥ विषयेंद्रियाद्यात्मना स्थिताः रूपरसगंधस्पर्शशब्दात्मकाः परमाणवो रूपस्कंधः। निर्विकल्पकज्ञानं विज्ञानस्कंधः। दुःखं वेदनास्कंधः। सुखं च दुःखाभाव एव। सुखमपि वेदनास्कंध इत्येकदेशिनां मतम्। कुंडली गौर्गच्छतीत्यादिसविकल्पकज्ञानं संज्ञास्कंधः। तेषां वासना संस्कारस्कंधः। इत्येवं रूपेणावस्थितमित्यर्थः। असति प्रतिज्ञेत्यादिसूत्रोपयोगायाह ॥ परमार्थेति ॥ अर्थक्रियाकारिरूपपारमार्थिकसत्यमित्यर्थः। आद्यसूत्रनिरस्यमाह ॥ तदशेषमिति ॥ वेदांतिरीत्याऽऽह ॥ परिणामस्येति ॥ वैशेषिकरीत्याऽऽह ॥ तदारब्धस्येति ॥ द्वितीयादिसूत्रोपयोगायाऽऽह ॥ विद्यमानं चेति ॥ क्षणिकत्वे सत्वं न स्यादित्यत आह ॥ एतदेवेति ॥ ईश्वरवादस्य तद्विरोधं दर्शयितुमाह ॥ तच्चेति ॥ विप्रतिषे-

धाच्चासमंजसमित्याद्युक्तदोषोऽत्र मते नेत्याह ॥ न चेत्यादिना ॥ अत इति ॥ ईश्वरस्यैवानुपयोगादित्यर्थः ॥ छ ॥ समुदायादिखंडनस्य संगतत्वद्योतनायाह ॥ न विष्णोरिति ॥ परमाणुनिमित्तकः समुदायो भवतीत्येतावदनुवादेनैव पूर्तौ कालकर्मेत्याद्युक्तिः सूत्रेषु वक्ष्यमाणदूषणज्ञानसौकर्यायेति ध्येयम् । सूत्रभाष्ययोरुभयशब्दोऽनेकपरो न द्विमात्रपर इति भावेन अनेकपरमाणुहेतुको वेति विकल्पः । भाष्यं व्याचष्टे ॥ आद्यस्तावदित्यादिना ॥ भाष्ये एतत्पक्षनिरासः सौत्रापिपदसूचित इति द्योतनाय तावदित्युक्तम् । भाष्ये समुदायशब्दप्रयोगादेव सूचितां युक्तिमाह॥एकस्मादिति॥ सूत्रभाष्ययोरुभयशब्दः उभादुदात्तो नित्यमिति सूत्रादवयवार्थे निष्पन्नत्वान्मिलितानेकपरमाणुपर इत्यभिप्रेत्य विकल्पमुखेन भाष्यं व्याचष्टे ॥ किं मिलितेति ॥ एकदेशस्थानेकहेतुको वेत्यर्थः । अन्यथेत्यादि व्याचष्टे ॥ नोत्तर इत्यादिना ॥ अतिपीडायामिति ॥ अन्योन्याश्रयपरिहाराय मेलनस्य मेलनांतरेण सामीप्येन वा विशिष्टानेकहेतुकत्वे अनवस्थेत्यर्थः ॥ १८ ॥

सूत्रभाष्यम् –

॥ ॐ इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॐ ॥ १९ ॥

सर्वदा विद्यमानोऽपि समुदायः परस्परापेक्षया व्यवह्रियत इति चेन्न । एकं कार्यमुत्पाद्य तस्य विनष्टत्वात्परस्परप्रत्ययस्तदपेक्षया व्यवहार इति न युज्यते । कारणे सति कार्यं भवत्येवेति हि तस्य नियमः ॥ १९ ॥

तत्वप्रकाशिका––

उक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्याक्षेपांशं तावद् व्याचष्टे ॥ इतरेति ॥ यदुक्तं समुदायस्य विरलानेकहेतुकत्वे सदातनत्वं स्यादिति तदङ्गीक्रियत एव । न चैवं प्रलयानुपपत्तिः । सदातनत्वेऽपि समुदायस्य वित्तिव्यवहाराभावेन प्रलयोपपत्तेः । न च विद्यमानत्वे व्यवहाराभावोऽपि कुत इति वाच्यम् । व्यवहारादेरिदं चेदं चेति परमाणुपरस्परापेक्षानिबन्धनत्वात् । परस्परापेक्षा च परमाणूनां सामीप्यापेक्षा । न चास्ति प्रलये तत्सामीप्यमतो नोक्तदोष इति भावः । परिहारांशं व्याचष्टे॥ नेति ॥ वित्तिव्यवहारयोः कादाचित्कतया समुदायस्य सदातनत्वेऽपि न दोष इति न युक्तम् ।

तथा सति कदापि समुदाये वित्तिव्यवहाराभावापातात् । विरला हि परमाणवो मिलितपरमाणूनुत्पादयन्ति । ते च पुरुषेण दृश्यन्ते । ते चैकैकं कार्यमुत्पाद्य नश्यन्त्येव तेऽप्येवं तथा च कथं द्रष्टुः परस्परापेक्षा ततो व्यवहारादि कथं घटेत । न ह्यन्यत्र दर्शनमन्यत्र परस्परापेक्षाऽन्यत्र व्यवहारादीति युज्यते । पुरुषस्यापि तथात्वमिति भावः । अथ विरलपरमाणुभ्यो जाता मिलितपरमाणवः स्थायिनोऽतो युक्तो व्यवहार इत्यत आह ॥ कारणे सतीति ॥ यदि परमाणवः स्थायिनस्तर्हि ते प्रतिक्षणं कार्यमुत्पादयेयुः । कारणे सति कार्यं भवत्येवेति तन्नियमात् । तथा चाल्पतरकालेऽप्यकस्माद्घटात्कुलालशालापूर्तिप्रसङ्ग इति भावः । यद्यप्यत्र क्षणिकत्वहानिरेव वाच्या तथापि सैव तदभ्युपगमकारणप्रदर्शनेनोक्ता वेदितव्या ॥ १९ ॥

भावदीपः—

॥ ॐ इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॐ ॥ १९ ॥

॥ तदंगीक्रियत एवेति ॥ अनेकत्वसंख्याया एव समुदायत्वात्तस्य च विरलेष्वपि परमाणुषु सत्त्वेन सदातनत्वादिति भावः ॥ वित्तीति ॥ ज्ञप्तिव्यवहारयोरभावेनेत्यर्थः ॥ व्यवहारादेरिति ॥ अनेकत्वसंख्याया अपेक्षाबुद्धिव्यंग्यत्वेन तत्प्रतीतिव्यवहारयोश्च इदं चेदं चेत्यपेक्षाबुद्ध्यधीनत्वादित्यर्थः । इतरसहितमितरदितरेतरदितीतरेतरेति-सौत्रविन्यासलब्धमाह ॥ सामीप्यापेक्षेति ॥ तच्च सामीप्यहेतुकमित्यनुभाष्योक्तेरिति भावः । नञोऽन्वयायाह ॥ वित्तिव्यवहारयोरिति ॥ असांगत्यनिरासाय मध्ये हेतुमध्याहृत्य तदुपपादकत्वेन भाष्यं व्याख्यातुमाह ॥ तथा सतीति ॥ उत्पत्तिमात्रनिमित्तत्वादिति सूत्रशेषस्याणूनामेकैककार्योत्पत्तावेव निमित्तत्वात् द्वितीयक्षणवृत्त्यपेक्षाबुद्ध्यादावनिमित्तत्वादित्यर्थमुपेत्यैकं कार्यमित्यादिभाष्यं व्याचष्टे ॥ ते चैकैकं कार्यमिति ॥ नश्यन्त्येवेति ॥ क्षणिकत्वादिति भावः ॥ तेऽपीति ॥ मिलिताणुभ्यो जाता अन्येऽपीत्यर्थः । द्रष्टुर्दर्शनवतः पुंसः । यत्र दर्शनं तत्रैव दर्शनानंतरभाविनी इदं चेदं चेति जायमानाऽपेक्षाबुद्धिः । तत्रैव तदनंतरभाविनौ वित्तिव्यवहारौ च कथं भवेयुरित्यर्थः ॥ पुरुषस्यापीति ॥ विषयवदात्मनोऽपि क्षणिकत्वमुपेत्य परमाणुदर्शनमपेक्षाबुद्धिः समुदायवित्तिव्यवहारौ इत्येतेषामेकविषयत्वमिव एकाधिकरणत्वमपि न युक्तमित्यर्थः ॥ तदभ्युपगम इति ॥ क्षणिकत्वस्याभ्युपगमे कारणे सति

सूत्रभाष्यम् –

॥ ॐ उत्तरोत्पादे च पूर्वनिरोधात् ॐ ॥ २० ॥

कार्योत्पत्तावेव कारणस्य विनाशाच्च न विशेषकार्योत्पत्तिः ॥ २० ॥

तत्वप्रकाशिका –

एवं विरलपरमाणुभ्यो मिलितपरमाणूत्पत्तिमभ्युपेत्य व्यवहाराद्यसंभवो दर्शितः । अथ विशेषकार्योत्पत्तिमपि निराकुर्वत्सूत्रमुपन्यस्य व्याचष्टे ॥ उत्तरेति ॥ न क्षणिकमते विशेषकार्योत्पत्तिश्च युक्ता । कारणस्य स्वसदृशकार्यजनन एव सामर्थ्यात् । अन्यथा घटात्पटोत्पत्तिप्रसङ्गात् । न च वाच्यं सदृशकार्योपजननसमर्थमपि कारणं कार्यमुत्पाद्य पश्चाद्वैसादृश्यमुत्पादयतीति । न चातिप्रसङ्गः । अदृष्टाधीनत्वादिति । सदृशमेकं कार्यमुत्पाद्यैव कारणस्य विनष्टत्वात् । अन्यथा क्षणिकत्वविरोध इति भावः ॥ २० ॥

भावदीपः—

॥ ॐ उत्तरोत्पादे च पूर्वनिरोधात् ॐ ॥ २० ॥ अथेति ॥ अभ्युपगमाभावरूपार्थांतरे अथशब्दः । विरलेभ्यो मिलिताणुरूपविशेषकार्योत्पत्तिमपीत्यर्थः। इति चेन्नेति सूत्रान्नञनुवृत्तिं मत्वा भाष्यस्थचकारस्यान्वयमाह ॥ न क्षणिकमते विशेषकार्योत्पत्तिश्चेति ॥ सौत्रश्चशब्दोऽवधारण इति मत्वा कार्येत्यादिभाष्यं व्याचष्टे ॥ कारणस्येति ॥ उत्पत्ताविति विषयसप्तमीं मत्वा सामर्थ्यादिति हेतुमध्याहृत्य एकां व्याख्यां कृत्वा अधुना उत्पत्तौ सत्यामेवेति सतिसप्तमीं मत्वा यथान्यासं व्याख्यातुं व्यावर्त्यशंकामाह ॥ न च वाच्यमिति ॥ सूत्रमप्येवं द्वेधा योज्यम् । अन्यथा असंगतिप्रसंगादिति भावः ॥ अन्यथेति ॥ नन्वेवं स्वतः सदृशकार्यजनका अप्यणवोऽदृष्टसहकृता आदावेव विसदृशानुत्पादयेयुरिति चेन्न । तथात्वे स्वतः सदृशजनकोऽपि घटोऽदृष्टसहकृतः कदाचित्पटमपि जनयेदिति तात्पर्यात् ॥ २० ॥

सूत्रभाष्यम्—

॥ ॐ असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॐ ॥ २१ ॥

कारणे विनष्टे कार्यमुत्पद्यते चेत्तत्कार्यमिति प्रतिज्ञाहानिः । तत्काले कारणमस्ति चेद्विनाशकारणाभावाद्यौगपद्यं सर्वकार्याणाम् ॥ २१ ॥

तत्वप्रकाशिका—

एवं विसदृशकार्योत्पत्तिनिरासेन व्यवहारादिकं पराकृत्येदानीं प्रतिक्षणोत्पत्तिमेव च निराकुर्वत्सूत्रमुपन्यस्य व्याचष्टे ॥ असतीति ॥ न प्रतिक्षणं कार्योत्पत्तिर्युक्ता। तथा हि। किं कारणे विनष्टे कार्यमुत्पद्यते विद्यमाने वा। नाद्यः। यस्मिन्विनष्टे यदुत्पद्यते तस्य तत्कार्यत्वेऽतिप्रसङ्गात्। न द्वितीयः। एकस्मिन्क्षणे स्वयमात्मानं लब्ध्वा कार्योत्पत्तिक्षणेऽपि तस्यावस्थाने कारणस्य द्विक्षणकत्वप्रसङ्गात्। क्षणिकस्य च द्विक्षणावस्थाने तदुत्तरत्र विनाशकारणाभावात्पुनस्तस्मात्कार्योत्पत्तयः स्यु. तेभ्यश्च तथेति सर्वकार्याणां यौगपद्यं स्यात्। तथा यस्मिन् क्षणे कारणं तस्मिन्नेव कार्यावस्थानप्रसङ्गात् तत्कार्याणां चैवमिति सर्वकार्याणां यौगपद्यं प्रसज्येत। न च क्षणार्धे समुत्पन्नं क्षणार्धे कार्यमुत्पादयतीति युक्तम्। क्षणस्य पूर्वमध्यापरकलाविकलत्वाभिलापादिति भावः ॥ २१ ॥

भावदीपः—

॥ ॐ असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॐ ॥ २१ ॥ विशेषकार्योत्पत्तिनिरासस्य प्रकृतोपयोगं दर्शयन्ननुवदति ॥ एवमिति ॥ विरलाणुभ्यो मिलिताणूत्पत्त्ययोगे तद्विषयदर्शनसामीप्यहेतुकापेक्षाबुद्ध्यादेरयोगादिति भावः ॥ उत्पत्तिमेवेति ॥ दूरे वित्तिव्यवहारादिचिंतेत्येवार्थः। असंगतिनिरासाय योग्यसाध्यमुक्त्वा तदुपपादकत्वेन भाष्यं योजयति ॥ न प्रतिक्षणमिति ॥ अत्रापि पूर्वत्रेव नञनुवर्तते। उत्तरोत्पाद इति च प्रथमांततयेति भावः। कारणे नष्ट इति परांगीकारादस्य पक्षस्य पूर्वं निर्देशः। कारणे सति कार्यमित्यत्र किं कारणं यस्मिन् क्षणे आत्मालाभः तदुत्तरस्मिन् कार्योत्पत्तिक्षणेऽपि स्थित्वा कार्यमुत्पादयतीत्यभिमतं उतात्मलाभक्षण एव कार्यमुत्पादयतीति हृदि विकल्प्य आद्ये भाष्यादौ यौगपद्यशब्देनाविच्छेदेनोत्पत्तिरभिमतेति भावेन तत्काल इत्यादिभाष्यं व्याचष्टे ॥ एकस्मिन् क्षण इति ॥ तदुत्तरत्रेति ॥ तृतीयक्षण इत्यर्थः। यौगपद्यपदस्य सहावस्थानमर्थमुपेत्य अंत्यपक्षदूषणपरतयापि भाष्यं व्याचष्टे ॥ यौगपद्यमिति ॥ एकस्यापि विनाशकाभावात् एकक्षणवृत्तिरवरूपसहावस्थानं स्यादित्यर्थः। अस्मिन् पक्षे सव्येतरगोविषा-

सूत्रभाष्यम्—

॥ ॐ प्रतिसङ्ख्याऽप्रतिसङ्ख्या-
निरोधाप्राप्तिरविच्छेदात् ॐ ॥ २२ ॥

कारणे सति कार्यं भवत्येवेति नियमान्निस्सन्तानः ससन्तानश्च विनाशो न युज्यते ॥ २२ ॥

तत्वप्रकाशिका—

एवं क्षणिकवादे कार्योत्पादं पराकृत्य विनाशं च पराकुर्वत्सूत्रं पठित्वा व्याचष्टे ॥ प्रतिसंख्येति ॥ सन्तानमन्तरेण यः प्रतिक्षणं विनाशः यश्च सन्तानेन सह क्षणिकमते तयोरनुपपत्तिः। तथा हि प्रतिक्षणं कारणं कार्यं निर्वर्त्य नश्यतीति वक्तव्यम्। तत्र स्वकार्यवियोगकाले कारणं सदेवेति कार्यमुत्पादयेत्। कारणे सति कार्यं भवत्येवेति नियमाभ्युपगमात्। तदुत्पत्त्यनन्तरं चैवमिति कथं प्रतिक्षणं नाशो युज्येत। नाप्यन्यः। सतो हि घटस्यात्यन्तिको नाशः। अतोऽसौ सत्वात्कार्यमुत्पादयेदेव। कारणे सति कार्यं भवत्येवेति नियमात्। तत्कार्यं चैवमिति कथं सन्तानोच्छेदावसर इति भावः। संतानो नित्य एवेति चेन्न। प्रलयानुपपत्तेः। विविक्ततया प्रलयोपपत्तिरिति निरस्तम्। संतानस्य नित्यत्वे क्षणिकत्वविरोधः। अवास्तवत्वान्नासौ क्षणिक इति चेन्न। संतानिनामपि तथात्वापातात्। न हि सन्ति संतानिनो न संतान इति युक्तम्। एतेन समुदायस्यावास्तवत्वं परास्तम्। समुदायोऽपि समुदायिमात्रं तदतिरिक्तो वा। नाद्यः विरोधात्। द्वितीये स एवावयवी। अवास्तवत्वे घटादिबुद्धीनां निरालम्बनत्वापातात्। परमाणव एवालम्बनमिति चेन्न। तेषामनेकत्वादतीन्द्रियत्वाच्चेति ॥ २२ ॥

भावदीपः —

॥ ॐ प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ॐ ॥ २२ ॥ सूत्रे प्रतिसंख्याऽप्रतिसंख्यानिरोधशब्देन बुद्धिपूर्वकविनाशयोरुक्तावपि तौ काविति शंकापनुत्तये भाष्ये निस्संतानससंतानविनाशपदेन व्यत्यासेन व्याख्यानं कृतम्। तदर्थं वदन् भाष्यं व्याचष्टे ॥ संतानमंतरेणेति ॥ संतानः परंपरा। अविच्छेदादिति सौत्रहेत्वंशं विवरितुमाह ॥ प्रतिक्षणमिति ॥ स्वकार्यवियोगेति ॥ कार्योत्पत्तिक्षणे कारणं तावत् सदेव। क्षणिकस्य उत्पत्तिकाल एव वियोगकाल इति वियोगकालेऽपि

कारणं सदेवेति कार्यमुत्पादयेदित्यर्थः । तत्र भाष्योक्तं हेतुं योजयति ॥ कारणे सतीति ॥ विविक्ततयेति ॥ मिलिताणूनां विरलतयावस्थानं प्रलय इति निरस्तम् । तेभ्यो विसदृशमिलिताणूनामुत्पत्त्ययोगादेरुक्तत्वादिति भावः ॥ २२ ॥

सूत्रभाष्यम्—

॥ ॐ उभयथा च दोषात् ॐ ॥ २३ ॥

कारणे सति कार्यं भवत्येवेति नियमे सर्वदा कार्यभावान्न कार्यकारणविशेषः । अनियमे कार्यानुत्पत्तिः ॥ २३ ॥

तत्वप्रकाशिका—

तथापि न सतां भावानां क्षणिकता शक्या निषेद्धुम् । अर्थक्रियाकारित्वं खलु सत्त्वं नाम । न च तत्क्षणिकतामन्तरेणोपपन्नम् । यद्याद्यक्षणे घटो घटांतरमुत्पाद्य न स्वयं नश्यति तदा घटान्तरमपि तथेत्यनन्तकार्यापत्तिः । अतोऽर्थक्रियाकारित्वसत्त्वसिद्ध्यै क्षणिकत्वमेष्टव्यं भावानामित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ उभयथेति ॥ अर्थक्रियाकारित्वं सत्त्वं तदन्यथानुपपत्त्या क्षणिकत्वं भावानामिति वदन् प्रष्टव्यो जायते । कारणे सति कार्यं भवत्येवेति नियमोऽस्ति न वेति । यद्यस्ति तदा कार्यस्यापि यावत्कारणभावित्वात्सव्येतरगोविषाणवन्न कार्यकारणभावः । नियमाभावे तत्कालेऽर्थक्रियाकारित्वाभावेनासत्त्वापत्त्या न कदापि ततः कार्योत्पत्तिः स्यात्तथा च क्षणिकता व्याहन्यत इति भावः । न च वाच्यं कथं तर्हि घटादिसत्त्वव्यवस्थेति । जलाहरणादियोग्यतयैव तदुपपत्तेः ॥ २३ ॥

भावदीपः —

॥ ॐ उभयथा च दोषात् ॐ ॥ २३ ॥ अर्थापत्तिनिरासपरत्वं स्फोरयन् परिष्कृत्य भाष्यं व्याचष्टे ॥ अर्थक्रियाकारित्वं सत्त्वमिति ॥ तथा च क्षणिकतेति ॥ सत्वस्यैवाभावे कल्पकाभावादिति भावः ॥ २३ ॥

सूत्रभाष्यम्—

॥ ॐ आकाशे चाविशेषात् ॐ ॥ २४ ॥

दीपादिषु विशेषदर्शनात्क्षणिकत्वेनान्यत्रापि क्षणिकत्वमनुमीयते चेदाकाशादिष्वविशेष-

तत्वप्रकाशिका—

मा भूदर्थापत्त्या क्षणिकत्वसिद्धिर्यत्सत्तत्क्षणिकं यथा दीपादि। सन्तश्चामी भावा इत्यनुमानेन सेत्स्यति। न च साध्यविकलता दृष्टान्तस्य। यद्विरुद्धधर्माधिकरणं तन्नाना यथा घटपटौ तथा चायं दीपः पूर्वोत्तरक्षणस्थोऽपि विरुद्धधर्माधिकरणं परिमाणविशेषदर्शनात् इत्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ आकाशे चेति ॥ न चोक्तानुमानेन भावानां क्षणिकत्वसिद्धिः। यत्सत् तदक्षणिकम्। यथा आकाशमित्यन्यत्राकाशदृष्टान्तेनाक्षणिकत्वस्यापि साधयितुं शक्यत्वात्। न चाकाशे साध्याभावः। विशेषदर्शनाभावेन क्षणिकत्वसाधकाभावादिति भावः। अथ हेत्वन्तरेण तत्र क्षणिकत्वसिद्धिरिति चेन्न। पञ्चस्कन्धातिरिक्तत्वेन तत्र तदनभ्युपगमात्। न चोत्पत्त्यनन्तरमेव मुसलाहतघटे व्यभिचारः। तत्रापि पूर्वमध्यापरकलाविकलकालवृत्तित्वाभावात्। आकाशे न सत्त्वमिति चेत्। किमिदं सत्त्वं यदाकाशे न संप्रतिपन्नम्। अर्थक्रियाकारित्वं चेत्तर्हि त्वदनुमानेऽसिद्धिः साधनविकलता च निदर्शनस्य। अथ स्वरूपेण विद्यमानता भावरूपता वा साऽऽकाशे न नास्ति ॥ २४ ॥

भावदीपः—

॥ ॐ आकाशे चाविशेषात् ॐ ॥२४॥ शंकते ॥ माभूदिति ॥ दीपादिष्वित्यादिभाष्यं विवृण्वन् पररीत्योदाहरणोपनयौ द्वावेवाह ॥ यत्सदिति ॥ शंकाभाष्यस्य प्रागेव विवृतत्वात् परिहारभाष्यं नञध्याहारेण व्याख्याति ॥ न चोक्तेति ॥ सर्वं क्षणिकं वदतापि बौद्धेन सेयं दिगित्यादिप्रत्यभिज्ञाया न भ्रांतित्वं वाच्यम्। पंचस्कंधेभ्योऽन्यत्वादित्यादितत्वनिर्णयोक्तमाह॥ पंचस्कंधातिरिक्तत्वेनेति ॥ उक्तं च तत्रैव टीकायम्। आकाशस्य प्रतिसंख्याऽप्रतिसंख्यानिरोधयोर्द्वयोर्विनाशयोश्च पंचस्कंधेभ्योऽन्यत्वान्नित्यत्वमिति बौद्धसिद्धांतः। यथोक्तम्। आकाशो द्वौ विनाशौ च नित्यं त्रयमसंस्कृतमित्यादि। भाष्ये सौत्राकाशपदलक्षणामुपेत्याकाशादिष्विति दिशा द्विविधविनाशस्य चादिपदेनोक्तावपि टीकायां यथासूत्रमाकाशमात्रोक्तिराकाशे साध्यसाधनयोरभावरूपास्वारस्यशंकानिरासाय। अत एव तत्र साध्यादिसमर्थनमिति ज्ञेयम् ॥ तत्रापीति ॥ तादृशकालवृत्तित्वस्यैव त्वया क्षणिकत्वांगीकारादिति भावः। आकाश इति छेदो न त्वाकाशेनेति ॥ त्वदनुमानेऽसिद्धिरिति ॥ अर्थक्रियाकारित्वं कदाचित्कार्यकरत्वं चेत् गगनेऽपि तस्य सत्त्वात् तत्र तन्नेति वदता त्वया प्रतिक्षणं कार्यकरत्वं सत्वमिति वाच्यम्। तच्च पक्षे प्रपंचे दृष्टान्ते दीपे च नेत्यसिद्धिः

साधनविकलता च दृष्टांतस्येत्यर्थः ॥ न नास्तीति ॥ किं त्वस्त्येव । ततश्च मदीयहेतौ त्वदुक्तं साधनवैकल्यं नेति शेषः ॥ २४ ॥

सूत्रभाष्यम्—

॥ ॐ अनुस्मृतेश्च ॐ ॥ २५ ॥

तदेवेदमिति प्रत्यभिज्ञानाच्च । प्रत्यभिज्ञाया भ्रान्तित्वे विशेषदर्शनस्यापि भ्रान्तित्वम् ॥ २५ ॥ ॥ इति समुदायाधिकरणम् ॥ ७ ॥

तत्वप्रकाशिका—

एवं प्रतिपक्षेणानुमानं निरस्य बाधेनापि पराकुर्वत्सूत्रं पठित्वा व्याचष्टे ॥ अनुस्मृतेश्चेति ॥ परिलूनपुनर्जातकुन्तलकलापप्रत्यभिज्ञावद्भ्रमोऽयमित्यत आह ॥ प्रत्यभिज्ञाया इति ॥ किं प्रत्यभिज्ञाया बाधितत्वेन भ्रान्तित्वं कल्प्यते बाधकमन्तरेण वा । नाद्यः । तदभावात् । द्वितीये दीपादिविशेषदर्शनस्य भ्रमत्वप्रसङ्ग इति भावः । विरुद्धधर्माध्यासो बाधकमिति चेन्न । तस्य कालादिभेदेनोपपत्तेः । न हि तादृशेऽन्यत्वमस्मत्संमतम् । अन्यथैकक्षणेऽपि भावभेदप्रसङ्गात् । एतेन प्रदीपोऽपि व्याख्यातः । घटोऽयं निरन्तरोत्तरक्षणवृत्तिध्वंसप्रतियोगी घटत्वान्मुसलाहतैकक्षणवृत्ति घटवदिति चोक्तरीत्या परास्तम् । घट इति च किं परमाणवः पक्षीक्रियन्ते समुदायो वा । नाद्यः । दृष्टान्ताभावात् । न द्वितीयः । तस्यावस्तुत्वात् । अतो वैभाषिकादिमतस्य अनुपपन्नत्वेनाविरोधकत्वाद्युक्तमीश्वरस्याशेषजगत्कारणत्वलक्षणमिति सिद्धम् ॥ २५ ॥ अ० ७ ॥

भावदीपः—

॥ ॐ अनुस्मृतेश्च ॐ ॥ २५ ॥ बाधेनापीति ॥ तेन सूत्रभाष्ययोश्चशब्द समुच्चय इति न क्षणिकत्वं भावानामित्यनुषंग इति च सूचितम् । भाष्यस्थापादनस्य निर्बीजतानिरासाय विकल्पमुखेनार्थमाह ॥ किमिति ॥ विरुद्धधर्मेति ॥ आम्रफलादौ श्यामत्वाश्यामत्वादिविरुद्धधर्माध्यासस्तदेवेदमिति प्रत्यभिज्ञायाः प्रमात्वे बाधकमित्यर्थः । तस्य श्यामत्वादेरित्यर्थः । यद्यपि तार्किकाणां तत्रापि भेदस्तथापि तदेवेदमिति प्रत्यभिज्ञानान्न भेदोऽस्मत्सम्मत इत्याह॥न हीति ॥ अन्यथेति॥ अभेदे प्रमितेऽपि भेदश्चेदेकक्षणवर्तिनोर्घटपटयोर्भेददर्शनात्तद्दृष्टांतेनैकक्षणवर्तिनोपिघटस्य स्वस्माद्भेदः स्यादित्यर्थः । यद्वा एकक्षणवर्तिनोऽपि घटस्य पुरुषभेदेन ज्ञातत्वाज्ञातत्वयोर्दृष्टेर्भेदः

स्यादित्यर्थः ॥ एतेनेति ॥ कालादिभेदेनोपपत्तिकथनेनेत्यर्थः । बालयुवशरीरवत् प्रदीपेऽत्यंतभेदाभावेऽपि कालादिभेदेन परिमाणभेद इति भावः ॥ उक्तरीत्येति ॥ तत्रापि पूर्वमध्यापरकलाविकलकालवृत्तित्वादित्युक्तदिशा तादृशोत्तरक्षणाप्रसिद्ध्या दृष्टांते साध्यासंमतेरित्यर्थः। परनियमभंजनाय घटोऽयमित्यादि रूपेण त्र्यवयवोक्तिः । पक्षविकल्पेनापि दोषमाह ॥ घट इति चेति ॥ दृष्टांताभावादिति ॥ मुसलाहतैकक्षणवृत्तिपरमाण्वात्मकघटरूपदृष्टांतस्वरूपे तत्र साध्यसाधनयोश्चास्माकं विप्रतिपत्तेरित्यर्थः ॥ अत इति ॥ सृष्टिप्रलयादेरयुक्तत्वात् तदनुमानस्य बाधप्रतिरोधग्रस्तत्वाच्चेत्यर्थः ॥ २५ ॥ अ० ७ ॥

सूत्रभाष्यम्--

शून्यवादमपाकरोति—

॥ ॐ नासतोऽदृष्टत्वात् ॐ ॥ २६ ॥

अदृष्टत्वादसतः कारणत्वं न युज्यते ॥ २६ ॥

तत्वप्रकाशिका--

अधिकरणार्थं दर्शयति ॥ शून्येति ॥ अत्र हरेर्जगत्कारणत्वे शून्यमतविरोधपरिहारादस्ति शास्त्रादिसंगतिः। जगत्कारणमीश्वर इत्युक्तम् । तत्र शून्यसमयविरोधेऽभावबुद्धिः स्यादित्यतोऽसौ निराकर्तव्य एव। परमेश्वरस्य जगत्कारणत्वं विषयः। युक्तमयुक्तं वेति संदेहः । मतविमतिः संदेहबीजम् । न युक्तमिति पूर्वः पक्षः । एकं शून्यमेव खल्वन्तत्रयविरहितं परमार्थतो विद्यमानं तस्मादेवैतदशेषं जगदुदेति । न च तस्यासङ्गस्य जगत्कारणत्वानुपपत्तिः । संवृतिसंबन्धेनोपपत्तेः । न च श्रुतिविरोधः । तत्प्रामाण्यानभ्युपगमात् । अतः शून्यादेव जगदुदयसंभवादीश्वरेणोपयोगाभावात्सुतरामयुक्तं लक्षणमिति प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ नेति ॥ न शून्यस्य जगत्कारणत्वं युक्तम् । तत्प्रमाणाभावात् । न तावत्प्रत्यक्षमत्रास्ति । नाप्यनुमानम् । क्वाप्यसतः कारणत्वादर्शनेन दृष्टान्ताभावात् । आगमस्तु नेष्टो दृष्टो वेति भावः ॥ १६ ॥

भावदीपः--

॥ ॐ नासतोऽदृष्टत्वात् ॐ ॥ २६ ॥ अपरः शून्यमखिलमित्याद्यनुभाष्यं हृदि कृत्वा आद्यसूत्रनिरस्यमाह ॥ एकं शून्यमेवेति ॥ एवं चोभयहेतुकेऽपीत्युक्तदो-

षोऽत्र नेति भावः। नाभावः वैधर्म्याच्चेति सूत्रनिरस्योक्तिः एवेति। क्षणिकत्वपक्षोक्तदोषश्च नेति भावेनोक्तमंतत्रयेति। देशतः कालतो वस्तुतोऽतत्रयशब्दिताणुत्वानित्यत्वभेदै रहितमित्यर्थः। शून्यं चेन्निस्स्वरूपं किमित्यत उक्तम् ॥ परमार्थत इति ॥ सर्वधर्मोज्झितत्वाच्छून्यमिति नामेतिभावः ॥ संवृतीति ॥ संवृतिरज्ञानम्। विप्रतिषेधाच्चासमंजसमित्यादिदोषश्च नेत्याह ॥ तत्प्रामाण्येति ॥ अत इति ॥ अप्रमाणतया श्रुत्यादिविरोधाभावादित्यर्थः। व्युत्क्रमेण भाष्यं व्याचष्टे ॥ नेति ॥ ननु अदृष्टमात्रेण कथं कारणत्वाभावः। ईश्वरस्यापि तदभावापातादित्यतो मध्ये हेतुमाह ॥ तत्प्रमाणेति ॥तत्तत्र कारणत्वे। तदुपपादकत्वेनादृष्टत्वादित्येतस्य शून्यकारणत्वस्य अप्रत्यक्षत्वात्। असति कारणत्वस्य क्वाप्यननुभावात्। असत्कारणत्वे आगमस्यादृष्टत्वादिति त्रेधार्थं मत्वाह ॥ न तावदित्यादिना ॥ क्वाप्यसत इति ॥ शून्यं सदिति परांगीकारेऽपि सर्वधर्मराहित्ये सति असत्त्वमवर्जनीयमित्यापाद्य दूषणमिदमिति ध्येयम् ॥ दृष्टो वेति ॥ असद्वा इदमग्र आसीदित्यादिस्तु एतेन सर्वे व्याख्याता इत्यादावन्यार्थत्वेन निर्णीत इति भावः। तत्वप्रदीपे तु अदृष्टत्वात् प्रमाणेनादृष्टत्वादित्येवोक्तम् ॥ २६ ॥

सूत्रभाष्यम्—

**॥ ॐ उदासीनानामपि चैवं सिद्धिः ॐ ॥ २७ ॥**

असतः कारणत्वे उदासीनानां हेयोपादेयबुद्धिवर्जितानां खपुष्पादीनामपि सकाशात्कार्यसिद्धिः। चशब्दान्न चेदन्यत्रापि न स्यादविशेषात् ॥ २७ ॥

तत्वप्रकाशिका—

नन्वदृष्टमपि जगत्कारणत्वं शून्यस्याभ्युपगतं चेत्को दोष इत्याशङ्क्यां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ उदासीनानामिति ॥ यद्यदृष्टमप्यसतः कारणत्वं कल्प्येत। एवं तर्हि खपुष्पादीनामपि सकाशात्सौरभ्यादिसिद्धिः स्यात्। न च साऽभ्युपगन्तुं शक्यते। तेषां हेयोपादेयबुद्धिविषयतावर्जितत्वादिति भावः। खपुष्पादीनामकारणत्वेऽपि शून्यादेव जगदुत्पत्तौ को दोष इत्यत आह ॥ चशब्दादिति ॥ इति सूचितमिति शेषः। अन्यत्र शून्यात्। असत्त्वाविशेषादिति भावः। ॥ २७ ॥

भावदीपः—

॥ ॐ उदासीनानामपि चैवं सिद्धिः ॐ ॥ २७ ॥ सौत्रैवंशब्दार्थो भाष्ये

असतः कारणत्व इति दर्शयन् तदापादनानुगुणं व्याख्याति ।। यद्यदृष्टमपीति ।। व्याख्येयस्य सौत्रैवंशब्दस्यानुवादः एवं तर्हीति । सूत्रे खपुष्पादीनामित्यनुक्त्वोदासीनानामित्युक्तस्य भावं वक्तुं तद्व्यावर्त्यमाह ।। न च सेति ।। एतच्छंकानिवर्तकमुदासीनानामित्यस्य व्याख्यानरूपं भाष्यस्थं हेयोपादेयबुद्धिवर्जितानामिति हेतुगर्भं विशेषणमयुक्तम्। तद्वर्जितानामपि तंत्वादीनां हेतुत्वादित्याशंक्यार्थमाह ।।तेषामिति।। तंत्वादयस्तु तद्बुद्धिविषया एवेति न दोष इति भावः। कार्यसिद्धिपदान्वयायान्यत्रेति पदं व्याचष्टे ।।अन्यत्रेति।। अन्यस्मात् शून्यादिति यावत् ।।२७।।

सूत्रभाष्यम्--

**।। ॐ नाभाव उपलब्धेः ॐ ।। २८ ।।**

न च जगदेव शून्यमिति वाच्यम्। दृष्टत्वात् ।। २८ ।।

तत्वप्रकाशिका--

भवेदेतद्दूषणं यदि शून्यतत्वात्परमार्थतो मृदो घट इव जगदुत्पद्येत। नैतदस्ति। संवृतिवशाच्छून्यमेव जगदाकारेण विवर्तत इत्यभ्युपगमात्। न हि शून्ये जगदध्यस्तमित्यत्रोक्तदोषप्रसरः। असत एव रजताकारेण प्रतीयमानत्वादित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ।। नेति ।। शून्यमेव जगदाकारेणावभाति न परमार्थतो जगदस्तीत्ययुक्तं सदिति दृष्टत्वादित्यर्थः। न चासदेव रजताकारेणावभातीति युक्तम्। नेदं रजतं किं तु शुक्तिरेवेति बाधविरोधात् ।। २८ ।।

भावदीपः--

।। ॐ नाभाव उपलब्धेः ॐ ।। २८ ।। विवर्तते विपरीतज्ञानविषयो भवतीत्यर्थः। न चादृष्टिविरोध इत्यत आह ।। असत एवेति ।। तन्मते भ्रांतेर्निरधिष्ठानत्वादसत एव रजताकारेणेत्युक्तम्। भाष्यस्थैवकारान्वयं वदन् तद्व्यावर्त्यं दर्शयति ।। शून्यमेवेति ।। दृष्टांतं निराह ।। न चेति ।। नेदमिति ।। तथा च सदेवान्याकारेण प्रतीयते न त्वसत्। येन तद्दृष्टांतेनेहापि तथा स्यादिति भावः ।।२८।।

सूत्रभाष्यम्--

**।। ॐ वैधर्म्याच्च न स्वप्नादिवत् ॐ ।। २९ ।।**

न च दृष्टस्यापि स्वप्नादिवदभावः। तस्योत्तरकाले स्वप्नोऽयं नायं सर्प इत्याद्यनुभवात्। न चात्र तादृशं प्रमाणमस्ति ।। २९ ।।

।। इति असदाधिकरणम् ।। ८ ।।

तत्वप्रकाशिका –

ननु सदिति दृश्यमानस्य स्वप्नस्य रज्जुभुजङ्गादेश्चासत्त्वं दृष्टमतो जगतः सत्त्वेन दृष्टस्याप्यसत्त्वं किं न स्यादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ वैधर्म्याच्चेति ॥ न जगतः सत्त्वेनोपलब्धस्यापि स्वप्नादिवदसत्त्वं वाच्यम् । स्वप्नस्यासत्त्वस्यैवाभावात् । स्वप्नजाग्रत्त्वं दृष्टान्त इति चेन्न । तथापि न तद्वदसत्त्वं जगतः । ततो जाग्रत्त्वादेः स्वप्न एवायं न जाग्रत् रज्जुरियं न सर्प इत्यादिबाधकविषयत्वेन वैलक्षण्यादित्याशयः । प्रकृतेऽपि बाधकादसत्त्वं किं न स्यादित्याशङ्कां चशब्दाभिप्रायेण परिहरति ॥ न चेति ॥ तदेवं शून्यमतस्याप्ययुक्तत्वाद्युक्तमीश्वरस्य जगत्कारणत्वलक्षणमिति सिद्धम् ॥ २९ ॥ अ० ८ ॥

भावदीपः—

॥ ॐ वैधर्म्याच्च न स्वप्नादिवत् ॐ ॥ २९ ॥ सूत्रादिस्थादिपदार्थमाह ॥ रज्जुभुजंगादेश्चेति ॥ न चेत्यादिभाष्यं व्याचष्टे ॥ न जगत इति ॥ भाष्ये अनुवर्तिताभावशब्दार्थो सत्वमिति । संध्ये सृष्टिराह हीति वक्ष्यमाणाविरोधाय भाष्यभावमाह ॥ स्वप्नस्येति ॥ नेति ॥ नासत्त्वमित्यन्वयः ॥ तत इति ॥ जगत इत्यर्थः ॥ चशब्देति ॥ जगति बाधाभावादित्यनुक्तसमुच्चये सौत्रश्चशब्द इति दर्शितम् । तत् तस्मान्निष्प्रमाणकत्वात्प्रमाणविरुद्धत्वाच्चेत्यर्थः ॥ २९ ॥ अ० ८ ॥

सूत्रभाष्यम्—

विज्ञानवादमपाकरोति—

॥ ॐ न भावोऽनुपलब्धेः ॐ ॥ ३० ॥

न विज्ञानमात्रं जगत् । तथाऽनुभवाभावात् ॥ ३० ॥

तत्वप्रकाशिका—

अधिकरणार्थं दर्शयति ॥ विज्ञानेति ॥ अत्रेश्वरस्य जगत्कारणत्वे विज्ञानवादविरोधनिरासादस्ति शास्त्रादिसंगतिः । ईश्वरो जगत्कारणमित्युक्तम् । तत्र च योगाचारमतविरोधेऽनुपपन्नत्वप्रसङ्गादवश्यं निरसनीयं तद्भवति । हरेर्जगत्कारणत्वमेव विषयः । युक्तमयुक्तं वेति संदेहः । समयविवाद एव संदेहबीजम् । न युक्तमिति पूर्वः पक्षः । नित्यं निरञ्जनं विज्ञानतत्त्वमेकमेव खलु विद्यमानम् ।

तन्मात्रमेवेदं जगन्न तु ततोऽतिरिक्तमस्ति। ततो जगदुदये नेश्वरेण कृत्यमित्ययुक्तं लक्षणमिति प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ नेति ॥ न विज्ञानातिरिक्तं जगदिति वदन् प्रष्टव्यो जायते। किं विज्ञानतत्त्वे जगदध्यस्तमिति पक्ष उत परमार्थतो विज्ञानजगतोरभेद एवेति। तत्राद्योऽतीताधिकरणन्यायेन निराकर्तव्यः। नापि द्वितीयः। विज्ञानात्मकं जगदित्यत्र प्रमाणाभावादिति भावः। न च 'सहोपलम्भनियमादभेदो नीलतद्धियोः।' इति युक्तम्। भेदप्रतीतिविरोधात्। न चेयं भ्रान्तिः। बाधकाभावात्। अनुमानस्यैव बाधकत्वे स्फुटमितरेतराश्रयत्वं सहोपलम्भादभेद इति प्रतिज्ञाहेत्वोर्विरोधश्च। साहित्यस्य भेद एवोपपत्तेः। न च यत्प्रकाशते तद्विज्ञानं यथा ज्ञानम्। प्रकाशन्ते च नीलादय इति युक्तम्। प्रकाशत इति विज्ञानविषयत्वाभ्युपगमे स्ववृत्तिविरोधेन दृष्टान्ते साधनाभावः। अज्ञाने व्यभिचारश्च प्रकाशत्वाभिप्रायेऽसिद्धिरिति ॥ ३० ॥

भावदीपः—

॥ ॐ न भावोऽनुपलब्धेः ॐ ॥ ३० ॥ नित्यमिति ॥ प्रवाहतो नित्यमित्यर्थः। ज्ञानस्य क्षणिकत्वात्कैवल्यान्वयायैतदुक्तिः। नासत इत्युक्तदोषो नेति भावेनोक्तम् ॥ विद्यमानमिति ॥ विज्ञानमात्रं जगदिति भाष्यं व्यनक्ति ॥ तन्मात्रमेवेति ॥ तथा च नाभाव इत्याद्युक्तदोषोऽपि नेति भावः ॥ छ ॥ छलोत्तरत्वनिरासाय विकल्प्यांतिमपक्षे भाष्यं व्याचष्टे ॥ किं विज्ञानेति ॥ भाष्यस्थानुभवशब्दः प्रमाणत्रयजन्यप्रमामात्रपर इति भावेनाह ॥ प्रमाणाभावादिति ॥ परोक्तमनुमानमाशंक्य निराह ॥ न च सहेति ॥ तथानुभवाभावादिति भाष्यस्य प्रत्युत वैपरीत्येनैवानुभवादित्यर्थमुपेत्याह ॥ भेदेति ॥ स्फुटमिति ॥ भेदप्रतीतेर्भ्रांतित्वे सिद्धे तस्या अविरोधकत्वादनुमानेनाभेदसिद्धिः। सिद्धे च तेनाभेदे भेदप्रतीतेर्भ्रांतित्वसिद्धिरिति स्फुटमितरेतराश्रयत्वमित्यर्थः। तद्रीत्या अवयवद्वयेनानुमानांतरमाशंकते ॥ न च यदिति ॥ तथानुभवेत्यस्य स्वविषयज्ञानाभावादित्यर्थमुपेत्याह ॥ स्ववृत्तीति ॥ पररीत्यैतत्। यद्वा तार्किकादिमते स्ववृत्तिविरोधः न तु सिद्धांतिमते। साक्षिणः स्वप्रकाशत्वांगीकारादिति पूर्वत्रारुच्या दोषांतरमाह ॥ अज्ञाने व्यभिचारश्चेति ॥ ज्ञानप्रागभावादौ ज्ञानावरणे संवृतौ च व्यभिचार इत्यर्थः। एतेन तथा प्रकाशविषयत्वेनानुभवाभावभावात् ज्ञानाभावसत्त्वादिति भावपदवृत्त्या भाष्यार्थः सूचितः। न हि ज्ञानाभावादिरपि ज्ञानम्। विरोधादिति भावः। तथा प्रकाशत्वेनानुभवाभावा-

दित्यप्यर्थमुपेत्याह ॥ असिद्धिरिति ॥ भेदप्रतीत्या घटादेर्ज्ञानस्वरूपत्वा (नुभवा) भावात्। प्रतीतेर्भ्रांतित्वं तु पूर्ववन्निरस्यमिति भावः। इतिशब्दः समाप्तौ ॥३०॥

सूत्रभाष्यम्——

॥ ॐ क्षणिकत्वाच्च ॐ ॥ ३१ ॥

ज्ञानं क्षणिकम्। अर्थानां च स्थायित्वमुक्तम्। अतश्च नैक्यम् ॥ ३१ ॥

तत्वप्रकाशिका——

युक्त्यन्तरेणापि जगतो विज्ञानात्मकत्वं पराकुर्वत्सूत्रमुपन्यस्य व्याचष्टे ॥ क्षणिकत्वाच्चेति ॥ न च ज्ञानेऽपि क्षणिकत्वं भ्रान्तमिति वाच्यम्। मानाभावात् ॥ ३१ ॥

भावदीपः——

॥ ॐ क्षणिकत्वाच्च ॐ ॥ ३१ ॥ सौत्रश्चशब्दः समुच्चये इति भावेनाह ॥ युक्त्यंतरेणापीति ॥ विरुद्धधर्मवत्त्वरूपेणापीत्यर्थः ॥ ३१ ॥

सूत्रभाष्यम्——

॥ ॐ सर्वथाऽनुपपत्तेश्च ॐ ॥ ३२ ॥

प्रमाणाभावात्सर्वश्रुतिस्मृतियुक्तिविरुद्धत्वाच्च नैते पक्षा ग्राह्याः ॥ ३२ ॥

॥ इति अनुपलब्ध्यधिकरणम् ॥ ९ ॥

तत्वप्रकाशिका——

एवं प्रत्येकं दूषितानि बौद्धमतानि पुनः सामान्यदूषणेन पराकुर्वत्सूत्रमुपन्यस्य व्याचष्टे ॥ सर्वथेति ॥ श्रुत्यादिकमुक्तं वक्ष्यमाणं च द्रष्टव्यम्। एतच्चाधिकारिणं प्रति। अतो बौद्धराद्धान्तस्यानुपपन्नत्वेनाविरोधकत्वाद्युक्तं हरेर्जगत्कारणत्वलक्षणमिति सिद्धम् ॥ ३२ ॥ अ० ९ ॥

भावदीपः——

॥ ॐ सर्वथाऽनुपपत्तेश्च ॐ ॥ ३२ ॥ श्रुत्यादिकमुक्तमिति ॥ न ऋते त्वत्क्रियते यच्च किंचिज्जगत्सर्वं ब्रह्मण्येवेदमाविरासीत्। स एव भूयो निजवीर्यचोदितामित्यादीत्यर्थः। युक्तयः सूत्रोक्ता एव। वक्ष्यमाणं पत्युरित्यादावित्यर्थः। परमते श्रुत्यादेरमानत्वादाह ॥ अधिकारिणं प्रतीति ॥ शास्त्रेऽधिकृतं मुमुक्षुं प्रति

तदंगीकृतप्रामाण्येन श्रुत्यादिना विरोध उच्यत इत्यर्थः । अत इति । अप्रामाणिकत्वात् प्रमाणविरुद्धत्वाच्चेत्यर्थः ॥ ३२ ॥ अ० ९ ॥

सूत्रभाष्यम्—

स्याद्वादिमतं दूषयति—

॥ ॐ नैकस्मिन्नसम्भवात् ॐ ॥ ३३ ॥

सत्स्यादसत्स्यात्सदसत्स्यात्ततोऽन्यच्च स्यादित्येतन्नैकस्मिन्युज्यते । अदृष्टत्वेनासम्भवात् ॥ ३३ ॥

तत्वप्रकाशिका—

अधिकरणार्थं दर्शयति ॥ स्यादिति ॥ अत्रेश्वरस्य जगत्कारणत्वे जैनमतविरोधनिरासादस्ति शास्त्रादिसंगतिः । ईश्वरो जगत्कारणमित्युक्तम् । तच्च स्याद्वादिमतविरोधे मन्दस्यानुपपत्तिशङ्का स्यादिति तन्निरासः कर्तव्य एव । तत्परमात्मनो जगत्कारणत्वं विषयः । युक्तमयुक्तं वेति संदेहः । समयविगानं संदेहबीजम् । न युक्तमिति पूर्वः पक्षः । सदसदुभयमुभयविलक्षणं सदसदुभयविलक्षणं नैतत्सर्वसर्वं चेति सप्तभङ्गिजगदात्मादृष्टात्परिदृष्टसाधनैश्च भविष्यति । स च कायपरिमाणः । अतः किमीश्वरेणेति लक्षणसूत्रमयुक्तमिति प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ नेति ॥ यदुच्यते जैनैर्जगत्सप्तभङ्गीति न तद्युक्तम् । व्यवस्थितसदसत्प्रकारद्वयातिरिक्तप्रकारस्याप्रामाणिकत्वेनासंभवात् । एकैकप्रकाराभ्युपगमे दोषदर्शनादेतदुपेयत इति न वाच्यम् । तथा सति दोषभीरुणा सर्वमपि परित्याज्यं स्यात् । सदसत्प्रकारद्वये च न कोऽपि दोष इति भावः ॥ ३३ ॥

भावदीपः—

॥ ॐ नैकस्मिन्नसम्भवात् ॐ ॥ ३३ ॥ जैनमतेति ॥ प्रागुक्तदिशा अवैदिकेषु बौद्धनिरासानंतरं अस्यावसरप्राप्तत्वादिति भावः । भाष्ये सत्स्यादिति स्याच्छब्दस्तिङंतप्रतिरूपकोऽनेकार्थद्योतको निपात इति भावेन आह क्षपणको विश्वं सदसद्द्वयमद्वयम् । द्वयाद्वयमतत्सर्वं सप्तभंगिसदातनमित्यनुभाष्यदिशा सप्तपक्षपरत्वेन भाष्यं व्याचष्टे ॥ सदसदुभयेत्यादिना ॥ सदित्याद्यः प्रकारः । असदिति द्वितीयः । उभयं सदसदात्मकमिति तृतीयः । उभयविलक्षणमिति चतुर्थः । सदसदुभयविलक्षण-

मिति पंचमषष्ठौ। तत्र सत्तद्विलक्षणं चेति पंचमः। असत्तद्विलक्षणं चेति षष्ठः। सर्वं सदसदात्मकं नैतत्सर्वं सदसद्विलक्षणमिति सप्तम उक्तो ध्येयः। एतेन भाष्ये पक्षचतुष्टयस्यस्पष्टत्वेऽपि शिष्टपक्षत्रयं तु तदन्यदित्येतच्चतुर्थप्रकारार्पकमेव पदं प्रागुक्तत्रितयशेषं कृत्वा सत्त्वे सति सद्विलक्षणं असत्त्वे सत्यसद्विलक्षणं सदसत्त्वे सति सदसद्विलक्षणमित्येवंरूपेण बोध्यमिति दर्शितम्। पूर्वाक्षेपार्थमाह ॥ आत्माद्दष्टादित्यादि ॥ एवं चेति सूत्रनिरस्यमाह ॥ स चेति ॥ आत्मेत्यर्थः। अनुक्तोपालंभभ्रांतिं निरस्यन् भाष्यं प्राग्विवृतत्वादिदानीं सामान्यतो व्याचष्टे ॥ यदुच्यत इति ॥ ॥ व्यवस्थितेति ॥ देशकालाभ्यामिति योज्यम्। एतच्च वस्तुनो निस्स्वरूपत्वनिवृत्त्यर्थं वा अंशेऽसिद्धिनिवृत्त्यर्थं वोक्तम्। व्याहृतिनिरासाय व्यवस्थितेति। अदृष्टत्वेनेत्येतत्प्रमाणसामान्याभावपरत्वेन व्याचष्टे ॥ अप्रामाणिकत्वेनेति ॥ तत्तद्दोषनिवृत्त्यर्थं स्वीकृता तत्तदात्मता। यदि तैरखिलैर्दोषैर्लिप्यते चलदर्शन इत्याद्यनुभाष्योक्तमाह ॥ एकैकप्रकारेति ॥ परित्याज्यमिति ॥ अन्यथा सर्वपक्षोक्तदोषलेपः स्यादिति भावः ॥ सदसदिति ॥ देशकालाभ्यां व्यवस्थितेति योज्यम् ॥ ३३ ॥

सूत्रभाष्यम्—

॥ ॐ एवञ्चाऽऽत्माकात्स्न्र्यम् ॐ ॥ ३४ ॥

जीवस्य शरीरपरिमितत्वाङ्गीकारेऽण्वादिशरीरस्थस्य हस्त्यादिशरीरेऽकात्स्न्र्यं स्यात् ॥ ३४ ॥

तत्वप्रकाशिका—

यदपि जीवस्य शरीरपरिमितत्वमभ्युपेयते तत्प्रष्टव्यम्। किं तत्सर्वशरीरगतचेष्टोपपत्त्यर्थमभ्युपेयते शरीरावच्छेदमन्तरेणात्मनः परिमाणाभावप्रसङ्गभयाद्वा। तत्राद्यं पक्षं प्रतिक्षेप्तुं सूत्रमुपन्यस्य व्याचष्टे ॥ एवं चेति ॥ जैनमतप्रसङ्गसंनिधापितमात्मनः शरीरपरिमाणत्वमेवमिति परामृशति। यद्यात्मा सर्वशरीरचेष्टोपपत्त्यर्थं शरीरपरिमाणोऽङ्गीक्रियते एवं तर्हि पिपीलिकादिशरीरस्थस्तत्परिमाण एव स्यात् तथा च तस्यैव कर्मवशाद्गजगर्दभादिशरीरप्राप्तौ तत्रापूर्णता स्यात्। ततश्च न सर्वशरीरचेष्टेति भावः। गजादिशरीरस्थस्याणुशरीरप्राप्तावतिरेकः स्यात्। तथा च शरीरपरिमाणत्वभङ्ग इत्यपि द्रष्टव्यम् ॥ ३४ ॥

भावदीपः --

॥ ॐ एवं चात्माकार्त्स्न्यम् ॐ ॥ ३४ ॥ तत्राद्यं पक्षमिति ॥ द्वितीयपक्षदूषणं तु द्वितीयपक्षं प्रतिक्षिपदित्यत्राग्रे व्यक्तम् । पूर्वसूत्रे प्रकृतत्वाभावादाह ॥ जैनमतेति ॥ जीवस्येत्यादिभाष्यं सौत्रैवंशब्दव्याख्यानमिति दर्शयितुं भाष्यं सोपस्करमनुवदति ॥ यद्यात्मेति ॥ व्याख्येयं सौत्रपदमनुवदति ॥ एवमिति ॥ असंगतिनिरासायापाद्यांतरमुक्त्वा अकार्त्स्न्यापादनं योजयति । तत्परिमाण एव स्यात्तथा चेत्यादि । अण्वादिहस्त्यादिपदयोर्विनिमयेन तदेव भाष्यमन्यथापि योजयति । ॥ गजादीति ॥ भाष्ये शरीर इतिसावधारणम् । अणुशरीर एवाकार्त्स्न्यं पूर्णता न स्यात् । अतिरेकः स्यादिति यावदिति भावः ॥ ३४ ॥

सूत्रभाष्यम् -

॥ ॐ **न च पर्यायादप्यविरोधो विकारादिभ्यः** ॐ ॥ ३५ ॥

तत्तच्छरीरस्थस्य तत्तत्परिमाणत्वमिति न मन्तव्यम् (पा. वाच्यम्) । विकारित्वादनित्यत्वप्रसक्तेः ॥ ३५ ॥

तत्वप्रकाशिका--

यदा यच्छरीरं प्राप्नोति तदा तत्परिमाणोऽतो नोक्तदोष इत्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ नेति ॥ न चात्मनस्तत्तच्छरीरस्थस्य तत्तत्परिमाणत्वमिति युक्तम् । तथा सति विकारित्वापत्तेः । ततश्चानित्यत्वप्रसक्तेस्तेन चानिर्मोक्षप्रसङ्गात्तथा च शास्त्रवैयर्थ्यापातादिति भावः ॥ ३५ ॥

भावदीपः--

॥ ॐ न च पर्यायादप्यविरोधो विकारादिभ्यः ॐ ॥ ३५ ॥ न च पर्यायादप्यविरोध इति सौत्रशंकाभागं विवृण्वन्नेवावतारयति ॥ यदा यच्छरीरमिति ॥ भाष्यं व्याचष्टे ॥ न चात्मन इति ॥ अन्यथाभावि यद्वस्तु तदनित्यमिति स्थितिरित्यनुभाष्यानुरोधेन भाष्योक्तौ हेतू परंपरया योजयति ॥ विकारित्वापत्तेस्ततश्चानित्यत्वप्रसक्तेरिति ॥ नीचोच्चतैव दुःखादेर्भोग इत्यभिधीयत इति तृतीयभाष्यादौ वक्ष्यमाणरीत्या अल्पतेजस्तथैवाल्पं जीवरूपं हि संसृतौ । तथैव सुमहत्तेजः करोति भगवान्महदिति बृहद्भाष्ये षष्ठे अल्पजीवरूपं मुक्तौ महच्च करोतीत्युक्त्या जीवस्य

नीचोच्चतादिरूपपरिमाणव्यत्ययलक्षणविकारवत्त्वेऽपि नानित्यतास्मत्पक्षे तु चैतन्या-देर्विशेषिणः । लक्षणस्य निवृत्तौ तु स्यान्न तच्चेतनें क्वचिदित्यनुभाष्याद्युक्तदिशा नानित्यतापत्तिरिति भावः । भाष्ये इष्टापत्तिनिरासाय सौत्रबहुवचनाशयं व्यनक्ति ॥ तेन चानिर्मोक्षेति ॥मोक्षाभावप्रसंगादित्यर्थः ॥ ३५ ॥

सूत्रभाष्यम्——

॥ ॐ **अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषात्** ॐ ॥ ३६ ॥

परिमाणाभावे स्वरूपाभावप्राप्त्याऽन्त्यपरिमाणस्थितेस्तदर्थत्वेन शरीरस्थितेरुभयनित्य-त्वाद्विशेषेण सर्वशरीरनित्यत्वं स्यात् ॥ ३६ ॥

॥ इति नैकस्मिन्नधिकरणम् (पा. स्याद्वाद्यधिकरणम्) ॥ १० ॥

तत्वप्रकाशिका——

द्वितीयं पक्षं प्रतिक्षिपत्सूत्रं पठित्वा व्याचष्टे ॥ अन्त्येति ॥ शरीरावच्छेद-मन्तरेणात्मनः स्वतः परिमाणाभावात् शरीरपरिमाणत्वं वदन् प्रष्टव्यः । किं मोक्षे जीवस्य परिमाणमस्ति नवेति । न तावद् द्वितीयः । परिमाणाभावे स्वरूपाभावप्राप्तेः । न हि परिमाणशून्यं द्रव्यमस्ति । अतो मोक्षे परिमाणमभ्युपगन्तव्यमेव । किं चातः । तथा सति तस्य शरीरमन्तरेणानुपपत्तेः । मोक्षेऽपि शरीरमुररीकरणीयं प्रसज्येत । अङ्गीक्रियत एवातो नानिष्टमिति चेत्तर्हीदं भवान्पृष्टो व्याचष्टाम् । तच्छरीरम-नित्यं नित्यं वा । नाद्यः । संसारसमानधर्मतापातात् । न द्वितीयः यद्यात्मा देहश्चे-त्युभयं नित्यं तर्हीदानींतनसर्वशरीरैः किमपराद्धम् । तेषामपि नित्यत्वं स्यात् । शरीरत्वाविशेषादिति भावः । तस्माज्जैनमतस्यानुपपन्नत्वेनाविरोधकत्वाद्युक्तं जग-त्कारणत्वलक्षणं विष्णोरिति सिद्धम् ॥ ३६ ॥ अ० १० ॥

भावदीपः——

॥ ॐ अंत्यावस्थितेश्चोभयनित्यत्वादविशेषात् ॐ ॥ ३६ ॥ द्वितीयमिति ॥ शरीरावच्छेदमंतरेणात्मनः परिमाणाभाव इति पक्षमित्यर्थः । भाष्यकारीयाद्यापाद-नस्यासांगत्यं निरस्यन् भाष्यं व्याचष्टे ॥ शरीरावच्छेदमिति ॥ तस्मादिति ॥ एकस्मिन्ननेकप्रकारस्यासंभवात् आत्मनः कायपरिमाणत्वायोगाच्चेत्यर्थः ॥ ३६ ॥ अ० १० ॥

सूत्रभाष्यम् –

पाशुपतपक्षमपाकरोति —

॥ ॐ पत्युरसामञ्जस्यात् ॐ ॥ ३७ ॥

'यं कामये तं तमुग्रं कृणोमि ।

तं ब्रह्माणं तमृषिं तं सुमेधाम्' (ऋ. सं. १०–१२५–५.) ।

'अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्तवा उ' (ऋ. सं. १०-१२५-६) ।

'अस्य देवस्य मीळ्हुषो वया विष्णोरेषस्य प्रभृथे हविर्भिः ।

विदे हि रुद्रो रुद्रियं महित्वं यासिष्टं वर्तिरश्विनाविरावत्' (ऋ.सं. ७-४०-५) । 'एको नारायण आसीन्न ब्रह्मा नेशानो नाग्नीषोमावि' (म. ना. उ. १) त्यादि श्रुतेः पारतन्त्र्येणासमञ्जसत्वान्न पशुपतिरीश्वरो (पा. पतिरीश्वरनामा.) जगत्कर्ता ॥ ३७ ॥

तत्वप्रकाशिका—

अधिकरणार्थं दर्शयति ॥ पाशुपतेति ॥ अवैदिकपाषण्डिसमयनिरासानन्तरं वैदिकाभासा निरसनीयाः । ते च पाशुपतशाक्तेयसौरस्कान्दगाणपताः । तेषु पाशुपतस्यैव प्राबल्यात्तन्मतमादौ दूष्यत इति भावः । अत्र हरेर्जगत्कर्तृत्वे पाशुपतमतविरोधपरिहारादस्ति शास्त्रादिसंगतिः । विष्णुरेवाशेषजगत्कर्तेत्युक्तम् । तस्य पाशुपतमतविरोधेऽदार्ढ्यं स्यादिति तन्निराकर्तव्यमेव । तद्विष्णोर्जगत्कारणत्वं विषयः । युक्तमयुक्तं वेति संदेहः । समयविप्रतिपत्तिः संदेहबीजम् । न युक्तमिति पूर्वः पक्षः । पशुपतिः खलु सार्वज्ञादिगुणशाली मायामुपादानीकृत्य हरिहिरण्यगर्भादिजगदुत्पत्त्यादि करोति । तथा श्रुतिस्मृतयोऽस्मिन्नर्थे भवन्ति । तथा च का वार्ता हरेर्जगत्कारणत्वस्यातो न लक्षणसूत्रं युक्तमिति प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ पत्युरिति ॥ न पत्युरज्ञजनप्रसिद्धेश्वरस्य पशुपतेर्जगत्कारणत्वं युक्तम् । पारतन्त्र्यजननमरणादिदोषित्वेन श्रुतत्वात् । न हि सकलकारणस्य दोषित्वं युक्तमिति भावः । ब्रह्मद्विषे चतुर्मुखस्य पञ्चममुखच्छेत्रे । शरवे हिंसनशीलाय । हन्तवै हन्तुमेव न तु भीषणाद्यर्थमिति भावः । अस्य आ समन्तादीशस्याभीष्टसेचकस्य विष्णोर्देवस्य हविर्भिः प्रभरणे कृते सत्यहङ्काररूपेण बन्धको रुद्रो रौद्रं महिमानं यथा लेभे तथा युवामपि विष्णुपूजयैवान्नवद्वर्तनं प्राप्तवन्तौ स्थ इत्यर्थः ॥ ३७ ॥

भावदीपः—

॥ ॐ पत्युरसामंजस्यात् ॐ ॥ ३७॥ संगतिमाह ॥ अवैदिकेति ॥ अत्र गाणपतेति पाठः साधुः। गणपतिशब्दस्य पत्युत्तरपदत्वेऽपि दित्यादित्यपत्युत्तरपदाण्ण्य इति न भवति। अश्वपत्यादिभ्यश्चेति गण्प्रत्ययेनैव भाव्यत्वात्। चतुर्थाद्यपादे अश्वपत्यादिभ्यश्चेति सूत्रे मंजर्यां गाणपत्य इत्यपशब्द इत्युक्तत्वाच्च॥ आदाविति ॥ अन्यमतोपलक्षणत्वेन मुखतो दूष्यत इत्यर्थः। यद्वा शक्तिमतापेक्षया आदावित्युक्तिः। सर्वज्ञत्वादिकैः सर्वैर्गुणैर्युक्तं सदाशिवमित्यनुभाष्यदिशाऽऽह ॥पशुपतिरित्यादि॥ स्रष्टृत्वादिघटनायोक्तम् ॥सार्वज्ञादीति॥ करणवच्चेदित्येतदुपयोगायाह ॥मायामिति॥ ॥ तथा श्रुतिस्मृतय इति ॥ सर्वासां पाशुपतोक्तदिशा तत्परत्वादिति भावः॥ छ॥ पूर्वसूत्रान्नजनुवृत्तिं मत्वा सूत्रभाष्ययोः प्रतिज्ञाहेत्वंशौ व्यनक्ति॥ न पत्युरिति॥ व्याहृतिनिरासायाह ॥ अज्ञजनेति ॥ श्रौतपदानि व्याचष्टे ॥ ब्रह्मद्विष इति ॥ सुधायां तु व्यत्ययमाश्रित्य ब्रह्मद्विषां शरवे हिंसकायेति व्याख्यातम्। दक्षप्रजापतिद्विष इति वेति चंद्रिका ॥ हिंसनेति ॥ शॄहिंसायामिति धातोः ॥ हंतुमेवेति ॥ तुमर्थे सेसेनसेऽसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेन इति तवैप्रत्ययः। एषशब्दस्य आईशइति विग्रहः। शकारस्य व्यत्ययेन षकार इति भावेनाह ॥आसमंतादीशस्येति॥ इच्छारूपस्येति सुधायां व्याख्यानम्। मीळ्हुषोऽभीष्टसेचकस्य। मिहसेचने। प्रभूथे प्रभरणे ॥ बन्धक इति ॥ वयबंधन इति धातोः। विदे लेभे विदिर्लाभे। इरावत् अन्नवत्। यासिष्टं अयासिष्टम्। छंदस्यमाङ्योगेपीत्यडभावः। लुङ्मध्यमपुरुषद्विवचनम्। प्राप्तवंतौ स्थ इति ॥ ३७ ॥

सूत्रभाष्यम्—

॥ ॐ सम्बन्धानुपपत्तेश्च ॐ ॥ ३८ ॥

अशरीरत्वात्तस्य जगता सम्बन्धो न युज्यते कर्तृत्वेन मृतपुरुषवत् ॥ ३८ ॥

तत्वप्रकाशिका—

युक्त्यन्तरेण पशुपतेर्जगत्कारणत्वं पराकुर्वत्सूत्रमुपन्यस्य व्याचष्टे ॥ संबंधेति ॥ जगता संबन्धमात्रमशरीरस्यापि संभवतीत्युक्तः कोऽसौ संबंध इत्यतः कार्यकर्तृभाव इति भावेनोक्तम् ॥ कर्तृत्वेनेति ॥ इदमुक्तं भवति। रुद्रो न कर्ता अशरीरत्वान्मृतपुरुषवदिति ॥ ३८ ॥

भावदीपः––

॥ संबंधानुपपत्तेश्च ॐ ॥ ३८ ॥ सूत्रे चशब्दादाह ॥ युक्त्यंतरेणेति ॥ पारतंत्र्यादियुक्त्यपेक्षयेति भावः। किं तद्युक्त्यंतरमित्यतो निर्धारयति ॥ इदमुक्तमिति ॥ मृतपुरुषवदिति ॥ त्यक्तदेहजीववत् ॥ ३८ ॥

सूत्रभाष्यम्––

॥ ॐ **अधिष्ठानानुपपत्तेश्च** ॐ ॥ ३९ ॥

पृथिव्याद्यधिष्ठाने स्थितो हि कुलालादिः कार्यं करोति। न चास्य तदस्ति ॥ ३९ ॥

तत्वप्रकाशिका––

हेत्वन्तरेण पशुपतेर्जगत्कर्तृत्वं निराकुर्वत्सूत्रमुपन्यस्य व्याचष्टे ॥ अधिष्ठानेति ॥ न रुद्रः कर्ता निरधिष्ठानत्वात्। यः कर्ता स साधिष्ठानो यथा कुलालादिरित्यर्थः ॥ ३९ ॥

भावदीपः––

॥ ॐ अधिष्ठानानुपपत्तेश्च ॐ ॥ ३९ ॥ हेत्वंतरमित्युक्तमवधारयति ॥ न रुद्र इति ॥ अन्वयव्याप्तौ दृष्टांताभावादाह ॥ यः कर्तेति ॥ ॥३९ ॥

सूत्रभाष्यम्––

॥ ॐ **करणवच्चेन्न भोगादिभ्यः** ॐ ॥ ४० ॥

इदमेव जगत्तस्य करणवदधिष्ठानादिरूपं नित्यस्यापि कस्यचिद्भावाद्युज्यत इति चेन्न भोगादिप्राप्तेः। उत्पत्तिविनाशौ सुखदुःखभोगाश्च प्राप्यन्ते तद्गताः ॥ ४० ॥

तत्वप्रकाशिका––

उक्तमाक्षिप्य समादधत्सूत्रं पठित्वाऽऽक्षेपांशं तावद् व्याचष्टे॥ करणवदिति ॥ न पशुपतेः शरीराधिष्ठानाभावेन कर्तृत्वानुपपत्तिः। कारकग्रामस्यैव साक्षात्प्रयत्नाधिष्ठेयतया स्मदादिशरीरसमानत्वेन शरीरान्तरापेक्षाभावात्। साक्षात्प्रयत्नाधिष्ठेयविषयेऽपि शरीरान्तरापेक्षायां तत्रापि तत्प्रसङ्गात् तस्यैव चाधिष्ठानत्वमुपपद्यते। न च वक्तव्यं प्रलये सर्वस्यापि विनाशान्न कारकसमूहस्याप्यधिष्ठानत्वादि युज्यत इति। प्रलयेऽपि मायादेः कारककलापस्य नित्यस्य विद्यमानत्वात्। अन्यथा कार्यजन्मा-

संभवादिति भावः । परिहारांशं व्याचष्टे ।।नेति।। तदेव स्फुटीकरोति ।।उत्पत्तीति।। यदि कारकज्ञातस्यैव साक्षात्प्रयत्नाधिष्ठेयतया शरीरादिवदेव कर्तृत्वोपयोगिता तर्हि तदुपादानहाननिमित्तोत्पत्तिमरणे च पशुपतेः स्याताम् । साक्षात्प्रयत्नाधिष्ठेयशरीरोपादानहानयोस्तद्दर्शनात् । तथा च सुखदुःखभोगप्राप्तिः स्यात्ततश्च न कर्तृत्वमिति भावः ।। ४० ।।

भावदीपः—

।। ॐ करणवच्चेन्न भोगादिभ्यः ॐ ।। ४० ।। पूर्वसूत्रद्वयोक्तदोषाक्षेपसमाधि परत्वमस्य व्यंजयन् भाष्यं व्याचष्टे ।। नेति ।। भाष्यस्थजगच्छब्दार्थमाह ।। कारकग्रामस्येति ।। सूत्रे करणशब्दः शरीरपरः । सृष्टौ शरीरस्य सहकारित्वादिति भावेनाह ।। अस्मदादिशरीरेति ।। वतिप्रत्ययार्थः ।। समानत्वेनेति ।। तस्यैव चेति ।। कारकव्रातस्येत्यर्थः ।। ४० ।।

।। ॐ अन्तवत्त्वमसर्वज्ञता वा ॐ ।। ४१ ।।

देहवत्वेऽन्तवत्वम् । अन्यथा ज्ञानाभावः । शरीरिण एव हि ज्ञानोत्पत्तिर्दृष्टा । विष्णोस्तु श्रुत्यैव विरोधाः परिहृताः ।

यदात्मको भगवांस्तदात्मिकी(का) व्यक्तिः ।

किमात्मको भगवान् ज्ञानात्मक ऐश्वर्यात्मकः शक्त्यात्मक’

इति । ‘बुद्धिमनोऽङ्गप्रत्यङ्गवत्तां भगवतो लक्षयामहे । बुद्धिमान्मनोवानङ्गप्रत्यङ्गवानि’ति ।

‘सदेहः सुखगन्धश्च ज्ञानभाः सत्पराक्रमः ।

ज्ञानज्ञानः सुखसुखः स विष्णुः परमोऽक्षर’ (पैङ्गि श्रुतिः)

इत्यादिक्या ।। ४१ ।।

।।इति पत्युरधिकरणम् (पा॰ पशुपत्यधिकरणम्) ।। ११ ।।

तत्वप्रकाशिका—

उक्तपक्षावेव विकल्पभङ्ग्या दोषांतरेण दूषयत्सूत्रं पठित्वा व्याचष्टे ।। अन्तवत्त्वमिति ।। पशुपतिः कर्तेति वदन् प्रष्टव्यो जायते किमसौ शरीरी न वेति

शरीरी चेत्परिच्छिन्नः स्याद्यज्ञदत्तवत् । तथा च न जगत्कर्तृत्वम् । यदि न शरीरी तर्हि तस्य ज्ञानमेव न स्यात् कुतः सार्वज्ञ्यमिति च न जगत्कारणत्वमिति भावः । शरीराभावे कुतो ज्ञानाभाव इत्यतो व्यतिरेकव्याप्तिं दर्शयति ॥ शरीरिण एवेति ॥ न च वक्तव्यमिच्छागृहीतविग्रहत्वान्नान्तवत्त्वादीति । अशरीरस्येच्छायोगात् । अनेन शरीरानपेक्षं ज्ञानं नित्यत्वादिति परास्तम् । ननु विष्णावप्येते दोषाः प्रसरन्त्येवेति कर्तृत्वानुपपत्तिरित्याशङ्कां सूत्रकृता निरस्तामपि पुनः प्रमाणविशेषैः परिहरति ॥ विष्णोस्त्विति ॥ बुद्धीति श्रुत्येश्वरस्य शरीरित्वाभिधात्र्या ज्ञानाभावादिदोषाः परिहृताः । 'यदात्मकः' इत्यादिकया तु तद्देहस्य ज्ञानाद्यात्मकभगवत्स्वरूपाभिधात्र्यान्तवत्त्वादिदोषाः परिहृताः । एवं पाशुपतमतनिरासन्यायेनान्येऽपि चत्वारः समया निराकृता वेदितव्याः । तस्मात्पाशुपतसमयस्यानुपपन्नत्वेनाविरोधकत्वाद्युक्तं लक्षणसूत्रमिति सिद्धम् ॥ ४१ ॥ अ० ११ ॥

भावदीपः—

॥ ॐ अंतवत्त्वमसर्वज्ञता वा ॐ ॥ ४१ ॥ उक्तपक्षावेवेति ॥ संबंधानुपपत्तिसूत्रोक्तशरीराभावपक्षं करणवच्चेदित्युक्तशरीरवत्त्वपक्षं चेत्यर्थः ॥ शरीरी न वेति ॥ भावरूपत्वात्सूत्रे पूर्वं शरीरत्वपक्षदोषोक्तिरिति सूचितम् । पूर्वेणापौनरुक्त्यायांतवत्त्वशब्दार्थमाह ॥ परिच्छिन्न इति ॥ न च शरीरित्वेऽपि न्यायमते जीवात्मन इवापरिच्छिन्नत्वमिति वाच्यम् । तस्यैव दूष्यत्वात् । तन्मतेऽपि शरीरावच्छिन्नस्यैव कर्तृत्वेन तस्य परिच्छिन्नत्वात् । तादृशस्य सार्वदेशिकसर्वकर्तृत्वायोग इत्यर्थः । जीवाणुत्वमते देशांतरकार्यस्य जीवकर्तृत्वांगीकारेऽपि अदृष्टद्वारैव न साक्षादित्यभ्युपगमात् । इति च न जगत्कारणत्वमितीतिशब्दो हेत्वर्थः । न केवलं संबंधानुपपत्तिभोगादिप्राप्तिभ्याम् । किंतु असार्वज्ञ्यं परिच्छिन्नत्वरूपहेतुबलाच्चेत्यर्थः ॥ अनेनेति ॥ शरीरिण एव ज्ञानदर्शनभाषणेनेत्यर्थः ॥ सूत्रकृतेति ॥ आत्मनि चैवं विचित्राश्च हि । सर्वोपेता च तद्दर्शनात् । विकरणत्वान्नेति चेत्तदुक्तमित्यादिसूत्रेष्विति भावः । तद्दर्शनादित्याद्युक्त्या प्रमाणैरपि परिहृतत्वादाह ॥ प्रमाणविशेषैरिति ॥ स्कंदसूर्यगणेशादिमतानि न्यायतोऽमुतः । निराकृतान्यशेषेण सिद्धा तस्याविशेषत इत्यनुभाष्योक्तमाह ॥ एवमिति ॥ तस्मादिति ॥ पारतंत्र्यादिना शिवकर्तृत्वानुपपत्तेरित्यर्थः ॥ ४१ ॥ अ० ११ ॥

सूत्रभाष्यम्——

॥ ॐ उत्पत्त्यसम्भवात् ॐ ॥ ४२ ॥

शक्तिपक्षं दूषयति——

न हि पुरुषाननुगृहीतस्त्रीभ्य उत्पत्तिर्दृश्यते ॥ ४२ ॥

तत्वप्रकाशिका——

अधिकरणार्थं दर्शयति ॥ शक्तीति ॥ पूर्वन्यायेन निरस्तमपि शक्तिमतमसाधारणदोषाविष्कारेण पुनर्दूषयतीति भावः। अत्र विष्णोर्जगत्कारणत्वे शक्तिमतविरोधपरिहारादस्ति शास्त्रादिसंगतिः। विष्णोर्जगत्कारणत्वमुक्तम्। तत्र शाक्तेयमतविरोधेऽनुपपत्तिशङ्का स्यादतस्तन्निरसनीयमेव। विष्णोर्जगत्कारणत्वं विषयः। युक्तमयुक्तं वेति संदेहः। समयविवादः संदेहबीजम्। न युक्तमिति पूर्वः पक्षः। शक्तिरेव खलु सार्वज्ञादिगुणशालिनी सकलजगज्जननी श्रुतिस्मृतीतिहासपुराणेषु पठ्यते अतो न हरेर्जगत्कारणत्वलक्षणं संभवतीति प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ उत्पत्तीति ॥ न शक्तेरेव जगत्कर्तृत्वं युक्तम्। पुरुषाननुगृहीतत्वात्। न हि पुरुषाननुगृहीतस्त्रीमात्रात् क्वचिदुत्पत्तिर्दृष्टेति भावः ॥ ४२ ॥

भावदीपः——

॥ ॐ उत्पत्त्यसंभवात् ॐ ॥ ४२ ॥ पूर्वमेवास्य मतस्य तुल्यन्यायतया निराकृतत्वोक्तेरपौनरुक्त्याय निराकृतौ विशेषस्य भावाच्छक्तिमतं पृथक्। दूष्यत इत्यनुभाष्योक्तं भाष्यस्य भावमाह ॥ पूर्वेति ॥ दशमस्कंधेऽपि पाषंडवामशैवाद्यैर्वेदमार्गाः कलौ यथेति वाममतस्य पृथगुक्तेरिति भावः। महावाममतमाद्यसूत्रनिरस्यमनुवदति ॥ शक्तिरेवेति ॥ श्रुतिस्मृतीति ॥ सर्वेषामपि तत्परत्वादिति भावः ॥छ॥ अनुक्तोपालंभभ्रांतिनिरासाय महावाममतनिरासकत्वं स्फोरयन्ननुवृत्त्या साध्यसाधने आह ॥ न शक्तेरेवेति ॥ पुरुषाननुगृहीतत्वेऽपि कुतो न कर्तृत्वमित्यतः सौत्रो हेतुरिति भावेन तदुपपादकं भाष्यमनुवदति ॥ न हीति ॥ ४२ ॥

सूत्रभाष्यम्——

॥ ॐ न च कर्तुः करणम् ॐ ॥ ४३ ॥

यदि पुरुषोऽङ्गीक्रियते तस्यापि करणाभावादनुपपत्तिः ॥ ४३ ॥

तत्वप्रकाशिका—

अस्त्येव शक्त्यनुग्राहकः पुरुषः सदाशिवोऽतस्तस्या जगदुत्पत्तिर्युक्तेति केषांचिच्छाक्तेयानां मतं निराकुर्वत्सूत्रमुपन्यस्य व्याचष्टे ॥ न चेति ॥ यदि पुरुषोऽङ्गीक्रियते शक्त्यनुग्राहकस्तथापि तस्योत्पत्त्युपयोगिज्ञानादिसाधनाभावेनोत्पत्त्यनुपपत्तिरेवेत्यर्थः ॥ ४३ ॥

भावदीपः—

॥ ॐ न च कर्तुः करणम् ॐ ॥ ४३ ॥ सौत्रश्चशब्दः कर्तुश्चेत्यन्वेतीति भावेन भाष्ये तस्यापीत्युक्तं तद्व्याचष्टे तथापीति । केषांचिदिति । मध्यमवामानामित्यर्थः । (आस्तीकमातुरपि पुमनुग्रहोऽस्तीति भावः) । करणशब्दार्थो ज्ञानादिसाधनेति । करणत्वोपपादकमुत्पत्त्युपयोगीति ॥ ४३ ॥

सूत्रभाष्यम्—

## ॥ ॐ विज्ञानादिभावे वा तदप्रतिषेधः ॐ ॥ ४४ ॥

यदि विज्ञानादिकरणं तस्याङ्गीक्रियते तदा तत एव सृष्ट्याद्युपपत्तेरीश्वरवादान्तर्भावः ॥ ४४ ॥

तत्वप्रकाशिका—

शक्त्यनुग्राहकस्य पुंसः सार्वज्ञादिसद्भावेन युक्ततरा जगदुत्पत्तिरिति केचित् । तन्मतनिरासाय सूत्रं पठित्वा व्याचष्टे ॥ विज्ञानेति ॥ यदि शक्त्यनुग्राहकस्येश्वरस्य विज्ञानादिकरणमङ्गीक्रियते तदा तेनैव जगदुत्पत्तिसंभवाद् व्यर्थं शक्तेरपि पृथक्कर्तृत्वाङ्गीकरणं स्यात् । तथा चानेन शाक्तेयमतेन प्रकृतपाशुपतमतस्याप्रतिषेधः कृतः स्यात् । अनुमतमेव स्यात् । तच्च निरस्तमिति भावः ॥ ४४ ॥

भावदीपः—

॥ ॐ विज्ञानादिभावे वा तदप्रतिषेधः ॐ ॥ ४४ ॥ इति केचिदिति ॥ अणुवामशब्दितशाक्तेया इत्यर्थः । विज्ञानादिभावे वेत्येतद्व्याख्यारूपं भाष्यं व्याचष्टे ॥ यदीति ॥ मध्ये भाष्योक्तं सूत्रशेषं कांक्षितं पूरयन्ननुवदति ॥ तेनैवेति ॥ ईश्वरवादांतर्भाव इति भाष्यं तदप्रतिषेध इति सूत्रांशस्य पर्यवसितव्याख्यानमिति भावेन सूत्रांशं व्याचष्टे॥ तथा चेति ॥ अस्तु को दोष इत्यत आह ॥ तच्चेति ॥ ईश्वरमतमित्यर्थः ॥ ४४ ॥

सूत्रभाष्यम्--

॥ ॐ विप्रतिषेधाच्च ॐ ॥ ४५ ॥

सकलश्रुत्यादिविरुद्धत्वाच्चासमञ्जसम् ॥४५॥ इति उत्पत्त्य(शक्त्य)धिकरणम् ॥ १२॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये द्वितीयाध्यायस्य द्वितीयः पादः ॥ २ ॥ २ ॥

तत्वप्रकाशिका –

एवं शाक्तेयमतत्रयं पृथङ् निरस्य समुदितदूषणेनापि निराकुर्वत्सूत्रमुपन्यस्य व्याचष्टे ॥ विप्रतिषेधाच्चेति ॥ असमञ्जसं शक्तिमतमिति शेषः । अतोऽयुक्तत्वाच्छाक्तेयमतस्याविरोधकत्वेनोपपन्नमेव विष्णोर्जगत्कारणत्वलक्षणमिति सिद्धम् ॥४५॥ अ० १२ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्रभाष्यस्य टीकायां श्रीमज्जयतीर्थमुनिविरचितायां तत्त्वप्रकाशिकायां द्वितीयाध्यायस्य द्वितीयः पादः ॥

॥ श्रीरस्तु ॥

भावदीपः--

॥ ॐ विप्रतिषेधाच्च ॐ ॥ ४५ ॥ अत इति ॥ केवलशक्तितो जगज्जननायोगादिदोषादित्यर्थः । उपपन्नमेवेत्यादिफलोक्तिः ॥ ४५ ॥ अ० १२ ॥

॥ इति श्रीमद्भाष्यटीकाभावदीपे श्रीराघवेंद्रयतिकृते द्वितीयाध्यायस्य द्वितीयः पादः ॥

॥ श्रीकृष्णार्पणमस्तु ॥

॥ श्रीः ॥

॥ अथ तृतीयः पादः ॥

सूत्रभाष्यम्—

॥ हरिः ॐ ॥ जीवपरमात्माधिभूताधिदैवेषु श्रुतीनां परस्परं विरोधमपाकरोत्यनेन पादेन ।

॥ ॐ न वियदश्रुतेः ॐ ॥ १ ॥

न वियदनुत्पत्तिमत् । तथाऽश्रुतेः ॥ १ ॥

तत्वप्रकाशिका—

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥ हरिः ॐ ॥ एतत्पादार्थं दर्शयति ॥ जीवेति ॥ युक्तिसमयविरोधाभावेऽपि न वेदसमन्वयेन विष्णोर्जगत्कारणत्वं सिध्यति । वेदानां परस्परविरोधेनाप्रमाणत्वात् । न ह्यप्रमाणसिद्धोऽर्थः सिध्यतीत्याशङ्कानिवृत्यर्थं श्रुतीनां विरोधः परिहरणीयो भवति । श्रुतिविरोधश्चाधिभूतादिविषयोऽध्यात्मविषयश्च । तत्र जिज्ञासोरध्यात्मविषयविचारस्यान्तिमत्वादधिभूतादिविषयश्रुतीनां परस्परविरोधमस्मिन्पादे परिहरतीति भावः । न च वाच्यं श्रुतीनां जीवादिविषय एव विरुद्धत्वेनोक्तबाधाभावाद्व्यर्थः पादद्वयारम्भ इति । अभ्युपगतार्थद्वयेऽन्यतरार्थेऽप्रामाण्यप्राप्तावन्यार्थेनाश्वासप्रसङ्गात् ॥ जगत्स्वरूपानिर्णये तत्कारणत्वानिर्णयाच्च अत्र 'ज्ञोऽत एव' इत्यारभ्यापादसमाप्तेर्जीवविचारः । 'असंभवस्तु' 'नात्माश्रुतेः' इत्याधिकरणद्वये परमात्मविचारः । एकैकस्मिन्नेवाधिकरणेऽधिभूतादिविचारः । अतो विचारबाहुल्याभिप्रायेण क्रमोल्लङ्घनम् । अधिभूतं नाम सकारणकार्यभूतानि । तदभिमानिदेवता अधिदैवम् । अत्र भूतेष्वाकाशस्योत्पत्त्याद्यष्टके चोत्पत्तेः प्राथम्याद् ब्रह्मणि श्रुतिसमन्वयसिद्ध्यर्थमाकाशोत्पत्तिविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसंगतिः । सकलजगज्जन्मादिकर्ता विष्णुरित्युक्तम् । तच्चाकाशस्य नित्यत्वेऽसंभवि स्यात् । श्रुतिविरोधेन गुणान्तरस्य चाभावापातात् । श्रुत्यविरोधेनाकाशस्योत्पत्तिः समर्थनीया । आकाशोऽत्र विषयः । उत्पत्तिमान्न वेति संदेहः । 'आत्मन आकाशः संभूतः' । 'अनादिर्वा अयमाकाशः' इति श्रुतिविप्रतिपत्तिः संदेहबीजम् । वियदनुत्पत्तिमदेवेति पूर्वः पक्षः । आकाशस्योत्पत्त्यङ्गीकारेऽनुभूतियुक्तिबहुवाग्विरोधात् । न ह्यवकाशस्योत्पत्तिरनुभवानुसारिणी । वियदनुत्पत्तिमद्विभुत्वादित्यादियुक्तिः । 'अनादिर्वा अयमाकाशः' इत्यादिबहुश्रुतयः । न चात्मन आकाशः संभूत इति श्रुत्या तदुत्पत्ति-

सिद्धिः। अनुभूत्यादिविरुद्धायास्तस्याः प्रामाण्यानुपपत्तेः। अत एवानुत्पत्तिश्रुतेर्भावतत्ववर्णनं च परास्तम्। तस्मादाकाशोत्पत्तिश्रुतेरप्रामाण्यादयुक्तं श्रुतिसमन्वयेनाकाशकारणत्वं ब्रह्मणः। न च संभूतश्रुतेरन्यार्थतया विरोधाभावः। तथा सति वाय्वादावप्यन्यार्थतापातात्। न ह्यस्ति संभवशब्दो यत्र श्रूयते तत्रामुख्यो यत्रापकृष्यते तत्र मुख्य इति। अतो दुष्परिहरं श्रुत्यप्रामाण्यमिति प्राप्ते सिद्धांतयत्सूत्रमुपन्यस्य व्याचष्टे ।। नेति ।। अत्रोत्पत्त्यसंभवादिति प्रकृतानुत्पत्तिः संबध्यते। यदुक्तं वियदनुत्पत्तिमदिति न तद्युक्तम्। तथा अनुत्पत्तौ श्रुत्यभावादित्यर्थः ।। १ ।।

भावदीपः—

श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः। हरिः ॐ। ननु श्रुतीनामन्योन्यमविरोधोक्तिर्व्यर्था। तत्राप्येतत्पादीयश्रुत्यविरोधस्य प्राथम्यं निर्बीजमित्यत आह ।। युक्तिसमयेति ।। अंतिमत्वादिति ।। अध्यात्मप्रवणो भूत्वा तस्यासन्निहितत्वत इत्युपासनापादीयानुभाष्योक्तेरिति भावः ।।अभ्युपगतेति।। पादद्वयप्रतिपाद्यजीवाधिभूताध्यात्मरूपेऽर्थद्वये अन्यतरार्थे अधिभूतादिरूपे अध्यात्मरूपे चार्थेऽप्रामाण्यप्राप्तावीश्वरकर्तृत्वाद्यर्थेऽप्यनाश्वासप्रसंगादित्यर्थः। यद्वा विरुद्धश्रुतिभ्यामभ्युपगतार्थद्वयेऽन्यतरार्थेऽप्रामाण्यप्राप्तावित्यर्थः। अन्यतरार्थे वेति वाशब्दसंयोजनेन विरुद्धश्रुतिद्वयाप्रामाण्यमिति पूर्वपक्षस्थलेऽर्थद्वयेऽप्यप्रामाण्यप्राप्तौ दौर्बल्येनान्यतरश्रुत्यप्रामाण्ये तत्पूर्वपक्षस्थलेऽन्यतरार्थेऽप्राप्ताविति ध्येयम्। अथवा समन्वयाध्याये सर्वश्रुतीनां कल्पनोपदेशादित्यादिन्यायेन परममुख्यमुख्यवृत्तिभ्यामभ्युपगते परमात्मतदन्यरूपेऽर्थद्वयेऽन्यतरस्मिन्जीवादिरूपेऽर्थे अप्रामाण्यप्राप्तौ परमात्मपूर्णगुणत्वाद्यर्थेऽनाश्वासप्रसंगादित्यर्थः। तथा च विरुद्धश्रुत्योः प्रामाण्यायाविरोधेन तयोरर्थव्यवस्थापनाय पादद्वयारंभो युक्त इति भावः। ननु जगत्स्वरूपविषयश्रुतीनां विरोधेन तदर्थे तासामप्रामाण्येऽन्यार्थेनाश्वासो निर्बीजः। तत्र श्रुतिविरोधाभावात्। शंकामात्रस्याप्रयोजकत्वादित्यत आह ।। जगदिति ।। ननु सूत्रेषु वक्ष्यमाणक्रमानुरोधेन भाष्य अधिभूताधिदैवपरमात्मजीवेष्विति वाच्ये विपरीतक्रमेण निर्देशो निर्बीज इत्यत आह ।। अत्र ह्योऽत एवेतीति ।। अत्र पाद इत्यर्थः।। अधिभूतादिविचार इति ।। एकैकाधिभूतादिविचार इत्यर्थः। भूतमधिकृत्य स्थितमधिभूतं भूतकार्यमिति भ्रांतिनिरासायाह ।। अधिभूतं नामेति ।। तथा चैतन्नयार्थोऽपि संगृहीत इति भावः। अत्र देवताविचारपरं सूत्रं नोपलभ्यत इत्यत आह ।। तदभिमानीति ।। भूतविचारपरसूत्राण्येवाधिदैवविचारपराणीति भावः।

॥ ॐ न वियदश्रुतेः ॐ ॥ १ ॥ प्राथम्यादिति ॥ आकाशाद्वायुरित्यादिश्रौतक्रमाल्लब्धजन्मनः स्थित्यादेरिति भावः । अन्येषामुपलक्षणतया विचारः सिध्यतीति हृदयम् ॥ ब्रह्मणि श्रुतिसमन्वयसिद्ध्यर्थमिति ॥ अभ्युपगतार्थद्वय इत्याद्युक्तदिशा हेतुहेतुमद्भावो बोध्यः । अनेन शास्त्रेऽन्तर्भाव उपपादितः । श्रुतीति पादे विरोध इति चाध्याय इति विवेक्तव्यम् । एवमग्रेऽपि । श्रुत्यधिकरणसंगती आह ॥ सकलेति ॥ श्रुतिविरोधेनेति ॥ अनुत्पत्तिश्रुतिविरोधेनोत्पत्तिश्रुतेरप्रामाण्यप्राप्तौ सर्वस्रष्टृत्वासिद्धावानंदादिश्रुतिप्रामाण्येऽप्यनाश्वासापत्त्या तदुक्तगुणस्याप्यभावापातादित्यर्थः । अजन्मश्रुत्यविरोधाय जन्मैव नेति निर्णयस्य दुःशकत्वान्निर्णयप्रकारमाह ॥ श्रुत्यविरोधेनेति ॥ न वियदनुत्पत्तिमदिति भाष्यसूचितप्रतिज्ञामाह ॥ वियदनुत्पत्तिमदेवेति ॥ वियदिति प्रकृतिजीवचैतन्यकालवेदमहदहंमनोबुद्ध्यादीनामुपलक्षणम् । वियत उत्पत्तिमत्त्वे अनुभूतियुक्तिबहुवाग्विरोधोऽस्ति व्यवस्थायोगादित्यन्यत्रोक्तयुक्तिमाह ॥ आकाशस्योत्पत्त्यंगीकारे अनुभूतियुक्तीति ॥ तां विवृणोति ॥ न हीत्यादिना ॥ व्यक्तमेतद्वैशेषिकनयानुभाष्यसुधयोः केवलं साक्षिमानेन कालो देशोऽपि नांतवानित्यादौ । विभुत्वात् व्याप्तत्वादित्यर्थः । निरुपादानत्वादिरादिपदार्थः । न चासिद्धिः । धर्मिग्राहकसाक्ष्यनुभवसिद्धत्वात् । अत एवानुभवस्य प्रागुक्तिः । न च क्षणलवादिसूक्ष्मकालावयवेषु विभुत्वे सत्यप्यनुत्पत्तेरभावाद्व्यभिचारः । सर्वे निमेषा जज्ञिरे इत्यादिश्रुत्या तेषां सिद्धांते जन्मांगीकारात् । तथैव वैशेषिकाधिकरणभाष्यादावुक्तेरिति वाच्यम् । पूर्वपक्षे तेषु जन्मासंप्रतिपत्तेरिति भावः । ननु वियदिति भूतस्य पक्षत्वे विभुत्वमसिद्धम् । आकाशस्तल्लिंगादित्यत्र तस्यांतवत्त्वोक्तेः । अव्याकृतस्य पक्षत्वे सिद्धसाधनमिति चेन्न । आकाशद्वैताज्ञानेन तदैक्यबुद्ध्यैवमुक्तेः । अव्याकृतस्य पक्षत्वेऽपि विष्णोः सर्वस्रष्टृत्वासिद्धेश्च । यद्वाकाशद्वित्वोपगमेऽपि अनादिर्वा अयमाकाश इत्यादौ सामान्याकाशपदेन द्वयोरपि गृहीतेर्भूतेऽप्यंतवत्त्वादिकमप्यसिद्धमिति भावेन पूर्ववादिनैवमनुमानमवादीति ध्येयम् ॥ इत्यादीति ॥ आकाशवत्सर्वगतश्च नित्यः । स यथा अनंतोऽयमाकाश इत्यादिरादिपदार्थः । विरोधपदतात्पर्यं व्यावर्त्यपूर्वं व्यनक्ति ॥ न चात्मन इति ॥ नन्वनादित्वश्रुतेरनेककालवर्तित्वमात्रेण वा श्रुतिद्वयबलेनाकाशद्वयं कल्पयित्वा एकैकाकाशविषयत्वेन व्यवस्था वाऽस्त्वित्यतो व्यवस्थायोगादिति न्यायविवरणांशतात्पर्यमाह ॥ अत एवेति ॥ संभूतश्रुत्यप्रामाण्यादेव कल्पकाभावादित्यर्थः । व्यवस्थायोगादित्यस्य श्रुतौ संभूतशब्दस्य आकाशे अभिव्य-

क्त्यर्थत्वं वाय्वादावुत्पत्त्यर्थत्वमिति व्यवस्थाया अयोगादित्यर्थांतरमुपेत्य शंकापूर्वं व्यनक्ति ॥ न च संभूतश्रुतेरिति ॥ अत इति ॥ अनुभूत्यादिविरोधादित्यर्थः । एवं वियत्पदोपलक्षितप्रकृत्यादेरपि पूर्वपक्षो ध्येयः ॥छ॥ अनुत्पत्तिमदिति भाष्यमनुवृत्त-सौत्रपदार्थ इति दर्शयति ॥ अत्रोत्पत्त्यसंभवादितीति ॥ अप्राप्तस्य निषेधायोगादाह ॥ यदुक्तमिति ॥ अश्रुतेरित्यादिवक्ष्यमाणयुक्तीनां सामान्यादत्रापि वियदिति प्रकृत्या-देरुपलक्षणं ध्येयम् । एतेन सूत्रे वियदुत्पत्तिमदेवेत्येव कुतो नोक्तमिति शंकापास्ता । अनुत्पत्तेरेव शंकिततया तस्या एव निरस्यत्वात् । पूर्वस्मादनुत्पत्तेरेव प्रकृतत्वा-च्चेति भावः । तथेति भाष्यस्थानुवादः । अनुत्पत्ताविति व्याख्या पराधीनविशेषा-वाप्तिरूपोत्पत्त्यभाव इत्यर्थः ॥ १ ॥

सूत्रभाष्यम् –

॥ ॐ अस्ति तु ॐ ॥ २ ॥

अस्त्येव चोत्पत्तिश्रुतिः—

'आत्मन आकाशः सम्भूत' (तै. उ. २-१) इत्यादि ॥ २ ॥

तत्वप्रकाशिका—

न वियत उत्पत्त्यभावे प्रमाणं नियमेन वक्तव्यम् । उत्पत्तौ प्रमाणाभावादेव तत्सिद्धेः । न हि घटे प्रमाणाभावे पुनस्तदभावे प्रमाणापेक्षा स्यादित्याशङ्कां परिहर-त्सूत्रमुपन्यस्य व्याचष्टे ॥ अस्तीति ॥ नोत्पत्तौ प्रमाणाभावः । श्रुतेरेव विद्यमानत्वा-दिति भावः ॥ २ ॥

भावदीपः—

॥ ॐ अस्ति तु ॐ ॥ २ ॥ वियदनुत्पत्तौ प्रत्यक्षस्याप्रसरादश्रुतेरिति श्रुत्यभावोक्त्या च प्रत्यक्षश्रुत्यन्यतरमूलतया प्रवर्तमानस्यानुमानस्य तयोरभावेऽ-भावात्सूत्रादावश्रुतेरित्युक्तावपि प्रमाणाभावादित्येवोक्तं भवतीति मत्वानुवदति ॥ न वियतः उत्पत्त्यभावे प्रमाणं नियमेन वक्तव्यमिति ॥ ईक्षतेर्नाशब्दमित्यादाव-भावसत्त्वेऽपि प्रमाणोपन्यासान्नियमेनेत्युक्तम् । नासतोऽदृष्टत्वादित्यादौ कारणत्वे प्रमाणाभावादेव कारणत्वाभावसिद्धेरुक्तत्वादिति भावः । उक्तशंकानिरासकत्वाप्र-तीतेर्भाष्यभावमाह ॥ नोत्पत्ताविति ॥ २ ॥

सूत्रभाष्यम्—

॥ ॐ गौण्यसम्भवात् ॐ ॥ ३ ॥

'अनादिर्वा अयमाकाशः शून्योऽलौकिक' इत्यादिश्रुतिर्गौणी । अन्यथोत्पत्तिश्रुतिबाहुल्यासम्भवात् ॥ ३ ॥

तत्वप्रकाशिका—

न वियतोऽनया श्रुत्योत्पत्तिः साधयितुं शक्या अनादित्वाभिधायकश्रुतिविरोधादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ गौणीति ॥ शून्यः सूक्ष्मः अलौकिकोऽतीन्द्रियः । नोत्पत्तिश्रुतेरनादित्वश्रुतिविरोधः । अनादित्वश्रुतिर्गौणानादित्वपरा । उत्पत्तिश्रुतिस्तु मुख्यार्थेतिव्यवस्थायोगात् । तथा हि । आकाशपदेन भूतावकाशतद्देवता उच्यन्ते । तत्र भूतं स्वरूपत एवोत्पत्तिमद्रूपित्वात् । 'आकाशे नीलिमोदेति' इति श्रुतेः । तदभिमानिनोऽपि शरीरोत्पत्तिद्वारास्त्येवोत्पत्तिः । अवकाशतदभिमानिनोरप्यस्ति पराधीनविशेषलाभलक्षणोत्पत्तिरिति सर्वविषयत्वादुत्पत्तिश्रुतिर्मुख्यार्था । अनादित्वश्रुतिस्तु न सर्वविषयेति भवति गौणी भूते कथमप्यवृत्तेः । स्यादेतत् । किमेतया व्यवस्थयानादित्वश्रुत्यनुसारेणानुत्पत्तिरेव किं नाश्रीयते । मैवम् । तथा सत्युत्पत्तिश्रुतेर्विषयाभावेनाप्रामाण्यापातात् । अनुभवाद्यनुसारि श्रुतिविरोधेनाप्रामाण्यं युक्तमिति चेन्न । उत्पत्तिश्रुतीनामपि बाहुल्येन प्रबलत्वादिति भावः । अनेनानुभवादिविरोधोऽपि निरस्तः ॥ ३ ॥

भावदीपः—

॥ ॐ गौण्यसंभवात् ॐ ॥ ३ ॥ अनादित्वश्रुतेर्गौणत्वोक्तेरसांगत्यनिरासाय न वियत उत्पत्तिमत्वे अनुभूतियुक्तिबहुवाग्विरोधोऽस्ति । व्यवस्थायोगादितिन्यायविवरणोक्तं साध्यैकदेशं हेतुं च भाष्ये गौणीत्यनंतरं शेषपूर्त्या च योजयति ॥ नोत्पत्तिश्रुतेरिति ॥ व्यवस्थायोगादित्युक्तहेतोर्द्वेधा विवरणपरं अवकाशमात्रस्याव्याकृत(तात्मक)त्वात् अनुत्पत्तिवचनानां तद्विषयत्वं उत्पत्तिवचनानां असितवर्णभूततदभिमानिशरीरविषयत्वं पराधीनविशेषमात्रविषयत्वं चेति व्यवस्थेति न्यायविवरणं तत्र सूत्रभाष्ययोर्गौणत्वोक्तिस्वारस्याय पराधीनेत्याद्यंत्यपक्षमादाय व्यवस्थायोगं व्यनक्ति ॥ तथाहीति ॥ आकाशेति ॥ जन्माजन्मश्रुतिद्वयस्थेनाप्याकाशपदेनेत्यर्थः । तत्र चतुष्टयमध्ये ॥ स्वरूपत एवेति ॥ तथा च तत्र स्वरूपोत्पत्तिरूपपराधीनविशेषावाप्तिः स्फुटैवेति भावः । न्यायविवरणेऽसितवर्णेतिभूतविशेषणोक्ति-

र्युक्तिसूचनायेति भावेनाह ।। रूपित्वादिति ।। भौतिकेतिविशेषणान्न व्यभिचारश्शंक्यः। तथा चोक्तं प्राग्रूपादिमत्त्वाच्च विपर्ययो दर्शनादिति । एतेन तदभिमानिशरीरस्यापि जनिः सिद्धा रूपित्वात् । न्यायविवरणस्थश्रुतिमेवाह ।। आकाश इति ।। भावभवित्रो-रभेदान्नीलिमेत्युक्तिः ।। शरीरोत्पत्तिद्वारेति ।। तथा च शरीरोत्पत्तिरूपपराधीनविशे-षावाप्तिरस्तीति भावः।। पराधीनविशेषलाभलक्षणेति ।। यथाक्रमं मूर्तसंबंधसिसृक्षुत्वयोः परमात्माधीनविशेषयोर्लाभो गगने रमायां चेति भावः । तथापि मूर्तसंबंधपरतंत्रवि-शेषयुगिति । सिसृक्षुत्वविशेषं तत्साक्षाद्भगवदिच्छया । प्राप्तैव सृष्टेस्त्वुदितेति चानुभाष्योक्तेः । स्वरूपोत्पत्तिशरीरोत्पत्त्योरपि पराधीनविशेषत्वेऽपि भूततदभिमा-नितच्छरीरेषु पराधीनविशेषः लोकप्रसिद्धः स्वरूपोत्पत्त्यादिरूप एवेति प्रदर्शनाय स्वरू-पत एवेत्यादिविशिष्योक्तिः ।। सर्वविषयत्वादिति ।। एतेनान्यथेत्यादिभाष्यशेषस्या-न्यथोत्पत्तिश्रुतेरेव गौणार्थत्वे तस्याबहुविषयत्वरूपबाहुल्यस्यासंभवप्रसंगादित्यर्थो द-र्शितः ।। गौणीति ।। भूते चिरंतनत्वाभिप्रायेणानादिर्वेत्यादिश्रुतिर्वर्तत इत्यर्थः । अत्र जन्माजन्मश्रुत्योर्भूतावकाशरूपभिन्नविषयतया मुख्यार्थत्वेनैव व्यवस्थेति पक्षस्य न्यायविवरणोक्तस्यात्र टीकायामनुक्तौ बीजं चंद्रिकायां व्यक्तम् । अन्यथेत्यादिभा-ष्यमन्यथाप्यवतार्य व्याचष्टे ।। स्यादेतदित्यादिना ।। बाहुल्यपदस्य प्रामाण्यलक्षकत्व-मुपेत्य फलितार्थमाह।। अप्रामाण्येति ।। मुख्यार्थमेवोपेत्याह ।। बाहुल्येनेति ।।एवं न्या-यविवरणोक्तं बहुवाग्विरोधाभावरूपसाध्यं व्यवस्थायोगहेतुनोपपाद्यतत्रैवोक्तोऽनुभूति-युक्तिविरोधाभावोऽपि तेनैव हेतुनोपपाद्य इति भावेनाह ।। अनेनेति ।। यद्वोत्पत्ति-श्रुतेर्बाहुल्येन प्राबल्यवदनादित्वश्रुतेरनुभूतियुक्तिसाहित्येनास्ति प्राबल्यमित्यत आह ।। अनेनेति ।। व्यवस्थायोगेन हेतुनेत्यर्थः । अनुभवयुक्त्योर्भूतविषयत्वायोगेन भूते-तरविषयत्वेन संकोचरूपगौणत्वेनोत्पत्तिश्रुतेः सर्वविषयत्वे तया मुख्यार्थत्वेन व्यवस्थो-पपत्तेरिति भावः ।। ३ ।।

सूत्रभाष्यम्—

।। ॐ शब्दाच्च ॐ ।। ४ ।।

'अथ ह वाव नित्यानि पुरुषः प्रकृतिरात्मा काल इति । अथ यान्यनित्यानि प्राणः श्रद्धा भूतानि भौतिकानीति । यानि ह वा उत्पत्तिमन्ति तान्यनित्यानि । यानि ह वा अनुत्पत्तिमन्ति तानि नित्यानि । न ह्येतानि कदाचनोत्पद्यन्ते न(वि)

लीयन्ते पुरुषः प्रकृतिरात्मा काल इति। अथैतान्युत्पत्तिमन्ति चानुत्पत्तिमन्ति च प्राणः श्रद्धाऽऽकाश इति भागशो ह्युत्पद्यन्त' इति माल्लवेयश्रुतेः (तेश्च) ॥ ४ ॥

तत्वप्रकाशिका––

न केवलमुक्तव्यवस्थाऽसंभवयुक्तिसिद्धा। अपि तु श्रुतिसिद्धा चेत्यर्थप्रतिपादकं सूत्रमुपन्यस्य तां श्रुतिमुदाहरति ॥ शब्दाच्चेति ॥ आत्मा परमात्मा। पुरुषादिपदैर्जीवचैतन्य-प्रकृतिस्वरूप-कालप्रवाहा उच्यन्ते। तदभिमानिप्रकृतिश्च। प्राणो मुख्यवायुः। श्रद्धा तत्पत्नी। पुरुषपदेन गृहीतयोरप्यनयोश्चैतन्यमात्रादधिकमपि नित्यत्वमस्तीति दर्शयितुं पुनः सपरिकरयोर्ग्रहणम्। उक्तप्रतिज्ञाद्वयसमर्थनाय व्याप्तिरुच्यते ॥ यानीति ॥ नित्यत्वव्याप्तस्यानादित्वहेतोरुपनयो न हीति। न विलीयन्त इति निगमनम्। एवमनित्येष्वपि प्राणादीन्युत्पत्तिमन्ति तस्माल्लीयन्ते इत्युपनयनिगमने द्रष्टव्ये। प्राणादिषु न सर्वेषामनित्यत्वमेवेत्युच्यते ॥ अथेति ॥ तस्मान्नित्यानित्यानीति शेषः। तत्रोपपत्तिर्भागश इति। बहुभागैरुत्पद्यन्ते कैश्चिन्नोत्पद्यन्त इत्यर्थः। तत्प्रकारश्चाकाशस्योक्तः। प्राणस्योपरि वक्ष्यते ॥ ४ ॥

भावदीपः––

॥ ॐ शब्दाच्च ॐ ॥ ४ ॥ सूत्रे चशब्द अनुक्तसमुच्चय इति भावेनाह ॥ न केवलमिति ॥नित्यवर्गे गृहीतयोः प्राणश्रद्धयोरनित्यवर्गेऽप्युक्तिः किमर्था कथं च युक्तेत्यत आह ॥ पुरुषपदेनेति ॥ अधिकमिति ॥ मनोवृत्तिज्ञानाख्यमित्यर्थः ॥ दर्शयितुमिति ॥ अथैतान्युत्पत्तिमंति चानुत्पत्तिमंति चेत्यादिवाक्येनेति भावः। अयुक्ततां निराह ॥ सपरिकरयोरिति ॥ देहादिरूपपरिकरयुक्तयोरित्यर्थः ॥ बहुभागैरिति ॥ चतुष्टयात्मकाकाशश्चतुर्भिर्भागैरुत्पद्यते। प्रागुक्तोत्पत्तेश्चतुर्ष्वपि सत्वात् प्राणादिपदोक्तो भूतमुख्यामुख्यतदभिमानिरूपत्रितयात्मको वायुरपि त्रिभिरपि भागैरुत्पद्यते। स्वरूपतो देहद्वारा चोत्पत्तेस्त्रिषु सत्वात् ॥ कैश्चिदिति ॥ अवकाशस्वरूपाभिमानिचैतन्यस्वरूपैश्च नोत्पद्यत इत्यर्थः ॥ उक्त इति ॥ सर्वविषयत्वादुत्पत्तिश्रुतिर्मुख्यार्थेत्यत्रेति भावः ॥ वक्ष्यत इति ॥ त्रिभिरपि भागैरुत्पद्यते। चैतन्यं स्वरूपांशेन नोत्पद्यत इति वक्ष्यत इत्यर्थः। यद्यपीदं तत्र भाष्यटीकयोर्न व्यक्तम्। तथाप्यभिप्रेतं मैवमित्यादिना सूच्यते चेति भावः ॥ ४ ॥

सूत्रभाष्यम्—

॥ ॐ स्याच्चैकस्य ब्रह्मशब्दवत् ॐ ॥ ५ ॥

स्यादेवैकस्योत्पत्तिमत्त्वमनुत्पत्तिमत्त्वं च गौणमुख्यत्वापेक्षया । यथा ब्रह्मशब्दः ।

'अथ कस्मादुच्यते परं ब्रह्मेति बृहति बृंहयति च' (अथर्वशिरः)

इति श्रुतेः परे ब्रह्मणि मुख्योऽपि गौणत्वेन विरिञ्चादिष्वपि वर्तते । अत एवाब्रह्मत्वं च तेषाम् । एवमन्यत्राप्यनुत्पत्तिमच्छब्दः ॥ ५ ॥

तत्वप्रकाशिका—

भवेदाकाशस्य गौणमनादित्वमुत्पत्तिर्मुख्यत इति व्यवस्था यद्यनादित्वश्रुतिर्भाक्ता भवेत् । नैतदस्ति । 'न जायते म्रियते' इत्यादावनुत्पत्तिमच्छब्दस्य मुख्यार्थत्वदर्शनादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ स्यादिति ॥ एकस्यैवाकाशस्य गौणमुख्यत्वापेक्षयानुत्पत्तिमत्वमुत्पत्तिमत्वं चेत्युक्तव्यवस्था युक्तैव । अनुत्पत्तिमच्छब्दस्य ब्रह्मणि मुख्यार्थस्याप्याकाशे ब्रह्मशब्दवदमुख्यत्वोपपत्तेरिति भावः । ब्रह्मशब्दः परे ब्रह्मणि कुतो मुख्य इत्यत उक्तम् ॥ अथेति ॥ शब्दप्रवृत्तिनिमित्तसद्भावादिति भावः । विरिञ्चादिष्वमुख्यता कुत इत्यत उक्तम् ॥ अत एवेति ॥ ब्रह्मशब्दस्य तत्रामुख्यत्वादेव हि तेषामपूर्णत्वमन्यथा तन्न स्यादित्यर्थः ॥ ५ ॥

भावदीपः —

॥ ॐ स्याच्चैकस्य ब्रह्मशब्दवत् ॐ ॥ ५ ॥ अनुत्पत्तिमच्छब्दस्येति ॥ अनुत्पत्तिमदर्थकशब्दस्येत्यर्थः ॥ मुख्यार्थत्वदर्शनादिति ॥ यद्यप्येक एवशब्दः प्रयोगभेदेन प्रवृत्तिनिमित्तवति मुख्योऽन्यत्रामुख्यश्च दृष्टः । तथापीह शब्दैकगम्ये शब्दादेव प्रवृत्तिनिमित्तस्यापि कल्प्यत्वादनेकार्थत्वस्यान्याय्यत्वाच्च । ब्रह्मण्यनुत्पत्त्यर्थकशब्दप्रवृत्तौ यन्निमित्तं तदेवान्यत्रापि वाच्यमिति भावेनेयं शंकेति ध्येयम् । सौत्रश्चकारोऽवधारणार्थ इति भाष्योक्तैवकारान्वयं द्वेधा दर्शयन् स्यादेवेत्यादिभाष्यं व्याचष्टे ॥ एकस्यैवेति ॥ पूर्वं सौत्रमेकपदं आकाशपरं मत्वा स्यादेवेत्यादिभाष्यं व्याख्यायेदानीमनुत्पत्तिमच्छब्दपरं मत्वा यथेत्यादिभाष्यभावमाह ॥ अनुत्पत्तिमच्छब्दस्येति ॥ ॥ ५ ॥

सूत्रभाष्यम्—

॥ ॐ प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॐ ॥ ६ ॥

ब्रह्मणोऽन्यस्य नित्यत्वे 'स इद१ँ सर्वमसृजत' (तै. उ. २–६) त्यादि प्रतिज्ञाहानिः। आकाशस्यापि सर्वस्मादव्यतिरेकात्। आत्मा वा इदमेक एवाग्र आसीत्' (ऐ. उ. १–१) 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छां. उ. ६–२–१) 'इदं वा अग्रे नैव किञ्चनाऽसीदि' (तै. आ. २–२–९) त्यादिश्रुतिभ्यः ॥ ६ ॥

तत्वप्रकाशिका—

युक्तं ब्रह्मशब्दस्य परब्रह्मणि मुख्यत्वमन्यत्रामुख्यत्वम्। कारणसद्भावात्। न च प्रकृते कारणमुपलभ्यत इत्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ प्रतिज्ञेति ॥ यदि ब्रह्माकाशयोरुभयोरप्यनुत्पत्तिमच्छब्दो मुख्योऽङ्गीक्रियते तर्हि 'ब्रह्मेदं सर्वमसृजत' इति प्रतिज्ञाविरोधः स्यात्। अतो ब्रह्मण्येव मुख्योऽनुत्पत्तिमच्छब्दोऽन्यत्रामुख्यः। न च वाच्यमत्राकाशशब्दाश्रवणात्तस्य मुख्यानुत्पत्तावपि न प्रतिज्ञाहानिरिति। आकाशस्यापि सर्वमध्यपतितत्वात्। संकोचे कारणाभावात्। तथाप्यत्राकाशब्रह्मणोः सादित्वानादित्वे स्फुटं न प्रतीयेते इति चेन्न। आत्मेत्यादि श्रुतीनां स्पष्टं तद्वाचकानां सद्भावात्। बहुश्रुतिविरोधे चैकस्या अमुख्यत्वं नियतमिति भावः। अनेनासंभवादित्युक्तमेव विवृतं भवति। इदमस्येत्यर्थः ॥ ६ ॥

भावदीपः—

॥ ॐ प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॐ ॥ ६ ॥ कारणेति ॥ प्रवृत्तिनिमित्तपौष्कल्यभावाभावरूपकारणेत्यर्थः। ब्रह्मान्यप्रकृत्यादिनित्यत्वस्य सिद्धांतेऽपि भावात्कथं भाष्ये ब्रह्मणोऽन्यस्य नित्यत्व इत्यापादकोक्तिरित्यतो व्याचष्टे ॥ यदीति ॥ आकाशस्यापीत्युपर्युक्तेरन्यशब्दस्याकाशोऽर्थ उक्तः। स तपस्तप्त्वा इदं सर्वमसृजतेति प्रकृततच्छब्दार्थोक्तिर्ब्रह्मेति। भाष्यशेषमवतार्य व्याचष्टे ॥ न च वाच्यमित्यादिना ॥ इत्यादिश्रुतिभ्य इति बहुवचनतात्पर्यमाह ॥ बहुश्रुतीति ॥ अपौनरुक्त्यायाह ॥ अनेनेति ॥ सूत्रेणेत्यर्थः। गौण्यसंभवादित्यत्रोक्तोत्पत्तिश्रुतिबाहुल्यासंभवादित्युक्तमेवेत्यर्थः ॥ विवृतमिति ॥ कथमाकाशस्यानुत्पत्तिमत्त्वे स इदं सर्वमसृजतेत्याद्युत्पत्तिश्रुतिविरोधः। तत्राकाशस्याश्रवणात्। संभूतवाक्ये श्रवणेऽपि तस्यैकत्वेन

दुर्बलत्वादित्याशंकानिवृत्त्यर्थं तद्विवरणं कृतमत्र सूत्र इति भावः। इदमग्रे आत्मैवासीदिति भ्रमनिरासायाह ॥ इदमिति ॥ समग्रश्रुत्यर्थस्तु ऐतरेयभाष्यादौ व्यक्त इति भावः ॥ ६ ॥

सूत्रभाष्यम्—

॥ ॐ यावद्विकारं तु विभागो लोकवत् ॐ ॥ ७ ॥

विभक्तत्वाच्च विकारित्वं युक्तम्। विकारिण एव हि विभक्ता लोके दृश्यन्ते।

'एकोऽविभक्तः परमः पुरुषो विष्णुरुच्यते।
प्रकृतिः पुरुषः कालस्त्रय एते विभागतः॥
चतुर्थस्तु महान्प्रोक्तः पञ्चमाऽहङ्कृतिर्मता।
तद्विभागेन जायन्त आकाशाद्याः पृथक्पृथक्॥
यो विभागी विकारः स, सोऽविकारः परो हरिः।
अविभागात्परानन्दो नित्यो नित्यगुणात्मकः।
विभागो ह्यल्पशक्तित्वं (ह्यल्पशक्तिस्स्यात्) न तदस्ति जनार्दन'

इति (पा. न हि तत्परमात्मनः) (च) बृहत्संहितायाम् ॥ ७ ॥

॥ इति वियदधिकरणम् ॥ १ ॥

तत्वप्रकाशिका—

अनुमानेनापि ब्रह्मण एवानादित्वमन्येषां सादित्वमनुत्पत्तिश्रुतेर्मुख्यामुख्यत्वसिध्द्यर्थं साधयत्सूत्रमुपन्यस्य प्रतिज्ञाहेतू बहिरेव दर्शयित्वा व्याप्तिप्रदर्शनपरतया व्याचष्टे ॥ यावदिति ॥ अत्रेमौ प्रयोगौ भवतः। वियदुत्पत्तिमद्विभक्तत्वाद्घटादिवत्। ब्रह्म नोत्पत्तिमदविभक्तत्वाद् व्यतिरेकेण घटादिवदिति। विकारिण एव विभक्ता दृश्यन्ते न त्वविकारिणोऽतो विभक्तत्वस्य न विपक्षवृत्तितेति भावः। अत्रैव स्मृतिसंमतिं चाह ॥ एक इति ॥ विष्णुरविभक्तः प्रकृत्यादयस्त्रयो विभागवत्वेन प्रोक्ताः। महानपि तथा प्रोक्तः। अहंकृतिरपि विभक्तत्वेन मता। यद्येवं किं तर्हीत्यत आह ॥ तदिति ॥ स चासौ विभागश्चेति तथोक्तस्तेन हेतुना आकाशाद्याः पृथक्पृथगिति परम्परया नैकस्मात्। विभागत्वेऽपि कुतो जन्मेति तत्राह ॥ य इति ॥ विष्णुरविभक्तश्चेत्ततः किमित्यत्राह ॥ स इति ॥ द्रव्यत्वादविभागादित्यसिद्धमित्यत आह

॥ विभाग इति ॥ न चास्य प्राचीनश्रुतिविरोधः । तत्र स्वरूपत एवोत्पत्तेरभावस्योक्तत्वात् । अनेन वियत्पदमनादित्वेन प्रसिद्धानां प्रकृत्यादीनामुपलक्षणार्थमिति सूचितं भवति । अतः श्रुत्यविरोधेन भगवदितरस्योत्पत्तिसिद्धेर्युक्तः सर्वकारणे ब्रह्मणि श्रुतिसमन्वय इति सिद्धम् ॥ ७ ॥ अ० १ ॥

भावदीपः—

॥ ॐ यावद्विकारं तु विभागो लोकवत् ॐ॥ ७ ॥ अनुमानेनापीति ॥ भाष्ये विभक्तत्वाच्चेति चः समुच्चये । सूत्रे तुशब्दश्चार्थे इति सूचितम् । अनादित्वाद्युक्तेर्वैयर्थ्यनिरासायोक्तं अनुत्पत्तीत्यादि । एको विभक्त इत्यादिस्मृत्यनुरोधाद्भाष्यमुपलक्षणं मत्वाह ॥ अत्रेमाविति ॥ व्याप्तिपरतां भाष्यस्य व्यनक्ति ॥ विकारिण एवेति ॥ सूत्रे यावदवधारण इत्यव्ययीभावनिर्देशादवधार्थोक्तिरेवेति । तद्व्यावर्त्योक्तिर्न त्विति ॥ द्रव्यत्वादिति ॥ विभागरूपगुणस्य द्रव्यधर्मत्वादिति भावः ॥ न चास्येति ॥ प्रकृतिः पुरुषः कालस्त्रय एते विभागिन इत्यादिवचनस्याथ ह वाव नित्यानि पुरुषः प्रकृतिरात्मा काल इति नित्यत्वबोधकप्रागुक्तश्रुतिविरोध इत्यर्थः ॥ तत्र स्वरूपेति ॥ अभूत्वा भवनरूपोत्पत्तेरित्यर्थः । अत्र तु पराधीनविशेषावाप्तिरूपोत्पत्तिरुच्यत इति भावः ॥ अनेनेति ॥ तद्विभागेन जायंत इति प्रकृत्यादीनां विभागेन हेतुना जन्मकथनेनेत्यर्थः । वियत्पदं सूत्रस्थमिति योज्यम् । अश्रुतेरित्याद्युक्तहेतूनां साम्यात्पराधीनविशेषावाप्तिरूपोत्पत्तेः स्वरूपानादित्वाविघातकत्वादिति भावः । एवं विप्रतिपन्नस्य सर्वस्यात्रैवोत्पत्तिसिद्धावपि एतेनेति ज्ञोऽत एवेति चाधिकरणद्वयमभ्यधिकाशंकया प्रवर्तिष्यते । सा चोत्तरनये स्पष्टैव । ज्ञोऽत इत्यत्र तु जन्मश्रुतीनां पराधीनविशेषावाप्तिरूपोत्पत्त्यर्थकत्वे अनुत्पत्तिश्रुतीनामुक्तरूपोत्पत्त्यभावपरत्वमेव स्यात् । न तु स्वरूपोत्पत्त्यभावपरत्वम् । तथा च जन्माजन्मश्रुतीनामन्योन्यविरोधस्तदवस्थ एवेत्येवंरूपेण विशेषाशंका ध्येया विवरिष्यते च तत्रैवास्माभिः ॥ अत इति ॥ गौणमुख्यत्वाभ्यां व्यवस्थायाः संभवादित्यर्थः ॥ ७ ॥ अ० १ ॥

सूत्रभाष्यम् –

'अथ ह नित्याश्चानित्याश्च तेजोऽबन्नान्याकाश इति तान्यनित्यानि वायुर्वाव नित्यो वायुना हि सर्वाणि भूतानि नेनीयन्ते' 'अथ ह चेतनाश्चाचेतनाश्च तेजोऽबन्नान्याकाश इति तान्यचेतनानि वायुर्वाव चेतनो वायुना हि सर्वाणि भूतानि विज्ञायन्ते'।

'कुविदङ्ग नमसा ये वृधासः पुरा देवा अनवद्यास आसन्। ते वायवे मनवे बाधितायाऽवासयन्नुषसं सूर्येण' (ऋ. सं. ७-९१-१)। 'सा वा एषा देवताऽनादिर्योऽयं पवत' इति। 'यस्या नाऽदिर्न मध्यं नान्तो नोदयो न निम्लोच' इत्यादिश्रुतिभ्यो वायोरनुत्पत्तिरित्यतो ब्रवीति—

॥ ॐ एतेन मातरिश्वा व्याख्यातः ॐ ॥ ८ ॥

एतेन मुख्यामुख्यानुत्पत्तिवचनेन विभक्तत्वाच्च वाय्वनुत्पत्तिश्रुतिरपि व्याख्याता।

'नित्यः परमनित्यश्च तथाऽनित्यः परस्तथा।
चतुर्धैतज्जगत्सर्वं परानित्यं तु पार्थिवम्।
अनित्यानि तु भूतानि नित्यो वायुरुदाहृतः।
परस्तु नित्यः पुरुषः प्रकृतिः काल एव च।
एतच्चतुष्टयं विष्णुः स्वयं नित्यः परात्परः।
प्रतिव्यूह्य व्यूह्य चासावतीत्य च जनार्दनः।
धारयत्यनिशं देवो नित्यानन्दैकलक्षणः' इति कौर्मे ॥ ८ ॥

॥ इति मातरिश्वाधिकरणम् ॥ २ ॥

तत्वप्रकाशिका—

अत्रेश्वरे वेदसमन्वयसिद्धये मुख्यवायूत्पत्तिविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसंगतिः। सर्वोत्पादको हरिरित्यभिहितम्। तत्र मुख्यवायोरुत्पत्त्यभावे तदयुक्तं स्यादिति तदुत्पत्तिः समर्थनीया। मुख्यवायुर्विषयः। उत्पत्तिमान्न वेति संदेहः। तासां वायुर्वत्सः 'सा वा एषा देवतानाऽदिर्योऽयं पवत' इति श्रुतिविगानं संदेहबीजम्। सयुक्तिकं पूर्वपक्षयति ॥ अथेति ॥ वायोरनुत्पत्तिरेव। 'वायुर्वाव नित्यः सा वा एषा देवताऽनादि' रित्यादिश्रुतेः। न चाकाशानुत्पत्तिश्रुतिवद् गौणार्थत्वम्। तथा सत्याकाशादिवन्मुख्यवायोरुत्पत्त्यनुत्पत्तिमत्त्वे तेजोऽबन्नाकाशानामनित्यत्वमुक्त्वा वायोर्नित्यत्वोक्तिरयुक्ता स्यात्। न चाकाशपदेन भूतमेवोच्यत इत्यत्र नियामकमस्ति। किं च वायोरनुत्पत्तिर्गौणीति स्वरूपमात्रविषयेति वक्तव्यम्। तथा सति तस्य सर्वचेतनसाम्येनातिशयितचेतनत्वमयुक्तं स्यात्। सर्वदेवतोपास्यता च नोत्पत्तिमत्त्वे घटते। तस्योदयनिम्लोचाभावे च कुतो जन्मसंभवः।

एवंविधस्य चोत्पत्त्यङ्गीकारेऽनुभवव्याकोपः स्यात्। अतोऽत्यन्तमनुभूतियुक्तिबहुवाग्विरोधेन वायोरुत्पत्त्ययोगादुत्पत्तिश्रुतिरप्रमाणमेवेति न जगत्कारणे ब्रह्मणि श्रुतिसमन्वयो युक्त इति भावः। एवमभ्यधिकाशङ्कया पूर्वपक्षितेऽतिदेशेन सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥अत इति॥ मुख्यवायुरप्युत्पत्तिमानेव। अनुत्पन्नत्वेनाश्रुतत्वात्। 'प्राणाद्वायुरजायत' इत्यादावुत्पन्नत्वेन श्रुतत्वाच्च। न चोदाहृतश्रुतिविरोधः। तस्याः स्वरूपविषयत्वेनाकाशानुत्पत्तिश्रुतिव्याख्यानेनैव व्याख्याततत्वात्। उत्पत्तिश्रुतेः पुनः शरीरविषयत्वाद् व्यवस्थोपपत्तेः। न चैवं व्यवस्थाभ्युपगमे कारणाभावः। अथैतान्युत्पत्तिमन्ति चानुत्पत्तिमन्ति च प्राणः श्रद्धाकाश इति भागशो ह्युत्पद्यन्त इति वायोर्मुख्यामुख्योत्पत्त्यनुत्पत्त्यभिधायकवचनात्। अनुत्पत्तिश्रुतिर्ब्रह्मण्येव मुख्यान्यत्रामुख्येत्यस्य स्याच्चैकस्येत्यादिना कथितत्वाच्च। विभक्तशक्तित्वाच्च। वायोर्मुख्यानुत्पत्त्यनुपपत्तेः। किं च वायोरनुत्पत्तिं वदन् प्रष्टव्यो जायते। किं वायुरेवानादिरीशोऽपि वा। नाद्यः। प्रमाणविरोधेन वायोरेवानुत्पत्त्यनुपपत्तेः। न द्वितीयः। द्वयोरपि स्वातन्त्र्यापातात्। पराधीनविशेषलाभो ह्युत्पत्तिः। न च स्वातंत्र्यं द्वयोर्युक्तम्। अन्योन्यानुरोधाननुरोधयोर्विरोधात्। अतो वायोर्मुख्यानुत्पत्तौ बाधकसद्भावाद्युक्तैवोक्तव्यवस्थेति भावः। वायोर्मुख्यानुत्पत्त्यभावे वियदादिभ्य उत्पत्त्यनुत्पत्तिमद्भ्यो विशेषेणानुत्पत्तिश्रुतिर्मुख्यचेतनत्वादियुक्तिश्च विरुणद्धीत्याशङ्कां परिहर्तुं स्मृतिमुदाहरति ॥ नित्य इति ॥ परः परानित्यः एतद्व्यूह्य स्वात्मानं च तत्र प्रतिव्यूह्य स्वगुणैस्तदतिक्रम्य धारयतीत्यर्थः। तत्र वायोः परात्परनित्यत्वं स्वातन्त्र्यलक्षणं परनित्यत्वं देहादेरपि नित्यत्वं च नास्त्येव। तथापि सम्यगनित्यताशून्येभ्यो नित्येभ्यो वियदादिभ्यः स्वरूपातिरिक्तज्ञाननित्यत्वाभिप्रायेणातिशयेन नित्यतोच्यते। अतः श्रुत्यविरोधेन वायोरुत्पत्तिसिद्धेर्युक्तो ब्रह्मणि श्रुतिसमन्वय इति सिद्धम्। नन्वत्राकाशानन्तरं भूतवायोः प्राप्तिर्न मुख्यस्येति। मैवम्। वायुशब्देन खलु भूतं तदमुख्यमुख्याभिमानिनौ चोच्यंते। तत्र मुख्यवायुविषय एव विवादप्राप्तेः। न हि भूतादिविषये श्रुतिविरोधोऽस्ति। तैत्तिरीयश्रुतावाकाशाद्वायुरिति श्रूयते। छन्दोगश्रुतौ तु तेजःपूर्वैव सृष्टिरिति चेन्मैवम्। उक्त्यनुक्त्योर्विरोधाभावात्। किं च नित्यविभुवियदुत्पत्तौ निर्णीतायां वायुभूतविषये शङ्कासाम्यस्याप्यभावेनाधिकाशङ्का प्रागेव नास्तीत्युक्त एव सूत्रार्थ इति ॥ ८ ॥ अ० २ ॥

भावदीपः—

॥ ॐ एतेन मातरिश्वा व्याख्यातः ॥ ॐ ॥ ८ ॥ वेदसमन्वयसिद्धय इति ॥

विरोधापरिहारे वायूत्पत्तिश्रुतेरनुत्पत्तिश्रुतिविरोधेनाप्रामाण्येऽन्यत्राप्यनाश्वासेन समन्वयो न सिध्येदिति भावः ॥मुख्यवाय्विति॥ मुख्यवायूत्पत्तिविषये यः सा वा एषा देवतानादिरित्यादिश्रुतिविरोधस्तस्य परिहारादित्यर्थः। भूतवायूत्पत्तिविषये आकाशाद्वायुरित्युत्पत्तिश्रुतिवदनुत्पत्तिश्रुत्यभावे विरोधशंकाया एवानुदयादुदये वा पूर्वन्यायेन सुपरिहरत्वात् एतेनेति सौत्रातिदेशोपयुक्ताभ्यधिकाशंकाया भूतवायौ सुतरामभावात् भूतवायुमुख्याभिमानिनि मुख्यवायावेव वक्ष्यमाणदिशा तदुभयसंभवादिति भावः। पूर्वसंगतिमाह ॥ सर्वेति ॥ एवमग्रेऽपि। भाष्येऽनुक्तेः छांदोग्यतृतीयाध्यायस्थां श्रुतिं स्वयमाह ॥ तासामिति ॥तस्य प्राची दिग्जुहूरित्यादिपूर्ववाक्योक्तचतुर्दिगवस्थितदिङ्नामकभगवद्बाहूनां वत्स इति भगवद्बाहुजातत्वमुच्यते। यद्यप्यत्राकाशाद्वायुरित्येव जन्मश्रुतिर्वाच्या तत्र वायुशब्दस्य भूततदमुख्यमुख्याभिमानिरूपत्रितयपरत्वस्योपरिव्यक्तत्वात्। प्राणस्योपरि वक्ष्यत इति पूर्वत्रोक्तत्वेनैतदेवोदाहृत्य वायुजन्मश्रुतेस्त्रिभिरपि भागैर्वायूत्पत्तिपरत्वस्य वर्णनीयत्वात्। तथाप्यस्य पूर्वोक्तदिशा व्यक्तत्वादत्र केवलमुख्यवायोरेव विशेषशंकया चिंता नान्यस्येति सूचना केवलमुख्यवायुजन्मपरश्रुतिरेवोक्ता। भाष्यस्थप्रतिज्ञांशमाकाशादाविव गौणमुख्यापेक्षयोत्पत्त्यनुत्पत्तिमत्त्वनिरासाय सावधारणं व्याचष्टे ॥ वायोरनुत्पत्तिरेवेति ॥ भाष्योक्तश्रुतिमाह ॥ वायुरिति ॥ भाष्ये बहुवचनोक्तावपि श्रुतेरित्येकवचनोक्तिरितरश्रुतीनामनुत्पत्तावतिशयितचेतनत्वसर्वदेवोपास्यत्वोदयाद्यभावरूपयुक्तिसूचनपरत्वाशया। एतेन ततोऽधिकमेतत्सर्वमनुभूत्यादिविरुद्धत्वं वायूत्पत्ताविति न्यायविवरणस्थादिपदोक्तबहुवाग्विरोधो विवृतः। पूर्वेण गतार्थत्वं शंकते। ॥ न चेति ॥ गौणार्थत्वमिति ॥अभिमानिचैतन्यस्वरूपरूपभागपरत्वाख्यं गौणार्थत्वमित्यर्थः। अतिदेशत्वसिद्धये भाष्योक्तमभ्यधिकाशंकाचतुष्टयं विवृण्वानोऽथ ह नित्याश्चेति श्रुत्युक्तमाह॥तथा सतीति॥ननु तत्वप्रदीपे तेजोऽबन्नान्याकाश इति श्रुतौ भूताकाश इत्युक्तत्वात्ततो मुख्यवायोः स्वरूपनित्यत्वमेव विशेष इत्यतो नेत्याह ॥ न चाकाशपदेनेति॥ अत्र तेजोऽबन्नान्याकाश इति श्रुतौ। किं त्वव्याकृताकाशस्याप्यस्ति ग्रह इति भावः। अथ ह चेतनाश्चेति श्रुत्युक्तशंकामाह ॥किं चेति॥कुविदंगेति श्रुत्युक्तामाह ॥ सर्वदेवेति ॥ते जन्मादिदोषित्वे तदयोगादिति भावः। मंत्रार्थः शब्दादेवेत्यत्र उक्तः। यस्येति वाक्योक्तामाह॥तस्येति॥एवं न्यायविवरणस्थादिपदोपात्तश्रुतियुक्तिविरोधंभाष्योक्तश्रुतितात्पर्यविवरणेन विवृत्ययुक्तीनां विपक्षे बाधकत्वेन तत्रोक्ता-

नुभवविरोधमपि योजयति ॥ एवंविधस्येति ॥ नित्यत्वव्याप्तोक्तबहुहेतुमत इत्यर्थः। उक्तं सर्वं न्यायविवरणारूढं कुर्वन्नुपसंहरति ॥ अत इति ॥ उक्तानेकश्रुतेर्भावादित्यर्थः। तत्रत्याधिकशब्दार्थोऽत्यंतमिति। आकाशादेरनित्यत्वमुक्त्वा वायोर्नित्यत्वाद्युक्तिराकाशादधिकेत्यर्थः। उत्पत्तिश्रुतिः तासां वायुर्वत्स इति श्रुतिः ॥ छ ॥ भाष्ये सौत्रैतच्छब्देन शब्दाच्च यावद्विकारमिति च सूत्रद्वयोक्तश्रुतियुक्तिपरामर्शित्वप्रतीतावपि सौत्रमातरिश्वपदस्य तदुत्पत्त्यनुत्पत्तिश्रुतिलक्षणां विनैव मातरिश्वा मुख्यवायुरुत्पत्तिमान्व्याख्यात इति यथाश्रुतयोजनायामश्रुतेरित्यादिहेतवोऽप्यन्वीयंत इति मत्वा विभक्तत्वाच्चेति भाष्यस्थचशब्दानुसारात्सर्वोऽपि प्राचीनहेतुरेतेनेत्यनेन विवक्षित इति भावेनाह ॥ अनुत्पन्नत्वेनेति ॥ पराधीनविशेषावाप्तिरूपोत्पत्तिमत्त्वाभावेनाश्रुतत्वादित्यर्थः। उत्पन्नत्वेनेत्यत्राप्येवं ध्येयम्। अस्ति त्वित्युक्तमाह ॥ श्रुतत्वाच्चेति ॥ इत्यादावित्यादिपदेन वायुपदोपेतोत्पत्तिवाक्यानामेवात्र ग्रहः। न तु स प्राणमसृजतेत्यादिप्राणपदोपेतस्य तस्याध्यात्मविषयत्वात्। एतेनासंभवात् शब्देभ्य इति सूत्रद्वयोक्तहेतुरप्युक्तो भवति। वाय्वनुत्पत्तीतिभाष्यवाक्यमवतार्य व्याचष्टे ॥ न चोदाहृतेति ॥ वायुर्वाव नित्य इत्यादिश्रुतीत्यर्थः ॥स्वरूपेति॥अभिमानिस्वरूपेत्यर्थः। अपिशब्दार्थव्यक्तिराकाशानुत्पत्तीति। भाष्येऽनुत्पत्तिश्रुतिरित्युपलक्षणं मत्वाह ॥ उत्पत्तिश्रुतेरिति ॥ मुख्यामुख्येत्यादिभाष्यमवतार्य व्याचष्टे ॥ न चैवमिति ॥ भाष्येऽनुत्पत्त्युक्तिमुपलक्षणं मत्वाऽऽह ॥ उत्पत्त्यनुत्पत्त्यभिधायकेति ॥ कैश्चिद्भागैर्नोत्पद्यंत इत्यस्योपलक्षकत्वेन श्रुतेः पूर्वं व्याख्यानादिति भावः॥ वचनादिति ॥ तृतीयापंचम्योर्हेतुरूपैकार्थत्वाद्वचनेनेत्यस्य वचनादित्यर्थ उक्तः। स्याच्चैकस्येति सूत्रोक्तं च हेतुमाह ॥ अनुत्पत्तीति ॥ अनेन भाष्यस्थब्रह्मतदन्ययोर्मुख्यामुख्यानुत्पत्तिवचनेनेत्यर्थान्तरं दर्शितम्। विभक्तत्वाच्चेति भाष्योक्तहेतोर्वायोरेवानुत्पत्त्यनुपपत्तेरिति न्यायविवरणोक्तं साक्षात्साध्यं भाष्ये पूरयति ॥ वायोरिति ॥ पराधीनविशेषावाप्त्यभावरूपानुत्पत्त्यनुपपत्तेरित्यर्थः। नन्वस्तूक्तश्रुतियुक्त्यनुभवबलाद्वायोरुक्तरूपानुत्पत्तिः तथा चाल्पशक्तित्वरूपविभक्तशक्तित्वाच्चेत्युक्तहेतुर्विपक्षे बाधकाभावेनाप्रायोजक इत्याशंक्य वायोरेवानुत्पत्त्यनुपपत्तेरित्यादिवाक्यमत्र योजयितुमाह॥ किंचेति ॥ प्रमाणेति ॥ प्रतिज्ञाहान्यादिसूत्रे भाष्योक्तप्रमाणविरोधेनेत्यर्थः। पराधीनविशेषमात्रं ह्युत्पत्तिः। तदभावे उभयोः स्वातंत्र्यं विरुद्धमेव। सर्वोत्तमत्वानुपपत्तेरिति न्यायविवरणार्थमाह ॥ द्वयोरपीति ॥ कुतो न युक्तमित्यत उभयोरपि पराधीनत्वप्राप्तेश्चान्योन्यानुरोधे

अननुरोधे तु न सर्वैश्वर्यमिति न्यायविवरणोक्तयुक्ति संगृह्णाति ॥ अन्योन्येति ॥ ॥ अत इति ॥ द्वयोः स्वातंत्र्यायोगादित्यर्थः ॥ अनुत्पत्तिश्रुतिरिति ॥ वायुर्वाव नित्य इति श्रुतिरित्यर्थः । पर इत्यनुवादः परानित्य इति व्याख्या । तत्र जगति। प्रतिव्यूह्य प्रतिव्यूहशःकृत्वा । कथं स्मृत्युक्त्योक्तशंकानिरास इत्यतः ज्ञानाविस्मृत्या वायावपि व्यवस्थेत्यतिदेश इति न्यायविवरणानुरोधेन भावमाह ॥ तत्र वायोरिति॥ नित्यतेति ॥ नित्यत्वमुख्यचेतनत्वादिकमुच्यत इत्यर्थः । भाष्ये स्मृत्या एतच्छंकानिवृत्युक्तावपि न्यायविवरणेऽनुपपत्तिस्तु तत्प्रापिकेति विशिष्य नित्यत्वचेतनत्वाद्युक्त्यन्यथानुपपत्त्यैवैतच्छंकानिरास उक्तः ॥ अत इति ॥ वायावपि व्यवस्थासंभवादित्यर्थः । परकीयसूत्रप्रमेयं स्वमते असांगत्यं च व्युदसितुमाह ॥ नन्वत्रेति ॥ मायावाद्युक्तं शंकते ॥ तैत्तिरीयेति ॥ छंदोगेति ॥ तदैक्षत बहु स्यां प्रजायेयेति। तत्तेजोऽसृजतेति तेजसः प्रथमं सृष्टिरित्यर्थः ॥ विरोधाभावादिति॥ छांदोग्ये क्रमानुक्तावपि तैत्तिरीयोक्तस्य स इदं सर्वमसृजतेत्यादिवद्ग्राह्यत्वात् । श्रुत्यंतरोक्तोपसंहारस्य च सर्ववेदांतनयसिद्धत्वादिति भावः । ननु आकाश इव भूतवायावनुत्पत्तिशंकायां तन्निरासस्त्वावश्यक इत्यस्त्विदं भूतवायुपरमित्यत आह ॥ किंचेति ॥ आधिकेति ॥ यत्र नास्ति पदन्यासः कस्तं विषयमाप्नुयादिति भावः ॥ ८ ॥ अ० २ ॥

सूत्रभाष्यम्—

॥ ॐ असम्भवस्तु सतोऽनुपपत्तेः ॐ ॥ ९ ॥

'असद्वा इदमग्र आसीत् । ततो वै सदजायत' ( तै. उ. २-७ ) 'असतः सदजायत' (ऋ, सं. १०-७२-२.) त्यादि श्रुतिभ्यः सतोऽप्युत्पत्तिरिति चेन्न। अनुत्पत्तिरेव सतः। तुशब्देनोक्तव्यवस्थामपाकरोति । न ह्यसतः सदुत्पद्यते। अदृष्टत्वादनुपपत्तेः। 'तद्वा एतद्ब्रह्माहुर्बृहति बृंहयति चेति। तद्वा एतदसदाहुः न ह्यासादयति कश्चनेति। तद्वा एतत्परमाहुः परतो हि तदुदीक्ष्यत' इति श्रुतेरसच्छब्दो ब्रह्मवाची। 'देवानां पूर्वे युगेऽसतः सदजायतेति ब्रह्म वा असत् सद्वाव प्राणः प्राणं(णो)वाव महान् सह ओजो बलमित्याचक्षत' इति पैङ्गिश्रुतिः ।

'त्वं देव शक्त्यां गुणकर्मयोनौ रेतस्त्वजायां कविराद्धेऽजः ।
ततो वयं सत्प्रमुखा यदर्थे बभूविमाऽऽत्मन् करवाम किं त' इति (च)
भागवते ॥

'अजायमानो बहुधा विजायत' (तै. आ. ३-१३.) इति च।

'प्रत्यक्षत्वं हरेर्जन्म न विकारः कथञ्चन ।
पुरुषः प्रकृतिः कालो महानित्यादिषु क्रमात् ॥
विकार एव जननं पुरुषो तद्विशेषणम् ।
परतन्त्रविशेषो हि विकार इति कीर्तित' इति (च) पाद्मे ॥
'अविकारोऽपि भगवान् सर्वशक्तित्वहेतुतः ।
विकारहेतुकं सर्वं कुरुते निर्विकारवान् ॥
शक्तिशक्तिमतोश्चापि न विभेदः कथञ्चन ।
अविभिन्नाऽपि सेच्छादिभेदैरपि विभापत' इति भागवततन्त्रे ॥ ९ ॥

॥ इति असम्भवाधिकरणम् ॥ ३ ॥

तत्वप्रकाशिका–

अत्र सर्वजगत्कारणे ब्रह्मणि श्रुतिसमन्वयसिद्ध्यर्थं तदुत्पत्तिविषयश्रुतिविरोध-परिहारादस्ति शास्त्रादिसंगतिः । सकलजगत्कारणं ब्रह्मेत्युक्तम् । तस्य चोत्पत्तिमत्त्वे कारणत्वानुपपत्तेस्तन्निराकार्यमेव । ब्रह्मात्र विषयः । उत्पत्तिमन्न वेति संदेहः । 'असतः सदजायत' 'सदेव सोम्येदमग्र आसीत्' इति श्रुतिविरोधः संदेहबीजम् । तत्र सूत्रमेवोदाहृत्य पूर्वपक्षं तावद्बहिराह (बहिरेवाह) ॥ असंभवस्त्विति ॥ अस्त्येवोत्पत्तिर्ब्रह्मणः 'सदजायत' इति श्रुतेः । न च ब्रह्मणः सर्वकारणस्योत्पत्तौ कारणाभावः । असतस्तत्कारणतया श्रुतत्वात् । न चानादित्वेऽपि श्रुतिरस्तीति वाच्यम् । असंभवदुद्भवयोर्नभोनभस्वतोरुत्पत्तावनादितया समस्य ब्रह्मणोऽनुत्पत्तिरयुक्तेति जन्मश्रुतेः सयुक्तिकत्वेन प्राबल्यात् । अनुत्पत्तिश्रुतिस्तु सर्वात्मनाऽनुत्पत्तिवादिनीत्यभिमानश्चेत्तर्ह्यप्रमाणमेव । न चेदाकाशादाविव व्यवस्था स्यात् । अतो ब्रह्मणोऽप्युत्पत्तिमत्त्वान्न तत्राशेषकारणतया श्रुतिसमन्वयो युक्त इति भावः । सिद्धान्तयत्सूत्रं व्याचष्टे ॥ नेति ॥ मयापि वियदादिवद् व्यवस्थया ब्रह्मणोऽनुत्पत्तेरङ्गीकृतत्वात् सिद्धार्था प्रतिज्ञेत्यत आह ॥ तुशब्देनेति ॥ न व्यवस्थया ब्रह्मणोऽनुत्पत्तिः सूत्रे प्रतिज्ञायते येन सिद्धार्था प्रतिज्ञा स्यात् । किं तु सर्वात्मनानुत्पत्तिरेवेति भावः । अत एव तुशब्दमेवेति व्याचष्टे । अस्यां च प्रतिज्ञायां सत इत्यनेनैव स्वातन्त्र्याख्यो व्यतिरेकी हेतुः सूचितः । तेनैव पूर्वपक्षयुक्तेर्गतिश्चोक्ता भवति । गगनपवनादीनामस्वातन्त्र्या-

देवोत्पत्तिरिति । नन्वसतः सदजायत' इत्यादिश्रुतौ ब्रह्मणोऽप्युत्पत्तिश्रवणात्कथं सर्वात्मनानुत्पत्तिरुच्यत इत्यत आह ॥ न हीति ॥ नानया श्रुत्या ब्रह्मणो जनिः सिद्ध्यति । असतः सकाशात्पदार्थोत्पत्तेरदृष्टत्वेन प्रातीतिकार्थस्याप्यनुपपन्नत्वादिति भावः । तर्ह्येतच्छ्रुतेरप्रामाण्यप्रसङ्ग इत्यतः श्रुत्यन्तरेण तां सम्यग्व्याचष्टे ॥ तदिति ॥ तद्वा एतदसदाहुः । न ह्यासादयति कश्चनेत्यस्य वात्रोपयोगित्वेऽपि तस्य ब्रह्मपरत्वज्ञापनायान्यांशोदाहरणम् । असच्छब्दस्य ब्रह्मपरत्वेऽपि कः समस्तश्रुत्यर्थ इत्यत आह ॥ देवानामिति ॥ कथं प्राणः सदिति महत्वादिसद्गुणत्वादित्याह ॥ प्राण इति ॥ एतच्छ्रुत्यैवोक्तार्थसिद्धावप्यसच्छब्दस्य ब्रह्मणि निर्वचनार्थं पूर्वश्रुत्युदाहरणम् । सच्छब्दवाच्यस्य वायोर्ब्रह्मजातत्वे स्मृतिं चाह ॥ त्वमिति ॥ रामकृष्णादिरूपेण हरेर्जायमानत्वात् कथं जन्माभाव इत्यत आह ॥ अजायमान इति ॥ अजायमानस्य कीदृशं जन्मेत्यत आह ॥ प्रत्यक्षत्वमिति ॥ क्रमादित्युपचयाधिक्यक्रमात् । पुरुषस्य चेतनत्वात्कथं विकार इत्यत आह ॥ पुरुष इति ॥ तेन विकारेण विशेषितत्वं भवतीत्यर्थः । तर्हि तस्य नोत्पत्तिरित्यत आह ॥ परतन्त्रेति ॥ जगत्कारणत्वात् परमेश्वरस्य कथमविकारित्वमित्यत आह ॥ अविकारोऽपीति ॥ सर्वशक्तित्वेन सर्वं करोतीत्यनेन निमित्तमियुक्तं भवति । विकारहेतुकं प्रकृत्याद्युपादानकं निर्विकारवानिति तद्धर्मादेरविकार उच्यते । शक्त्या चेज्जगत्कारणत्वं तद्विनाशे तदभावः स्यादित्यत आह ॥ शक्तीति ॥ इच्छाज्ञानप्रयत्नानां कर्तृत्वोपयोगित्वात्कथं शक्त्या तदित्यत आह ॥ अविभिन्नापीति ॥ एकैवेत्यर्थः । एतेनेच्छादिपूर्वककारणत्वं नोपादानस्येत्युक्तं भवति । अतः श्रुत्यविरोधेन ब्रह्मणोऽनादित्वसिद्धेर्युक्तः श्रुतिसमन्वयस्तत्रेति सिद्धम् ॥ ९ ॥ अ० ३ ॥

भावदीपः—

॥ ॐ असंभवस्तु सतोऽनुपपत्तेः ॐ ॥९॥ असतः सदजायतेति ॥ एतेन सर्वे इत्यत्रासदादिशब्दस्य ब्रह्मपरत्वोक्तावपि असदिति चेदित्यत्र भाष्योक्तदिशा अन्यप्रापकत्वादिति भावः । सूत्रार्थभ्रांतिं निराह ॥ बहिराहेति ॥ भाष्यस्थप्रतिज्ञाहेतू आकांक्षाक्रमेणाह ॥ अस्त्येवोत्पत्तिरिति ॥ पराधीनविशेषावाप्तिरूपेत्यर्थः । न च सतः पराधीनविशेषवत्त्वमिति न्यायविवरणोक्तिः भाष्ये श्रुतिभ्य इत्युक्तबहुत्वस्य पूर्वपक्षयुक्तित्वभ्रमनिरासाय इति श्रुतेरित्युक्तम् । असद्वेति वाक्यमसतो लयवर्तित्वा-

द्युक्त्या कारणत्वोपपादकमिति भावेन शंकापूर्वं तदर्थमाह ॥ न च ब्रह्मण इति ॥ असदिति चेदित्यत्रासतो विश्वप्रागभावस्य विश्वकारणत्वं शंकितमत्रासत एव ब्रह्मकारणत्वमाशंक्यत इति भेदः । अनादित्वश्रुतितो जन्मश्रुतेः प्राबल्याय चित्प्रकृतेश्च सममेवेत्यन्यत्रोक्तपूर्वपक्षयुक्तिं शंकापूर्वं व्यनक्ति ॥ न चेति ॥ श्रुतिरस्तीति॥ सदेव सोम्येत्यादिरूपेत्यर्थः ॥ अनादितया समस्येति ॥ देहानादित्वादिना चित्प्रकृतिसमस्येत्यर्थः । तर्हि का गतिः श्रुतेरित्यत आह ॥ अनुत्पत्तिश्रुतिस्त्विति ॥ सौत्रतुशब्दव्यावर्त्यमाह ॥ व्यवस्थेति ॥ तत्स्वरूपादिपरानादित्वश्रुतिः । जन्मश्रुतिस्तु पराधीनविशेषावाप्तिपरेत्यर्थः॥ अत इति ॥ सयुक्तिकोत्पत्तिश्रुतिभावादनादित्वश्रुतेः स्वरूपानादिपरत्वेनाऽविरोधकत्वाच्चेत्यर्थः । उत्पत्तिमत्त्वात्पराधीनविशेषावाप्तिरूपोत्पत्तिमत्त्वादित्यर्थः ॥ छ ॥ उत्पत्त्यसंभव इत्यनुवृत्त्यानुत्पत्तिरितिलाभेऽपि तस्य न वियदिति नञन्वितत्वात्सूत्रेऽसंभव इति पुनरप्युक्तस्यानुत्पत्तिरिति व्याख्येति भावेनाह ॥ सूत्रं व्याचष्ट इति ॥ भाष्ये विष्णोरित्यनुक्त्वा सत इति यथाश्रुतानुवादस्य भावमाह ॥ अस्यां चेति ॥ स्वातंत्र्याख्य इति ॥ सत्त्वं स्वातंत्र्यमुद्दिष्टं तच्च कृष्णे न चापरे । अस्वातंत्र्यात्तदन्येषामसत्त्वं विद्धि भारतेति एकादशस्कंधतात्पर्योदाहृतभारतोक्तेरिति भावः । एतेन स्वातंत्र्यादित्यन्यत्रोक्तो हेतुः सूत्रारूढो दर्शितः । गतिमेव व्यनक्ति ॥ गगनेति ॥ उत्पत्तिः पराधीनविशेषावाप्तिरूपेत्यर्थः । ॥ महत्त्वादिसद्गुणत्वादिति ॥ सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते इति गीतोक्तेरिति भावः ॥ स्मृतिं चाहेति ॥ स्मृत्यर्थस्तु हे देव त्वं कविः अजश्च तथापि भवान् शक्त्यां भार्यायां गुणानां कर्मणामदृष्टानां योनौ हेतावजायां चिदचित्प्रकृतौ रेतो गर्भं आदधे । ततः तस्याः प्रकृतेः वयं सत्प्रमुखाः यदर्थे यत्प्रयोजनाय आत्मन् स्वामिन् बभूविम तत्किं करवाम ते तवेति तृतीयस्कंधे देवानां वाक्यम् । यद्यपि तत्र सत्प्रमुखाः महदादय इति तात्पर्यं तथापि वायुरपिमहत्तत्वाभिमानीत्यविरोधः ॥विकारेणेति॥ देहेन विशिष्टत्वमित्यर्थः । अविकारोऽपीत्यनेनापौनरुक्त्यायाह ॥ निर्विकारवानितीति ॥ विकारान्निर्गता निर्विकारा धर्मास्तद्वानित्यर्थः ॥ एकैवेत्यर्थ इति ॥ यद्यभिन्नेत्यस्य भेदहीनेत्यर्थः स्यात्तर्हि तत्प्रति समर्पकस्य भेदैरपि विभाष्य(व्य)त इत्यस्य भेदार्थः स्यात् । न च तद्युक्तम् । निर्भेदत्वात् । भेदैरिति बहुवचनायोगाच्च । एकेत्यर्थे तु भेदैरित्यस्यापि द्वित्वादिसंख्याभिरित्यर्थो भवति । तथा च निर्भेदेऽपि द्वित्वादिसंख्यानां सत्त्वान्न दोष इति भावः ॥ एतेनेति ॥ तथा चेश्वरे (रस्येच्छा) च्छापूर्वक-

कारणत्वान्नोपादानत्वमिति भावः ॥ अत इति ॥ क्वाप्यदर्शनेनासतः कारणत्वानुपपत्त्या विष्णोः स्वातंत्र्येण पराधीनविशेषावाप्तिरूपजन्मानुपपत्त्या च श्रुतेर्ब्रह्मकारणत्वपरत्वादित्यर्थः ॥ ९ ॥ अ० ३ ॥

सूत्रभाष्यम्—

॥ ॐ तेजोऽतस्तथा ह्याह ॐ ॥ १० ॥

'वायोरग्निः'(तै. उ. २–१.)इत्यादेर्नान्यत उत्पत्तिर्ग्राह्या। अत एव परात्तदपि जायते। 'तत्तेजोऽसृजते'ति ह्याह । कारणत्वेनेत्युक्तेऽप्यमुख्यतयाऽन्येषामपि शब्दोक्तत्वात्पुनरुक्तिरुभयकारणत्वनिवृत्त्यर्थम् (च) ॥ १० ॥ इति तेजोऽधिकरणम् ॥ ४ ॥

तत्वप्रकाशिका—

एवं सर्वस्यापि ब्रह्मेतरस्योत्पत्तौ सिद्धायां वियदादीनां च परमात्मनो जन्मेत्यत्र विवादाभावेऽत्र ब्रह्मणि श्रुतिसमन्वयसिद्ध्यर्थं तेजोजन्मविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसंगतिः । सकलजगत्कारणं ब्रह्मेत्युक्तम् । तत्र तेजसो वायुजातत्वे तदभावप्रसङ्ग इति तन्निरसनीयमेव । वायोरनन्तरप्राप्तं तेजोऽत्र विषयः । किं वायोर्जायते ब्रह्मणो वेति संदेहः । वायोरग्निः । 'तत्तेजोऽसृजत' इति श्रुतिविरोधः संदेहबीजम् । वायोर्जायत इति पूर्वः पक्षः । 'वायोरग्निः' इति श्रुतेः । न च तेजसो वायुद्वारा परमात्मजातत्वाभिधायकत्वं श्रुतेर्वाच्यम् । किं ब्रह्म वायुद्वारमन्तरेण तेजः स्रष्टुमीष्टे न वा । आद्ये व्यर्थं वायुद्वारा सर्जनम् । द्वितीये सिद्धं नः समीहितं यावताऽस्माभिरप्युभयकारणत्वमेवोच्यते । न च तत्तेजोऽसृजत' इति श्रुतिविरोधः । तस्या उभयकारणत्वेऽप्यविरोधात् । ब्रह्ममात्रकारणत्वाभिधायकत्वे निरवकाशैतच्छ्रुतिविरोधेनाप्रामाण्यापातात् । अतो न जगत्कारणत्वेन ब्रह्मणः सर्वश्रुतिवेद्यतेति प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ तेज इति ॥ न 'वायोरग्निः' इत्यादिश्रुत्या तेजसो वायोरुत्पत्तिर्ग्राह्या । किं तु ब्रह्मणः सकाशादेव तेजो जायते । 'तत्तेजोऽसृजत' इति श्रुतेः । न च वायोरग्निरित्यादिश्रुतिविरोधः । तत्र वायुद्वारा तेजसो ब्रह्मजातत्वोक्तेः । न च द्वारवैयर्थ्यादुभयकारणत्वं वाच्यम् । वाय्वादेरकारणत्वेऽपि वाय्वादिद्वारमनुसृत्य ब्रह्मणः स्वेच्छयैव लीलया तेजःप्रभृतिकारणत्वस्य श्रुत्यादिसिद्धत्वात् । श्रुत्यादिकं चोत्तराधिकरणे दर्शयिष्यत इति भावः । ननु 'कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्तेः' इत्यधिकरणे वाय्वादिशब्दानां ब्रह्मणि समन्वयस्यो-

क्तत्वेन तेजसो ब्रह्मजातत्वस्य सिद्धत्वात् किं पुनरुक्त्येत्यत आह ॥ कारणत्वेनेति ॥ कारणत्वेनेत्यत्रैव ब्रह्मणस्तेजःकारणत्वसिद्धावपि तस्य पुनरुक्तिर्युक्ता उभयकारणत्वनिवृत्त्यर्थत्वात् । न च तत्तेन निरस्तं भवति । तत्र वाय्वादीनामप्यमुख्यतया वाय्वादिशब्दवाच्यत्वस्याङ्गीकृतत्वेनोभयकारणत्वाविरोधादिति भावः । अतः श्रुत्यविरोधेन तेजसो ब्रह्मकारणत्वे सिद्धे युक्तो ब्रह्मणि वेदसमन्वय इति सिद्धम् । स्यादेतत् । एतच्छ्रुतीनामुपादाननिमित्तविषयतया स्वत एव व्यवस्थितत्वात् किमेतेनायासेनेति । मैवम् । वायुप्रभृतीनां देवतात्वादुपादानशक्तेश्च परमात्माधीनत्वादिति ॥ १० ॥ अ० ४ ॥

भावदीपः—

॥ ॐ तेजोऽतस्तथा ह्याह ॐ ॥१०॥ अत्र तेजसो ब्रह्मान्यस्मात्स्वतंत्राज्जन्मास्ति न वेति विशेषविचारस्यावसरप्राप्तिरूपसंगतिमाह ॥ एवमिति ॥ सिद्धायामिति ॥ वियन्मातरिश्वनयाभ्यामिति भावः । वियन्नये अनादित्वेनाभिमतस्य सर्वस्योपलक्षणं वियत्पदमिति व्याख्यानात् । तत्र विशेषशंकायां मातरिश्वनयस्याग्रे ज्ञोऽत इति नयस्य च प्रवृत्तेः । उत्पत्तिः पराधीनविशेषावाप्तिरूपा ध्येया । परतंत्रविशेषो हि विकार इति कीर्तित इत्युक्तेः । अत्र ब्रह्मेतरस्येत्युक्त्या ब्रह्मणः पराधीनविशेषावाप्त्यभावरूपानुत्पत्तौ सिद्धायां इति लभ्यते । तर्हि वियदादावियं चिंता कुतनो न कृतेत्यत आह ॥ वियदादीनामिति ॥ स इदं सर्वमसृजत । एतस्माज्जायते प्राणो मनः सर्वेंद्रियाणि च । खं वायुर्ज्योतिरापः पृथिवीत्यादिश्रुत्या विकारहेतुकं सर्वं कुरुते निर्विकारवानित्यादिस्मृतिभिरीश्वरजातत्वस्य सिद्धत्वात् । अन्यजातत्वबोधकविपरीतश्रुत्यभावाच्च विवादाभाव इति भावः । यद्यप्याकाशाद्वायुरित्यस्ति वायावन्यजातत्वबोधिका विवादहेतुभूतश्रुतिः । तथाप्यतिव्यवहितस्य तेजसो ब्रह्मजातत्वसाधकैतन्नयन्यायेनैवाव्यवहितवायोस्तत्सिद्धेः पृथग्विवादाभाव इति भावः । तथा च वक्ष्यति आप इत्यत्र अत्र न्यायप्राप्तभूतवाय्वित्यादि । अत्र वायुरतस्तथा ह्याहेत्युक्तावप्येतन्न्यायेनैवान्यजातत्वेन श्रुतीनां तेजः प्रभृतीनामीश्वरादेव जन्मनान्यस्मात्स्वतंत्रादिति सिध्यति । तथापि वायौ मुख्यदेवतामादायैव विचारस्य कृतत्वादुदाहरणदारिद्र्याभावाद्वायुमपि विषयीकुर्वतो विचारांतरस्यापि व्यवहिते तेजसि कृते वायौ कैमुत्यसिद्धिलाभाच्च तेजोऽत इत्येवोक्तिरिति तात्पर्यं ध्येयम् ॥ श्रुतिसमन्वयेति ॥ सर्वकारणतयेति योज्यम् ॥ श्रुतिविरोधेति ॥ श्रुत्योर्वि-

रोधेत्यर्थः। यद्वा अन्यतो जन्मविषयिण्या वायोरग्निरिति श्रुत्या यो विरोधः कारणत्वेनोक्तसमन्वयस्य तत्परिहारादित्यर्थः॥ वायुजातत्व इति॥ वायुशब्दोऽत्र भूतवायुतद्देवतारूपोभयपरः। एवं तेजःशब्दोऽपि। अभिमानिव्यपदेशस्तु शरीररूपकविन्यस्तगृहीतेरिति च नयद्वयोक्तन्यायद्वयात्। स्वातंत्र्येणेति योज्यम्। ननु वायुदेवतागतकर्तृत्वशक्तेः भूतवायुगतोपादानशक्तेश्च स्वातंत्र्येऽपि न ब्रह्मणो जगत्कारणत्वाभावप्रसंगः। कारणत्वेन चेति नये ब्रह्मणोऽपि स्वातंत्र्येण तेजःप्रभृतिसर्वकारणत्वोक्तेः। तथा च तेजसो वायुशब्दितब्रह्मतद्देवतारूपोभयकर्तृत्वेऽपि स्वातन्त्रेण भूतवायूपादानकत्वेऽपि न क्षतिरिति चेन्न। सर्वस्वातंत्र्येण जगत्कारणत्वस्य जन्मादिसूत्रे विवक्षितस्याभावप्रसंग इति तात्पर्यात्॥ वायोरनंतरेति॥ आकाशाद्वायुः वायोरग्निरिति श्रुतावित्यर्थः। वायोरेकरूपेण प्राग्विचारितत्वादिति भावः॥ किमिति॥ अयमर्थः। तेजोभूतं किं वायुभूतादीशाप्रेरितोपादानशक्तिकाज्जायते तथा तेजोभूतं तद्देवता च वायुदेवतात ईशवत् स्वतंत्रकर्तृशक्तिमत्याः जायते किं वा सर्वस्वतंत्राद् ब्रह्मणः क्रमाद् द्विविधवायुद्वारा जायते। अन्यगतकर्त्रुपादानशक्त्योरपि प्रेरकं ब्रह्मेति यावदिति॥ श्रुतिविरोध इति॥ उभयत्रापि स्वातंत्र्येण कारणत्वोक्तावित्यर्थः। वायोरग्निरित्यादिभाष्यं नञ्परित्यागेन व्याकुर्वन्नाह॥ वायोर्जायत इति॥संदेहग्रंथे अभिहितोऽर्थोऽत्राप्यनुसंधेयः। विष्णोरेव तेजस उत्पत्तौ द्वारकारणवैयर्थ्यमित्यन्यत्रोक्तयुक्ति शंकापूर्वमाह॥ न च तेजस इति॥ शक्तस्य द्वारवैयर्थ्यमित्येव वाच्ये विकल्पमुखेनोक्तिरुभयकारणत्वेति भाष्यविवरणाय॥ यावतेति॥ यस्मादित्यर्थः। ईश्वरकारणत्वं द्विरूपवायुकारणत्वं चेत्युभयकारणत्वमित्यर्थः। स्वातंत्र्येति योज्यम्। श्रुतिः किं ब्रह्मकारणत्वपरा अन्यकारणत्वनिषेधपरा वा आद्ये आह॥ तस्या इति॥ अन्त्ये आह॥ ब्रह्मेति॥ एतच्छ्रुतीति॥ वायोरग्निरिति श्रुतीत्यर्थः॥ अत इति॥ द्वारपरत्वायोगेन निरवकाशान्यकारणत्वश्रुतिभावात्तत्तेज इति श्रुतेश्चोभयकारणत्वेऽप्युपपन्नत्वादित्यर्थः॥ सर्वेति॥ यद्यपि वायोरग्निरित्यस्योभयकारणत्वपरत्वेऽपि अन्यस्येवास्ति ब्रह्मणोऽपि वेद्यता। तथाप्यन्यस्यापि स्वातंत्र्येण तेजःकारणत्वप्राप्तावितरासाधारणकारणत्वेन तद्वेद्यता न प्राप्तेति सर्वश्रुतिवेद्यता नेत्युक्तम्॥ छ॥ सूत्रे पूर्वस्मात्तुशब्दानुवृत्तिमुपेत्य भाष्ये अत एवेति सौत्रपदमनूद्य परादिति व्याख्यातम्। तत्रावधारणव्यावर्त्योक्तिपरं वायोरित्यादिभाष्यमिति दर्शयन् भाष्यं व्याचष्टे॥ न वायोरिति॥ वायोरुत्पत्तिरिति॥ जडाजडाख्यद्विरूपाद्वायोर्द्विरूपतेजस इत्यर्थः।

स्वातंत्र्येणेति योज्यम्। हिर्हेताविति मत्त्वोक्तमिति श्रुतेरिति। एवं सूत्रभाष्यं व्याख्याय द्वारमनुसृत्यैव विष्णोः प्रवृत्तेरित्यन्यत्रोक्तमत्र संयोज्य व्याकर्तुं प्रागुक्तशंकामनुवदति ॥ न च वायोरिति ॥ वायुद्वारेति ॥ अन्यथा तत्तेज इति श्रुतिविरोधादिति भावः। नन्वथापि वायोरग्निरिति श्रुतिर्वायुद्वारा अग्नेरीशजत्व माह। तत्तेज इति तु साक्षादेवेति पुनर्विरोधतादवस्थ्यम्। न च तत्तेज इत्यत्रापि वायुद्वारेति मतम्। तथात्वे तेजोभिमानिनी लक्ष्मीः प्राणस्त्वबभिमानवानिति स्मृत्या श्रीदेव्या वायुद्वारा जन्मायोगात्। प्राथम्याच्च तेज आद्या लक्ष्म्यादय इति सिद्धमिति तद्भाष्यविरोधादिति चेन्न। सृष्टिभेदेनाविरोधात्। न चैवं छांदोग्ये क्रमानुक्तावापि तैत्तिरीयोक्तस्य स इदं सर्वमसृजत इत्यादाविव ग्राह्यत्वेनाविरोधादिति वियदधिकरणचंद्रिकावाक्यविरोधः। तस्याभ्युपगमवादत्वात्। छांदोग्यभाष्यस्यार्थतरमुपेत्य प्रवृत्तत्वाद्वा पररीत्या वा न दोष इत्याहुः ॥ अकारणत्वेऽपीति ॥ स्वतंत्रकारणत्वाभावेऽपीत्यर्थः ॥ श्रुत्यादिकं चेति ॥ एतस्माज्जायत इत्यादीत्यर्थः ॥ उभयकारणत्वेति ॥ब्रह्मवद्वायुरपि स्वतंत्रकारणमिति शंकानिवृत्त्यर्थत्वादित्यर्थः ॥ न च तत्तेन निरस्तमिति ॥ नन्वथापि तदनन्यत्वनये विष्णोरन्यस्य स्वतंत्रसाधनत्वं निरस्तमित्युभयकारणत्वमपि निरस्तमिति चेन्न। तत्र युक्तिप्राप्तस्यैवान्यस्वातंत्र्यस्य निरासादत्र पुनः श्रुतिप्राप्तस्य निरास इति तात्पर्यात् ॥ अमुख्यतयेति ॥ हरौ परममुख्यत्वापेक्षयैतदुक्तिः। समाकर्षादिति न्यायात्। अन्यथा कल्पनासूत्रविरोधात् ॥ अत इति ॥ वायोरग्निरिति श्रुतेर्द्वारपरतया सावकाशत्वात्तत्तेज इति श्रुतिबलाच्चेत्यर्थः। सूत्रभाष्ययोरयुक्ततामाशंक्याधिभूताधिदैवेति पादादिस्थभाष्यानुरोधेन समाधिमाह ॥ स्यादेतदिति ॥ एतच्छ्रुतीनां वायोरग्निः तत्तेजोऽसृजतेत्येवं रूपश्रुतीनामित्यर्थः ॥ देवतात्वादिति ॥ तथा च वायुदेवताया अपीशवत्स्वातंत्र्येण तेजः प्रतिनिमित्तकारणत्वं प्राप्तमिति श्रुत्योर्विरोधः प्राप्त इति तन्निरासायासः सफल इति भावः। वाय्वादिशब्देषु भूतपरत्वस्यापि सत्त्वात्। तत्र तत्र स्थितो विष्णुस्तत्तच्छक्तीः प्रबोधयन्नित्यग्रे वक्ष्यमाणस्मृत्यनुरोधेनाह ॥ उपादानशक्तेश्चेति ॥ न केवलं देवतागतकर्तृशक्तेरित्यर्थः। तथा च कारणत्वेनेत्यन्यत्रोक्तन्यायेन वाय्वादौ स्थितो भगवान्वाय्यादिशब्दितभूततद्देवतागतोपादानकर्तृशक्तीः प्रेरयंस्तेजःप्रभृतिकार्यं करोतीति वक्तुमयमारंभ इत्यर्थः। नन्वथापि कर्तेति नये परात्तु तच्छ्रुतेरिति गुणसूत्रे जीवगतकर्तृत्वशक्तिरपि ईश्वरायत्तेति वक्ष्यमाणत्वात्तन्न्यायेन वाय्वादिदेवतास्थितकर्तृत्वशक्तिरपि ईश्वरायत्ता

सेत्स्यति किमनेनेति चेन्मैवम्। तेन विनापि कर्तुं शक्तिसत्त्वे द्वारोक्तिवैयर्थ्येनान्यगतकर्तृत्वादिशक्तेः स्वातंत्र्यस्य श्रुतिप्रापितत्वादुभयकारणत्वं श्रौतमिति शंकायां लीलया द्वारोपादानेनैवेश्वरेण सृष्टिकारणात्तस्यैव च श्रुतावुक्त्युपपत्तेरीशाधीनैव कर्तृत्त्वादिशक्तिरन्यगतेत्यत्र कथनादिति भावः। यत्तु तत्तेज इति श्रुतौ साक्षात्तेजसः सृष्टिः वायोरग्निरित्यत्र वायुद्वारा। तथा च विरोध इति चोद्यं तत्तूक्त्यनुक्त्योर्विरोधाभावादिति प्रागेव निरस्तप्रायमिति भावः ॥ १० ॥ अ० ४ ॥

सूत्रभाष्यम्—

॥ ॐ आपः ॐ ॥ ११ ॥

'ब्रह्मैवेदमग्र आसीत्तदपोऽसृजत तदिदं सर्वम्' इति श्रुतेः 'अग्नेरापः' (तैः उ. २-१.) इत्युक्तेऽपि ब्रह्मण एवाबादिसृष्टिः।

'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' (मुं. उ. २-१-३.)
इत्यादि च।

'कर्ता सर्वस्य वै विष्णुः एक एव न संशयः।
इतरेषां तु सत्ताद्या यत एव तदाज्ञये'ति भविष्यत्पुराणे ॥

वामने च —

'तत्र तत्र स्थितो विष्णुः तत्तच्छक्तीः प्रबोधयन्।
एक एव महाशक्तिः कुरुते सर्वमञ्जसे'ति ॥

घर्मात्स्वेदादिदृष्टेः पुनः प्रतिषेधः। ( आप इति पृथग्वचनम्. पा. )॥ ११ ॥

॥ इति अबधिकरणम् ॥ ५ ॥

तत्वप्रकाशिका—

अत्र ब्रह्मणि श्रुतिसमन्वयसिद्ध्यर्थमपां जन्मविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसंगतिः। सकलकारणं ब्रह्मेत्युक्तम्। तत्रापां तेजोजातत्वे तद्विरुद्धं स्यादिति तन्निराकरणीयम्। तेजसोऽनन्तरप्राप्ता आपोऽत्र विषयः। किं तेजसो जायन्ते ब्रह्मणो वेति संदेहः। 'अग्नेरापः' 'तदपोऽसृजत' इति श्रुतिविगानं संदेहबीजम्। अग्नेरेवापो जायन्त इति पूर्वः पक्षः। 'अग्नेरापः' इति श्रुतेः। न चान्यश्रुतिविरोधः। विमता

आपस्तेजसो जायन्ते अप्त्वात् स्वेदादिवदिति युक्तियुक्तत्वेन तेजोजातत्वश्रुतेः प्राबल्यात् । बलवदेतच्छ्रुतिविरुद्धायास्तस्या एवाप्रामाण्योपपत्तेः । तथा च श्रुत्यन्तरं 'तत्तेज ऐक्षत बहु स्यां प्रजायेयेति तदपोऽसृजत । तस्माद्यत्र क्व च शोचति स्वेदते वा पुरुषस्तेजस एव तद्ध्यापो जायंते' इति । अतो न सर्वकारणे ब्रह्मणि श्रुतिसमन्वयसिद्धिरिति प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ आप इति ॥ अत्राप्यतस्तथा ह्याहेति ग्राह्यम् । नाग्नेराप इति श्रुतेरपामन्यत उत्पत्तिर्ग्राह्या किं त्वापोऽपि ब्रह्मण एव जायन्ते ब्रह्मैवेति श्रुतेरित्यर्थ. । अत्र न्यायप्राप्तभूतवायुपृथिव्योषध्यादीनां ब्रह्मजातत्वज्ञापनार्थमादिपदं भाष्ये । सूत्रेऽप्पदमन्योपलक्षणम् । वाय्वादेः सर्वस्य ब्रह्मजातत्वं कुत इत्यत आह ॥ एतस्मादिति ॥ ननु विष्णोरिवान्येषामपि कारणत्वं किं न स्यात्तथा श्रुतेरिति । शक्त्यभावादित्याह ॥ कर्तेति ॥ उक्तयुक्त्युपेता श्रुतिः कथं तर्ह्युपपद्यत इत्यत आह ॥ वामने चेति ॥ महाशक्तिरपि हरिर्लीलयैवाग्नयादिषु स्थित्वाऽबादिकं जनयतीति श्रुत्यादितद्विषयमिति भावः । ननु कारणत्वेनेत्यत्रैवापां ब्रह्मणो जन्मनः सिद्धत्वाद् व्यर्थमेवेदमधिकरणम् । अथोभयकारणत्वनिवृत्त्यर्थमुच्यते । तदपि पूर्वन्यायेन निवृत्तमित्यत आह ॥ घर्मादिति ॥ भवतु वायोरग्न्युत्पत्तौ द्वारत्वप्रतिपादकता तच्छ्रुतेः । अत्र पुनरग्नेः कारणत्वमेव प्रत्यक्षानुकूल्यात् इति विशेषाकाङ्क्षानिवृत्त्यर्थमेतदधिकरणमिति भावः । तस्माच्छ्रुत्यविरोधेनापां ब्रह्मजातत्वसिद्धेर्युक्तो हरौ वेदसमन्वय इति सिद्धम् ॥११॥ अ० ५ ॥

भावदीपः—

॥ ॐ आपः ॐ ॥ ११ ॥ श्रुतीति ॥ सकलकारणत्वेनेति योज्यम् । ॥ अपां जन्मेति ॥अपामन्यस्माज्जन्मबोधकश्रुतीत्यर्थः । एवमन्यत्राप्यूह्यमिति भावेनाव्यवहितपूर्वसंगतिमाह ॥ तेजसोऽनंतरेति ॥अत्राप्यप्शब्देन भूतं देवता चोच्यते । तेजस इत्यनेनापि तेजोभूतं तद्देवता च तयोरब्जन्महेतुत्वं च यथायोगं परिणममानत्वं च ध्येयम् । तेजस एवेति वा स्वतंत्रादिति वा योज्यम् ॥ ब्रह्मण इति ॥ ब्रह्मणः सकाशादेव नान्यस्मात्स्वतंत्रादित्यर्थः ॥ श्रुतिविगानमिति ॥ श्रुतिद्वयेऽग्निब्रह्मणोः स्वातंत्र्येणाब्जन्महेतुत्वप्रतीतेरिति भावः । अत्र पूर्वापेक्षया विशेषशंकासद्भावादग्नेरेवापो जायंत इत्यवधारणोक्तिः । अग्नेराप इति भाष्योक्तहेतुमाह ॥ अग्नेराप इति श्रुतेरिति ॥ प्रत्यक्षत एव घर्मात्स्वेदादिदृष्टेरिति भाष्योक्तयुक्तिं वक्तुं शंकामाह

॥ न चान्येति ॥ तदपोऽसृजतेति भाष्योक्तश्रुतीत्यर्थः । विमतः सर्गाद्याः । एतेन तेजस एवापां उत्पत्त्यंगीकारे घर्मात्स्वेदादिदृष्टचनुसारित्वमित्यन्यत्रोक्तं विवृतं ध्येयम् । अप्त्वहेतोरप्रयोजकताशंकानिरासाय प्रत्यक्षेत एव घर्मात्स्वेदादिदृष्टेः । किमु घर्मात्स्वेदादिश्रवणादित्यवधारणसूचिता युक्तिमूलभूतश्रुतिमाह ॥ तथा चेति ॥ छांदोग्ये षष्ठे । तेजःपदेनाभिमान्यधिकरणन्यायेन देवताया अप्युक्तेरैक्षतेति युक्तम् । शोचति अश्रु मुंचति । यद्वा शोचति घर्मवान् भवतीत्यर्थः ॥ अत इति ॥ सयुक्तिप्रबलश्रुतिविरुद्धतया तदपोऽसृजतेति श्रुतेरप्रामाण्यादित्यर्थः ॥छ॥ भाष्यस्योत्सूत्रत्वभ्रमनिरासायाह ॥ अत्रापीति ॥ अवधारणार्थतुशब्दानुवृत्तिरपि ध्येया । भाष्यस्थावधारणव्यावर्त्यं व्यंजयन् भाष्यसूत्रयोरर्थमाह ॥ नाग्नेराप इति श्रुतेरिति ॥ एतस्मादिति भाष्योक्तश्रुत्युपयोगायाह ॥ न्यायप्राप्तेति ॥ आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी पृथिव्या ओषधयः ओषधीभ्योऽन्नं अन्नात्पुरुषः इत्यन्यजातत्वश्रवणरूपपूर्वपक्षन्यायेन द्वारपरत्वरूपसिद्धांतन्यायेन च प्राप्तानामित्यर्थः ॥ तथा श्रुतेरितीति ॥ अग्नेराप इति श्रुतेरित्यर्थः ॥ उक्तेति ॥ विमता इत्यादिनोक्तेत्यर्थः । प्रकृतोपयोगाय भाष्यभावमाह ॥ महाशक्तिरिति ॥ इतिर्हेतौ ॥ विशेषाकांक्षानिवृत्त्यर्थमिति ॥ निवृत्तिप्रकारश्च महाशक्तिरपीत्यादिना प्रागेवोक्त इति भावः । ॥ तस्मादिति ॥ अन्यजातत्वश्रुतेर्द्वारपरत्वात्तदपोऽसृजतेति श्रवणाच्चेत्यर्थः ॥ ११ ॥ अ० ५ ॥

सूत्रभाष्यम्——

'ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति। ता अन्नमसृजन्त' (छा. उ.६-२) इत्यद्भ्योऽन्नसृष्टिः श्रूयते। 'अद्भ्यः पृथिवी' ( तै. उ. २-१. )इति कुत्राचित्पृथिवीसृष्टिः। अतो विरुद्धत्वादप्रामाण्यमित्यतो वक्ति ——

॥ ॐ पृथिव्यधिकाररूपशब्दान्तरादिभ्यः ॐ ॥ १२ ॥

पृथिवी तत्रान्नशब्देनोच्यते । भूताधिकारत्वात् । कार्ष्ण्यप्रचुरा च पृथिवी । नान्नस्य तथा विशेषः । 'आपश्च पृथिवी चान्नम्'। ( ऐ. आ. २-३-१. ) । 'पृथिवी वा अन्नम्'। ( तै. उ. ३-९. ) । 'ता आपोऽन्नमसृजन्त पृथिवी वा अन्नम्' इत्यादिशब्दान्तराच्च । आदिशब्दाद्युक्तिः अपौरुषेयत्वेनादोषस्य वाक्यस्य नाप्रामाण्यमित्यादि । कौर्मे च——

'विरोधो वाक्ययोर्यत्र नाप्रामाण्यं तदेष्यते ।
तथा विरुद्धता न स्यात्तथार्थः कल्प्य एतयोरि'ति ॥
'रक्तोऽग्निरुदकं शुक्लं कृष्णैव पृथिवी स्वतः ।
नाभिपद्माभिसम्बन्धात्पीता सेत्यभिधीयते ।
क्षत्ररक्ताभिसम्बन्धाद्रक्तोदकबहुत्वतः ।
शुक्लत्वमेत्येवमेव वर्णान्तरगतिर्भवेत् ॥
विष्णुवीर्याभियोगाच्च पीतत्वं भुव इष्यते ।
स्वर्णवीर्यो हि भगवाननादिः परमेश्वरः' (पुरुषोत्तमः) ॥
इति व्योमसंहितायाम् ॥ १२ ॥

॥ इति पृथिव्यधिकरणम् ॥ ६ ॥

तत्वप्रकाशिका—

एवं सर्वस्य साक्षादन्यद्वारा वा ब्रह्मजातत्वे सिद्धेऽत्रोक्तसमन्वयसिद्ध्यर्थं द्वारविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसंगतिः। वस्त्वन्तरद्वारा साक्षाद्वा ब्रह्म जगत्कारणमित्युक्तम्। तत्र द्वारकारण विषयश्रुतीनां विरोधेन अप्रामाण्ये समन्वयासंभवात्तन्निरासः कार्य एव। प्रकृता आप एवात्र विषयः। किमन्नस्य द्वारकारणं उत पृथिव्या इति संदेहः। किमस्य संदेहस्य बीजं किं च तत्र प्राप्तमिति। तत्र श्रुतिविगानं संदेहबीजं दर्शयन् पूर्वपक्षयति ॥ ता इति ॥ नापः पृथिव्याः कारणं नाप्यन्नस्य। श्रुतिद्वयस्य परस्परविरुद्धत्वात्। निरवकाशत्वेनान्यतरग्रहणायोगात्। न चान्नशब्दस्य पृथिव्यर्थत्वेनाविरोधः। अन्नश्रुतेः प्रसिद्धान्नपरत्वेन स्वीकारे बहुवाक्यानुसारित्वगुणलाभात्। तस्माद्यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवत्यद्भ्य एव तद्ध्यन्नाद्यं जायते अन्नमशितं त्रेधा विधीयत इति प्रसिद्धान्नलिङ्गाच्च। न च पृथिवीपदेनान्नग्रहः। अद्भ्य एवान्नसृष्ट्यङ्गीकारे 'अद्भ्यः पृथिवी पृथिव्या ओषधयः ओषधीभ्योऽन्नम्' इति श्रुतिविरोधात्। नापि पृथिव्यन्नयोरद्भ्य एवोत्पत्तिः उक्तश्रुतिविरोधादेव। न चान्नस्यैवाद्भ्य इव ओषधीभ्योऽपि जन्म। बहुकल्पनापातात्। न चाद्भ्य: परम्परयान्नमुत्पद्यत इत्यविरोधः। मुख्यार्थत्यागे कारणाभावात्। अतः श्रुतिद्वयस्य परस्परविरुद्धत्वादप्रामाण्यमेवेति न श्रुतिसमन्वयो ब्रह्मणि युक्त इति भावः। सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ नात्रापां द्वारकारणत्वानिर्णयाच्छ्रुतिद्वयस्याप्रामाण्यं

कल्प्यम् । अपां पृथिवीकारणत्वात् । न च 'ता अन्नमसृजन्त' इति श्रुतिविरोधः । यतस्तत्र पृथिव्यन्नशब्देनोच्यत इत्यर्थः । कुतोऽसावन्नशब्दः पृथिवीपर इत्यत आह ।। भूतेति ।। 'तत्तेजोऽसृजत' 'तदपोऽसृजत' 'तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' इत्यादेरस्य प्रकरणस्य भूतविषयत्वादित्यर्थः । नन्वन्नश्रुतौ जाग्रत्यां कथं प्रकरणमात्रेण निर्णय इत्यत आह ।। कार्ष्ण्येति ।। यदग्ने रोहितं रूपं तत्तेजसो यच्छुक्लं तदपां यत्कृष्णं तदन्नस्येत्यस्यां श्रुतावन्नस्य कृष्णरूपं प्रतीयते । तच्च प्राचुर्येण पृथिव्या एव लिङ्गम् । अतः प्रकरणलिङ्गाभ्यामुक्तश्रुतिबाध इति भावः । ननु कार्ष्ण्यस्य चान्नेऽपि संभवतः कथं पृथिवीलिङ्गत्वमित्यत आह ।। नेति ।। तथा विशेषः पृथिवीवत्कार्ष्ण्यप्राचुर्यम् । न केवलं प्रकरणलिङ्गाभ्यामन्नश्रुतेरवाचिकाया एव पृथिवीपरत्वमुच्यते अपि तु पृथिव्यामपि तस्या विद्यते वाचकत्वशक्तिः श्रौतप्रयोगादिति भावेनाह ।। आपश्चेति ।। न च वृष्टिजत्वलिङ्गविरोधः । पार्थिवपदार्थानां वृष्ट्युत्पन्नार्थत्वेनोपपत्तेः । नाप्यन्नमशितमिति लिङ्गविरोधः । तेजोऽशितमितिवत्पार्थिवार्थत्वोपपत्तेः । किमन्नश्रुतेरर्थान्तरकल्पनया श्रुतिद्वयाप्रामाण्यमेव किं नाभ्युपेयते इत्यत आह ।। आदीति ।। सूचितेति शेषः । अत्रायं प्रयोगः । वेदो नाप्रमाणं अप्रामाण्यकारणदोषशून्यत्वात्प्रत्यक्षवदिति । न च हेतोरसिद्धिः । अपौरुषेयवाक्ये दोषासंभवात् । आदिपदेनाप्तवाक्यानुसारित्वादिति । एवं युक्तिबलाद्वेदप्रामाण्यसिद्धौ विरोधावभासेऽन्यार्थतैव कल्प्या नाप्रामाण्यमिति भावः । अत्रैव स्मृतिमाह ।।कौर्मे चेति।। यदुक्तं प्राचुर्येण कृष्णा पृथिवीति तत्र प्रमाणमाह ।। रक्त इति ।। एवमेवेत्युक्तमेव दर्शयति ।। विष्ण्विति ।। एवं श्रुत्यविरोधेनापां पृथिवीकारणत्वसिद्धेर्युक्तः श्रुतिसमन्वयो हराविति सिद्धम् ।। १२ ।। अ० ६ ।।

भावदीपः—

।। ॐ पृथिवी० ॐ ।। १२ ।। अधिकरणसंगतिमाह ।। एवं सर्वस्येति ।। वियन्मुख्यप्रमाणयोः साक्षात्तदन्यस्यान्यद्वारेत्यर्थः । यद्वा वाय्वादौ स्थितस्य भगवतो वाय्वादिस्थशक्तिप्रेरणया तद्द्वारा तेजः प्रभृतिकार्यस्य कृतिविषयत्वमिव साक्षादपि भगवत्कृतिविषयत्वमस्तीति सर्वस्य साक्षादित्युक्तम् । अन्यगतशक्तिप्रेरकत्वमप्यस्तीति भावेनान्यद्वारा वेत्युक्तम् । अत एवाग्रे वस्त्वंतरद्वारा साक्षाद्ब्रह्मकारणमिति समुच्चयेनानुवादः । तथा च पूर्वं द्वारमनुसृत्यैवेत्युक्त्या साक्षान्नेति कारयितृत्वमेवेश्वरस्य स्यान्न साक्षात्कर्तृत्वमिति जन्मादिसूत्रोक्तसर्वकर्तृत्वभंग इति चोद्यानवकाश

इति भावः । अयं च एतस्माज्जायते कर्ता सर्वस्य कुरुते सर्वमित्यादिपूर्वभाष्योक्तवचनलब्धस्यानुवादः । अन्यद्वारेत्यंशानुवादस्यैव प्रकृतोपयोगित्वेऽपि साक्षादित्यंशानुवाद उक्तदिशा शंकानिरासाय। अत्रेत्यस्य संगतिपदेनान्वयः ॥ श्रुतिविरोधेति ॥ श्रुत्योरन्योन्यविरोधेत्यर्थः । चिंताफलमाह ॥ वस्त्वंतरेति ॥ इत्युक्तामिति ॥ जन्मादिसूत्रे इत्यर्थः । आक्षेपसौकर्यायैवमनुवादः । तर्ह्यपां द्वारत्वश्रुतिविरोधनिरासे किं बीजमित्यत आह ॥ प्रकृता आप इति ॥ किमन्नस्येति ॥अत्र पूर्वपक्षे सौत्रादिपदव्यावर्त्यस्य श्रुतिद्वयाप्रामाण्यस्य सिद्धांते तत्प्रामाण्यस्य चोक्त्या तदनुरोधेन किं श्रुतिद्वयमप्रमाणमुत नेति संदेहे प्रदर्शनीयेऽप्येवं संदेहोक्तिः पूर्वोत्तरपक्षयोः श्रुतिद्वयाप्रामाण्यबीजभूतयोर्विरोधाविरोधयोः स्फोरणाय । अन्नपदेन पृथिव्यगृहीतिगृहीतिभ्यां विरोधाविरोधयोर्व्यक्तत्वात् । यद्वा किमन्नस्य द्वारकारणमित्यादिसंदेहेऽपि नोभयस्यापीत्येवंरूपेण चोद्यस्य संभवान्न पूर्वपक्षानानुगुण्यं संशयकोटच्यन्यतरकोटच्यवलंबिनौ पूर्वोत्तरपक्षावित्यस्य प्रायिकत्वात् । विरुद्धत्वादप्रामाण्यमिति भाष्यमप्रामाण्यशब्दार्थं विवृण्वन्व्याचष्टे ॥ नाप इत्यादिना ॥ ननु विरुद्धत्वेऽपि पूर्वत्रेवान्यतराप्रामाण्यमेव स्यान्न तु द्वयोरित्यतो भाष्याभिप्रेतं हेतुमाह ॥ निरवकाशत्वेनेति ॥ श्रुतिद्वयस्येत्यनुकर्षः। अद्भ्यो वा अन्नमुत्पद्यत इत्याद्युक्तप्रसिद्धान्नस्यान्यार्थाविरोधेन प्रसिद्धनामस्वीकारे बहुवाक्यानुवर्तितेति गुण इत्यन्यत्रोक्तयुक्तिं तावदन्नश्रुतेर्निरवकाशतोपपादकत्वेन शंकापूर्वं योजयति ॥ न चेत्यादिना ॥ बहुवाक्येति ॥ अद्भ्यो वा अन्नमुत्पद्यत इत्यादीति न्यायविवरणस्थादिपदोक्तबहुवाक्यानां प्रसिद्धार्थपरत्वरूपगुणलाभादित्यर्थः । न केवलं प्रसिद्धान्नपरत्वे बहुवाक्यानुसारिता । लिंगद्वयमप्यस्तीत्याह ॥ तस्मादित्यादिना ॥ छांदोग्ये षष्ठे । यत्र क्व च वर्षतीति अन्नमशितमिति च वाक्यद्वयेन वर्षजत्वाद्यमानत्वरूपलिंगाच्चेत्यर्थः । एवं न्यायविवणरीत्यान्नश्रुतेरर्थांतरपरत्वाभावरूपनिरवकाशतामुपपाद्य पृथिवीश्रुतेरपि तां विवरितुमद्भ्यः पृथिवीति प्रसिद्धपूर्वप्रकृतश्रुतिप्रतीकोक्त्या सूचितां युक्तिं शंकापूर्वमाह ॥ न च पृथिवीति ॥ ओषधीभ्योऽन्नमिति श्रुतिविरोधादित्येव वाच्ये अद्भ्य इत्याद्यंशोक्तिर्युक्तेर्भाष्यसूचितत्वसूचनायेत्येके । अन्नहेत्वोषधिजनकत्वविरोधात् पृथिवीपदेन नान्नस्य ग्रहणमिति युक्त्यंतरसूचनायेत्यन्ये ॥ उक्तश्रुतीति ॥ओषधीभ्योऽन्नमिति श्रुतीत्यर्थः ॥ बहुकल्पनेति ॥ पृथिवीपदस्यान्नार्थत्वं तस्य च अब्जन्यत्वमोषधिजन्यत्वं चेति बहुकल्पनेत्यर्थः । अन्नश्रुतेः प्रकारांतरेण सावकाशत्वमाशंक्याद्भ्योऽन्नसृष्टिः

श्रूयत इति भाष्यसूचितयुक्त्या निराह ॥ न चादूभ्य इति ॥ मुख्यार्थेति ॥ साक्षाद्धेतुस्वरूपमुख्यार्थेत्यर्थः । एतेन न्यायविवरणे इति गुण इत्यनंतरं न चादूभ्य इति शंकाध्याहारं मुख्यार्थपरित्यागप्राप्तेरिति पूर्ववाक्यानुकर्षणं च सूचयति ॥अत इति॥ उक्तरीत्यानन्यार्थतया निरवकाशत्वादित्यर्थः ॥छ॥ प्रागुक्तशंकानिवर्तकत्वं व्यंजयितुं प्रतिज्ञाहेतू बहिरेवोक्त्वा तत्र श्रुतिविरोधनिरासे हेतुपरतया सूत्रभाष्ये व्याचष्टे ॥ नात्रापामिति ॥ ननु ता अन्नमसृजंतेत्यतः पूर्वं तत्तेजोऽसृजत तदपोऽसृजतेति तेजोजलरूपभूतोपक्रमेऽपि प्रकरणमन्नपरमस्तु ह्वयाम्यग्निमित्युपक्रमेपि प्रकरणस्य सावित्रत्ववदित्यतो भूतपरमुत्तरवाक्यं चाह ॥तासां त्रिवृतमिति॥ तेजोबन्नानामित्यर्थः । भौतिकान्नान्नत्रिवृत्करणमस्तीतिभावः । यथा कं ब्रह्म खं ब्रह्मेत्युपक्रमवाक्याद् ब्रह्मपरात्सएनान्ब्रह्म गमयतीत्युत्तरवाक्याच्च मध्ये स्थिताग्निप्रयुक्ताहंशब्दरूपा श्रुतिर्ब्रह्मपरेत्युक्तमंतरनये तथात्राप्युपक्रांतस्याग्रेऽपि श्रवणेन भूतप्रकरणविच्छेदाभावात्तन्मध्यपतितान्नश्रुतिरपि तत्परेति भावः । ननु या इमास्तिस्रो देवतास्तासां त्रिवृतमिति तेजोबन्नानां देवतात्वं श्रुतं अभिमानिनयन्यायसिद्धं च । देवतानां त्रिवृत्करणप्रकारश्च छांदोग्यभाष्य एव षष्ठे व्यक्तः । तथा च कथं प्रकरणस्य भूतविषयत्वमिति चेत्सत्यम् । शरीररूपकविन्यस्तगृहीतेरिति न्यायेनाभिमन्यमानसहितानामेवाभिमानिनां तत्र गृहीतेः । अत एव वक्ष्यति मांसादिभौममित्यत्र यत्कठिनं सा पृथिवी यद्द्रवं तदाप इत्यादि ॥ कथमिति ॥ यद्यपि द्युभ्वादिनये जुष्टं यदा पश्यत्यन्यमीशमिति रुद्रप्रापकेशश्रुतेर्द्वे विद्ये वेदितव्ये इति प्रकरणेन प्रसिद्धार्थत्याग उक्तः । प्रकरणादिति सूत्रे आत्मा प्रकरणादित्यत्र च चतुर्थे य आत्मा अपहतपाप्मा इत्यादिब्रह्मप्रकरणेन परंज्योतिरुपसंपद्येति ज्योतिःश्रुतेरादित्यादितेजसि प्रसिद्धाया बाधो वक्ष्यते तथात्रापि तत्र श्रुतेः सावकाशत्वं प्रकरणस्यानवकाशत्वमुपेत्य बाध उक्तः। अत्र पुना रूपोक्तिस्वारस्याय तदनाश्रित्य जातिप्रयुक्तप्राबल्यादिमात्रं शब्दादेवेत्यत्रोक्तमुपेत्येयं शंका प्रवृत्तेत्यदोषः । अत एव नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारादित्यत्र व्याप्ता ह्यात्मान इत्यत्र बहुवचनश्रुतेरधिकारमात्रेण बाधायोगात्स्वशब्दोन्मानाभ्यां चेति श्रुतिलिंगोक्तिरग्रे स्पष्टा । रूपबोधकवाक्यस्य भाष्येऽनुक्तेः स्वयमाह ॥ यदग्नेरिति ॥ यत्कृष्णं तदन्नस्येत्येव वाच्ये यदग्नेरित्याद्युक्तिस्तत्रापि भौक्तिकान्नमेवास्त्विति शंकाव्युदासाय भूतप्रायपाठविरोधं वक्तुमिति भावः । कार्ष्ण्येत्यादि भाष्यं योजयति ॥ तच्चेति ॥ ॥ प्रकरणलिंगाभ्यामिति ॥ ननु द्वाभ्यामपि दुर्बलाभ्यां कथं प्रबलश्रुतेर्बाधः । तयोः

स्वभावो बलवानित्युक्तेरिति चेत्सत्यम्। अधिकारादीनां निरवकाशत्वाच्चेति न्यायविवरणोक्त्या निरवकाशेत्यपि योज्यम्। भूतविषयत्वादित्युक्त्यैव प्रकरणस्य निरवकाशत्वमुक्तं रूपस्य शंकापूर्वं तदाह ॥ नन्विति ॥ यद्वात्र श्रुतेर्बाधो नाम नानार्थकस्य गोशब्दादेरर्थात्प्रकरणाल्लिंगादिति न्यायेन प्रकरणादिना वाच्यरूपार्थांतरज्ञापनमेव न त्वत्यंतास्वारस्यम्। तच्च लिंगप्रकरणाभ्यामपि सेत्स्यतीति तथैवोक्तम्। अन्यत्र निरवकाशत्वोक्तिरभ्युच्चयत्वेनेति भावः। अन्नशब्दस्य प्रयोगबाहुल्यात्पृथिव्यामपि शक्तिमत्त्वादित्यन्यत्रोक्तरीत्यार्थं वदन्नापश्चेत्यादिभाष्यमवतारयति ॥ एवं प्रकरणेति ॥ भाष्ये बहुवाक्योदाहरणेन बहुवाक्यानुरोधोऽप्यत्रैवेति न्यायविवरणं विवृतं भवति। तेनैव लिंगबोधकवाक्यानुरोधोऽप्युक्त इति भावेनाह ॥ न चेति ॥ तस्माद्यत्र क्व च वर्षतीति प्रागुदाहृतवाक्योक्तेरित्यर्थः ॥ तेजोऽशितमितिवदिति ॥ तत्र तेजःशब्दो यथा तैजसपरः तेजोऽशनासंभवात्तथा पृथिवीवाचकोऽन्नशब्दः पार्थिवपरः इत्यर्थः ॥ आप्तवाक्येति ॥ विरोधो वाक्ययोरित्यानुरोधान्नाप्रामाण्यमिति वा ज्ञायते। ततोऽद्भ्य एवान्नं पृथिवी त्वन्नरूपिणीत्यादिछांदोग्यभाष्याद्युक्तस्मृतिरूपाप्तवाक्यानुसारित्वान्नाप्रामाण्यमिति वा भाष्यस्यार्थः सूचितः॥ अत्रैवेति ॥ विरोधेऽन्यार्थकल्पनेत्यत्रेत्यर्थः ॥ एवमिति ॥ अधिकारादिभिरन्नश्रुतेः पृथिव्यर्थत्वमित्युक्तप्रकारेणेत्यर्थः ॥ १२ ॥ अ० ६ ॥

सूत्रभाष्यम्—

'प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तकस्तेनान्नेनाप्यायस्वे'(म. ना. उ. १६-२.) त्यादिनाऽन्यः संहर्ता प्रतीयत इत्यतो ब्रूते—

॥ ॐ तदभिध्यानादेव तु तल्लिङ्गात्सः ॐ ॥ १३ ॥

'तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिरि' (श्वे. उ. १-१०.) ति बन्धलयस्य तदभिध्याननिमित्तत्वलिङ्गात्तत्कर्तृत्वं प्रतीयते, किमु सादेर्जगतः। इत्येतस्मादेव सर्वसंहारकर्ता विष्णुरिति प्रतीयते, किमु 'यमप्येति भुवनं साम्पराये स नो हरिर्घृतमिहायुषेऽत्तु देवः'। 'य इदं सर्वं विलापयति स हरिः परः परमात्मा' इत्यादि श्रुतिभ्य इति एवशब्दः।

'स्रष्टा पाता च संहर्ता स एको हरिरीश्वरः ।
स्रष्टृत्वादिकमन्येषां दारुयोषावदुच्यते ॥
एकदेशक्रिया चात्र न तु सर्वात्मनेरितम् ।
सृष्ट्यादिकं समस्तं तु विष्णोरेव पराद्भवेत्' इति च स्कान्दे ॥
'निमित्तमात्रमीशस्य विश्वसर्गनिरोधयोः ।
हिरण्यगर्भश्शर्वश्च कालाख्यारूपिणस्तवे'ति च भागवते ॥

'स ब्रह्मणा विसृजति स रुद्रेण विलापयति सोऽनुत्पत्तिरलय एक एव हरिः परः परानन्द' इति च महोपनिषदि ॥ १३ ॥

॥ इति तदभिध्यानाधिकरणम् ॥ ७ ॥

तत्वप्रकाशिका—

एवमधिभूताधिदैवोत्पत्तिविषयश्रुतिविरोधं पराकृत्यात्र ब्रह्मणि श्रुतिसमन्वयसिद्ध्यर्थं तत्संहारविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसंगतिः । जगत्सृष्ट्यादिकर्ता हरिरित्यभिहितम् । तत्र संहारकर्तृत्वेऽन्यगते तदभावापातात्तन्निषेध्यमेव । प्रकृताधिभूताधिदैवानि विषयः । उत्पत्तिमत्त्वाल्लीयन्त इति सिद्धम् । किं भगवता लीयन्ते रुद्रेण वेति संदेहः । 'यत्प्रयन्त्यभिसंविशन्ति' 'रुद्रो माविशान्तकः' इति श्रुतिविरोधः संदेहबीजम् । पूर्वपक्षयति ॥ प्राणानामिति ॥ रुद्र एव संहारकः । श्रुतौ तस्यान्तकत्वश्रवणात् । न च वाच्यं रुद्रादिनाम्नां विष्णुपरत्वादियं श्रुतिस्तत्परा किं न स्यात् । रुद्रविषयत्वे वा रुद्रस्य संहारद्वारत्वाभिधात्री किं न स्यादिति । यथाकथंचिद्विष्णोः संहर्तृत्वाभ्युपगमे लोकदृष्टिविरोधात् । तस्य जगदुत्पादकत्वात् । लोके च पितुरन्यस्यैव मारकत्वदर्शनात् । न च रुद्रस्य संहर्तृत्वेऽत्यन्तसुप्रसिद्धेऽङ्गीकृते विरोधोऽस्ति । येन श्रुतेरन्यार्थता कल्प्यते । न च श्रुतिविरोधः । तस्या युक्तिसहितैतच्छ्रुतिविरोधात् । न च भाक्तार्थत्वेनाविरोधः । युक्तिविरोधानिस्तारात् । अतो रुद्रस्यैव संहर्तृत्वादन्या श्रुतिरप्रमाणमेवेति न विष्णौ श्रुतिसमन्वयो युक्त इति भावः । रुद्र त्वं प्राणानामाश्रयोऽन्तकश्चासि । स त्वं मा मां विश । आहुतिरूपेणान्नेन दत्तेन निमित्तेन मामाप्यायस्वेत्यर्थः । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ विष्णुरेव संहारकर्ता । तस्याभिध्यानादिति श्रुतौ संसारमोक्षो भगवदभिध्यानाद्भवतीति हि श्रूयते । किं चातः तदिच्छाधीनत्वलिङ्गेन

तत्कृतोऽनुमीयते । एवं चानादेर्बन्ध(न)स्य लयकर्ता सुतरां सादेर्जगतः संहारकर्तेति सिध्यतीत्यर्थः । भगवति मनोयोजनाद् भूयो भूयो यथार्थध्यानाच्च जाताद्भगवदभिध्यानात् परिपाककाले विश्वबन्धकमायानिवृत्तिर्भवतीत्यर्थः । नन्वस्तु विष्णोरनादिभवभेत्तुर्विश्वसंहारे सामर्थ्यं संहर्तृत्वं कुत इत्यत आह ।। इत्येतस्मादिति ।। उक्तादेतस्मादेव हेतोः संहारकर्ता विष्णुरिति प्रतीयते । शक्तस्यैव तत्संभवात् । अथैतावताप्यपरितोषे सुतरां स्पष्टश्रुतिभ्यो ज्ञायत इत्यर्थः । इत्यर्थमेवशब्दः सूचयतीति शेषः । विष्णोरेव संहर्तृत्वे प्रागुक्तश्रुतिविरोध इत्यत आह ।। स्रष्टेति ।। अत्र परतन्त्रेऽपि । सृष्ट्यादिकमिति पूर्वत्र संबध्यते । परतन्त्रसंहर्तृत्वपरा श्रुतिरिति भावः । पारतन्त्र्यं च संहारद्वारत्वमिति भावेनाह ।। निमित्तेति ।। काल इत्याख्यारूपे यस्यासौ तथोक्तः । रूपस्य कालत्वं संहर्तृत्वादिगुणसंपन्नत्वम् । स्मृतेर्मूलभूतां श्रुतिं चाह ।। स इति ।। न चोक्तयुक्तिविरोधः । ममत्वादिदोषराहित्येन लोकपितृवैलक्षण्याद्विष्णोर्लोकविरोधस्यादोषत्वात् । अतः श्रुत्यविरोधेन संहारस्य भगवत्कर्तृत्वसिद्धेर्युक्तस्तस्मिन् श्रुतिसमन्वय इति सिद्धम् ।। १३ ।। अ० ७ ।।

भावदीपः—

।। ॐ **तदभिध्यानादेव तु** ० ॐ ।।१३।। अधिकरणसंगतिमाह ।। एवमिति ।। अधिभूताधिदैवेति ।। वियदादिशब्दानां भूततद्देवतारूपोभयपरत्वादिति भावः । पराकृत्येत्यनंतरं स्थितौ विवादाभावादित्यपि योज्यम् । चिंताफलमाह ।। जगदिति ।। लयासिद्धौ केनेति विशेषविचारानवकाश इत्यत आह ।।उत्पत्तीति।। अभिसंविशंति मुक्तौ स्वेच्छया प्रविशंति । अनादिबंधलयरूपमुक्तिकर्तृत्वात्संहारकर्तृत्वं विष्णोर्युक्तमिति युक्तिसूचनार्थं सिद्धांतानुगुणतयाभिसंविशंतीति शेषोक्तिः । व्युत्क्रमेण भाष्यं व्याचष्टे ।। रुद्र एवेति ।। रुद्रादीनां मारकत्वांगीकारे पितुरन्यस्य मारकत्वदृष्टेर्लोकदृष्ट्यनुसारित्वमिति गुण इत्यन्यत्रोक्तां भाष्यस्थादिपदोपात्तां युक्तिं अत्र पूर्वपक्षश्रुतिप्राबल्याय योजयितुं गतार्थत्वशंकामाह ।। न च वाच्यमिति ।। विष्णुपरत्वादिति ।। अंतर्नयेऽधिदैवगताशेषनाम्नां समन्वयस्योक्तेर्द्युभ्वादिनयभाष्ये रुजं द्रावयत इत्यादिना योगपौराणिकरूढ्योरुक्त्या प्रपंचनाच्चेति भावः । कल्पनोपदेशादिति न्यायेनामुख्यवृत्त्या अन्यवाचकत्वस्याप्यंगीकारादाह ।। रुद्रविषयत्वेवेति ।। आप इत्यत्रोक्तवचनैरन्यस्य स्वतःशक्त्यभावादिति भावः । विष्णुर्न संहर्ता उत्पादकत्वात्पितृवदिति प्रयोगं हृदि कृत्वा हेतोरप्रयोजकत्वनिरासाय न्यायविवरणोक्तिसूचितविपक्ष-

बाधकयुक्तिं विवृणोति ।। यथेत्यादिना ।। अंतकत्वश्रुतेर्विष्णुपरत्वेन वाऽन्यपरत्वेन वा साक्षादन्यद्वारा वेत्यर्थः । अत्र पितुरन्यस्येति पितृपदेन न केवलं जनको विष्णुः किं तु रक्षकश्च न च रक्षकस्य संहर्तृत्वं युक्तमिति सूचितमिति चंद्रिका । रुद्रः संहर्ता तथा लोकप्रसिद्धत्वात् य एवं स एवं यथा संमत इति प्रयोगमुपेत्य तस्य लोकदृष्टयनुसारित्वरूपानुकूलतर्कं साक्षान्न्यायविवरणोक्तं व्यतिरेकमुखेन व्यनक्ति ।। न चेत्यादिना ।। श्रुते रुद्रो मेति श्रुतेः।। न च श्रुतीति ।। यत्प्रयंतीति श्रुतीत्यर्थः ।। भाक्तेति ।। द्वारार्थत्वरूपेत्यर्थः । यद्वा कतिपयसंहर्तृत्वरूपेत्यर्थः ।। युक्तीति ।। पितृत्वान्न संहर्तेश्वर इति युक्तीत्यर्थः । पूर्वभाष्यादप्रामाण्यपदमनुवर्त्य फलोक्त्या पूर्वपक्षभाष्यमुपसंहरति ।। अत इति ।।सयुक्तिकबलवच्छ्रुतिबलादित्यर्थः । रुद्रोमाविशेत्यत्र रुद्र उमा आविशेति पदविभागमुपेत्यार्थमाह ।। रुद्रेति ।। उ इति संबुद्धिद्योतकः । त्वमिति शेषः । आत्मप्रवेशप्रार्थनाया बीजोक्त्यर्थं प्राणानामित्यादिपूर्वांशोक्तिरिति भावेन तदर्थमाह ।। प्राणानामिति ।। ग्रंथिराश्रयः अंतकस्संहर्ता । त्वामौ द्वितीयाया इत्यस्मदादेशोऽयं माशब्द इति भावेन मामित्युक्तम् । आविश प्रविश मयि सन्निधिं कुर्वित्यर्थः । माशब्दानुकर्ष इति मत्त्वाऽऽह।। मामाप्यायस्वेति ।। प्रवेशप्रार्थने बीजांतरोक्त्यर्थमियं शेषोक्तिरिति भावः ।। भाष्यं व्याकुर्वन् संहारकर्ता विष्णुरिति प्रतिज्ञां पूर्वपक्षकोटिनिरासाय सावधारणं व्याचष्टे ।। विष्णुरेवेति ।। निमित्तत्वेत्यंतभाष्यं व्याचष्टे ।। तस्येति ।। तस्याभिध्यानादित्यस्येच्छावत्त्वरूपेभिध्यातृत्वे श्रुतित्वेऽपि जन्मादिसूत्रोक्ते प्रयत्नवत्त्वरूपकर्तृत्वे लिंगत्वात्सूत्रे लिंगशब्दो युक्त इत्युपेत्य तदिच्छाधीनत्वस्य तत्कर्तृत्वे लिंगादित्यादि भाष्योक्तं लिंगत्वं प्रश्नपूर्वमाह ।।किंचात इति।। भाष्ये जगत इत्यनंतरं तत्कर्तृत्वमित्यस्यानुषंगं मत्त्वाऽऽह ।। संहारकर्तेति ।। संहारकरणसमर्थ इत्यर्थः । पूर्वत्र फलोपधानपरस्यापि कर्तृशब्दस्येह शक्तिपरतयानुषंगो विवक्षाभेदान्न विरुद्धः । तत्वभावादित्यस्यार्थो यथार्थध्यानादिति।। भगवदभिध्यानादिति ।। प्रसादरूपादिच्छाविशेषादित्यर्थः । अथान्ये प्रकृती दुष्टे नृषु प्रातिस्विकं स्थिते । स्वगुणाच्छादिका ह्येका परमाच्छादिकापरा । स्वगुणच्छादिकां हृत्वा परमाच्छादिकां परः । व्याघुट्य मोक्षपदवीं ददाति पुरुषोत्तम इति श्रुतिगीतातात्पर्योक्तदिशा मायानिवृत्तिर्बोध्या । ननु सादेर्जगत इति पूर्वभाष्येऽनुषक्तेन तत्कर्तृत्वं प्रतीयत इत्यनेनैव जगत्संहर्तृतोक्तौ सैव इत्येतस्मादेव संहारकर्तेत्युत्तरभाष्ये संहारकर्तृत्वे हेतुत्वेनोच्यते चेत्साध्याविशिष्टयमित्याशंक्य पूर्ववाक्ये शक्तिरेव विवक्षिता न तु प्रयत्नः । तया शक्त्योत्तरवाक्योक्त

फलरूपः प्रयत्नः साध्यते। अतो न दोष इत्याह ॥कर्ता विष्णुरित्यादि॥ किम्वित्यादेरर्थोऽथेत्यादि। अत्रेति भाष्यप्रतीकं तस्यार्थः परतंत्रेऽपीति ॥पूर्वत्रेति॥ पूर्वत्रापीत्यर्थः। अन्यथा न तु सर्वात्मनेरितमिति पूर्वस्य विशेषणस्यैकदेशक्रिया चेति विशेष्येणानन्वयादसंगतिः स्यात् उत्तरं च समस्तमिति विशेषणं विशेष्यसाकांक्षत्वादनन्वितं स्यादिति भावः। रुद्रस्य क्वचित्संहारद्वारत्वेनैव तद्वाक्यानां सावकाशत्वादित्यन्यत्रोक्तेः कथं परतंत्रसंहर्तृत्वपरेत्युक्तिरित्यत आह ॥ पारतंत्र्यं चेति ॥ स्मृतौ निमित्तमित्युक्त्या द्वारमात्रमिति लाभाद्द्वारत्वमित्युक्तम्। कालाख्यारूपिण इति हेतुगर्भमिति भावेन कालत्वे रूपस्योक्ते नाम्नः स्वत एव सिध्यतीति भावेन रूपस्याह ॥ रूपस्येति ॥ कालशब्दो जगद्बंधनच्छेदनज्ञानादिसर्वभगवद्धर्मवाची। कलबंधने कलच्छेदने कलज्ञाने कलकामधेनाविति (हि) (च) पठंतीत्येकादशे गीताभाष्योक्तेः। कालः कलितसंपूर्णसद्गुणत्वाज्जनार्दनः। संहारात्सर्ववित्त्वाद्वा सर्वविद्रावणेन चेति गीतातात्पर्योक्तस्मृतेः। संहर्ता भगवान्विष्णुः काल इत्यभिधीयते इत्यादिप्रथमस्कंधतात्पर्योक्तस्मृतेश्चेति भावः। तत्वप्रदीपे तु कालाख्यैव रूपं रूपकं ज्ञापकं वाचकत्वेन तद्वानित्युक्तम्। लोकपितृवैरूप्याद्विष्णोरित्यन्यत्रोक्तां युक्तिमाह ॥ ममत्वादीति ॥ ॥ अत इति ॥ श्रुतिस्मृतिलिंगबलाद्रुद्रोमेत्यादिश्रुतेर्द्वारार्थत्वेन सावकाशत्वाल्लोकपितृवैलक्षण्येन युक्तिविरोधाभावाच्चेत्यर्थः ॥ १३ ॥ अ० ७ ॥

सूत्रभाष्यम्—

'अत एव हीदं परात्क्रमादुत्पद्यते क्रमाद्विलीयते नासावुदेति नास्तमेती' ति भाल्लवेयश्रुतौ क्रमाल्लयः प्रतीयते।

'अक्षरात्परमादेव सर्वमुत्पद्यते क्रमात्।
व्युत्क्रमाद्विलयश्चैव तस्मिन्नेव परात्मनि' ॥

इति चतुर्वेदशिखायां व्युत्क्रमाल्लयः प्रतीयते। अत आह—

**॥ ॐ विपर्ययेण तु क्रमोऽत उपपद्यते च ॐ ॥ १४ ॥**

क्रमवचनमपि विपरीतक्रमापेक्षया।

'कर्ता प्राणादिकस्यास्य हन्ता भूम्यादिकस्य च।
यः क्रमाद्व्युत्क्रमाच्चैव स हरिः पर उच्यते' ॥

इत्यत एव भाल्लवेयश्रुतिवचनात्।

'अनुरूपः क्रमः सृष्टौ प्रतिरूपो लये क्रमः ।
इति क्रमेण भगवान्सृष्टिसंहारकृद्धरिरि'ति च पाद्मे ।

पूर्वेषां पूर्वेषां सामर्थ्याधिक्यादुपपद्यते च । वामने च—

'पूर्वं पूर्वं यतो विष्णोः सन्निधानं क्रमाधिकम् ।
सामर्थ्याधिक्यमेतेषां पश्चादेव लयस्तथा ।
व्याप्तिश्चाभ्याधिका तेषामत एव न संशयः' ॥

इति च ॥ १४ ॥ इति विपर्ययाधिकरणम् ॥ ८ ॥

तत्वप्रकाशिका—

अत्रेश्वरे वेदसमन्वयसिद्ध्यर्थमधिभूतादिसंहारविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसंगतिः । सर्वं भगवता लीयत इत्युक्तम् । तद्विषय एव श्रुतीनां विरोधे समन्वयानुपपत्तेरवश्यनिरसनीयोऽसौ भवति । प्रकृताधिभूतादीनि विषयः । किमुत्पत्तिक्रमानुसारेण लीयन्ते व्युत्क्रमेण वेति संदेहः । किमस्य बीजमिति श्रुतिविगानं दर्शयति ॥ अत एवेति ॥ उत्पत्तिक्रमेणैव लीयंत इति पूर्वः पक्षः । अत एवेति श्रुतेः । न च पक्षान्तरेऽपि श्रुतिरस्तीति वाच्यम् । उत्पत्तिक्रमानुसारेणैव लयाङ्गीकारे लोकानुकूलत्वगुणेन क्रमश्रुतेः प्राबल्यात् । न च लोके व्युत्क्रमादपि लयो दृश्यत इति वक्तव्यम् । क्रमस्यैव प्रायिकत्वात् । क्रमादुत्पद्यते क्रमाद्विलीयते क्रमेणैवोत्पत्तिर्विलयश्च क्रमेणैवास्योत्पत्तिविलयावित्यादिबहुश्रुत्यनुसारित्वाच्च । अतो बलवच्छ्रुतिविरुद्धासौ श्रुतिरप्रमाणमेवेति समन्वयानुपपत्तिरित्येवं प्राप्ते सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ उत्पत्तिक्रमवैपरीत्येनैव लयः । क्रमवाचिश्रुतेरप्युत्पत्तिक्रमविपरीतक्रमापेक्षत्वात् । कुतोऽर्थान्तरकल्पनं क्रमश्रुतेः । यस्यामेव श्रुतौ क्रमाल्लयः श्रूयते तस्यामेव व्युत्क्रमाल्लयस्य श्रुतत्वादित्यर्थः । श्रुतित्वाविशेषाद् व्युत्क्रमश्रुत्या क्रमश्रुतेः कुतो बाधो विपरीतमेव किं न स्यादित्यत आह ॥अनुरूप इति॥ अस्ति क्रमव्युत्क्रमयोः क्रमपदप्रवेशो न तु व्युत्क्रमपदप्रवेशः । अतो निरवकाशया व्युत्क्रमश्रुत्या सावकाशक्रमश्रुतिबाधो युक्त इति भावः । तथा च श्रुत्यन्तरम् । 'द्विविधः क्रम उद्दिष्टो व्युत्क्रमोऽनुक्रमस्तथा । सृष्टावन्यो लये चान्य इति वेदविदो विदुः' । इति । एतेन बह्वीनामपि श्रुतीनां विरोधः परिहृतः । व्युत्क्रमाल्लयाङ्गीकारे लोकविरोधान्नासौ युक्त इत्यत आह ॥ पूर्वेषामिति ॥ लौकिकानां प्रायः साम-

र्थ्यसाम्यात्क्रमाल्लयेऽपि नासौ प्रकृते भवति । अत्र पूर्वोत्पन्नानां सामर्थ्याधिक्यात् । एवं च लोकविरोधस्यैव गुणत्वादिति भावः । ननु पूर्वोत्पन्नानां सामर्थ्याधिक्यमेव कुतो येन पश्चाल्लयः स्यादित्यत आह ॥ वामने चेति ॥ पूर्वे पूर्वोत्पन्ने । प्रथमा वा । सन्निधीयतेऽत्रेति सन्निधानं प्रतिमा । तस्माच्छ्रुत्यविरोधेन व्युत्क्रमाल्लय-सिद्धेर्युक्तो हरौ समन्वय इति सिद्धम् ॥ १४ ॥ अ० ८ ॥

भावदीपः—

॥ ॐ विपर्ययेण तु० ॐ ॥१४॥ श्रुतीति ॥श्रुतीनां परस्परविरोधेत्यर्थः । अस्य समन्वयसिद्ध्यर्थत्वं पूर्वोक्तदिशा ध्येयम् । पूर्वसंगतिमाह ॥ सर्वं भगवतेति ॥ तद्विषय एव लयविषय एव । विपर्ययेणेति सौत्रपदव्यावर्त्यपूर्वपक्षमाह ॥उत्पत्तीति॥ श्रुतिप्राबल्याय लोकानुसारित्वमित्यन्यत्रोक्ता उपपद्यते चेति सौत्रपदव्यावर्त्यां युक्ति शंकापूर्वमत्र योजयति ॥ न चेति ॥ क्रमादुत्पद्यते क्रमाद्विलीयते क्रमेणैवोत्पत्तिर्लय-श्च क्रमेणैवास्योत्पत्तिविलयावित्यादिलोकानुसारिबहुवाक्यानुरोधश्चेत्यन्यत्रोक्तयुक्त्यं-तरं चोपयोगोक्तिपूर्वमाह ॥ न च लोक इत्यादिना ॥ अत इति ॥ क्रमलयश्रुतेर्यु-क्तिद्वयसहितत्वादित्यर्थः ॥ समन्वयेति ॥ सर्वसमन्वयेत्यर्थः । यद्वैतच्छ्रुतिवदन्यत्रा-प्यनाश्वासापातादिति भावः ।।छ।। भाष्यस्थापिपदसूचितार्थमाह ॥ उत्पत्तिक्रमेति ॥ एतेन सूत्रे पूर्वप्रकृतो लयोऽन्वेति अतःशब्दश्च प्रकृतसृष्टिक्रमपर इति सूचितम् । न चैवं क्रमश्रुतिविरोध इत्यतो भाष्यं हेतुत्वेन व्यनक्ति ॥ क्रमवाचीति ॥ एतेन सूत्रे क्रमस्तु श्रौतक्रमस्तु अतः उत्पत्तिक्रमाद्विपर्ययेणेत्यपि योजना सूचिता । भाष्य-स्थात एवेति पदस्योपयोगं दर्शयन्नर्थमाह ॥ कुत इत्यादिना ॥ यस्यामिति ॥ भाल्ल-वेयश्रुतावित्यर्थः । एतेन सौत्रातःपदमन्यथापि व्याख्यातं ध्येयम् ॥ इत्यत आहेति ॥ ननु कथमनया स्मृत्या शंकानिरास इत्यतः क्रमवाक्यस्य सावकाशत्वादित्यन्यत्रोक्त्यनु-रोधेन स्मृतितात्पर्यमाह ॥ अस्तीति ॥ अनुक्रमव्युत्क्रमयोः क्रमपदप्रवेश इत्यत्र न केवलं संभावनामात्रमिति भावेन न्यायविवरणोक्तश्रुतिमाह ॥ तथा चेति ॥ बहुश्रुत्यनुरोधश्च यथोत्पत्तिलये इत्यन्यत्रोक्तद्वितीययुक्ति निराह॥एतेनेति॥ क्रमश्रुतेः सावकाशत्वोक्तिपरपाद्मवचनेनेत्यर्थः। अन्यत्रोक्ताद्ययुक्तिनिरासकतया सूत्रखंडभाष्य-मवतारयति ॥ व्युत्क्रमादिति ॥ कथमनेन लोकविरोधनिरास इत्यतो भावमाह ॥ लौकिकानामिति ॥ लयेऽप्येवं पूर्वे पूर्वे गुणाधिका इति ऋग्भाष्यानुरोधेनाह

॥ प्रथमावेति ॥ तथा चैतेषामित्यग्रेतनबहुवचनोपपत्तिरिति भावः। पूर्वादिभ्यो नवभ्यो वेति सर्वनामसंज्ञाया विकल्पेन पूर्वे पूर्वे इत्यस्य पूर्वोत्पन्न इति सप्तम्यंतत्वेन व्याख्यानपक्षे सन्निधानपदस्यान्वयेऽपि न प्रथमापक्षेऽन्वय इत्यत आह ॥ सन्निधीयत इति ॥ अधिकरणे ल्युडिति भावः॥ तस्मादिति ॥क्रमश्रुतीनां सावकाशत्वाद् व्युत्क्रमलयस्य श्रौतत्वात्सामर्थ्याधिक्येनोपपन्नत्वाच्चेत्यर्थः ॥ १४ ॥ अ० ८ ॥

सूत्रभाष्यम्—

॥ ॐ अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॐ ॥ १५ ॥

'प्राणान्मनो मनसश्च विज्ञानम्'।

'यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि' (कठ. उ. ३–१३)

इति लिङ्गाद्विज्ञानमनसी अन्तरा विपरीतक्रम इति चेत्— न, विशेषप्रमाणाभावात् ॥ १५॥

तत्वप्रकाशिका-

अत्र ब्रह्मणि श्रुतिसमन्वयसिद्ध्यर्थमधिभूतादिलयविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसंगतिः। सकललयकर्ता हरिरित्युक्तम्। लयविषये च श्रुतिविरोधे न समन्वयः संभवेदिति निवार्योऽसौ भवति। प्रकृताधिभूतादीनि विषयः। किं सर्वाण्युत्पत्तिक्रमवैपरीत्येन लीयन्ते कानिचित्क्रमेणापि वेति संशयः। 'अक्षरात्परमादेव' इति श्रुतेर्वक्ष्यमाणलिङ्गदर्शनस्य च विरोधः संदेहबीजम्। पूर्वपक्षस्य सूत्र एवोक्तत्वात्तत्पठित्वा पूर्वपक्षांशं तावद् व्याचष्टे ॥ अन्तरेति ॥ न सर्वेषां व्युत्क्रमेण लयः किं तु केषांचिद् व्युत्क्रमात्। तथा हि। विज्ञानतत्त्वं तावन्मनस्तत्त्वादुत्पन्नं श्रूयते 'मनसश्च विज्ञानम्' इति श्रुतौ तस्य च पश्चादुत्पन्नस्य विज्ञानतत्त्वस्य पश्चादेव लयः पूर्वावस्थितस्य मनस्तत्त्वस्य पूर्वमेव लयः श्रूयते 'यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि' इति श्रुतौ। अनेन च लिङ्गदर्शनेन विज्ञानमनसी विनाऽन्येषां व्युत्क्रमाल्लयस्य प्राप्तत्वादुक्तमेव युक्तम्। लोकानुकूलं चैतत्। लोकेऽपि केषांचित् क्रमात्केषांचिद् व्युत्क्रमाल्लयदर्शनात्। न च सामर्थ्यतारतम्यविरोधः। विज्ञानमनसोः समसामर्थ्यस्यापि संभवात्। न चेतरश्रुतिविरोधः। तस्याः सयुक्तिकलिङ्गदर्शनविरुद्धाया अप्रामाण्योपपत्तेः। तथा च न श्रुतिसमन्वयो हरौ सिध्यतीति भावः

वाङ्मनसी यच्छेत् वाङ्मनसि लीयत इति स्मरेदित्यर्थः। सिद्धांतांशं व्याचष्टे ॥ नेति ॥ न विज्ञानमनस्तत्त्वे विना विपरीतक्रमेण लयः किं तु सर्वेषामपि। विज्ञानमनस्तत्त्वयोर्यथोत्पत्तिलय इति विशेषप्रमाणाभावात्। सर्वेषामपि व्युत्क्रमाल्लयस्य श्रुतत्वाच्चेति भावः ॥ १५ ॥

भावदीपः —

॥ ॐ अंतरा० ॐ ॥१५॥ अस्य पूर्वोक्तप्रमेयस्थापनामात्रार्थत्वात्पूर्ववदेवानंतरसंगतिमाह ॥ सकललयेति ॥इति श्रुतेरिति॥ पूर्वभाष्योक्तश्रुतेरित्यर्थः॥ वक्ष्यमाणेति ॥ यथोत्पत्तिलयश्रवणरूपलिंगेत्यर्थः। पूर्वपक्षस्य पूर्वाक्षेपरूपफलाय तदाक्षेपप्रकारं च दर्शयितुं केषांचित्क्रमाल्लयः केषांचिद्व्युत्क्रमाल्लय इत्यन्यत्रोक्तिमनुरुध्य साध्यमध्याहृत्य तत्र हेतुपरतया पूर्वपक्षभाष्यं व्याचष्टे ॥ न सर्वेषामिति ॥ उक्तमेव केषांचिदित्युक्तमेवेत्यर्थः। लिंगदर्शनस्य अक्षरादिति श्रुतितः प्राबल्याय केषांचित्क्रमाल्लयः केषांचिद् व्युत्क्रमाल्लय इत्यंगीकारे लोकदृष्टचनुसारादंतराविज्ञानमनसी व्युत्क्रम इत्यन्यत्रोक्तां लोकदृष्टचनुसारियुक्तिं विवृणोति॥ लोकानुकूलं चैतदित्यादिना ॥ उपपद्यते चेति पूर्वसूत्रखंडोक्तयुक्तिविरोधमाशंकते ॥ न चेति॥ मनोविज्ञानयोः पूर्वोत्तरकालमुत्पन्नयोर्बहुलाल्पशक्तिमत्त्वेन चिराचिरकालस्थायित्वावश्यंभावेन व्युत्क्रमलय एव युक्तो न त्वनुक्रमलय इत्यर्थः। न्यूनाधिकसामर्थ्यासिद्धि भाष्ये जन्मलयश्रुत्योरुक्त्या सूचितामाह ॥ समेति ॥ सृष्टौ मनसः पूर्वमवस्थानात् लये च विज्ञानस्य पश्चादवस्थानादिति भावः ॥ न चेतरेति ॥ अक्षरात्परमादेवेति श्रुतिविरोध इत्यर्थः ॥ सयुक्तिकेति ॥ लोकानुकूल्यरूपयुक्तिसहितेत्यर्थः ॥ तथा चेति ॥ अक्षरादिति श्रुत्यप्रामाण्ये अन्यत्राप्यनाश्वासापातादिति भावः। श्रुतौ मनसि वाक् यच्छेत् उपरमेत्। यम उपरमे इति धातोर्लीयत इत्यर्थः। तत्र प्राज्ञ इत्यस्यान्वयाय तद्वशत्वेन तद्ध्यानं लयो नाम न चापरः। कुतस्तु मानुषो देवान्नियच्छेद्विनियामकानिति काठकभाष्यानुरोधेन ज्ञानलक्षणामाश्रित्याह ॥ इति स्मरेदित्यर्थ इति ॥ तत्वप्रदीपे तु वाचं मनसि यच्छेदित्यर्थ इत्युक्तम्। मनसीति दैर्घ्यं छांदसं ॥छ॥ नञः पूर्वभाष्येणान्वयं दर्शयति ॥ न विज्ञानेति ॥ अनेन सूत्रे पूर्वप्रकृतो लयोऽन्वेतीति सूचितं। विशिष्टनिषेधः सविशेषणे हीति न्यायेन विशेषणनिषेधफलक इति भावेन पर्यवसितमाह ॥ किं तु सर्वेषामपीति ॥ ननु सर्वेषां व्युत्क्रमलये मानाभावादेव क्वचिदनुक्रमोऽपि

लयः स्यादित्यतः सर्वं वा एतत्क्रमादुत्पद्यते क्रमाद्विलीयत इति श्रुतौ सर्वस्यापि व्युत्क्रमाल्लयसंग्रहादित्यन्यत्रोक्तरीत्याऽविशेषादिति सूत्रखंडस्याविशेषप्रमाणादित्यर्थांतरं मत्वा भाष्यभावमाह ॥ सर्वेषामपीति ॥ १५ ॥

सूत्रभाष्यम् –

॥ ॐ चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो
भाक्तस्तद्भावभावित्वात् ॐ ॥ १६ ॥

'मनसश्च विज्ञानं' इति व्यपदेशश्चराचरेष्वालोचनाद्विज्ञानं भवतीति भागापेक्षया स्यात्। न विज्ञानतत्त्वापेक्षया। स्कान्दे च—

'पराद्व्यक्तमुत्पन्नमव्यक्तात्तु महांस्तथा।
विज्ञानतत्त्वं महतस्समुत्पन्नं चतुर्मुखात्॥
विज्ञानतत्त्वात्तु मनो मनस्तत्त्वाच्च खादिकम्।
एवं बाह्या परा सृष्टिरन्तस्तद्व्यक्त्यपेक्षया।
विपरीतक्रमो ज्ञेयो यस्मादन्ते हरेर्दृशिः' ॥ इति ॥ १६ ॥

॥ इति अन्तराधिकरणम् ॥ ९ ॥

तत्वप्रकाशिका—

अस्त्येवोक्तं लिङ्गदर्शनं केषांचित्क्रमाल्लयः केषांचिद् व्युत्क्रमाल्लय इत्यत्र अतः कथं विशेषप्रमाणाभाव इत्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ चराचरेति ॥ यद्यपि 'यच्छेद्वाङ्मनसी प्राज्ञः' इति तत्वानां लयक्रमो भवेत्तथापि न तेषां तथोत्पत्तिः। विज्ञानतत्वान्मनस्तत्वस्योत्पन्नत्वात्। न च 'मनसश्च विज्ञानमि'ति श्रुतिविरोधः। मनःशब्दो हि तत्वेऽन्तःकरणे च वर्तते तथा विज्ञानशब्दोऽपि तत्वेऽवबोधे च। अयं च व्यपदेशः साधारणमनोविज्ञानराश्योरिन्द्रियावबोधाख्यभागविषय एव न तु मनोविज्ञानतत्वविषयः। न चेन्द्रियादिविषयत्वे काचनानुपपत्तिः। चराचरविषये मनोभावेनालोचने नावबोधस्योत्पद्यमानत्वात्। अतो नेदं लिङ्गदर्शनं विज्ञानमनस्तत्वयोः क्रमेण लये विशेषप्रमाणमिति भावः। तत्वविषयमेवेदं वाक्यं किं न स्यादित्यत आह ॥ स्कान्दे चेति ॥ बाह्या ब्रह्माण्डात्। अथ क्वचित्तत्वानामेवायं क्रमः श्रूयते चेत्तत्रापि ब्रह्माण्डान्तरभिव्यक्तौ ज्ञानिनां तत्वापरोक्षे च क्रमोऽसौ

ज्ञातव्यः । अधमानां तत्वानां प्रथममभिव्यक्तेरिति भावेन वाक्यशेषमुदाहरति ॥ अन्तरिति ॥ अन्तर्ब्रह्माण्डस्य देहस्य वा व्यक्तौ विपरीतक्रम इत्यत्र लिङ्गं यस्मादिति । अतः श्रुत्यविरोधेन सर्वेषामपि व्युत्क्रमाल्लयसिद्धेर्युक्तो हरौ श्रुतिसमन्वय इति सिद्धम् ॥ १६ ॥ अ० ९ ॥

भावदीपः—

॥ ॐ चराचरव्यपाश्रयस्तु० ॥ १६ ॥ अस्त्येवेति कृतचोद्यस्य कः परिहार इत्यतो भाष्याद्यभिमतं स्वयमाह ॥ यद्यपीति ॥ विज्ञानेति ॥ विज्ञानतत्वात्तु मन इति भाष्यस्थस्मृतेरिति भावः । श्रुतिविरोधनिरासकतया भाष्यं व्याख्यातुमवतारयति ॥ न च मनसश्चेति ॥ भाष्ये चराचरेष्वित्युक्तबहुवचनोपपत्तये चराचरशब्दितमनोविज्ञानशब्दार्थानाह ॥ मनःशब्दो हीति ॥ भाष्यमिदानीं व्याचष्टे ॥ अयं चेति ॥ मनसश्च विज्ञानमिति व्यपदेश इत्यर्थः । चराचरेष्वित्यस्यार्थः साधारणमनोविज्ञानराश्योरिति । चरशब्देन चंचलत्वान्मनोरूपमिंद्रियं मनोवृत्तिरूपं ज्ञानं च गृह्यते । अचरशब्देनाचंचलत्वान्मनस्तत्वं विज्ञानतत्वं च गृह्यते इति भावः । भागापेक्षया स्यादित्यादेरर्थः इंद्रियेत्यादि । तथा च मनसश्च विज्ञानमित्यस्य मनसो मनोरूपांतरिंद्रियाद्विज्ञानं वृत्तिरूपज्ञानमुत्पन्नमित्यर्थः । ननु मनसो विज्ञानानुत्पत्तिरेवास्मिन्पक्षेऽपि बाधिकेत्यत आलोचनाद्विज्ञानं भवतीति भाष्यमवतारयति ॥ न चेंद्रियादीति ॥ तल्लिगस्य तु चराचरव्यपाश्रयविज्ञानादिनियतत्वेनैव (विषयत्वेनैव). सावकाशत्वादिति न्यायविवरणरीत्या चराचरेष्वित्येतदत्रापि जंगमस्थावरार्थकं सद्विषयसप्तम्यंततयान्वेतीति भावेन व्याचष्टे ॥चराचरविषयेति॥ भाष्यस्य सूत्राविसंवादाय तद्भावभावित्वादित्यंशार्थमाह ॥ मनोभावेनेत्यादि ॥ अत इति ॥ श्रुतेरन्यविषयतया सावकाशत्वादित्यर्थः । सूत्राक्षरार्थस्तु चंद्रिकायां स्पष्टः । तंत्रदीपिकायां चास्माभिर्विवृतः ॥ इत्यत आहेति ॥ स्मृतौ विज्ञानतत्वान्मनस्तत्वजन्मोक्तेस्तद्विरोधापत्तेर्न तत्वविषयं श्रुतिवाक्यमिति भावः। अंतस्तद्व्यक्त्यपेक्षयेति भाष्यं प्रकृतानुपयोगीत्याशंक्य मैवं तत्वानां पूर्वसृष्टिर्हि परादव्यक्तमिति स्मृत्युक्तमिति स्मृत्युक्तक्रमेणैव क्वचित्तत्वानामेवायं पूर्वपक्ष्यभिप्रेतो विपरीतक्रमः श्रूयते चेत्सा श्रुतिर्ब्रह्मांडांतःसृष्ट्यभिप्राया बहुश्रुतिसंग्राहकरूपस्मृतिस्तु बाह्यसृष्ट्यभिप्राया । यद्वा विपरीतक्रमश्रुतिः ज्ञानिन प्रति स्वदेहे तत्वाभिमानिदेवतानामापरोक्ष्यक्रमाभिप्राया । द्वार-

पालदर्शनानंतरं राज्ञ इवाधमदेवतादर्शनानंतरं अंते हरिदर्शनादिति परिहारद्वयोक्त्यर्थत्वादुत्तरभाष्यस्येत्यभिप्रेत्य व्याचष्टे ॥ अथ क्वचित्तत्वानामेवेति ॥ अभिव्यक्तौ सृष्टौ ॥ अत इति ॥ मनसश्चेति श्रुतेरन्यपरत्वादित्यर्थः ॥ १६ ॥ अ० ९ ॥

सूत्रभाष्यम्—

॥ ॐ नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॐ ॥ १७ ॥

'स इदं सर्वं विलाप्यान्तस्तमसि निलीनस्तद्विलाप्य व्युत्तिष्ठते स इदं सर्वं विसृजति विलापयति विस्थापयति प्रस्थापयत्याच्छादयति प्रकाशयति विमोचयत्येक एव' इति श्रुतेः परमात्माऽपि न लीयते । अश्रुतत्वाद्ब्रह्मलयस्य । निलीनशब्देनापिहितत्वमुच्यते । तुच्छेनाऽभ्वपिहितं यदासीत्, इति श्रुतेः । 'स एतस्मिंस्तमसि निलीनः प्रकृतिं पुरुषं कालं चानुपश्यति नैनं पश्यति कश्चन' इति पैङ्गिश्रुतिः । 'नित्यो नित्यानां चेतनश्चेतनानाम्' (कठ. उ. ५-१३.) 'स नित्यो निर्गुणो विभुः परः परमात्मा' । 'नित्यो विभुः कारणो लोकसाक्षी परो गुणैः सर्वदृक् शाश्वतश्चे'त्यादि श्रुतिभ्यो नित्यत्वाच्च ॥ १७ ॥ इति आत्माधिकरणम् ॥ १० ॥

तत्वप्रकाशिका—

अत्र परमात्मनि श्रुतिसमन्वयसिद्ध्यर्थं तल्लयविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसंगतिः । सकलजगज्जन्मादिकर्ता परमात्मेत्युक्तम् । तस्य च लयप्राप्तौ तदनुपपत्तेरसौ निरसनीयः । सर्वोत्पत्तिलयकर्तृत्वेन प्रकृतः परमात्मा विषयः । लीयते न वेति संदेहः । 'नित्यो नित्यानाम्' 'अन्तस्तमसि निलीन' इति श्रुतिविरोधः संदेहबीजम् । तत्र सूत्रमुपन्यस्य पूर्वपक्षं सूचयन्व्याचष्टे ॥ नात्मेति ॥ परमात्माऽपि लीयत एव । 'तमसि निलीन' इति श्रुतेः । न चेयं श्रुतिर्नेश्वरविषयेति वाच्यम् । स इदं सर्वं विसृजतीत्यादितल्लिङ्गात् । न चास्ति श्रुत्यन्तरमपीति वाच्यम् । विष्णुर्लयवांश्चेतनत्वाज्जीववदिति युक्तिसाहित्येन लयश्रुतेः प्राबल्यात् । न च वक्तव्यं स्वातन्त्र्यहेतुना परमात्मनोऽनुपपत्तेरुक्तत्वात्कथं लय इति । स्वतन्त्रस्यापि लीलया विग्रहग्रहणपरित्यागोपपत्तेः । अतः सयुक्तिकश्रुतिविरोधेनान्यश्रुतेरप्रामाण्यान्नोक्तसमन्वयो युक्त इति न वाच्यम् । कस्यामपि श्रुतौ ब्रह्मलयस्याश्रुतत्वादिति भावः । प्रस्थापयति प्रेरयति । आच्छादयत्यज्ञानेन । ननु 'अन्तस्तमसि निलीनः' इति ब्रह्मलयस्य श्रुतत्वात्कथमुच्यतेऽश्रुतत्वमित्यत आह ॥ निलीनेति ॥

कुतो निलीनश्रुतिरपिहितत्वपरेत्यत आह ॥ तुच्छेनेति ॥ अस्यां श्रुतौ 'नासदासीत्' इत्यादिना सर्वस्य लयमुक्त्वा तम आसीदिति प्रकृतेरवस्थानमभिधाय ब्रह्मणस्तदपिहितत्वं पुनः प्रादुर्भावश्चोच्यते। अतस्तत्समाख्यानादत्रापि निलीनशब्दोऽपिहितत्वार्थ एवेति भावः। ब्रह्मणो निलीनत्वमपिहितत्वमेवेत्यत्र श्रुतिं चाह ॥ स इति ॥ निलीन इत्युक्त्वा पुरुषादीन्स्वयं पश्यति नैनं पश्यति कश्चनेति वचनान्निलीनशब्दोऽपिहितार्थे प्रयुक्त इति ज्ञायत इति भावः। किमर्थमेवं निलीनश्रुतेरर्थान्तरं परिकल्प्यते लय इत्येवार्थः किं न स्यात्। समाख्यादीनां श्रुतेर्दुर्बलत्वात्। न च श्रुत्यन्तरबलात्। तस्याप्रामाण्योपपत्तेरित्यत आह ॥ नित्य इति ॥ नित्यत्वश्रुतिविरोधादर्थान्तरमेव युक्तम्। न च तदप्रामाण्यम्। बाहुल्येन प्राबल्यात्। न च सयुक्तिकाया अपि प्राबल्यम्। श्रुतिविरुद्धयुक्तेः स्वयममानत्वादिति भावः। गुणैर्गुणेभ्यः। न चोदाहृतश्रुतीनां स्वरूपविषयत्वं वाच्यम्। 'नित्यो नित्यानाम्' इति देहनित्यत्वस्याप्युक्तत्वात्। अतः श्रुत्यविरोधेन परमात्मलयस्य निरस्तत्वाद्युक्तस्तस्मिन् श्रुतिसमन्वय इति सिद्धम् ॥ १७ ॥ अ० १० ॥

भावदीपः—

॥ ॐ नात्माऽश्रुतेः० ॐ ॥ १७ ॥ चितायाः फलमाह ॥ सकलेति ॥ अत्रैवैतद्विचारे किं निमित्तमित्यत आह ॥ सर्वोत्पत्तीत्यादि ॥ तथा चात्रैवावसरप्राप्तोऽयं विचार इति भावः। इति श्रुतेः परमात्मापि न लीयत इत्युक्तेर्विरोधनिरासायाह ॥ पूर्वपक्षं सूचयन्निति ॥ तथैव भाष्यं व्याचष्टे॥ परमात्मापीति ॥ भाष्ये तमसि निलीन इत्येतावत्येव वाच्ये शेषोक्तेरुपयोगं शंकापूर्वमाह ॥ न चेयमिति ॥ चेतनत्वसाम्याद्विष्णोरपि देहलय इत्यन्यत्रोक्तयुक्तिं शंकापूर्वं व्यनक्ति ॥ न चास्ति श्रुत्यंतरमिति ॥ नित्यो नित्यानामित्येतदित्यर्थः। ननूत्पत्तिमत्वाल्लीयंत इति सिद्धमिति प्रागुक्तन्यायेनेश्वरस्याप्यसंभवस्त्विति नये पराधीनविशेषावाप्त्यभावरूपानुत्पत्तिमत्त्वोक्त्यैव लयाभावोऽपि सिद्ध इति तेनैवेदं गतार्थमित्याशंक्य निराह॥ न च वक्तव्यमित्यादिना ॥ अत इति ॥ लयश्रुतेः प्राबल्यादित्यर्थः ॥ छ ॥ भाष्यादिस्थनञोऽन्वयमाह ॥ इति न वाच्यमिति ॥ एतेन सूत्रे तमसि निलीन इति श्रुतेरात्मा लीयत इति न। अश्रुतेरिति पूर्वस्मादिति पदानुवर्तनं न प्रकृतलयान्वयेन च योजना सूचिता। अर्थतस्समाख्यात्वद्योतनाय तुच्छेनेति श्रुतेः संक्षेपेणार्थमाह ॥ अस्यामिति ॥

आनुमानिकनये तदनन्यत्वनये चैषा श्रुतिरर्थतः सम्यग्व्याख्यातेति भावः ।। प्रादुर्भावश्चेति ।। तपसस्तन्महिनाजायतेति शेषेणेति भावः । अत एव भाष्ये स इदं सर्वं विलाप्येति व्युत्तिष्ठत इति च पूर्वोत्तरशेषोक्तिरर्थसाम्यद्योतनाय कृता । अत इति अर्थतः साम्यादित्यर्थः । यथा पुरुषविधमपि चैनमधीयत इत्यर्थतः पुरुषसूक्तसमाख्यानाद्वैश्वानरविद्योक्तो विष्णुरेवेत्युक्तं वैश्वानरनये पुरुषविधमपि चैनमधीयत इति सूत्रे तद्वदिति भावः ।। समाख्यादीनामिति ।। प्रकृते समाख्यामात्रत्वेऽप्येवमुक्तिः शब्दादेवेत्यत्रोक्तन्यायस्मारणार्था । अत एव लिंगादीनामित्यनुक्त्वा प्रकृतसमाख्यापूर्वकतया लिंगादेर्ग्रहणम् । श्रुतेर्निलीनशब्दादित्यर्थः ।। श्रुत्यंतरेति।।नित्यो नित्यानामिति श्रुत्यंतरेत्यर्थः । अर्थांतरं परिकल्प्यत इत्यनुषंगः । कथमुक्ताशंकानिरास इत्यतो बहुवचनतात्पर्यमाह ।। नित्यत्वेति ।। गुणैरुत्कृष्ट इति भ्रमनिरासायाह ।। गुणैर्गुणेभ्य इति ।। सत्त्वादिभ्य इत्यर्थः । सर्वे वा एते चिदात्मानो ब्रह्मंल्लयमनुप्राप्य विष्णोरुदरे संविशंतीति तस्योदरे सर्वसंग्रहादिति श्रुतिभ्यो नित्यत्वावगमाच्च तद्देहस्येत्यन्यत्रोक्त्यनुरोधेन नित्यो नित्यानामिति श्रुत्युक्तेर्भावं शंकापूर्वमाह ।। न चोदाहृतेति ।। स्वरूपतो नित्यानामपि सकाशान्नित्यत्वोक्तिर्देहतोऽपि नित्यत्वाभिप्रायेति भावः । जगृहे पौरुषं रूपमित्यादि तु प्रथमस्कंधतात्पर्ये जगृह इति तु व्यक्तिरिति चतुर्थगीताभाष्ये च व्याख्यातम् । तथा ब्रह्मशापोपसंसृष्टे स्वकुले यादवर्षभः । प्रेयसीं सर्वनेत्राणां तनुं स कथमत्यजत् । त्वं ब्रह्म परमं व्योम पुरुषः प्रकृतेः परः । अवतीर्णो हि भगवान्स्वेच्छोपात्तपृथग्वपुरित्यादिपुराणवाक्यानि तु एकादशस्कंधतात्पर्यादौ सम्यग्व्याख्यातानीति भावः ।। अत इति ।। निलीनश्रुतेर्नित्यत्वश्रुतिबाहुल्येनापिहि तत्वार्थत्वादित्यर्थः ।। १७ ।। अ० १० ।।

सूत्रभाष्यम्—

'नित्यो नित्यानामि'ति (कठ. उ. ५–१३) जीवस्यापि नित्यत्वमुक्तम् । 'सर्व एते चिदात्मानो व्युच्चरन्ती'त्युत्पत्तिरुच्यते । अतो विरोध इत्यत आह—

॥ ॐ ज्ञोऽत एव ॐ ॥ १८ ॥

जीवोऽप्यत एव परमेश्वरादुत्पद्यते । शब्दादेव । 'ते वा एते चिदात्मानोऽविनष्टाः परं ज्योतिर्निविशन्त्यविनष्टा एवोत्पद्यन्ते न विनश्यन्ति कदाचने'ति च कापायणश्रुतिः ॥ १८ ॥

तत्वप्रकाशिका—

एवमधिभूताधिदैवपरमात्मविषयश्रुतिविरोधे निरस्तेऽत्र हरौ श्रुतिसमन्वयसिद्ध्यर्थं जीवजन्मविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसंगतिः । सर्वजगत्कर्ता विष्णुरित्युक्तम् । तत्र जीवस्यानादित्वे तदनुपपन्नमिति तद् दूष्यं भवति । सर्वमध्यपतितो जीवोऽत्र विषयः । किमुत्पद्यते न वेति संशयः । संशयबीजं श्रुतिविरोधं दर्शयति ॥ नित्य इति ॥ नित्यत्वादेवानुत्पत्तिरिति भावः । व्युच्चरन्ति उत्पद्यन्ते । न जीव उत्पत्तिमानिति पूर्वः पक्षः । अनादित्वादीश्वरवत् । न च साध्याविशिष्टता हेतोः । प्रागभावशून्यताया विवक्षितत्वात् । न च तत्र विवादः । उत्पत्तेरेवाभावप्रसङ्गात् । कारणशून्यतां वाऽनादित्वं ब्रूमः । न च तत्रापि विवादः । कारणानुपलब्धेरेव । न चाकाशादीनामेवंभूतानामप्युत्पत्तिमत्त्वेन व्यभिचारः असंप्रतिपत्तेः । श्रुतिश्चास्यानुत्पत्तिं ब्रूते । न च श्रुत्यन्तरविरोधः । अनादित्वश्रुतेर्युक्त्युपेतायाः प्राबल्यात्तद्विरोधेनाप्रामाण्यात् । न च देहादेरुत्पत्तेः प्रत्यक्षसिद्धत्वाद्बाधः । व्यधिकरणत्वात् । अतो न जगत्कारणे ब्रह्मणि श्रुतिसमन्वयसिद्धिरित्येवं प्राप्ते सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ जीवोऽप्युत्पद्यत एव । स चेश्वरादेव श्रुतिसिद्धत्वात् । न चानादित्वश्रुत्यादिविरोधः । नित्यत्वाविरोधेनैवोत्पत्तेः श्रुत्युक्तत्वादिति भावः ॥ १८ ॥

भावदीपः—

॥ ॐ ज्ञोऽत एव ॐ ॥ १८ ॥ एवं सूचीकटाहन्यायेनाल्पमधिभूतादि विचारं कृत्वाऽधुनाऽऽपादसमाप्ति बहुजीवविचारः क्रियते इति भावेन संगतिमाह ॥ एवमिति ॥ ॥ जीवजन्मेति ॥ जीवजन्मविषये यः श्रुतिविरोधस्तत्परिहारादित्यर्थः । वियन्नयाद्विशेषाशंकानिरासपूर्वमिति योज्यम् । तेन ततोऽगतत्वं बोध्यम् । चिंताफलं दर्शयति ॥ सर्वेति ॥ सर्वकर्तृत्वाक्षेपसौकर्यायाऽऽह ॥ सर्वमध्येत्यादिना ॥ कथं जन्मश्रुतेर्नित्यत्वश्रुतिविरोध इत्यत आह ॥ नित्यत्वादेवेति ॥ जन्मादिसूत्राक्षेपार्थं वक्ष्यमाणनित्यत्वश्रुतेरुत्पत्तिश्रुतितः प्राबल्यायानादित्वाज्जीवस्य पराधीनविशेषाप्राप्तिरित्यन्यत्रोक्तां युक्ति उपपादनसापेक्षत्वात्पूर्वमाह ॥ अनादित्वादिति ॥ न च साध्येति ॥ यद्यपीयं शंका न न्यायविवरणोक्तसाध्ये संभवति । तत्रानादित्वादित्यस्य स्वरूपोत्पत्तिशून्यत्वादित्यर्थसंभवात् । तथापि न जीव उत्पत्तिमानिति प्रागुक्तस्वरूपोत्पत्त्यभावरूपसाध्य एवेयं शंका । न्यायविवरणेऽप्येवमेव साध्यस्य विवक्षितत्वात् पराधीनविशेषाप्राप्तिरित्युक्तिकृत्यमग्रे विवरिष्यामः ॥ प्रागभावेति ॥ प्रागभावशून्यत्वरूपहे

तोर्विवक्षितत्वादित्यर्थः। हेतोरसिद्धिमाशंकते ॥ न च तत्रेति ॥ नित्यो नित्यानामिति श्रुतिप्रमितेऽपि प्रागभावशून्यत्वे विवादश्चेत् घटादेरपि उत्पत्तिर्लोकप्रसिद्धापि न स्यादित्याह ॥ उत्पत्तेरेवेति ॥ यद्वा अनुत्पत्ताविव प्रागभावशून्यतायामपि विवाद एव तयोरभेदादिति भावेन शंकते ॥ न च तत्रेति ॥ प्रागभावशून्यत्वमनुत्पत्तितोऽन्यदित्यत्रापीत्यर्थः। प्रागभावशून्यत्वमनुत्पत्तितोऽन्यन्न चेत्प्रागभाव उत्पत्तितोऽन्यो न स्यात्तथा च प्रागभावहीनस्यात्मलाभरूपोत्पत्तिरेव न स्यादित्याह ॥ उत्पत्तेरेवेति ॥ ॥ एवंभूतानामपीति ॥ स्वरूपोत्पत्तिमत्त्वेनाश्रुतानां प्रत्युतानुत्पत्तिमत्त्वेन श्रुतानामपीत्यर्थः ॥ असंप्रतिपत्तेरिति ॥ उत्पत्तिमतां भूताकाशादीनां कारणशून्यत्वे कारणशून्यानां चाव्याकृताकाशादीनामुत्पत्तिमत्त्वे असंप्रतिपत्तेरित्यर्थः। तथा च न व्यभिचार इति भावः। यद्वा कारणशून्यानामप्यव्याकृताकाशादीनां वियन्नयोक्तरीत्या पराधीनविशेषावाप्तिरूपोत्पत्तिमत्त्वेन व्यभिचार इति शंकायां पराधीनविशेषावाप्तेरुत्पत्तिमत्त्वे जन्मश्रुतेस्तादृशोत्पत्त्यर्थकत्वेनानुत्पत्तिश्रुतीनामपीश्वरवत्तादृशोत्पत्त्यभावपरत्वमेव स्यात्। अनेकार्थत्वस्यान्याय्यत्वात्। तथा चोत्पत्त्यनुत्पत्तिश्रुतीनां पुनरापन्नो विरोध इति भावेनाह। ॥ असंप्रतिपत्तेरिति ॥ पराधीनविशेषावाप्तिरूपोत्पत्तेरव्याकृतादावसंमतेरित्यर्थः। एतेन वियन्नय एवोपलक्षणतया जीवस्याप्युक्तरूपोत्पत्तिसिद्धेर्व्यर्थोऽयमारंभ इति निरस्तम्। तस्यैवासंप्रतिपत्तेरित्याक्षेपात्। अनेनैव पूर्वाक्षेपाभिप्रायेण न्यायविवरणे अनादित्वाज्जीवस्यानुत्पत्तिरिति वाच्ये पराधीनविशेषाप्राप्तिरित्युक्तम्। ननु विश्वकर्तृत्वश्रुतेरनादित्वादित्युक्तिविरोधो युक्तिपादे संगत इत्यतो भाष्योक्तमाह ॥ श्रुतिश्चेति ॥ नित्यो नित्यानामिति श्रुतिश्चेत्यर्थः। युक्तिस्तु श्रुतिप्राबल्यायोक्तेति भावेनाह ॥ युक्त्युपेताया इति ॥ उपाध्युत्पत्तौ तदुपाधिको जीवोऽप्युत्पद्येतेति भावेन शंकते ॥ न चेति ॥ बाध इति ॥ युक्तेः श्रुतेश्चेत्यर्थः। न देहादिर्जीवोपाधिः किं त्वन्य एवानादिरिति भावेनाह ॥ व्यधिकरणत्वादिति ॥ तथा च वक्ष्यति यावदात्मभावित्वाच्चेत्यत्र ॥ अत इति ॥ अनादित्वेन श्रुतजीवादेः सर्वस्योत्पत्त्यभावेन तज्जन्मश्रुतीनामप्रामाण्यादित्यर्थः ॥ छ ॥ जन्माद्यसिद्धौ परमेश्वरादित्युक्तिरयुक्तेत्यतो वाक्यभेदेन भाष्यं व्याचष्टे ॥ जीवोऽपीति ॥ न केवलं वियदादीत्यपेरर्थः ॥ स चेति ॥ उत्पद्यमानश्चेश्वरादेवोत्पद्यत इत्यर्थः। सूत्रे जानातीति ज्ञः। इगुपधज्ञाप्रीकिरः क इति ज्ञशब्दो जीववाची। अत एवेति पूर्वसूत्रप्रकृतपरमात्मपरामर्श इति भावः। पूर्वं प्रकृतश्रुतिपरामर्शि चात एवेति पदमिति भावेन शब्दादेवेति

भाष्यार्थमाह ॥ श्रुतिसिद्धत्वादिति ॥ ते वा एत इति भाष्योक्तश्रुतिसिद्धत्वादित्यर्थः। श्रुतावुत्पद्यंत इत्येव पूतौ शेषोक्तेरुपयोगमाह॥ न चानादित्वेति ॥ युक्तिरादिपदार्थः। अनादित्वस्याविरोधादित्यन्यत्रोक्त्यनुरोधेन श्रुत्युक्तितात्पर्यमाह ॥ नित्यत्वेति ॥ ॥ १८ ॥

सूत्रभाष्यम्—

॥ ॐ युक्तेश्च ॐ ॥ १९ ॥

नित्यस्यापि हि जीवस्योपाध्यपेक्षयोत्पत्तिर्युज्यते ।

'उत्पद्यन्ते चिदात्मानो नित्यान्नित्याः परात्मनः ।
उपाध्यपेक्षया तेषामुत्पत्तिरपि गीयते' इति च व्योमसंहितायाम् ॥ १९ ॥

॥ इति ज्ञाधिकरणम् ॥ ११ ॥

तत्वप्रकाशिका—

नन्वनादिनित्यस्य जीवस्योत्पत्तिः श्रुतावपि कथं युज्यते । नित्यत्वमभ्युपेत्योत्पत्तिवचनस्य वन्ध्यात्वमभ्युपगम्य मातृत्ववचनेन साम्यादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ युक्तेश्चेति ॥ युक्ता चानादेरपि जीवस्योत्पत्तिः तदुपाधेरुत्पत्तेः। न चैवं जीवोत्पत्तिरित्युपचारमात्रं स्यात् । पराधीनविशेषलाभस्योत्पत्तेरत्र विवक्षितत्वादिति भावः । अत्र स्मृतिसंमतिमाह ॥ उत्पद्यन्त इति ॥ अतः श्रुत्यविरोधेन जीवस्य ब्रह्मजातत्वसिद्धेर्युक्तस्तत्र श्रुतिसमन्वय इति सिद्धम् ॥ १९ ॥ अ० ११ ॥

भावदीपः—

॥ ॐ युक्तेश्च ॐ ॥ १९ ॥ पराधीनविशेषवत्त्वेऽपीति न्यायविवरणोक्तं व्यावर्त्यशंकापूर्वमाह ॥ न चैवमित्यादिना ॥ अत्रेति ॥ पराधीनविशेषलाभरूपोत्पत्तिमत्त्वे इत्यर्थः । एतेन जन्मश्रुतेरुक्तरूपोत्पत्त्यर्थत्ववत् अजन्मश्रुतेरुक्तरूपजन्माभावपरत्वापत्त्या विरोधतादवस्थ्यमिति प्रत्युक्तम् । ते वा एत इति उत्पद्यंत इति श्रुतिस्मृतिविरोधेनाजन्मश्रुतेरुक्तरूपजन्माभावपरत्वायोगेन स्वरूपोत्पत्त्यभावपरत्वस्यैव वाच्यत्वादिति ॥ अत इति ॥ अनादिनित्यत्वाविरोधेनैवोत्पत्तेः श्रुतिस्मृत्युक्तत्वादित्यर्थः ॥ १९ ॥ अ० ११ ॥

सूत्रभाष्यम्—

'व्याप्ता ह्यात्मानश्चेतना निर्गुणाश्च सर्वात्मानः सर्वरूपा अनन्ता' इति काषायणश्रुतौ व्याप्तत्वं प्रतीयते। 'अणुर्ह्येष आत्मा यं वा एते सिनीतः। पुण्यं(च)पापं चे'ति गौपवन (गौतम. पा.) श्रुतावणुत्वमित्यतो विरोध इति । अतो ब्रवीति—

॥ ॐ उत्क्रान्तिगत्यागतीनाम् ॐ ॥ २० ॥

हेतूनां सकाशादणुरेव । 'सोऽस्माच्छरीरादुत्क्रम्यामुं लोकमभिगच्छत्यमुष्मादिमं लोकमागच्छति स गर्भीभवति स प्रसूयते स कर्म कुरुत' इति पौष्यायणश्रुतेः ॥ २० ॥

तत्वप्रकाशिका—

अत्र परमेश्वरे श्रुतिसमन्वयसिद्धयर्थं जीवपरिमाणविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसंगतिः। श्रुतिसमन्वयः पूर्वं हरावुक्तः। जीवपरिमाणविषये च श्रुतीनां विरोधेनाप्रामाण्ये नासौ युक्तः स्यादिति विरोधो निराकार्य एव। प्रकृतो जीव एव विषयः। किं व्याप्तोऽणुर्वेति संशयः। संशयबीजं श्रुतिविगानं दर्शयति ॥ व्याप्ता हीति ॥ सर्वात्मानः सर्वस्यादानादिकर्तारः। सर्वरूपाः पूर्णाः। यं वा एत इति वाक्यशेषोद्धारो जीवत्वज्ञापनार्थः। व्याप्तत्वमणुत्वं च प्रतीयते जीवस्येति शेषः। जीवो व्याप्त एवेति पूर्वः पक्षः। 'व्याप्ता ह्यात्मानः' इति श्रुतेः। न चेयं श्रुतिर्न जीवविषया बहुवचनविरोधात्। न चेश्वररूपबाहुल्यार्था। बाधकं विना श्रुतेर्बाधयोगात्। न चाणुत्वश्रुतिविरोधः। व्याप्तश्रुतेर्युक्तियुक्ताया बलवत्वात्। तथा हि न तावदणुरात्मा। सर्वदेहगतस्पर्शज्ञानात्। रूपादीनां तत्तदिन्द्रियैर्ज्ञानात्। न चेदं ज्ञानमणावात्मनि संभवति। न हि कश्चिदप्राप्तकरणेन क्रियां निर्वर्तयति। न चात्मा देहपरिमाणः। उक्तदोषत्वात्तत्पक्षस्य। शरीरपरिमाणत्वे चात्मनः शरीरवत्सांशत्वं स्यात्। मध्यमपरिमाणस्य तन्नियमात्। तेषां चांशानां प्रत्येकं चेतनत्वेन विरुद्धादिक्रियं शरीरमुन्मथ्येताक्रियं वापद्येत। न हि युगपदनेकेषामैकमत्यं संभवति। न च समुदायो नाम कश्चिद्धर्मी भवति। न चांशारब्धोंऽशी स्वीकर्तुं शक्यते। अनित्यत्वप्रसङ्गात्। अतः परिशेषादात्मनो व्याप्तत्वमेव सिध्यति। तथा च प्रयोगः। सर्वमिदं मूर्तमात्मनास्पृष्टं मूर्तत्वाच्छरीरवदिति। सयुक्तिकव्याप्तिश्रुतिविरोधादणुश्रुतेरेवाप्रामाण्यम्। तथा च न प्रागुक्तसमन्वयसिद्धिरित्येवं प्राप्ते सिद्धान्तयत्सूत्रमवतार्य तच्छेषमेव पूरयति ॥ अत इति ॥ जीवोऽणुरेव न व्याप्तः। उत्क्रान्तिगत्यागतिमत्त्वात् पतत्रिशरीरवत्। न हि व्याप्तद्रव्यस्य व्योमा-

देरुत्क्रान्त्याद्यस्ति । अतो निराकृतमध्यमपरिमाणस्यात्मनो व्याप्त्यनुपपत्तावणुत्वमेव सिध्यतीति भावः । सतीष्वात्मन उत्क्रान्तिगत्यागतिष भवेद्विभुत्वाभावस्ता एव कुत इत्यत आह ॥ स इति ॥ २० ॥

भावदीपः—

॥ ॐ उत्क्रांति० ॐ ॥ २० ॥ जीवपरिमाणेति ॥ एतेन जीवे धर्मिण्युत्पत्त्यनुत्पत्तिचिंतानंतरं परिमाणरूपतद्धर्मचिंताऽत्रेति पूर्वसंगतिरपि सूचिता ॥ नासौ युक्त इति ॥ अभ्युपगतार्थद्वये अन्यतरार्थे अप्रामाण्यप्राप्तावन्यार्थेऽप्यनाश्वासप्रसंगादिति वियन्नयोक्तरीत्येति भावः । व्याप्ता ह्यात्मान इत्येतावति वाच्ये शेषोक्तिः सिद्धांतानुगुण्याय ब्रह्मलिंगानि सूचयितुमिति भावेन अपुनरुक्त्यै अर्थमाह ॥ सर्वात्मना इति ॥ भाष्येऽणुत्वमित्यस्य पूर्वक्रियापदेनान्वयं शेषं चाह ॥ व्याप्तत्वमिति ॥ भाष्यसूचितां युक्तिमाह ॥ बहुवचनेति ॥ एकमेवाद्वितीयमिति स्वगतभेदहीने हरौब हुत्ववाचिबहुवचनायोगादित्यर्थः । ननु गुहां प्रविष्टावात्मानावित्यत्रोक्तन्यायेन न संख्योपसंग्रहादपि नानाभावादित्यत्रोक्तन्यायेन वा ऋतं पिबंतौ यस्मिन्पंच पंचजना इत्यादौ द्विवचनबहुवचनयोरिवेदमपि बहुवचनं युक्तमिति शंकते ॥ न चेश्वरेति ॥ बाधकं विनेति ॥ बहुत्वादिसंख्या स्वाश्रयगतभेदव्याप्तेत्यस्यौत्सर्गिकत्वेन तत्र ब्रह्मश्रुतिगुहास्थत्वप्राणप्राणदत्वादिलिंगादिना बाधकेन तथात्वेऽपि इह तादृशबाधकाभावादित्यर्थः । नामानि सर्वाणीत्यादीनि तु सामान्यानि न त्वसाधारणानि । स आत्मेदं सृजतीति विष्णुप्रकरणं तु न बहुवचनश्रुतिबाधायालमिति भावः । पृथिव्यधिकारेत्यत्र प्रकरणेनान्नश्रुतिबाधस्तु निरवकाशरूपादिसाहित्यात् । स्वशब्दोन्मानत्वे चात्र व्याप्ते जीवेऽपि कथंचिद्युक्ते इति भावः । न च गौणश्चेन्नात्मशब्दात् साधारणशब्दविशेषात् स्वशब्दादेत्युक्तदिशा विष्ण्वेकनिष्ठात्मपदप्रातिपदिकस्वारस्यानुरोधेन प्रत्ययबाधो युक्त इति शंक्यम् । असदिति चेत् एतेन शिष्टेत्यादौ भाष्योक्तदिशान्यवाचकस्यापि सत्त्वेन तत्परिग्रहे प्रत्ययस्वारस्यस्यापि भावादिति तात्पर्यात् । अत एवोक्तं श्रुतेर्बाधायोगादिति । अन्यत्रोक्तयुक्तिमत्र योजयितुं व्यावर्त्यशंकामाह ॥ न चेति ॥ ॥ विरोध इति ॥ बाधक इत्यनुषंगः । तथा च बाधकाभावोऽसिद्ध इति भावः । सर्वदेहस्पर्शज्ञानाद्रसादीनां तत्र तत्र परिज्ञानात् जीवस्यानणुत्वमिति न्यायविवरणे जीवस्य व्याप्तत्वमिति वाच्येऽनणुत्वमित्युक्तेर्भावं वदन् युक्ति व्यनक्ति ॥ तथा

हि न तावदित्यादिना ।। सर्वेति ।। कमनीयतनयालिंगनेन सर्वांगीणसुखानुभवस्य विश्वजनीनत्वादस्ति सर्वदेहगतस्पर्शज्ञानमिति भावः ।। रूपादीनां चेति ।। शष्कुलीं भक्षयतो रूपरसगंधस्पर्शशब्दानां युगपदेव चक्षुरादिभिरिंद्रियैर्ज्ञानस्यानुभवसिद्धत्वादित्यर्थः । न चेत्युक्तं व्यनक्ति ।। न हीति ।। चक्षुरादिकरणैरात्मनो युगपत्प्राप्तिश्चाणुत्वे न युक्तेति भावः । ननूक्तयुक्तेरणुत्वाभावसाधकत्वेऽप्यात्मनो मध्यमपरिमाणत्वेनाप्युपपत्त्या श्रुत्युक्तव्याप्तत्वासाधकत्वेन न श्रुतिप्राबल्यापादकत्वं युक्तेरित्यतः परिशेषसहकृतायास्तत्साधकत्वमिति भावेनाह ।। न चात्मेति ।। उक्तेति ।। एवं चात्माकार्त्स्न्यम् न च पर्यायादप्यविरोधो विकारादिभ्य इति समयपादोक्तदोषत्वादित्यर्थः । स्वयं दोषांतरमाह ।। शरीरपरिमाणत्वे चेति ।। शरीरवदिति ।। यथा शरीरं परस्परं भिन्नैरात्मना प्रत्येकं भिन्नाभिन्नैः कृत्स्नैश्चाभिन्नैरंशैरुपेतं तथाऽऽत्मापि तादृशैरंशैरुपेतः स्यादित्यर्थः ।। तन्नियमादिति ।। घटादौ दर्शनादिति भावः । एतत्प्रपंचनं च सिद्धांतेऽप्यविरोधश्चंदनवदित्यात्मनोऽभिप्रेतं सांशत्वमात्मना परस्परं च सविशेषाभिन्नैरंशैरुपेतत्वमिति वैलक्षण्यं द्योतयितुमित्याहुः । शरीरोन्मथनादिदोषनिरासाय शंकते ।। न च समुदाय इति ।। यथा नानावृक्षसमुदायो वृक्षेभ्योऽन्यो नास्ति तथेत्यर्थः । तंतुपटयोरिव स्यादित्यत आह ।। न चेति ।। अत इति ।। अणुत्वमध्यमपरिमाणत्वयोरयोगादित्यर्थः । जीवस्याणुत्वेऽपि इंद्रियाणां व्याप्तत्वेन रूपादिज्ञानं युक्तमिति तु अणवश्चेति वक्ष्यमाणदिशेंद्रियाणामप्यणुत्वान्निरस्तप्रायं मत्वाऽऽह ।। परिशेषादिति ।। तथा चेति ।। एवमनुकूलतर्के सतीत्यर्थः ।। छ ।। मध्यमपरिमाणत्वेऽप्युपपत्त्याऽप्रयोजका हेतव इत्यतः शेषपूर्त्या तात्पर्यतो भाष्यसूत्रयोरर्थमाह ।। जीवोऽणुरेवेति ।। ज्ञइत्यापादसमाप्त्यनुवर्तत इति भावः । हेतोरप्रयोजकत्वादि निराह ।। न हीति ।। पूर्वोत्तरदेशे विभागजनकक्रियावत्त्वरूपमुत्क्रमणादिकं सर्वदा सर्वदेशविभागरहिते व्योमादौ न युक्तमित्यर्थः । ननु व्याप्तस्यापीश्वरस्य भूमा संप्रसादादित्यत्रोत्क्रमणमुक्तम् । यथोक्तं भाष्ये तमुत्क्रामंतं प्राणोऽनूत्क्रामतीत्यादिना नोत्क्रमणलिंगविरोधोऽपीति । तथा ज्योतिर्दर्शनादित्यत्र गत्यागती चोक्ते । स समानः सन्नुभौ लोकावनुसंचरतीति ज्योतिःप्रकरणस्थवाक्ये तयोः प्रतीतेः । उक्तं च तत्र भाष्ये । प्राज्ञेनात्मनान्वारूढ उत्सर्जन्यातीति वचनात्तस्यापि लोकसंचरणमस्त्येवेति । न च हृत्स्थरूपापेक्षयोत्क्रांत्यादयो न व्याप्तरूपापेक्षयेति शंक्यम् । दहरनये अल्पश्रुतेरिति चेत्तदुक्तमिति सूत्रे एष म आत्मांतर्हृदये ज्यायानिति

श्रुत्या हृत्स्थरूपस्यापि व्याप्तत्वस्य तत्र भाष्य एवोक्तेः । तथा च कथं न हि व्याप्तस्य ते युक्ता इत्युक्तिरिति चेत् उच्यते । व्याप्तस्येत्यस्य केवलमपरिच्छिन्नस्येत्यर्थः । अणुत्वासमानाधिकरणदेशापरिच्छेदयुक्तस्येति यावत् । अतएव व्याप्तस्येत्येवानुक्त्वा व्योमादेरित्यप्युक्तम् । हरे रूपं तु न स्थानत इति वक्ष्यमाणन्यायेन तानि ह वा एतानि सर्वाणि पूर्णानीति असंततेश्चेत्यादौ वक्ष्यमाणश्रुत्या व्याप्तत्वं देशतोऽप्यस्ति सर्वरूपेषु यद्यपि । न च भेदः क्वचित्तेषामणुमात्रोऽपि विद्यते । तथापि विद्यतेऽणुत्वं यस्मादैश्वर्ययोगतः । तस्माद्बुध्यवतारार्थमव्याप्तत्वं च भण्यते । इति तृतीयस्कंधतात्पर्योक्त्या च सर्वं व्याप्तमपि अक्षरनये अन्यभावव्यावृत्तेरित्यत्रोक्तदिशाणुपरिमाणं च भवतीति न दोष इति । ननु च महतोल्पत्वमपि हि व्योमवत्प्राह वेदविदित्यादिना वैशेषिकनयानुभाष्ये व्योमादावप्यणुत्वमहत्त्वयोः समावेशो व्युत्पादित इति चेदेवं तर्हि व्याप्तस्येत्यस्य शक्त्यात्मकतारूपविशेषशून्यव्याप्तिमत इत्यर्थः । हरे रूपे तु अणुत्वमहत्त्वयोः सदासत्त्वेऽपि यदा महत्त्वस्य शक्त्यात्मकताऽणुत्वस्य व्यक्त्यात्मकता तदैवोत्क्रांत्यादिक्रियावत्त्वाभिव्यक्तिरन्यदा तु नेत्युत्क्रांत्यादिमद्भगवतो रूपं शक्त्यात्मकव्याप्तिमदिति न दोष इति भावः । यद्वा भगवद्रूपविशेषे महत्त्वस्य शक्त्यात्मकतादशायां व्याप्तत्वेनाव्यवहारादणुत्वेनैव व्यवहाराद् व्याप्तस्य व्याप्तत्वेनैव प्रसिद्धस्य व्योमादेरित्यर्थः । उक्तं चात्राधिकरणसुधायां सविशेषोऽपि क्रियाशक्त्यात्मना स्थिर इत्याद्यनुभाष्यव्याख्यावसरे व्यक्तिरूपेणैव व्यवहारालंबनत्वादिति । अत एवोक्तं टीकायां हृद्यपेक्षयेत्यत्र भगवन्मूर्तिविशेषस्य व्यक्त्या तन्मात्रपरिमाणत्वादिति । विवृतमेतदसंभवस्त्विति सूत्रे तत्वप्रदीपे । प्रपंचितं च चंद्रिकायां भूमादिनये तथाप्युत्क्रांत्यादेर्मध्यमपरिमाणेप्युपपत्त्याऽप्रयोजकत्वमित्यतः पूर्ववत्परिशेषसहितस्याणुत्वप्रयोजकत्वमिति भावेनाह ॥ अत इति ॥ उक्तहेतूनां सकाशादित्यर्थः । उपपादितं चोत्क्रांत्यादीनां बुद्धिधर्मत्वादिचोद्यनिरासेन जीवाणुत्ववादे न्यायामृतेऽणुत्वं जीवस्य ॥ २० ॥

सूत्रभाष्यम्—

तत्र स्वातन्त्र्यप्रतीतेः—

'एकः प्रसूयते जन्तुरेक एव प्रमीयते ।
एकोऽनुभुङ्क्ते सुकृतमेक एव च दुष्कृतमि'त्यादेश्च ॥

स्वयमेवेत्यतो वक्ति—

## ॥ ॐ स्वात्मना चोत्तरयोः ॐ ॥ २१ ॥

'स एतेनैव स्वात्मना परेणेमं गर्भमनुप्रविशति परेण जायते परेण कर्म कुरुते परेण नीयते परेणोन्नीयते । तं वा एतमभिवदन्ति स्वात्मे'ति । 'एष ह्यानन्दमादत्ते एष ह्येनं जीवमभिजीवयत्येष उद्गमयत्येष गमयत्येष आगमयति' (पौष्यायण श्रुतिः.) इत्युत्तरयोर्वाक्ययोः परमात्मनैवोत्क्रान्त्यादयः ॥ २१ ॥

तत्वप्रकाशिका—

एवमुत्क्रान्त्यादिहेतुभ्यो जीवस्याणुत्वे (स्याव्याप्तत्वे) सिद्धे किंचित्प्रसङ्गाच्चिन्त्यते । किमिदमुत्क्रान्त्यादिकमात्मनः परमेश्वरेण स्वयमेव वेति। किं तावत्प्राप्तमिति तत्राह ॥ तत्रेति ॥ उदाहृतश्रुतौ जीवस्योत्क्रान्त्यादौ स्वातंत्र्यप्रतीतेः स्वयमेव तस्योत्क्रान्त्यादि नेश्वरेणेत्यर्थः । अत्र जीवस्योत्क्रान्त्याद्येव श्रूयते न त्वन्याधीनताया विधिर्निषेधो वास्त्यतो नानेन दृढनिर्णय इत्यत आह ॥ एक इति ॥ स्मृत्यनुसारेण श्रुतेरपि पराधीनत्वनिषेधोऽर्थ इति भावः । एवं प्राप्ते परिहाराय सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ नैतच्छ्रुतिगतसाधारण्योक्त्या जीवस्य स्वयमेवोत्क्रान्त्यादीति मन्तव्यं किं तु परमात्मनैव । उत्तरवाक्यद्वये तथोक्तत्वात् । तदनुसारेण साधारणपूर्ववाक्यस्यापि तदर्थत्वोपपत्तेरिति भावः । स्मृतिस्तु प्रसवादिदुःखानुभवविषयेति हृदयम् । उन्नीयते मोक्षाय । एष ह्येवेति द्वितीयवाक्यं पूर्ववाक्यस्थस्वात्मशब्दं व्याख्याति ॥ २१ ॥

भावदीपः—

॥ ॐ स्वात्मना चोत्तरयोः ॐ ॥ २१ ॥ प्रसंगादिति ॥ प्रस्तुताणुत्वस्योत्क्रांत्यादिमात्रेण सिद्धेरणुत्वसाधकाधिकरणमध्ये स्वातंत्र्यपारतंत्र्यादिचिंता प्रासंगिकीत्यर्थः । तत्रेत्यस्यार्थद्वयमाह ॥ उदाहृतश्रुताविति ॥ उत्क्रांत्यादाविति च । तस्योत्क्रांत्यादीति शेषोक्तिः। नेश्वरेणेत्येवार्थः। विधिरिति दृष्टांततयोक्तम्। परमात्मनैवेत्येवकारव्यावर्त्यं दर्शयन्नेव तत्पदमनुवदति ॥ नैतदित्यादिना ॥ एष जीवः परेणानंदमादत्त इति भ्रमनिरासायाऽऽह॥ एष ह्येवेति ॥ एतेन जीवेन सहेश्वरस्याप्युत्क्रांत्यादिमत्त्वेन जीववद् दुःखं स्यादिति निरस्तम् । आनंदमादत्त इत्यात्मेत्यात्मपदव्याख्यानात् । युक्तिस्तु वैशेष्यादिति प्रागुक्ता ध्येया ॥ २१ ॥

सूत्रभाष्यम्—

॥ ॐ नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॐ ॥ २२ ॥

'व्याप्ता ह्यात्मानश्चेतना निर्गुणाश्चे'ति व्याप्तिश्रुतेर्नाणुर्जीव इति चेन्न । 'स आत्मेदं सृजति स द्विधेदं बिभर्ति अन्तर्बहिश्च । सबहुधेदमनुप्रविश्याऽऽत्मनोऽभिनयति । स आत्मा स आत्मानः स ईशः स विष्णुः स परः परोवरीयानि'ति परमात्माधिकारत्वात् ।

'एकशब्दैर्द्विशब्दैश्च बहुशब्दैश्च केशवः ।

एक एवोच्यते वेदैस्तावता नास्य भिन्नते'ति च भविष्यत्पुराणे ।

'तदयं प्राणोऽधितिष्ठति । तदुक्तमृषिणा— आ तेन यातम्' (ऐ. आ. २-३-८) इत्यादि च ॥ २२ ॥

तत्वप्रकाशिका—

उक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्याऽऽक्षेपांशं तावद् व्याचष्टे ॥ नेति ॥ न जीवोऽणुः 'व्याप्ता ह्यात्मानः' इत्यनणुत्वाभिधायकश्रुतेः । उत्क्रान्त्यादिकं तु मनोगतमात्मन्युपचर्यत इति भावः । परिहारांशं व्याचष्टे ॥ नेति ॥ नैतच्छ्रुतिबलेनात्मनो व्याप्तत्वं वक्तव्यम् । अस्याः श्रुतेः परमात्मविषयत्वात् । 'स आत्मेदं सृजति' इत्यत्र परमात्मनः पठितत्वेनास्यास्तत्प्रकरणत्वात् । एतद्वाक्यस्य विष्णुपरत्वे बहुवचनविरोध इति चेन्न । परमात्मन्येव आत्मान इति बहुवचनश्रवणादिति भावः । अत एवैतच्छ्रुतेरबाधकत्वेनोत्क्रान्त्यादीनामौपचारिकत्वकल्पनं परास्तम् । ईश्वरस्य बहुवचनवाच्यत्वे भेदः स्यादित्यत आह ॥ एकेति ॥ एकस्मिन्ननेकवचनप्रयोगं संप्रतिपन्नस्थले दर्शयति ॥ तदिति ॥ अत्र परमात्मन एकस्यैव शरीराधिष्ठातृत्वमुक्त्वा तत्र द्विवचनयुक्तमन्त्रौ प्रमाणयति श्रुतिरतो निरन्तरेऽपि हरौ बहुरूपत्वापेक्षया बहुवचनं युक्तमिति भावः । हे अश्विनावाशुगती मनसो जवीयसा पटुना तेन शरीराख्येन रथेनायातं शरीरे सन्निहितौ भवतम् । यं रथं युवयोरर्थमेव देवाः कृतवन्तः । यत्संबन्धाच्च जीवस्य भगवत्प्रसादेन विद्योत्पन्नं तत्त्वज्ञानं जीवन्मुक्तिमुक्त्यवस्थे च साध्ये भवत इति प्रथममन्त्रार्थः । निमिषश्चित् चक्षुर्निमेषणादपि वां युवयोः सकाशाद्यदवनं तदस्मदन्तिके भवत्विति द्वितीयार्थः ॥ २२ ॥

भावदीपः—

॥ ॐ नाणुरतच्छ्रुतेः ॥ २२ ॥ उक्तानुमानस्य श्रुतिविरोधोक्तिपरतया भाष्यं व्याचष्टे ॥ नेति ॥ सौत्रातच्छब्दार्थमाह ॥ अनणुत्वेति ॥ भाष्ये व्याप्तिश्रुतेरिति फलितोक्तिरिति भावः । उक्तनिरवकाशहेतूनां व्यधिकरणासिद्धिमाह ॥ उत्क्रांत्यादिकमिति ॥ प्रागुक्तं सर्वं भाष्यं नञाऽन्वेतीति दर्शयति ॥ नैतदिति ॥ तत्र हेतुं स्वयमध्याहृत्य तत्र भाष्यं हेतुत्वेन योजयति ॥ अस्या इति ॥ परमात्मन्येवेति ॥ तत्प्रकारमग्रे वक्ष्याम इति भावः ॥ एतच्छ्रुतेरबाधकत्वेनेति ॥ प्रागुक्तयुक्तिबाधस्त्वग्रे समाधास्यत इति भावः । अत्र द्विवचनांतपदोपेतमंत्रोक्तिरनुपयुक्तेत्यत आह ॥ अनेकवचनेति ॥ तुल्यन्यायतया बहुवचनप्रयोगसिद्धिरिति भावः । व्याचष्टे ॥ अत्रेत्यादिना ॥ प्राण इत्याद्येकवचनप्रयोगादाह ॥ एकस्यैवेति ॥ तदयमित्यादिश्रुतिर्व्याख्याता प्राणस्तथानुगमादित्यधिकरणे ॥ श्रुतिरिति ॥ ऐतरेयोपनिषत् । कथमेतावता निर्भेदे बहुवचनप्रयोगः । बहुत्वस्य भिन्नाश्रितत्वादित्यतो न संख्योपसंग्रहादपि नानाभावादित्यत्रोक्तन्यायं स्मारयति ॥ अत इति ॥ सौत्रप्रयोगान्निर्भेदेपि बहुवचनवाच्यत्वस्य स्मार्तत्वाच्चेत्यर्थः । तत्र प्राणदत्वादिब्रह्मलिंगवदत्रापि प्रागुक्तं ब्रह्मप्रकरणं वक्ष्यमाणे श्रुतिलिंगे च बहुत्वं भिन्नाश्रितमित्युत्सर्गस्यापवादकानीति भावः । आ तेन यातं मनसो जवीयसा रथं यं वामृभवश्चक्रुरश्विना । यस्य योगे दुहिता जायते दिव उभे अहनी सुदिने विवस्वत इति मंत्रं निमिषश्चिज्जवीयसा रथेनायातमश्विना । अंतिषद्भूतु वामवः इति मंत्रं च व्याख्याति ॥ हे अश्विनाविति ॥ तात्पर्यमाह ॥ शरीर इति ॥ वां युवयोरर्थमेव । ऋभवो देवाः । ऋभव इति देवानां साधारणं नामेत्यैतरेयभाष्योक्तेः । यस्य योग इत्युत्तरार्धस्य सम्यग्योगो यदा तस्य मनोवाक्कर्मभिर्भवेत् । देहाख्यस्य रथस्यैतत्तदा नारायणात्प्रभोः । विविधं वासवत्वात्तु विवस्वन्नामकाच्छुभात् । संसारवारकं ज्ञानं दिवो दुहितृनामकम् । विष्णुतत्वापरोक्षाख्यमहनी द्वे च शोभने । ज्ञानावस्थामुक्त्यवस्थे इत्याद्यैतरेयभाष्योक्तरीत्या यस्य योग इत्यनेन देहाख्यरथस्य भगवदर्पणरूपसंबंधः । विवस्वत इत्यनेन भगवान् दिवो दुहितेत्यनेन अपरोक्षज्ञानं सुदिने शोभने अहनी इत्यनेन जीवन्मुक्तिमुक्ती च विवक्षिते इत्यभिप्रेत्यार्थमाह ॥ यत्संबंधादिति ॥ जायत इत्यस्य जायेते इति विपरिणामलब्धार्थः साध्ये भवत इति । भूत्वित्यस्यार्थो भवत्विति ॥ २२ ॥

सूत्रभाष्यम्—

॥ ॐ स्वशब्दोन्मानाभ्यां च ॐ ॥ २३ ॥

'एषो ह्यात्माऽभ्युद्गतो मानशक्तेस्तथाऽप्यसौ प्रमितिं याति वेदैः ।

पूर्णोऽचिन्त्यः सर्ववेदैकयोनिः सर्वाधीशः सर्ववित्सर्वकर्ता' इति

वाक्यशेषे आत्मशब्दोन्मानाभ्यां च ।

'आत्माऽमेयः परं ब्रह्म परानन्दादिकाभिधाः ।

वदन्ति विष्णुमेवैकं नान्यत्राऽऽसां गतिः क्वचिदि' ति च कौर्मे ॥ २३ ॥

तत्वप्रकाशिका—

यदुक्तं व्याप्तिश्रुतिरीश्वरविषया तत्प्रकरणादिति न तद्युक्तम् । प्रकरणमात्रेण दुर्बलेन बहुवचनश्रुतेर्बाधायोगादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ स्वशब्देति ॥ न केवलं प्रकरणबलेनैतच्छ्रुतेरीश्वरपरत्वमुच्यते किं तर्हि वाक्यशेषे श्रुतात्मश्रुतेरपरिमितत्वलिङ्गाच्चेति भावः । मानशक्तेरभ्युद्गतः परिमाणातीतः । प्रमितिं याति ज्ञानविषयो भवति । कुत एतच्छ्रुतिलिङ्गयोर्वैष्णवत्वमित्यत आह ॥ आत्मेति ॥ न च मन्तव्यं 'व्याप्ता ह्यात्मानः' इत्यत्रैवात्मशब्दानन्त्ययोः श्रवणात्किं वाक्यशेषग्रहणेनेति । तत्र बहुवचनसमभिव्याहारवशादन्यार्थताया एव झटिति प्रतिभासात् । वाक्यशेषस्य तु निश्चितत्वादिति ॥ २३ ॥

भावदीपः—

॥ ॐ स्वशब्दोन्मानाभ्यां च ॐ ॥ २३ ॥ चशब्दार्थं व्यंजयन् हेतुतया पूर्वमध्याहृतस्येह साध्यत्वेनान्वयमाह ॥ न केवलमिति ॥ सूत्रे स्वशब्देत्युक्तावपि श्रुतौ स्वशब्दभावात् स्वशब्दादित्यत्रेवात्रापि तात्पर्यादात्मशब्दो ग्राह्य इति भावेनोक्तमात्मश्रुतेरिति ॥ परिमाणातीत इति ॥ मानं ज्ञानं लयश्चेति मर्यादा चापि कथ्यते इति वैश्वानरनयोक्ताभिधानात् मानपदस्य मर्यादार्थत्वादिति भावः । भाष्ये अनौचित्यमाशंक्य निराह ॥ न चेति ॥ २३ ॥

सूत्रभाष्यम्—

॥ ॐ अविरोधश्चन्दनवत् ॐ ॥ २४ ॥

अणोरपि जीवस्य सर्वशरीरव्याप्तिर्युज्यते । यथा हरिचन्दनविप्लु(प्रु)ष एकदेशपतितायाः सर्वशरीरव्याप्तिः ।

'अणुमात्रोऽप्ययं जीवः स्वदेहं व्याप्य तिष्ठति।
यथा व्याप्य शरीराणि हरिचन्दनविप्लु(प्रु)ष' इति च ब्रह्माण्डपुराणे ॥२४॥

तत्वप्रकाशिका—

स्यादेतत्। अथापि न जीवस्याणुत्वं युक्तम्। तत्र तत्र परिज्ञानायोगादित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ अविरोध इति ॥ नाणुत्वेऽपि जीवस्य तत्र तत्र परिज्ञानायोगः। अंशैः शरीरे व्याप्तत्वात् एकदेशपतितचन्दनबिन्दोरंशैः शरीरव्याप्तिवदेवेति भावः। प्रतिदृष्टान्तस्यापि संभवान्न नियामकं विना दृष्टान्तमात्रेणार्थसिद्धिरित्यत आह ॥ अणुमात्रोऽपीति ॥ २४ ॥

भावदीपः—

॥ ॐ अविरोधश्चंदनवत् ॐ ॥ २४ ॥ प्रागुक्तयुक्तिनिरासकतया सूत्रमवतारयति ॥ स्यादेतदिति ॥ सौत्राविरोधशब्दार्थं वदन् सूक्ष्मतेजोरूपेण व्याप्त्या स्पर्शादिपरिज्ञानोपपत्तिरित्यन्यत्रोक्त्यनुरोधेन भाष्यभावाह ॥ नाणुत्वेपीति ॥ तेजोरूपेणेत्येकवचनं समुदायाशयमिति भावेन तस्यार्थोऽशैरिति। परस्परमात्मना च सविशेषाभिन्नैरित्यर्थः। अतो न निरवयवत्वशब्दकोपो वेत्युक्तविरोधः। नापि प्रागुक्तशरीरोन्मथनादिदोषः। एवेति दृष्टांतस्य विश्वजनीनतामाह। स्मृतौ विप्लुषः तिष्ठंतीति विपरिणामेनान्वयो ध्येयः। एतेन अणुत्वेऽपि जीवस्य तत्र तत्र परिज्ञानार्थमंशादिना व्याप्तिर्न वाच्या। अणवश्चेति सूत्रे इंद्रियाणां तेजसा व्याप्तत्वस्य वक्ष्यमाणतया तैरणोर्जीवस्य संबंधसिद्ध्या तत्र तत्र परिज्ञानोपपत्तेरिति निरस्तम्। जीवस्यापि तथात्वस्य स्मार्तत्वादिति ॥ २४ ॥

सूत्रभाष्यम्—

**॥ ॐ अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॐ ॥२५॥**

सम्यगसम्यगवस्थानविशेषाद्युज्यते चन्दनस्येति चेन्न। 'हृदि ह्येष आत्मा'(प्र.उ. ३-६) इति जीवस्यापि तथाऽभ्युपगमात् ॥ २५ ॥

तत्वप्रकाशिका—

उक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्याऽऽक्षेपांशं तावद्व्याचष्टे ॥ अवस्थितीति ॥ न चन्दनबिन्दोरिव स्वरूपतदंशाभ्यां शरीरव्याप्तिरात्मनः। चन्दनबिन्दोः शरीरै-

कदेशे सम्यगवस्थानस्यान्यत्रासम्यगवस्थानस्य चानुभवसिद्धत्वेन तथात्वस्य संभवात्। न ह्यात्मनः क्वचिच्छरीरदेशे सम्यगवस्थानं क्वचिदसम्यगवस्थानमस्ति येन तस्य स्वरूपांशाभ्यां शरीरव्याप्तिं प्रतीम इति भावः। परिहारांशं व्याचष्टे ॥ नेति ॥ न शरीरे सम्यगसम्यगवस्थानाभाव आत्मनो येन दृष्टान्ते वैषम्यं 'हृदि ह्येष आत्मा' इति श्रुतेरात्मनोऽपि चन्दनबिन्दुवत्सम्यगवस्थानाभ्युपगमादिति भावः ॥ २५ ॥

भावदीपः—

॥ ॐ अवस्थितिवैशेष्यात्० ॐ ॥ २५ ॥ भाष्ये युज्यते हरिचंदनस्येत्युक्त्या न जीवस्येत्यर्थाल्लब्धं व्यंजयन् भाष्यं व्याचष्टे ॥ न चंदनेति ॥ भाष्ये नेति नञः प्राचीनभाष्यलब्धेनान्वयमुपेत्य व्याचष्टे ॥ न शरीर इति ॥ २५ ॥

सूत्रभाष्यम्—

॥ ॐ गुणाद्वाऽऽलोकवत् ॐ ॥ २६ ॥

यथाऽऽलोकस्य प्रकाशगुणेन व्याप्तिर्ज्योतीरूपेणाव्याप्तिः एवं चिद्गुणेन व्याप्तिर्जीवरूपेणाव्याप्तिरिति वा। स्कान्दे च—

'असम्यक्सम्यगिति च व्यवस्थाभेदतः सुराः।
व्याप्त्यव्याप्तियुतास्त्वन्ये चिद्गुणेनैव नान्यथा॥
चिद्गुणस्य स्वरूपत्वात्तद्व्याप्तिश्चेति युज्यते।
शक्तियोगात्सुराणां तु विविधा च व्यवस्थितिरि'ति ॥ २६ ॥

॥ इति उत्क्रान्त्यधिकरणम् ॥ १२ ॥

तत्वप्रकाशिका–

एवं स्वरूपतदंशाभ्यामात्मनः शरीरव्याप्त्यव्याप्ती सदृष्टान्तमुक्त्वा प्रकारान्तरेणापि तदुपपादकं सूत्रं पठित्वा व्याचष्टे ॥ गुणाद्वेति ॥ अणोरपि जीवस्य शरीरव्याप्तिश्चिद्गुणस्य व्याप्तत्वेनोपपद्यते। न च गुणिनोऽणुत्वेन गुणस्य व्याप्तिरयुक्ता। आलोकवदुपपत्तेरिति भावः। नन्वालोकस्य द्रव्यत्वात्कथं गुणत्वमुच्यत इति। मैवम्। तद्द्रव्यत्वे मानाभावात्। रूपित्वं मानमिति चेन्न। तेन घटादिरूपस्यैव प्रतीयमानत्वात्। न हि व्योम्नि वर्तमानस्य प्रकाशस्य रूपं गृह्यते। दीपं विहाय वृत्तिः प्रमाणमिति चेन्न। तस्य द्रव्यत्वसाधकताविवादात्। तर्हि कुतस्तद्गुणत्वमिति

चेन्न। तदनुविधानादिनैवेति ब्रूमः। द्रव्यत्वे चालोकः कार्यमकार्यं वा। आद्येऽपि किं दीपकार्यमन्यस्य वा। नाद्यः। कारणं विहाय कार्यवृत्तेरनभ्युपेतत्वात्। न द्वितीयः। दीपप्रकाश इति प्रयोगानुपपत्तिप्रसङ्गात्। कारणान्तरादर्शनाच्च। नान्त्यः। अप्रतीतिप्रसङ्गात्। प्रदीपावयवा एवालोक इति चेन्न। तथा सति प्रदीपानुविधानानुपपत्तेः। न हि जीर्णकन्थातन्तवः कतिचन विकीर्णाः कन्थया सहैव गच्छन्ति। अवस्थिता एवावयवा दीपापगमे तमसा न दृश्यन्त इति न युक्तम्। विरोधात्। क्रमेण चैवं सति प्रकाशबाहुल्यं स्यात्। तदैवोत्पन्नप्रदीपावयवाः सर्वतो विकीर्णा भवन्तीत्यनुभवविरुद्धमिति युक्तमुक्तमालोको गुण इति अप्राधान्यसाम्येन वा गुणत्वोक्तिरिति। अंशैर्गुणेन च व्याप्तिरित्येकत्र विरुद्धमित्यत आह ॥स्कान्दे चेति ॥ व्याप्तिसाधकानुमानं तु घटादेरपि व्याप्तिसाधकाभाससमानयोगक्षेमम्। अतः श्रुत्यविरोधेन जीवस्याणुत्वसिद्धेर्युक्तो हरौ श्रुतिसमन्वय इति सिद्धम् ॥ २६ ॥ अ० १२ ॥

भावदीपः—

॥ ॐ गुणाद्वा लोकवत् ॐ ॥ २६ ॥ चिद्गुणस्येति ॥ अनेन तेजोरूपेणेत्यन्यत्रोक्तस्य चिद्गुणेनेत्यप्यर्थ उक्तो भवति। दृष्टांतोक्तेः शंकानिवर्तकत्वरूपफलमाह ॥ न चेति ॥ गुणगुणिनोरभेदादिति शंकाभिप्रायः ॥ आलोकवदिति ॥ सविशेषाभिन्नत्वान्न दोष इति भावः ॥ घटादिरूपस्यैवेति ॥ नीलघटसंबद्धबालार्कप्रभादौ प्रतीयमानमारुण्यादिकं तु न्यायमतेऽपि न प्रभानिष्ठं तस्य शुक्लभास्वररूपवत्त्वादिति भावः ॥ विवादादिति ॥ कस्तूर्यादिस्थगंधरूपगुणस्य वह्न्यादिस्थोष्णस्पर्शादिरूपगुणस्य च दूरगमनदर्शनात्। तदवयवानामेव गमनकल्पने क्रमेण कस्तूर्यादेः पलपरिमाणह्रासः स्यादिति भावः ॥ तदनुविधानादिनेति ॥ न च छायायां व्यभिचारः। भित्त्यादावचलेपि च्छायायाः सूर्यप्रातिलोम्येन चलनात्। अत्रादिशब्देन लोके माणिक्यप्रभादौ तद्गुणत्वव्यवहारः। तेजोबलैश्वर्यमहावबोधसद्वीर्यशक्त्यादिगुणैकराशिरिति स्मार्तः तेजसि गुणत्वव्यवहारश्च गृह्यते। दीपकार्यं दीपसमवायिकारणकम्। कारणं समवायिकारणम् ॥ कारणांतरेति ॥ दीपारोपकाल एव तत्रत्यतैजसपरमाणव एव द्व्यणुकादिक्रमेणालोकमंडलमारभंत इति त्वप्रामाणिकमितिभावः ॥अप्रतीतीति॥ अकार्यत्वे परमाणुत्वापातेनाप्रत्यक्षत्वापातादित्यर्थः ॥ प्रदीपेति ॥ प्रदीपारोपे तदैव

तदवयवाः परितो विकीर्णाः संतः आलोकबुद्धिविषया इत्यर्थः ॥प्रदीपानुविधानेति॥ उपलक्षणं चैतत् । निबिडावयवेंद्रनीलादाववयवविकरणासंभवात् तत्र प्रभा न स्यादित्यपि ध्येयम् ॥बाहुल्यं स्यादिति॥ आद्यक्षणवद्द्वितीयादिक्षणेष्वपि अवयवानां विसरणस्य न्याय्यत्वादिति भावः । उपलक्षणं चेदम् । दीपस्य सूक्ष्मता च स्यात् । न पुनरन्येषां दीपप्रवेश इत्यत्र मानाभावादित्यपि ध्येयम् । पक्षांतरमाह ॥अप्राधान्यसाम्येन वेति ॥ अंशैर्गुणेन चेति ॥ अविरोध इत्यत्र गुणाद्वेत्यत्र चोक्तमित्यर्थः । एकत्र पुरुषे स्मृतौ सुरा इति । अन्ये देवावरा इत्युक्त्या विरोधनिरास इति भावः । ॥ घटादेरिति ॥ सर्वं मूर्तं घटेन स्पृष्टं मूर्तत्वाद्घटसंबद्धपटवदित्यपि संभवादित्यर्थः । न च बाधः । अत्राप्यणुत्वश्रुतियुक्तिभ्यां बाधस्य साम्यादिति भावः । एवमन्यान्यप्यात्मव्याप्तिसाधकानि तार्किकोक्तानुमानानि चंद्रिकान्यायामृतयोरुक्तदिशा निरस्यानि ॥ अत इति ॥ अणुत्वश्रुत्युत्क्रांत्यादियुक्तीनां भावात् । व्याप्तत्वश्रुतेरीशपरत्वात् युक्तेश्चांशादिव्याप्त्या अन्यथोपपन्नत्वाच्चेत्यर्थः ॥ २६ ॥ अ० १२ ॥

सूत्रभाष्यम्—

'स नित्यो निरवयवः पुण्ययुक् पापयुक् च स इमं लोकममुं चाऽऽवर्तते स विमुच्यते स एकधा न सप्तधा न दशधा न शतधा' इति गौपवनश्रुतावेकस्याबहुत्वं प्रतीयते। 'स पञ्चधा स सप्तधा स दशधा भवति स शतधा च सहस्रधा स गच्छति स मुच्यते' इति पाराशर्यायणश्रुतौ बहुरूपत्वं प्रतीयते । अतो विरोधं परिहरति—

॥ ओँ व्यतिरेको गन्धवत्तथा च दर्शयति ओँ ॥ २७ ॥

यथा पुष्पाद्गन्धः पृथग्गच्छति एवमंशिनो जीवादंशाः पृथग्गच्छन्ति। 'अथैक एव सन् गन्धवद्व्यतिरिच्यते । अथैकीभवति । अथ बह्वीभवति । तं यथा यथेश्वरः प्रकुरुते तथा तथा भवति सोऽचिन्त्यः परमो गरीयानि'ति शाण्डिल्यश्रुतिः।

'अचिन्त्ययेशशक्त्यैव ह्येकोऽवयववर्जितः ।
आत्मानं बहुधा कृत्वा क्रीडते योगसम्पदे'ति च पाद्मे ॥ २७ ॥

॥ इति व्यतिरेकाधिकरणम् ॥ १३ ॥

तत्वप्रकाशिका—

अत्रेश्वरे श्रुतिसमन्वयसिध्यर्थं जीवविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादि-

संगतिः। जगत्कारणे हरौ श्रुतीनां समन्वयः प्रागुक्तः। स च श्रुतीनां विरोधेनाप्रामाण्ये न युक्तः स्यादिति सर्वथा निराकार्यः। प्रकृतो जीव एव विषयः। किमेकरूपः किं वाऽनेकरूप इति संदेहः। संदेहबीजं श्रुतिविगानं दर्शयति ॥ स इति ॥ जीवत्वज्ञापनायादिवाक्योद्धारः। एकरूप एवेति पूर्वः पक्षः। 'स एकधा' इति श्रुतेः। न चान्यत्राप्यस्ति श्रुतिरिति वाच्यम्। ऐकरूप्यश्रुतेः सयुक्तिकत्वात्। युज्यते खलु विभावात्मनि योगप्रभावेन शरीरबहुतया बाहुरूप्यम्। तच्च निषिद्धम्। न च वक्तव्यमणोरप्यात्मनोंऽशबाहुल्याद् बहुरूपत्वमिति। निरवयवत्वात्। 'स नित्यो निरवयवः' इति श्रुतेः। न च मन्तव्यं योगिनोऽघटितघटकसामर्थ्यवत्त्वेनोपपन्नं बहुरूपत्वम्। दृश्यते हि समाधिसामर्थ्यादेव तेषां समुद्रपानादीति। तथा सति जीवस्येश्वरेण गुणसाम्यापातात्। एतदेवैश्वर्यं यत्कर्तुमकर्तुमन्यथाकर्तुं सामर्थ्यम्। अतः सयुक्तिकैतच्छ्रुतिविरोधेन बहुरूपश्रुतिरप्रमाणमेव। न च श्रुतेरीश्वरविषयता। स विमुच्यत इति जीवलिङ्गात्। ततश्च न हरौ श्रुतिसमन्वयो युक्त इति प्राप्ते सिद्धान्तयत्सूत्रमवतारयति ॥ अत इति ॥ अतो विरोधः संदेहबीजमस्ति तं परिहरतीत्यर्थः। सूत्रं व्याचष्टे ॥ यथेति ॥ अस्त्येव जीवस्य बहुरूपत्वम्। अणुत्वेऽप्यंशव्यतिरेकेण बहुत्वोपपत्तेः। न चांशिनं विहायान्यत्रांशस्य गमनमनुपपन्नम्। गन्धादौ दृष्टत्वात्। न च श्रुतिविरोधः। तस्याः स्वरूपैक्यविषयत्वात्। न च भिन्नांशशून्यत्वादनुपपत्तिः। योगसंपदा तदुपपत्तेः। न चेश्वरेण साम्यापातः। योगिनामपि बहुरूपत्वशक्तेर्योगाराधितेश्वरप्रसादायत्तत्वात्। न चेश्वरस्याप्येतदशक्यम्। तस्याचिन्त्यशक्तित्वात्। कुत एतत्सर्वमिति चेदथेतिश्रुतेरेवेति भावः। अत्र चशब्दसूचितां स्मृतिं च दर्शयति ॥ अचिन्त्येति ॥ तदेवं श्रुत्यविरोधेन जीवस्य बहुरूपत्वोपपत्तेर्युक्तो हरौ श्रुतिसमन्वय इति सिद्धम् ॥ २७ ॥ अ० १३ ॥

भावदीपः—

॥ ॐ व्यतिरेको गंधवत्० ॐ ॥ २७ ॥ जीवविषयेति ॥ जीवस्य बहुरूपत्वैकरूपत्वविषयेत्यर्थः। भाष्ये स एकधेत्यादौ वाच्ये पुण्ययुगित्याद्युक्तिर्व्यर्थेत्यत आह ॥ जीवत्वेति ॥स नित्यो निरवयव इत्यंशोक्तिस्तु निरवयवत्वरूपपूर्वपक्षयुक्तिसूचनायेति भावः। अन्यत्रापि बाहुरूप्येऽपीत्यर्थः। अणुत्वादेकरूप एवेति युक्तिमभिप्रेत्य तस्याप्रयोजकत्वनिरासाय विपक्षे हेतूच्छित्तिर्बाधिकेति भावेनाह ॥ युज्यत इति ॥

अविरोधश्चंदनवदित्यनेन गतत्वमाशंक्य तन्निरासाय भाष्यसूचितयुक्तिमाह ॥ न चेति ॥ निरवयवत्वाद्भिन्नावयवशून्यत्वादित्यर्थः । निरवयवत्वोपपादनाय नित्य इत्यंशस्याप्युक्तिरन्यथा प्रागुक्तदिशाऽनित्यत्वं स्यादिति भावः । तेषां अगस्त्यसौभरिकर्दमादीनाम् । उक्तशंकानिरासाय जीवस्य बहुरूपत्वशक्तावीशेन गुणसाम्यमित्यन्यत्रोक्तयुक्तिमाह ॥ तथा सतीति ॥ विष्टिगृहीतो नाकर्तु शक्नोतीत्यकर्तुमित्युक्तम् ॥अत इति॥ यतोऽणुत्वं यतश्च निरवयवत्वं यतश्च योगाद्बहुरूप्ये गुणसाम्यापातोऽत इत्यर्थः ॥ छ ॥ साध्यमध्याहृत्य तत्र हेतुत्वेन एवमित्यादिभाष्यदिशा सूत्रार्थमाह ॥ अस्त्येवेति ॥ व्यतिरेकेण विभागेन अंश्यपेक्षयांशस्य पार्थक्येनेत्यर्थः । भाष्ये यथेत्यादिदृष्टांतोक्तेरुपयोगमाह ॥ न चेति ॥ दर्शयतीत्युक्तश्रुतावेकीभवतीत्युक्तेरुपयोगमाह ॥ न चेति ॥ स एकधेति श्रुतीत्यर्थः । स्मृत्यनुरोधाच्छ्रुतावपि यथेत्यतः पूर्वं योगसंपदेति शेषं मत्वा तदुपयोगमाह ॥ न च भिन्नांशेति ॥ यथा यथेत्यादेरुपयोगमाह ॥ न चेश्वरेणेति ॥ ईशशक्त्यैव बहुरूपत्वादेरित्यन्यत्रोक्त्यनुरोधेन यथा-यथेत्यादिश्रौतपदतात्पर्यमाह ॥ योगिनामपीति ॥ अचिंत्यपदकृत्यमाह ॥ न चेश्वरस्यापीति ॥ कृतं व्याख्यानं श्रुतिनिष्ठं करोति ॥ अथेति श्रुतेरेवेतीति ॥ स्मृतिमिति॥ श्रुतौ योगसंपदेत्यस्याभावात्स्मृत्युक्तिरिति भावः । तत् तस्मात् ऐकविध्यश्रुतेः स्वरूपैक्यपरत्वात् एवं ईश्वरप्रसादोपचितयोगसामर्थ्यायत्तं बहुरूपत्वमित्युक्तप्रकारेणेत्यर्थः ॥ २७ ॥ अ० १३ ॥

सूत्रभाष्यम्—

'तत्त्वमसि, (छां. उ. ३-८-७.) 'अहं ब्रह्मास्मी' (बृ. उ. ३-४-१०.) त्यादिषु जीवस्य परेणाभेदः प्रतीयते । 'नित्यो नित्यानां चेतनश्चेतनानाम्' (श्वे. उ. ६-१३) 'द्वा सुपर्णा' (श्वे. उ. ४-६.) इत्यादिषु भेदः । अत उच्यते—

॥ ॐ पृथगुपदेशात् ॐ ॥ २८ ॥

'भिन्नोऽचिन्त्यः परमो जीवसङ्घात्पूर्णः परो जीवसङ्घो ह्यपूर्णः ।
यतस्त्वसौ नित्यमुक्तो ह्ययं च बन्धान्मोक्षं तत एवाभिवाञ्छे' दिति

सोपपत्तिककौशिकश्रुतेर्भिन्न एव जीवः ॥ २८ ॥

तत्वप्रकाशिका—

अत्र ब्रह्मणि श्रुतिसमन्वयसिद्धयर्थं जीवस्य परमात्माभिन्नत्वादिविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसंगतिः। जगत्कारणे ब्रह्मणि श्रुतीनां समन्वयो निरूपितः। स चाद्वैतश्रुत्या भेदश्रुतेर्विरोधेऽनुपपन्नः स्यादित्यवश्यमसौ निरसनीयः। प्रकृतजीव एवात्र विषयः। किं परब्रह्मणा भिन्न उताभिन्न इति संशयः। संशयबीजं श्रुतिविवादं दर्शयति ॥ तत्त्वमसीति ॥ परमात्माभिन्न एव जीव इति पूर्वः पक्षः। 'तत्त्वमसि' इत्यादिश्रुतेः। न च विपर्ययेऽप्यस्ति श्रुतिरिति वाच्यम्। अद्वैतश्रुतेः षड्विधतात्पर्यलिङ्गयुक्ताया बलवत्त्वात्। 'एकमेवाद्वितीयम्' इत्युपक्रमात्। 'तत्त्वमसि' इत्युपसंहारात्। 'तत्त्वमसि' 'तत्त्वमसि' इति नवकृत्वोऽभ्यासात्। अद्वैतस्य प्रमाणान्तराप्राप्तत्वेनापूर्वत्वात्। 'तस्य तावदेव चिरम्' इति फलश्रवणात्। 'येनाऽश्रुतं श्रुतं भवति' इत्याद्यर्थवादात्। मृत्पिण्डादिदृष्टान्तेनोपपादनात्। एवं श्रुतेरद्वैत एव तात्पर्यावगमात्। तद्विरुद्धभेदश्रुतेरतत्त्वावेदकत्वमेवेति न परमात्मनि परमार्थतः श्रुतिसमन्वयो युक्त इति प्राप्ते सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ पृथगेव जीवः परमात्मनः 'भिन्नोऽचिंत्यः' इति श्रुतेः। न चास्ति विपर्ययेऽपि श्रुतिरिति वाच्यम्। विरुद्धधर्माधिकरणत्वयुक्तियुक्तत्वेन भेदश्रुतेः प्राबल्यादिति भावः ॥ २८ ॥

भावदीपः—

॥ ॐ पृथगुपदेशात् ॐ ॥२८॥ प्रकृत इति ॥ज्ञोऽत इत्यत इत्यर्थः। भाष्ये इत्यादिष्विति बहुवचनप्रयोगेऽपि श्रुत्या जीवेश्वरैक्यमित्यन्यत्रोक्त्यनुरोधेनाभेदप्राप्तौ श्रुतित्वमेव प्रयोजकं न तु बहुत्वमपीत्युपेत्य भाष्योक्तश्रुतिमाह ॥ तत्वमसीत्यादिश्रुतेरिति ॥ परमते प्रसिद्धत्वेन न्यायविवरणेऽनुक्तान्यपि श्रुतिप्राबल्याय स्वयमाह ॥ षड्विधेति ॥ यद्वा श्रुतिभिश्चानुमाबलादित्यनुभाष्येऽनुमापदेन तात्पर्यलिंगान्यभिप्रेतानीति मत्वा षड्विधेत्युक्तिः श्रुतिभिरित्यादिबहुवचनं तु द्वैतश्रुतेर्बहुत्वेन प्राबल्यमिति शंकायामद्वैतश्रुतेरपि तदस्तीति सूचयितुमिति भावः ॥ अप्राप्तत्वेनेति ॥ देहेंद्रियप्राणबुद्धिनेतृत्वं मन्यतेत्मन इत्यत्र तत्वनिर्णयटीकायां तल्लक्षणाभिमान एव तदैक्याभिमान इत्युक्तावपि स्पष्टं ब्रह्मतादात्म्याप्रतीतेरेवमुक्तम्। यद्वा पराभिमानेनैवमुक्तिरित्यविरोधः। ॥ तस्येति ॥ यावन्न विमोक्ष्येऽथ संपत्स्यत इति वाक्यशेषे तस्य ज्ञानिनस्तावानेव विलंबः। यावत्प्रारब्धमोचनमित्युक्त्वा अथ प्रारब्धमोक्षानंतरमेव संपत्स्यत इति

ब्रह्मप्राप्तिरूपफलश्रवणादित्यर्थः ॥ येनेति ॥ येनाश्रुतं श्रुतं भवत्यमतं मतमिति वाक्ये येन ब्रह्मणा श्रुतेन मतेन विज्ञातेनान्यदप्यश्रुतममतमविज्ञातमपि जगत् श्रुतं मतं विज्ञातं भवतीत्यद्वैतबुध्या ब्रह्मज्ञानस्य स्तवनादित्यर्थः। उपपत्तिं चाह ॥ मृत्पिंडेति ॥ यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यादिति वाक्ये ब्रह्मज्ञानेनान्यज्ञानं कथमिति शंकायां यथा मृत्पिडज्ञानेन मृण्मयज्ञानं भवति तयोरभेदात्। एवं ब्रह्मजगतोरभेदाद्ब्रह्मज्ञानेनान्यज्ञानं युक्तमित्युपपादनादुपपत्तिमत्त्वादित्यर्थः। नन्वतत्त्वावेदकत्वेऽपि तादृक् श्रुतिसमन्वयः सिध्यत्येवेत्यत आह॥ परमार्थत इति ॥ तादृश एव प्रागुक्त इति भावः ॥ छ ॥ भिन्न एवेत्यस्य व्याख्येयं सौत्रपदं दर्शयन्भाष्यं व्याचष्टे ॥ पृथगेवेति ॥ सूत्रे अनुवृत्तज्ञपदस्यार्थो जीव इति। स्वात्मपदानुवृत्तिं मत्वाऽऽह ॥ परमात्मन इति ॥ सोपपत्तिकेत्युक्तेरुपयोगं वक्ति ॥ न चेति ॥ उपपत्तेरेकत्वेऽपि निरवकाशत्वात्परकीयोपक्रमादेर्बहुत्वेऽपि सावकाशत्वाद्भेदश्रुतिरेव प्रबलेति। अत्रापि मानबाहुल्यस्याग्रे व्यक्तत्वाच्चेति भावः ॥ २८ ॥

सूत्रभाष्यम्—

॥ ॐ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॐ ॥ २९ ॥

ज्ञानानन्दादिब्रह्मगुणा एवास्य यतः सारः स्वरूपमतोऽभेदव्यपदेशः। यथा सर्वगुणात्मकत्वात्सर्वात्मकत्वं ब्रह्मण उच्यते 'सर्वं खल्विदं ब्रह्मे' (छा. उ. ३-१४-१) ति। भविष्यत्पर्वणि (पुराणे) च—

'भिन्ना जीवाः परो भिन्नस्तथापि ज्ञानरूपतः।
प्रोच्यन्ते ब्रह्मरूपेण वेदवादेषु सर्वशः' ॥ इति ॥ २९ ॥

॥ इति पृथगुपदेशाधिकरणम् ॥ १४ ॥

तत्वप्रकाशिका—

नन्वेवं सत्यद्वैतश्रुतेर्निर्विषयतयाऽप्रामाण्यं प्राप्तमित्याशङ्क्यां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ तदिति ॥ तच्छब्देन स्वात्मनेति प्राकृतस्य परामर्शः। नाभेदश्रुतेरप्रामाण्यप्राप्तिः। परमात्मगुणसदृशानन्दादिगुणस्वरूपत्वेन जीवस्य गौणवृत्त्या भेदव्यपदेशोपपत्तेः। यथा खलु सकलजगद्गुणसदृशगुणात्मकत्वेन परमात्मा जगदिति व्यपदेशः। 'सर्वं खल्विदं ब्रह्म' इत्यादौ तथैवेति भावः। अत्रैव स्मृतिसंमतिमाह ॥ भाविष्य-

दिति ॥ गौणी वृत्तिरमुख्येति चेत् सत्यम् । मुख्यार्थासंभवादाश्रीयते । न हि सार्वज्ञादिगुणवता ब्रह्मणाऽल्पज्ञानादिमतो जीवस्याभेदो युक्तः । न सार्वज्ञादि पारमार्थिकमिति चेन्न । 'यः सर्वज्ञः' इत्यादिश्रुतिसिद्धत्वात् । श्रुतिसिद्धसार्वज्ञादेरपि मिथ्यात्वे बौद्धराद्धान्तापत्तिः । कश्चैवं वादिनोऽद्वैतश्रुतिसिद्धार्थे विश्वासहेतुरन्यत्राभिनिवेशात् । उपजीव्यप्रमाणविरुद्धं चाद्वैतबोधनम् । जीवपरमात्मविषयप्रमाणैर्भेदस्यैव ग्रहणात् । परेणापि हि प्रमाणविरोधभीरुणा लाक्षणिकोऽर्थोऽङ्गीकृतोऽद्वैतश्रुतेः । तथा च सुतरां युक्तं गौणार्थग्रहणम् । लक्षणावृत्तौ हि तत्त्वं पदवाच्यार्थपरित्यागेनासिपदमात्रे सामानाधिकरण्यरूपमुख्यार्थताऽशेषप्रमाणविरुद्धाङ्गीकर्तव्या । वरं हि ततस्तत्त्वंपदमुख्यार्थमङ्गीकृत्यासिपदमात्रस्य गौणार्थवर्णनम् । नात्र प्रमाणविरोधेन श्रुतेरमुख्यार्थताऽभ्युपगम्यते येन गौणार्थोऽङ्गीकार्यः स्यात् । किं तु श्रुतेरेव तथाभिप्रेतत्वादिति कश्चित् । स प्रष्टव्यः । कथमयं श्रुतेरभिप्रायो लोकोत्तरप्रज्ञेन विज्ञात इति । तात्पर्यलिङ्गैरिति वदन् देवानांप्रियोऽसावुपेक्षितव्यः । न हि लिङ्गानि तात्पर्यावबोधकानि लाक्षणिकार्थग्रहणे कारणानीति युक्तम् । लिङ्गबलादद्वैत एव तात्पर्ये सिद्धे प्रमाणविरोधाद् गौणार्थमनङ्गीकृत्य लक्षणाश्रीयत इति चेन्न । उपक्रमादीनामन्यार्थत्वात् । यथा चैतत्तथोक्तमन्यत्रेति । अथापीदं स्यात् । 'रूढियोगौ विना कश्चिन्नैवार्थो वेदगो भवेत्' इति वदन् भाष्यकारः कथमेवं श्रुतिं व्याख्याति । न च परमात्मसमन्वयविषयकं तद्वाक्यम् । अर्थान्तरप्रस्ताव एवोदाहृतत्वात् । कश्चिदिति विशेषणाच्चेति । मैवम् । तत्र रूढियोगौ विहाय केवलवृत्त्यन्तरस्य निषिद्धत्वात् । रूढियोगपूर्वकगौण्यादिवृत्तेरनिवारणात् । सा च परकीयन्यायेनैव । अस्ति हि 'तत्त्वमसि' इत्यादिश्रुतीनाम् 'अतत्त्वमसि' इत्यादिरूपो रूढार्थः । अतः श्रुत्यविरोधेन जीवस्य परमात्मभेदसिद्धेर्युक्तस्तत्र वेदसमन्वय इति सिद्धम् ॥ २९ ॥ अ० १४ ॥

भावदीपः —

॥ ॐ तद्गुणसारत्वात्० ॐ ॥ २९ ॥ तद्गुणेत्यस्य ब्रह्मगुणेति कथं भाषणमित्यत आह ॥ तच्छब्देनेति ॥ अद्वैतश्रुत्युक्तेरसांगत्यनिरासाय श्रुतेस्सादृश्यैक्यादिना सावकाशत्वादित्यन्यत्रोक्त्यनुरोधेन साध्यमध्याहृत्य तत्र हेतुत्वेन सूत्रभाष्ययोर्भावार्थमाह ॥ नाभेदेति ॥ जीवस्येति ॥ सज्जीवस्येत्यर्थः । शास्त्रस्य सदधिकारिकत्वेन तं प्रत्येव तत्वमसीत्युपदेशात् । एतच्च पुंस्त्वादिवदित्यत्र व्यक्तमिति सज्जीवस्येत्येव

नोक्तम् ।। सकलजगद्गुणेति ।। सर्वभूतगुणैर्युक्तं देवं त्वं ज्ञातुमर्हसि इति गीताभाष्यै-कादशस्कंधतात्पर्यादावुक्तमोक्षधर्मवचनेन । गामाविश्य च भूतानि धारयामीत्या-दिगीतासु च पृथिव्यादीनां ये धारकत्वादयो गुणाः तत्सदृशगुणात्मकत्वस्य ब्रह्मण्युक्ते-रिति भावः । बहुमानविरोधे चैकस्य दौर्बल्याच्चेत्यन्यत्रोक्तं व्यक्तीकर्तुमाह ।। गौणीति ।। बहुमानानि विवरीतुं सोपपत्तिकेति भाष्योक्तविरुद्धधर्माधिकरणत्व-युक्ति तावदुपपादयति ।। न हीति ।। उपजीव्यविरुद्धं तु कथमैक्यं श्रुतिर्वदेदित्यनु-भाष्योक्तयुक्तिमाह ।। उपजीव्येति ।। अत्रोपजीव्यत्वं च धर्मिग्राहकविरोधाच्चेति न्यायविवरणरीत्या धर्मिग्राहकत्वमित्यभिप्रेत्य तद्विरोधं स्पष्टयति ।। जीवेति ।। किंचित्कर्ता च दुःखीति सर्वैरेवानुभूयते । सर्वज्ञो भगवान् विष्णुः सर्वशक्तिरिति श्रुत इत्यनुभाष्योक्तेरिति भावः । एतेन बहुमानविरोधो विवृतो ध्येयः । विशिष्टा-भेदरूपमुख्यार्थे अनुभवोपपत्तिश्रुतिरूपप्रमाणविरोधः परस्यापि हि संमत इत्याह ।। परेणापि हीति ।। तथा चेति ।।मुख्यार्थे प्रमाणविरोधस्योभयसंमतत्वे सतीत्यर्थः । सुतरामसंशयम् । बहुमानविरोध एकस्य दौर्बल्याच्चेत्यन्यत्रोक्तस्यैकपदस्य व्यावृत्त्यं दर्शयन् तद्वाक्यार्थं व्यनक्ति ।। लक्षणावृत्तौ हीति ।। अशेषेति ।। प्रत्यक्षयुक्तिश्रुति-रूपेत्यर्थः । एकस्य दौर्बल्याच्चेत्येतद् व्याचष्टे ।। असिपदमात्रस्येति ।। अत्र विशेष-श्चंद्रिकायां बोध्यः । प्रागुक्ततात्पर्यलिंगान्यन्यथयितुं शंकते ।। नात्रेति ।। लोकोत्तरे-त्युपहासः । देवानांप्रिय इति च मूर्खे इति निपातनादलुक्समासः । अनभिज्ञ इत्यर्थः । कुत इत्यत आह ।। न हीति ।। यद्यपि लिंगानि मानांतराविरोधे मुख्यार्थ एव तात्पर्य-बोधकानि । तथापि प्रकृते मानांतरविरोधान्मुख्यार्थे तात्पर्यं परेणैव व्यक्तम् । अमुख्यार्थमध्ये गौणे न तात्पर्यं किं तु लाक्षणिक एवेत्यत्र तु लिंगानि न शक्तानीति भावः । गौणार्थे तात्पर्यं न किं तु लाक्षणिक एवेत्यत्र शक्तानि लिंगानीत्येतदा-शंकते ।। लिंगेति ।। गौणार्थानंगीकारे हेतुरद्वैत एव तात्पर्य इति लक्षणाश्रये हेतुः प्रमाणविरोधादिति । भवेदेतत् यद्युपक्रमादिलिंगानामद्वैत एव तात्पर्यावगमकत्वं तदेवासिद्धमित्याह ।। उपक्रमादीनामिति ।। अन्यत्र विष्णुतत्वविनिर्णयादौ ।। इति वदन्निति ।। कर्मनिर्णय इति योज्यम् ।। अर्थांतरेति ।। वचनानां बह्वर्थत्वमस्तीत्याद्य-र्थांतरप्रकरण इत्यर्थः ।। वृत्त्यंतरस्येति ।।मायावादिभिः शब्दानां ब्रह्मणि वक्ष्यमाणरी-त्येति भावः ।। रूढियोगपूर्वकेति ।। सिंहश्चैत्र इत्यत्र सिंहपदस्य सिंहे रूढौ सत्यामेत्र चैत्रे गौणी वृत्तिः । गंगायां घोष इत्यत्र रूढिपूर्विका लक्षणेत्येवं अहं ब्रह्मास्मीत्यादौ

ब्रह्मादिपदस्य परमात्मादौ रूढियोगयोः सत्त्वे तत्पूर्विकैवेह गौणी वृत्तिरिति भावः। कर्मनिर्णयटीकायां तु न केवलं रूढो नापि केवलो यौगिकोऽस्तीत्यर्थ इति रूढियोगरूपमुख्यवृत्तिद्वयसमुच्चयपरत्वेनाप्यर्थांतरमुक्तम्। वेदवाक्यस्य तु वाचनिकार्थं विना नैवान्या युज्यत इति कर्मनिर्णयवाक्यविरोधोऽपि नास्ति। तस्य तट्टीकायामेवैतदविरोधेन व्याख्यानादिति भावः। नन्वथापि विष्णुतत्वविनिर्णयादिविरोधस्तु स्यात्। तत्रातत्वमसीति पदविभागमुपेत्य मुख्यार्थस्योक्तेरित्यत आह ॥ सा चेति ॥ गौणवृत्तिरित्यर्थः। अतत्वमसि तदन्यद्वस्त्वसि इत्यर्थः। नञोऽन्योन्याभावे रूढत्वात् रूढार्थ इत्युक्तम्। आदिपदेनानंदमयाधिकरणे तत्तच्छब्दवाच्यत्वोक्तेरिति भाष्योक्ते स्तत्त्वमस्यादिशब्दानां प्राणो वा अहमस्म्यृष इत्यत्रैतरेयभाष्योक्तदिशा यौगिकार्थस्य ग्रहः॥ अत इति ॥ द्वैतश्रुतेः सोपपत्तिकत्वादभेदश्रुतेः सादृश्यपरत्वेन सावकाशत्वादित्यर्थः ॥ २९ ॥ अ० १४ ॥

सूत्रभाष्यम्—

जीवस्याप्युत्पत्तिरुक्ता। अतस्तस्य 'सोऽनादिना पुण्येन पापेन चानुबद्धः। परेण निर्मुक्त आनन्त्याय कल्प्यत' इत्यनादिकर्मसम्बन्ध आनन्त्यावाप्तिश्च न युज्यत इत्यत आह—

॥ ॐ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॐ ॥ ३० ॥

यावत्परमात्मा तिष्ठत्यनाद्यनन्तत्वेनैवं जीवोऽपि।

'नित्यः परो नित्यो जीवोऽनित्यास्तस्य धातवः।
अत उत्पद्यते च म्रियते च विमुच्यते चे'ति च आग्निवेश्यश्रुतिः।
'आत्मा नित्यः सुखदुःखे त्वनित्ये, जीवो नित्यो धातुरस्य त्वनित्य'

इति च भारते ॥ ३० ॥ ॥ इति यावदधिकरणम् ॥ १५ ॥

तत्वप्रकाशिका—

अत्रेश्वरे श्रुतिसमन्वयसिद्ध्यर्थं जीवनित्यत्वविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसंगतिः। श्रुतिसमन्वयो हरावुक्तः। श्रुतेर्जीवनित्यत्वविषयायाः श्रुत्यन्तरविरोधेनाप्रामाण्ये तदनुपपत्तिप्रसङ्गात्परिहर्तव्यमेतत्। प्रकृतो जीव एवात्र विषयः नित्योऽनित्यो वेति संदेहः। 'ब्रह्मॉंल्लयमभ्युपैति' 'आनन्त्याय कल्पत' इति श्रुति-

विरोधः संदेहबीजम्। तत्र सफलं पूर्वपक्षयति ॥ जीवस्यापीति ॥ अनित्य एव जीवः। अनित्यत्वश्रुतेः। न च वक्तव्यं 'सोऽनादिना' इतिश्रुतिर्जीवनित्यत्वेऽप्यस्ति। अत्र जीवस्यानादिकर्मसंबन्धानन्त्याप्राप्त्योरुक्तत्वादिति। अनित्यत्वश्रुतेः सयुक्तिकत्वेन प्राबल्यात्। उक्ता खलु जीवस्योत्पत्तिः 'ज्ञोऽत एव' इति। उत्पत्तिमतश्चानित्यत्वं नियतमेव। घटादौ दृष्टत्वात्। न च वक्तव्यं तत्रोत्पत्तिरुपाधेरेवोक्ता न तु जीवस्यातः कथं तस्यानित्यत्वमपीति। उपाधेरुत्पत्तिमत्त्वे प्रतिबिम्बस्योत्पत्तिनियमात्। न हि दृष्टमुपाधेरुत्पत्तिमत्त्वेऽपि प्रतिबिम्बस्यानादित्वम्। अतोऽस्त्येव जीवस्योत्पत्तिर्विनाशश्च। अतः सयुक्तिकश्रुतिविरोधात्तस्यानादिकर्मसंबन्धाद्ययुक्तेस्तदभिधायकश्रुतेरप्रमाणत्वादयुक्तो ब्रह्मणि श्रुतिसमन्वय इति भावः। सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ नित्य एव जीवः। प्रतिबिम्बस्य बिम्बोपाधितत्सन्निधिनाशं विना नाशानुपपत्तेः। बिम्बस्य परमात्मनोऽनाद्यनन्तत्वात्। उपाधेश्च यावत्परमात्मभावित्वात्। सर्वगतबिम्बस्योपाधिसन्निधेश्च नित्यत्वात्। अतो जीवस्यानाद्यनन्तत्वान्नानादिकर्मसंबन्धाद्यनुपपत्त्याप्रमाणता च श्रुतेर्भवति। न चानित्यत्वश्रुतिविरोधः। तस्या उपाधिविषयत्वात्। न चोपाधेरनित्यत्वे पुनर्जीवस्यानित्यत्वापत्तिरिति वाच्यम्। न हि येनोपाधिना जीवः प्रतिबिम्बस्तस्यैवोत्पत्तिविनाशौ ब्रूमोऽपि तु धात्वादिपदोदित (पदोदितात्) बाह्योपाधेरेव। कुत एतदखिलमिति चेत् 'नित्यः परः' इति श्रुतेः स्मृतिवचनद्वयाच्चेति भावः। उक्तं चैतदन्यत्र। 'जीवोपाधिर्द्विधा प्रोक्तः स्वरूपं बाह्य एव च। बाह्योपाधिर्लयं याति मुक्तावन्यस्य तु स्थितिः। सर्वोपाधिविनाशे तु प्रतिबिम्बः कथं भवेत्। कथं चात्मविनाशाय प्रयत्नः सेत्स्यति कचित्।' इति। तथा 'उपाधेश्चैव नित्यत्वान्नैव जीवो विनश्यति। स्वरूपत्वादुपाधेश्च न भिन्नोपाधिकल्पनम्' इति। अतः श्रुत्यविरोधेन जीवस्य नित्यत्वसिद्धेर्युक्तो हरौ वेदानां समन्वय इति सिद्धम् ॥ ३० ॥ अ० १५ ॥

भावदीपः—

॥ ॐ यावदात्मभावित्वात्० ॐ ॥ ३० ॥ भाष्येऽनुक्तमपि प्रकरणबलाच्छ्रुतिविगानं संदेहबीजमाह ॥ ब्रह्मन्निति ॥ ब्रह्मणीत्यर्थः। अन्यत्राभावाच्चेत्यत्र भाष्योक्ता श्रुतिः। आनंत्यायेति त्वत्र भाष्योक्ता ॥ अनादिकर्मेति ॥ उत्पत्तिविनाशवतस्तदयोगादिति भावः। उत्पत्त्युक्तावनादिपुण्यादिसंबंधायोगेऽपि आनंत्यायोगः किमर्थमुक्तो भाष्ये इत्यतः उत्पत्तिमत्त्वाद्विनाशित्वं जीवस्येत्यन्यत्रोक्त्यनुरोधेन

जीवस्यापीति वाक्यमुभयत्र युक्तिसूचकत्वेन व्याचष्टे ।। उक्ता खल्विति ।। तथा चोत्पत्तिमत्त्वं नासिद्धमिति भावः । प्रकारांतरेणासिद्धिमाशंक्य निराह ।।न च वक्तव्यमिति ।। प्रतिबिंबस्येति ।। जीवस्य प्रतिबिंबत्वं चाभास एवेत्यादावग्रे व्यक्तमिति भावः ।। अत इति ।। उपाध्युत्पत्तौ प्रतिबिंबोत्पत्तिनियमाज्जीवोपाधेश्चोत्पत्तिमत्त्वादुत्पत्तिमतश्च विनाशनियमाच्चेत्यर्थः । एवं जीवस्याप्युत्पत्तिरुक्तेति भाष्यं व्याख्यायेदानीं अत इति पदमनूद्यार्थमाह ।। अतः सयुक्तिकश्रुतीति ।। एतेनोक्तेत्यस्यात्मनो व्युच्चरंति ब्रह्मँल्लयमित्यादिश्रुतावुक्तेत्यप्यर्थो दर्शितः । तेन युक्तिविरोधमात्रेण श्रुतेरप्रामाण्यं कथमभिप्रेतमिति निरस्तम् । भाष्योक्तस्यावांतरफलत्वं दर्शयन् तस्यापि नांतरीयकफलं वदन् महाफलमाह ।। तस्यानादीत्यादिना ।। आदिपदेनानंत्यग्रहः । एतेन जीवस्यानित्यत्वे तदभीष्टमोक्षाद्यसिद्धेरित्यन्यत्रोक्तिरपि व्याख्याता । अन्यथा उक्तेऽर्थे अविरोधं दर्शयत्यनेनाध्यायेनेति भाष्यविरोध इति भावः । एवं जीवोऽपीति भाष्यमेवं शब्दार्थं वदन् व्याचष्टे ।। नित्य एव जीव इति ।। न विनाशीत्येवंशब्दार्थः । तत्र स्वयं हेतुमाह ।। प्रतिबिंबस्येति ।। तदुपपादकत्वेन यावदित्यादिभाष्यार्थमाह ।। बिंबस्येति ।। असंभवस्तु नात्माश्रुतेरित्याभ्यां सिद्धत्वात्सोऽनुत्पत्तिलय इत्यणुभाष्योक्तेरिति भावः । भाष्यस्थस्य सौत्रचशब्दव्याख्यानपरस्य जीवोऽपीत्यपिपदस्योपाधितत्सन्निध्योस्समुच्चायकत्वमर्थं इति भावेन तत्तात्पर्यमाह ।। उपाधेश्चेति ।। यावदात्मभावित्वादित्युपाधिनित्यत्वाभिधानाच्चेति द्वितीये गीताभाष्योक्तेरिति भावः । एतेन सौत्रश्चशब्दोऽनुक्तसमुच्चय इति सूचितम् । सौत्रात्मपदलब्धोक्तिः सर्वगतेति । यच्चाप्नोतीत्यादिस्मृतेः । यावदात्मभावित्वादित्यस्य भावार्थः नित्यत्वादिति । इदानीं ज्ञोऽत इत्यतः षष्ठ्यंततया ज्ञशब्दमनुवर्त्य यावदात्मभावित्वाच्चेत्येतदंशार्थं हेतुत्वेनानुवदन् यावदात्मभावित्वान्न दोष इति सूत्रखंडस्यार्थमाह ।। अत इति ।। उपाधितत्सन्निध्योर्नित्यत्वादित्यर्थः । यावदात्मभावित्वादित्यस्य तात्पर्यमनाद्यनंतत्वादिति । तद्दर्शनादिति सौत्रांशोपात्तश्रुतावनित्यास्तस्य धातव इत्यंशस्य कृत्यमाह ।। न चानित्यत्वश्रुतीत्यादिना ।। ब्रह्मँल्लयमभ्युपैतीति श्रुतीत्यर्थः । अनित्यस्तस्योपाधिरित्यनुक्त्वा धातुपदप्रयोगतात्पर्यं वक्तुमाह ।। न चोपाधेरिति ।। न च पराधीनविशेषवत्त्वमात्रेण विनाशित्वमित्यन्यत्रोक्त्यनुरोधेन तात्पर्यमाह ।। न हि येनेति ।। तादृशानामेव नित्यत्वश्रुतिविरोधादित्यन्यत्रोक्त्यनुरोधेन भाष्यमवतारयति ।। कुत एतदखिलमिति ।। बिंबस्य परमात्मनः प्रतिबिंबस्य

जीवस्य तदुपाधेर्बिंबोपाधिसन्निधेश्च नित्यत्वम्। बाह्योपाधेरनित्यत्वमित्येतदखिलमित्यर्थः। धातवोऽनित्या इत्यनेनानित्योपाधेरधातुभूतनित्योपाधेश्च लाभात्। जीवनित्यत्वोक्त्या सन्निधिनित्यत्वलाभाच्चेति भावः। आत्मा नित्यः जीवो नित्य इति पादद्वयं भारते भिन्नस्थानस्थं वाक्यद्वयं ततो न भारते पुनरुक्तिरित्याह ।। स्मृतिवचनद्वयाच्चेति ।। उपाधिद्वैविध्यादिकं भाष्ये स्पष्टं कुतो नोक्तमित्यत आह ।। उक्तं चेति ।। अन्यत्र चतुर्थस्कंधतात्पर्ये एकविंशेऽध्याये ।। तथेति ।। प्रथमस्कंधतात्पर्ये त्रयोदशेऽध्याये ननु आभास एव चेत्यत्र सोपाधिरनुपाधिश्च प्रतिबिंबो द्विधेयते। जीव ईशस्यानुपाधिरिंद्रचापो यथा रवेरित्युक्तिविरोधः। तत्र निरुपाधिप्रतिबिंबत्वस्य वक्ष्यमाणत्वादित्येतदप्यनेनैव निरस्तम्। तस्य भिन्नोपाधिराहित्यपरत्वोपपत्तेरिति ।। अत इति ।। बिंबोपाधितत्सन्निधीनां नित्यत्वाज्जीवानित्यत्व श्रुतेर्बाह्योपाधिविषयत्वादित्यर्थः ।। ३० ।। अ० १५ ।।

सूत्रभाष्यम्—

'विज्ञानात्मा सह देवैश्च सर्वैः' (प्र. उ. ४-११)। 'स आनन्दः स बलः स ओजः स परेणामुं लोकं नीयते स विमुच्यत इति जीवस्य ज्ञानानन्दादिरूपत्वमुच्यते। 'स दुःखाद्विमुक्त आनन्दी भवति। सोऽज्ञानाद्विमुक्तो ज्ञानी भवति। सोऽबलाद्विमुक्तो बली भवति। स नित्यो निरातङ्कोऽवतिष्ठत'इति पैङ्गिश्रुतावनानन्दादिरूपत्वं प्रतीयते। अत आह—

।। ॐ पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॐ ।। ३१ ।।

यथा बालस्य सदेव पुंस्त्वं यौवनेऽभिव्यज्यत एवं सतामेवानन्दादीनां व्यक्त्यपेक्षया तदुक्तिः।

'बलमानन्द ओजश्च सहो ज्ञानमनाकुलम्।

स्वरूपाण्येव जीवस्य व्यज्यन्ते परमाद्विभोरि'ति च गौपवनश्रुतिः ।।३१।।

तत्वप्रकाशिका—

अत्रेश्वरे श्रुतिसमन्वयसिद्ध्यर्थं जीवस्वरूपविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसंगतिः। परमेश्वरे श्रुतिसमन्वय उक्तः। जीवस्य ज्ञानाद्यात्मकत्वाभिधायकश्रुतेः श्रुत्यन्तरविरोधेनाप्रामाण्ये तदनुपपत्तेरवश्यं निरसनीय एव। प्रकृतो

जीव एव विषयः। ज्ञानादिरूपो न वेति संदेहः। संदेहबीजं श्रुतिविगानं दर्शयति ॥ विज्ञानात्मेति ॥ अनानन्दादिरूपत्वं आनन्दादिरूपत्वाभावः। न जीवो ज्ञानादिरूप इति पूर्वः पक्षः। तथा श्रुतेः। न च युक्तमस्ति विपरीताऽपि श्रुतिः। न चासावीश्वरविषया 'प्राणा भूतानि संप्रतिष्ठन्ति यत्र स परेणामुलोकम्' इति श्रुतिविरोधादिति। अनानन्दादिरूपत्वश्रुतेः सयुक्तिकत्वात्। न ह्यानन्दादिरूपत्वमात्मनोऽनुभूयते। न च प्रतिबन्धकाद्विद्यमानाप्यानन्दादिरूपता नानुभूयत इति वाच्यम्। जीवस्याहमिति नित्याभिव्यक्तत्वेन तत्स्वरूपभूतानां व्यवधानस्यैवानुपपत्तेः। आनन्दादिरूपत्वे च जीवस्य न केनचिन्मोक्षाय प्रयतितव्यम्। अत्रावरणादननुभवो मोक्षे त्वभिव्यक्तेरनुभव इति वदन् प्रष्टव्यः। किमावरणमानन्दादीनामज्ञानं शरीरादि वा। नाद्यः। तस्यैवानुपपत्तेरुक्तत्वात्। न द्वितीयः। वैपरीत्यात्। अत एव मोक्षेऽभिव्यक्तिरित्ययुक्तम्। तदेवं सयुक्तिकश्रुतिविरोधादप्रमाणमेवान्या श्रुतिरतो नेश्वरे श्रुतिसमन्वयो युक्त इति प्राप्ते सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ अस्येति तद्गुणसारत्वं प्रकृतं परामृश्यते। भवत्येवानन्दादिरूपो जीवः। न चोक्तश्रुतियुक्तिविरोधः। यथा पुरुषयोषिदादीनामपत्योत्पत्तिशक्तिस्वरूपत्वेऽपि कालतस्तदभिव्यक्तेर्नायं पूर्वं पुमानिदानीं तु पुमानित्यादि युज्यते। एवं जीवस्वरूपत्वेन मुक्तेः पूर्वमपि सतो ज्ञानानन्दादेरीश्वरप्रसादेनाभिव्यक्तिनिमित्तेनानन्दीभवतीत्यादिव्यपदेशोपपत्तेः। प्रागनभिव्यक्तत्वेनानुभवाभावसंभवात्। तदभिव्यक्त्यर्थं च मुमुक्षूणां प्रयत्नोपपत्तेरिति भावः। न चावरणानुपपत्तिः। ज्ञानाभावातिरिक्ततन्निमित्ताविद्याभ्युपगमात्। ननु प्रागसतामुत्पत्तिवादिनी श्रुतिः किं न स्यात् किमभिव्यक्तिकल्पनयेत्यत आह ॥ बलमिति ॥ एतच्च सज्जीवविषयम्। केषांचिद् दुःखादिरूपत्वं मिश्रत्वं च ज्ञातव्यम् ॥ ३१ ॥

भावदीपः—

॥ ॐ पुंस्त्वादिवत्वस्य० ॐ ॥ ३१ ॥ साक्षाद्विरोधप्रतीत्यर्थं वक्ष्यमाणप्रतिज्ञायाः श्रुत्यविसंवादार्थं च भाष्यवाक्यार्थमाह ॥ अनानंदेति ॥ स्वगुणाननुभूत्यनुपपत्तेः पूर्वज्ञानादीनां सामस्त्येनाभाव इति न्यायविवरणे पूर्वस्माज्जीवस्येति पदमनुवर्त्य प्रतिज्ञार्थमाह ॥ न जीवो ज्ञानादिरूप इति ॥ पादसंगत्यर्थं युक्तिं पूर्वमनुक्त्वा भाष्योक्तश्रुतिमेव पूर्वमाह ॥ तथा श्रुतेरिति ॥ उक्तश्रुतिप्राबल्यायान्यत्रोक्तयुक्ति वक्तुं शंकामाह ॥ न चेति ॥ स परेणेत्यादिशेषोक्तेरुपयोगायाह ॥ न चासाविति ॥

विज्ञानात्मा सह देवैश्च सर्वैरिति षट्प्रश्नवाक्ये प्रसिद्धत्वात् भाष्ये अनुक्तमपि शेषं स आनंद इति श्रुत्यंतरे शेषस्योपात्तत्वात्पूर्ववाक्येऽप्यभिमतं मत्वाह ।। प्राणा भूतानीति ।। देवैः सह विज्ञानात्मप्राणभूतानां भगवदाश्रयत्वोक्तेर्विज्ञानात्मा जीव एवेति भावः। स आनंद इति श्रुतावपि स परेणेति वाक्यशेषे जीवलिंगश्रवणाज्जीवविषयैव श्रुतिरिति भावः। स्वगुणाननुभूत्यनुपपत्तेरित्यन्यत्रोक्तयुक्तिमाह ।। न हीति ।। तत्र गुणाननुभवादित्येव वाच्ये स्वगुणाननुभूत्यनुपपत्तेरित्युक्तितात्पर्यं व्यनक्ति ।। न च प्रतिबंधादिति ।। स्वगुणाननुभूत्यनुपपत्तेरित्यत्र समाहारद्वंद्वेन वा सहितसमासेन वा स्वगुणाननुभवादनुपपत्तेश्चेति हेतुद्वयमुपेत्यापादकपूर्त्यानुपपत्तेरित्येतत्प्रकारांतरेण व्याचष्टे ।।आनंदादिरूपत्वे चेति।। किं चेति चार्थः ।।न केनचिदिति।। एतेन मोक्षाय प्रयत्नानुपपत्तेरित्यर्थो दर्शितः। अन्यथापि व्याख्यातुमाह ।। अत्रेत्यादि ।। संसार इत्यर्थः ।। तस्यैवेति ।। ज्ञानाभाव एवाज्ञानमिति पूर्वपक्षिणो मम मते अज्ञानानुपपत्तेरित्यर्थः। एतेन स्वगुणाननुभूतेः स्वगुणाज्ञानस्यानुपपत्तेर्ज्ञानाभावस्यैवाज्ञानत्वादित्यर्थो दर्शितः ।। वैपरीत्यादिति ।। शरीरस्यानंदाद्यनुभवरूपभोगायतनत्वेन भोगप्रतिबंधकत्वायोगादित्यर्थः। एतेन शरीरे सति स्वगुणाननुभूत्यनुपपत्तेरित्यर्थो दर्शितः।। अत एवेति ।। भोगायतनशरीरस्य तत्राभावादेवेत्यर्थः। तत्तस्मात् तदेव व्यनक्ति ।। सयुक्तिकेति ।। छ ।। अप्रकृतत्वाद्भाष्ये सतामेवानंदादीनामित्युक्तिः कथमित्यत आह ।। अस्येतीति ।। यद्वा जीवपरामर्शभ्रांतिं निराह ।। अस्येतीति ।। सूत्रे ज्ञपदमनुवर्त्य साध्यं बहिरेवाह ।। भवत्येवेति ।। तथा श्रुतेरिति योज्यम्। सूत्रभाष्ये स दुःखाद्विमुक्त इति श्रुत्यादिविरोधनिरासकत्वेन व्याचष्टे ।। न चेत्यादिना ।। बालस्येत्युपलक्षणं मत्वा सौत्रादिपदार्थव्यक्त्यर्थमाह ।। पुरुषेति ।। पश्वादय आदिपदार्थ इत्याहुः। सतां पारमार्थिकानामिति भ्रमनिरासायाह ।। मुक्तेः पूर्वं सत इति ।। बहुधर्मलाभाय भाष्ये बहुवचनोक्तावपि सूत्रानुसारादेकवचनोक्तिः। वक्ष्यमाणदिशाऽनाद्यविद्यावरणस्य भावरूपस्य निवर्तकाभावादभिव्यक्तिरयुक्तेत्यतः परमाद्विभोरिति प्रमाणानुरोधादाह ।।ईश्वरप्रसादेनेति।। व्यक्तमेतत्तदभिध्यानादित्यत्र। सौत्रयोगशब्दार्थो निमित्तेनेति। तदुक्तिरित्यस्यार्थः आनंदादीति। एतेन पूर्वमव्यक्तानां पश्चात्सुव्यक्त्युपपत्तेरित्यन्यत्रोक्तेः सुव्यक्त्या व्यपदेशोपपत्तेरित्यर्थ उक्तः। अस्त्वेवं श्रुत्यविरोधः। युक्त्यविरोधस्तु कथमित्यतः पूर्व-

मव्यक्तानामिति षष्ठ्यंतांशभावमाह ॥ प्रागिति ॥ सुव्यक्त्यर्थं प्रयत्नोपपत्तेरित्युत्तरभागार्थमुपेत्याह ॥ तदभिव्यक्त्यर्थमिति ॥ तस्यैवानुपपत्तेरित्युक्तदोषमाशंक्य निराह ॥ नचेति ॥ तन्निमित्तेति ॥ ज्ञानाभावनिमित्तेत्यर्थः । न चाभ्युपगमो निर्बीजः । वक्ष्यमाणसूत्रोक्तबाधकस्यैव बीजत्वादिति भावः । श्रुतेः सर्वजीवपरत्वेऽग्रेतनसूत्रविरोध इत्यत आह ॥ एतच्चेति ॥ एतेन तद्गुणसारत्वादित्युक्तिरपि व्याख्याता । उत्तरानुकूल्यायाह ॥ केषांचिदिति ॥ ३१ ॥

सूत्रभाष्यम्—

॥ ॐ नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ॐ ॥ ३२ ॥

व्यक्त्यनङ्गीकारे देवानां च नित्योपलब्धिरानन्दादीनामसुराणां नित्यानुपलब्धिर्मनुष्याणां च नित्योपलब्ध्यनुपलब्धी च प्रसज्ज्यन्ते । 'नित्यानन्दो नित्यज्ञानो नित्यबलः परमात्मा नैवमसुरा एवमनेवं च मनुष्या' इति ह्याग्निवेश्यश्रुतिः । भविष्य(त्पुराणे) त्पर्वणि च—

'नित्यानन्दज्ञानबला देवा नैवं तु दानवाः ।
दुःखोपलब्धिमात्रास्ते मानुषास्तूभयात्मकाः ॥
तेषां यदन्यथा दृश्यं तदुपाधिकृतं मतम् ।
विज्ञानेनाऽऽत्मयोगेन निजरूपे व्यवस्थितिः ॥
सम्यज्ज्ञानं तु देवानां मनुष्याणां विमिश्रितम् ।
विपरीतं च दैत्यानां ज्ञानस्यैवं व्यवस्थितिरि'ति ॥ ३२ ॥

॥ इति पुंस्त्वाधिकरणम् ॥ १६ ॥

तत्वप्रकाशिका—

यदुक्तं जीवस्वरूपभूतानामानन्दादीनां प्रागनभिव्यक्तानां मोक्षेऽभिव्यक्तिरिति तदयुक्तम् । जीवस्वरूपस्य नित्याभिव्यक्तत्वेन तत्स्वरूपभूतानामीश्वरप्रसादेनाभिव्यक्त्ययोगादिति चेत्तत्र प्रष्टव्यम् । किं जीवस्यानन्दादिरूपत्वमङ्गीकृत्य तदावरणाभावात्तन्निवृत्तिर्नाभ्युपगम्यते किं वानन्दादिरूपत्वमेवानङ्गीकृत्येदमुच्यते । प्रथमपक्षदूषणाय सूत्रमुपन्यस्य व्याचष्टे ॥ नित्येति ॥ यदि जीवस्वरूपस्यानन्दादिरूपत्वमङ्गी-

कृत्यावरणाभावाद् व्यक्तिरावरणनिवृत्तिर्मोक्षे नाङ्गीक्रियते तर्हि देवादीनां मोक्षयोग्यानां नित्यमानन्दाद्यनुभवः स्यात् । असुरादीनां न कदाप्यानन्दाद्यनुभवः स्यात् दुःखाद्यनुभव एव भवेत् । मध्यममानुषाणां च नित्यमानन्दादीनामुपलब्धिः । केवलं तदुपलब्ध्यभावो दुःखाद्युपलब्धिश्च समैव स्यात् । आवरणाभावेऽनुभवाभावायोगादिति । अतोऽस्त्येवाविद्यावरणं भगवत्प्रसादेन तन्निवृत्तिश्चेति भावः । द्वितीयं प्रमाणविरोधेन पराचष्टे ॥ नित्येति ॥ एवं सुरा इति हृदयम् । यद्यप्यत्र प्रागुक्तश्रुतिरतिदेष्टुं युक्ता तथापि तत्राशेषार्थानुक्तेः श्रुत्यन्तरोदाहरणम् । अधिकरणार्थे स्मृतिं चाह ॥ भविष्यदिति ॥ दुःखोपलब्धिमात्रास्तद्योग्याः । उपाधिर्बाह्यः । तदेवं श्रुत्यविरोधेन जीवस्यानन्दादिरूपत्वसिद्धेर्युक्तो हरौ श्रुतिसमन्वय इति सिद्धम् ॥ ३२ ॥ अ० १६ ॥

भावदीपः—

॥ ॐ नित्योपलब्ध्यनुपलब्धि० ॐ ॥ ३२ ॥ वक्ष्यमाणश्रुतिसाफल्यायाह ॥ किमिति ॥ सौत्रान्यथाशब्दविवरणपरभाष्यस्थव्यक्तिपदार्थमाह ॥ व्यक्तिरावरणनिवृत्तिरिति ॥ तदनंगीकारे हेतुः आवरणाभावादिति । न हि प्रतियोगिनोऽभावे तन्निवृत्तिर्युक्ता । शशश्रृंगादेर्निवृत्तेरदृष्टेरिति भावः । मनुष्योत्तमानां परिग्रहाय देवादीनामित्येतव्द्याचष्टे ॥ मोक्षयोग्यानामिति ॥ मनुष्याधमाद्युपसंग्रहाय असुरादीनामित्यादिपदम् । भाष्ये असुराणामित्यत्रानंदादीनामित्यनुवर्त्य असुरादीनां न कदाचिदानंदाद्यनुभवः स्यादिति कृतापादनमयुक्तम् । स्वरूपानंदादेरभावादेवानुपलब्ध्युपपत्तेरनावरणस्यानुपलब्धि प्रत्यप्रयोजकत्वाच्चेत्याशंक्यानंदाद्यनुपलब्धिर्नापाद्यते । किं तु तत्प्रयोजिकासुखाद्युपलब्धिविरुद्धा स्वरूपदुःखाद्युपलब्धिरापाद्यत इत्याह ॥ दुःखाद्यनुभव एवेति॥ उत्तमाधममानुषयोः प्राग्गृहीतत्वात्तद्व्यावृत्त्यर्थं मनुष्यपदं व्याचष्टे ॥ मध्यमेति ॥ ननु भाष्ये तेषामानंदोपलब्धितदभावावापादितौ । तत्रोपलब्ध्यभावापादनमयुक्तम् । आवरणाभावस्योपलब्ध्यभावं प्रत्यप्रयोजकत्वादित्याशंक्य सुखोपलब्धेरेवाभावो नापाद्यते किं तु केवलायाः दुःखाद्यनुपलब्धिविशिष्टायाः सुखोपलब्धेरभावः । ततश्च सुखाद्यनुपलब्ध्यापादनेन दुःखाद्युपलब्धिरेवापादिता स्यात् । अतो न दोष इत्याह ॥ केवलं तदुपलब्ध्यभाव इत्यादिना ॥ समैवेति ॥ मध्यममनुष्याणां मिश्रत्वात्सुखस्य दुःखस्य चोपलब्धिः समैव स्यादित्यर्थः । सूत्रार्थस्तु तंत्रदीपिकायां व्यक्तः ॥ अत इति ॥ बाधकाभावादित्यर्थः । अनादेर्भावस्य निवृत्त्युपायमाह

॥ भगवदिति ॥ तथा च स्मृतिः। तेषामेवानुकंपार्थमहमज्ञानजं तमः। नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वतेति ॥ एवं सुरा इतीति ॥ श्रुतौ परमात्मशब्देनोत्तमजीवराशिर्वा परमात्मेत्येतस्यानंतरं शेषो वा विवक्षणीयः। उत्तरस्मृत्यनुरोधादिति भावः। संसारे दुःखोपलब्धिमात्रत्वाभावादाह ॥ तद्योग्या इति ॥ तत्तस्मादेवमुक्तरीत्या दुःखाद्विमुक्त इति श्रुतेरभिव्यक्तिनिमित्तत्वेन सावकाशत्वादानंदरूपत्वे आवरणाभावे च प्रमाणाभावाच्चेत्यर्थः। जीवस्य त्रिविधस्य। आनंदादीत्यादिपदेन दुःखादिमिश्रत्वं च ग्राह्यम् ॥ ३२ ॥ अ० १६ ॥

सूत्रभाष्यम्—

ईश्वरस्यैव कर्तृत्वमुक्तम्। 'यत्कर्म कुरुते तदभिसम्पद्यत' (बृ. उ. ६-४-५) इति जीवस्योपलभ्यते। अत आह—

॥ ॐ कर्ता शास्त्रार्थवत्त्वात् ॐ ॥ ३३ ॥

जीवस्य कर्तृत्वाभावे शास्त्रस्याप्रयोजकत्वप्राप्तेर्जीवोऽपि कर्ता ॥ ३३ ॥

तत्वप्रकाशिका—

अत्रेश्वरे श्रुतिसमन्वयसिद्ध्यर्थं जीवकर्तृत्वविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसंगतिः। ईश्वरे श्रुतिसमन्वय उक्तः। स च जीवकर्तृताविषयश्रुतीनां विरोधेनाप्रामाण्येऽनुपपन्नः स्यादिति तन्निरासः कार्य एव। प्रकृतो जीव एव विषयः। किं कर्ता न वेति संदेहः। संदेहबीजं श्रुतिविगानं दर्शयति ॥ ईश्वरस्येति ॥ ईश्वरस्यैव कर्तृत्वमुक्तमित्यनेन नान्यः कर्तेत्यादिश्रुतिं सूचयति। जीवो न कर्तेति पूर्वः पक्षः। तत्कर्तृत्वाभावस्य श्रुतत्वात्। जीवकर्तृत्वेऽप्यस्ति श्रुतिः न चासावीश्वरविषया। 'तदभिसंपद्यते' इति फलसंपत्तिश्रवणादिति चेन्न। अकर्तृकत्वश्रुतेः सयुक्तिकत्वेन प्राबल्यात्। समर्थितं हीश्वरस्यैवानन्ययोगेन कर्तृत्वमितरव्यपदेशादित्यादौ। अत एव द्वयोः कर्तृत्वमित्यपि प्रत्युक्तम्। ईश्वरस्यैव कर्तृत्वाङ्गीकारे कल्पनालाघवं च स्यात्। जीवस्यापि तदङ्गीकारे तु गौरवं स्यात्। न खलु लाघवाय श्रुत्यादिसिद्धमीश्वरस्य कर्तृत्वं हातुं युक्तम्। अतः सयुक्तिकश्रुतिविरोधेन कर्तृत्वश्रुतेरप्रामाण्यादयुक्तो नारायणे श्रुतिसमन्वय इति प्राप्ते सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ अस्त्येव जीवस्यापि कर्तृत्वम्। तदभावे विधिनिषेधशास्त्रवैयर्थ्यप्रसङ्गात्। न हि कर्तारमन्तरेणारण्यरोदनायमानशास्त्रस्य सार्थक्यं भवति। न च

जडं प्रति तौ भवतो नापीश्वरं प्रति। तथा सति पुण्यपापलेपप्रसङ्गेनानीश्वरत्वापत्तेः। अतो जीवस्य कर्तृत्वाङ्गीकारे शास्त्रस्यार्थवत्त्वसिद्धेः सोऽपि कर्ताङ्गीकार्य इति भावः॥ ३३॥

भावदीपः—

॥ ॐ कर्ता शास्त्रार्थवत्त्वात् ॐ ॥ ३३ ॥ भाष्ये उक्तमित्यस्य श्रुतौ उक्तमित्यप्यर्थमुपेत्य पादसंगत्यर्थं तत्सूचितमाह ॥ ईश्वरस्यैवेति ॥ न कर्तेतीति ॥ स्वतंत्रकर्ता परतंत्रकर्ता वा नेत्यर्थः। भाष्ये श्रुतिशेषोक्तेरुपयोगं व्यनक्ति ॥ न चेत्यादिना ॥ सयुक्तिकत्वेन लाघवादिरूपयुक्तिसाहित्येनेत्यर्थः। ईश्वरस्यैव कर्तृत्वे कल्पनालाघवमित्यन्यत्रोक्तलाघवयुक्तिं वक्तुमनुभवसिद्धजीवकर्तृत्वादप्यप्रामाणिकस्येश्वरकर्तृत्वस्य स्वीकार एव गौरवमित्याशंकानिवृत्तये तस्य प्रामाणिकत्वायेश्वरस्यैवेत्यादिभाष्यं व्याचष्टे ॥ समर्थितं हीति ॥ एवकारार्थोऽनन्ययोगेनेति। यद्यपीतरव्यपदेशादित्यधिकरणे जीवकर्तृत्वमेव निराकृतं तथापि क्षीरवद्धि देवादिवदपि लोके इत्यनेन तस्याप्युक्तेरिति भावः। आदिपदेन प्रवृत्तेश्च अन्यत्राभावाच्च अन्यथानुमितौ च ज्ञशक्तिवियोगात् तेजोऽतस्तथा ह्याह इत्यादिग्रहः। एवकारतात्पर्यमाह ॥ अत एवेति ॥ हिताक्रियादिना अन्यकर्तृत्वनिरासपूर्वमीशकर्तृत्वसमर्थनादेवेत्यर्थः। एतेन जीवेशयोर्द्वयोः कर्तृत्वायोगादिति युक्तिर्दर्शिता। एवं भाष्योक्तां युक्तिमुक्त्वाधुनान्यत्रोक्तां च युक्तिं व्यनक्ति॥ ईश्वरस्यैवेति॥ गौरवमिति ॥ विधिनिषेधशास्त्रवैयर्थ्यं तु सिद्धांतेऽपि समम्। दारुयोषावज्जीवस्यापि परतंत्रकर्तृत्वोपगमादिति भावः। वैपरीत्यं किं नेत्यत आह ॥ न खल्विति ॥ नापि नान्यः कर्तेतिश्रुत्या हिताक्रियादियुक्त्या च निषिद्धं जीवकर्तृत्वमुपादातुं युक्तमित्यपि योज्यम्। एतेन भाष्ये ईश्वरस्यैव कर्तृत्वमुक्तं समर्थितमित्युक्तेरुपयोगो दर्शितः ॥ अत इति ॥ द्वयोः कर्तृत्वायोगादीश्वरस्यैव कर्तृत्वे लाघवाच्चेत्यर्थः। सयुक्तिकत्वेऽयं हेतुः ॥छ॥ जीवोऽपि कर्तेतिभाष्यार्थमाह॥ अस्त्येवेति ॥ जीवस्याकर्तृत्वे शास्त्रस्य वैयर्थ्यादित्यन्यत्रोक्त्यनुरोधेन भाष्यार्थमाह ॥ तदभाव इति ॥ ज्योतिष्टोमेन स्वर्गकामो यजेत ब्राह्मणो न हंतव्य इत्यादिविधिनिषेधरूपस्येत्यर्थः। तर्कस्याप्रयोजकत्वं निराह ॥ न हीति ॥ अस्त्वन्यदेव कर्तृ इत्यत आह ॥ न चेति ॥ तौ विधिनिषेधौ। नापि मुक्तं प्रति व्याहतेरिति भावः। भाष्यं सौत्रहेतोर्व्यतिरेकमुखेनोपपादकमिति भावेन

तस्यापि कर्तृत्वे शास्त्रार्थसिद्धेश्चेत्यन्यत्रोक्त्यनुरोधेन भाष्यस्य विपर्यये पर्यवसान-मुखेन सूत्रार्थमाह ॥ अत इति ॥ विपक्षे बाधकभावादित्यर्थः ॥ सोऽपीति ॥ सूत्रे ज्ञ इत्यनुवृत्तिरिति भावः ॥ ३३ ॥

सूत्रभाष्यम्—

॥ ॐ विहारोपदेशात् ॐ ॥ ३४ ॥

'स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वाऽज्ञातिभिर्वे' (छां. उ. ८-१२-३) त्यादि मोक्षेऽपि ॥३४॥

तत्वप्रकाशिका—

जीवस्य स्वतः कर्तृत्वाभावेऽपि परगतकर्तृत्वे विवेकाग्रहोऽस्त्येवातस्तादृशं कर्तारं प्रति शास्त्रं प्रवर्ततामित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ विहारेति ॥ न जीवस्य काल्पनिकं कर्तृत्वं किं तु पारमार्थिकमेव । विगलिताखिलकल्पनेऽपि कैवल्ये विहारादिकर्तृत्वोपदेशादिति भावः ॥ ३४ ॥

भावदीपः—

॥ ॐ विहारोपदेशात् ॐ ॥ ३४ ॥ परेति ॥ बुद्धीत्यर्थः । तादृशं कर्तारम् । काल्पनिककर्तारम् । भाष्यस्य सूत्रेणान्वयमुपेत्य योग्यसाध्योक्त्यार्थमाह ॥ न जीव-स्येति ॥ ३४ ॥

सूत्रभाष्यम्—

॥ ॐ उपादानात् ॐ ॥ ३५ ॥

साधनाद्युपादानप्रतीतेश्च ॥ ३५ ॥

तत्वप्रकाशिका—

अस्तु मोक्षे जीवस्य स्वाभाविकं कर्तृत्वं प्रामाणिकत्वात् । संसारे तु काल्प-निकमेव किं न स्यात्तावतापि च शास्त्रसार्थक्यादित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ उपादानादिति ॥ न जीवस्य संसारेऽपि कर्तृत्वं काल्पनिकम् । मोक्षाद्यर्थं साधनाद्युपादानप्रतीतेः ततश्च फलदर्शनात् । न हि परानुष्ठितसाधनैस्वात्मीयता-कल्पनमात्रेण फलाभिसंबन्धो भवत्यतिप्रसङ्गादिति भावः ॥ ३५ ॥

भावदीपः—

॥ॐ उपादानात् ॐ ॥ ३५ ॥ प्रत्यक्षस्याप्युक्तेरुपयोगायावतारयति ॥ आस्त्विति ॥ साध्यपूर्त्या भाष्यं व्याचष्टे ॥ न जीवस्येति ॥ चशब्दार्थमाह ॥ ततश्चेति ॥ यद्वोत्तरसूत्रे चशब्दस्यात्राप्यन्वयमुपेत्योक्तहेतुसमुच्चयेन भाष्ये प्रतीतेश्चेत्युक्तं अत एवाग्रे टीकायां प्रत्यक्षेण चेत्यनुवादः ॥ ३५ ॥

सूत्रभाष्यम्—

**॥ ॐ व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॐ ॥ ३६ ॥**

'आत्मानमेव लोकमुपासीत' (बृ. उ. ३-४-१५) इति क्रियायां व्यपदेशाच्च । अन्यथाऽऽत्मैव लोकमिति निर्देशः स्यात् ॥ ३६ ॥

तत्वप्रकाशिका—

एवमुपपत्त्या प्रत्यक्षेण च साधितजीवकर्तृत्वं श्रुत्याऽपि समर्थयत्सूत्रमुपन्यस्य व्याचष्टे ॥ व्यपदेशाच्चेति ॥ 'आत्मानमेव लोकमुपासीत' इत्यादावुपासनादिक्रियायां कर्तृत्वेनात्मनो व्यपदेशात्तस्यापि कर्तृत्वमस्त्येव । अत्र जीव उपासीतेत्युक्त्यभावात्कथमयं जीवस्य कर्तृत्वव्यपदेश इति । मैवम् । न हि तावत्क्रिया कर्तृशून्या युक्ता । न तावज्जडं कर्तृ । जीवस्यात्र कर्तृत्वेन श्रुत्यनभिमतत्वे परमात्माभिप्रेतः स्यात् । अन्यथा श्रुतिवैयर्थ्यापातात् । तथा च तस्य कर्तृत्वेन व्यपदेशः स्यान्न तु कर्मत्वेन । अतो जीवस्यैवात्र कर्तृत्वमुच्यते । तथा च प्रामाणिकत्वान्न गौरवमिति भावः ॥३६॥

भावदीपः—

॥ ॐ व्यपदेशाच्च क्रियायां० ॐ ॥ ३६ ॥ उपपत्त्येति ॥ शास्त्रार्थवत्त्वान्यथानुपपत्तिमुक्तिकालीनकर्तृत्वश्रवणान्यथानुपपत्तिरूपोपपत्त्येत्यर्थः । सूत्रे चशब्दादाह ॥ श्रुत्यापीति ॥ तथा चोक्तं हटवादे प्रत्यक्षैषा कर्तृता जीवसंस्था तथागमादनुमानाच्च सर्वमिति ॥ समर्थयदिति ॥ समाहितोऽयं शब्दः प्रागस्माभिर्नामपादे छंदोनये ॥ कर्तृत्वेनेति ॥ लः कर्मणि च भावे चाकर्मकेभ्य इति कर्तरि लकारविधानादिति भावः । ज्ञः कर्तेत्यनुवृत्ति मत्वार्थमाह ॥ तस्यापि कर्तृत्वमिति ॥ अन्यथेत्यादिभाष्यं व्याख्यातुं परिष्करोति ॥ अत्रेत्यादिना तथा चेत्यंतेन ॥ तथा चेति ॥ जीवस्याकर्तृत्वे इत्यर्थः । प्रागुक्तदोषं निराह ॥ तथा चेति ॥ श्रुत्यादिना जीवकर्तृत्वे सिद्धे सतीत्यर्थः ॥ ३६ ॥

सूत्रभाष्यम्—

तर्हि कथमीश्वरस्यैव कर्तृत्वमित्यतो वक्ति—

॥ ॐ उपलब्धिवदनियमः ॐ ॥ ३७ ॥

यथा ज्ञाने इदं ज्ञास्यामीत्यनियमः प्रतीयते एवं कर्मण्यपि जीवस्य । 'य आत्मानमन्तरो यमयती' (माध्यन्दिन पाठः) ति च श्रुतिः ॥ ३७ ॥

तत्वप्रकाशिका—

नन्वेवं जीवस्यापि कर्तृत्वे कथमीश्वरस्यैव कर्तृत्वं पूर्वं समर्थितं कथं च श्रुतिरुपपद्येत । अतस्तद्विरोधोऽस्त्येवेत्याशयेनाशङ्क्य तत्परिहाराय सूत्रमवतार्य व्याचष्टे ॥ तर्हीति ॥ इदं वस्त्वहं ज्ञास्यामीत्येवं निरूपितेऽपि यथा जीवस्य न ज्ञाने नियमोऽस्ति । स्वेच्छानुसारेण न ज्ञानलाभः । तथा करिष्यामीति निरूपितेऽपि कर्मणि नियमाभावादीश्वरस्य तु तद्भावात्स एव कर्ता न जीव इत्युक्तं प्राङ् न तु सर्वथा कर्तृत्वाभावादिति भावः । न चायं दृष्टांतः साध्यसमः । न हि जिज्ञासुर्ज्ञानक्रियायामेव साक्षाद् व्याप्रियते किं तु तत्साधन एवेति । ईश्वरस्यैव नियमेन कर्तृत्वं न जीवस्येत्यत्र प्रमाणमाह ॥ य इति ॥ ३७ ॥

भावदीपः—

॥ ॐ उपलब्धिवद्नियमः ॐ ॥ ३७ ॥ श्रुतिरिति ॥ नान्यः कर्तेति श्रुतिरित्यर्थः ॥ अत इति ॥ श्रुतिसमर्थनयोर्निरवकाशत्वादित्यर्थः । भाष्यं व्याचष्टे ॥ इदमिति ॥ निरूपितेऽपि उद्दिष्टेऽपीत्यर्थः । ज्ञान इत्यनेनान्वयः ॥ साध्यसम इति ॥ विप्रतिपन्न इत्यर्थः । समाधत्ते ॥ न हीति ॥ साक्षाद्व्याप्रियत इति ॥ तथात्वे हि ज्ञाननियमानुपलंभः प्रयत्नाभावनिमित्तक इति कथंचित्कल्प्येत । यदा तु साधन एव व्याप्रियते तदा सुंदरवस्त्वादिदर्शनार्थं गमनादिव्यापारे प्रत्यक्षेऽपि तज्ज्ञानानियमदर्शनं सर्वजनसिद्धमिति भावः ॥ इत्यत्र प्रमाणमिति ॥ अत्र च श्रुतावीशजीवयोः स्वातंत्र्यास्वातंत्र्यप्रतीतेरिति भावः ॥ ३७ ॥

सूत्रभाष्यम्—

कुतः ?—

॥ ॐ शक्तिविपर्ययात् ॐ ॥ ३८ ॥

अल्पशक्तित्वाज्जीवस्य ॥ ३८ ॥

तत्वप्रकाशिका—

ननूभयोः कर्तृत्वाविशेषेऽपीश्वरस्यैव नियमेन कर्तृत्वं न जीवस्येत्येतत् किंनिबन्धनं वैलक्षण्यमिति पृच्छति ।। कुत इति ।। स्वातन्त्र्यपारतन्त्र्यनिमित्तौ नियमानियमाविति परिहारं वक्तुमीशजीवयोः स्वातन्त्र्यपारतन्त्र्ये साधयत्सूत्रं पठित्वा व्याचष्टे ।। शक्तीति ।। ईश्वरस्य पूर्णशक्तित्वात्स्वातन्त्र्यम् । जीवस्य तद्विपर्ययादस्वातन्त्र्यं प्रतीयत इति भावः ।। ३८ ।।

भावदीपः —

।। ॐ शक्तिविपर्ययात् ॐ ।। ३८ ।। पूर्वमनियमपदं नियमस्याप्युपलक्षकं व्याख्याय तस्यैव कुत इति भाष्ये नियमपदानुषंगमुपेत्यार्थमाह ।। नन्वित्यादिना ।। ।। वक्तुमिति ।। अत इति भाष्येणेति भावः । सूत्रमुपलक्षणं मत्वा व्याचष्टे ।। ईश्वरस्येति ।। पूर्णशक्तित्वतो हरेरिति स्मृतेरिति भावः । ज्ञस्येत्यनुवृत्तिं मत्वाह ।। जीवस्येति ।। वक्ष्यमाणं साध्यमत्रापि संयोजयति ।। अस्वातंत्र्यमिति ।। ३८ ।।

सूत्रभाष्यम्—

।। ॐ समाध्यभावाच्च ॐ ।। ३९ ।।

समाधाना (समाध्य) भावाच्चास्वातन्त्र्यं प्रतीयते ।। ३९ ।।

तत्वप्रकाशिका—

युक्त्यन्तरेणैतत्प्रतिपादयत्सूत्रमुपन्यस्य व्याचष्टे ।। समाधीति ।। समाधानमलंबुद्धिरस्तीश्वरस्येति तस्य स्वातन्त्र्यं जीवस्य च तदभावादस्वातन्त्र्यं प्रतीयते । स्वातन्त्र्यस्य पूर्णकामत्वादिति भावः । एवं चेत्किं तर्हीत्यत आह ।। अत इति ।। यत एवमीशजीवयोः स्वातन्त्र्यपारतन्त्र्ये प्रतीयेते अतः स्वातन्त्र्यपारतन्त्र्याभ्यां नियमानियमाविति भावः ।। ३९ ।।

भावदीपः—

।। ॐ समाध्यभावाच्च ॐ ।। ३९ ।। चशब्दादाह ।। युक्त्यंतरेणेति ।। अत इत्यनुवादः । स्वातंत्र्येत्यादिव्याख्या ।। ३९ ।।

सूत्रभाष्यम्—

अतः —

॥ ॐ यथा च तक्षोभयथा ॐ ॥ ४० ॥

यथा तक्ष्णः कारयितृनियतत्वं कर्तृत्वं च विद्यते एवं जीवस्यापि ॥ ४० ॥

तत्वप्रकाशिका—

नन्वेवं यदि जीवस्य न स्वातन्त्र्येण कर्तृत्वमपि त्वीश्वरेच्छयैव कथं तर्हि कर्तोच्यते । स्वतंत्रः खलु कर्तेत्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ यथेति ॥ यथा तक्षा प्रासादकारयितृनियतोऽपि कर्तोच्यते तथेश्वरनियतोऽपि जीवः कर्तेति व्यपदेष्टुं शक्यत इत्यर्थः ॥ ४० ॥

भावदीपः—

॥ ॐ यथा च तक्षोभयथा ॐ ॥ ४० ॥ सौत्रचशब्दो दार्ष्टांतिकसमुच्चय इति भावेन भाष्ये एवं जीवस्याप्युक्तिरिति मत्वा तद्व्याचष्टे॥ तथेश्वरेति ॥ ४० ॥

सूत्रभाष्यम्—

॥ ॐ परात्तु तच्छ्रुतेः ॐ ॥ ४१ ॥

सा च कर्तृत्वशक्तिः परादेव ।

‘कर्तृत्वं करणत्वं च स्वभावश्चेतना धृतिः ।

यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षये’ति हि पैङ्गिश्रुतिः ॥ ४१ ॥

तत्वप्रकाशिका—

ननु किं तक्ष्ण इव जीवस्य कर्तृत्वशक्तिर्जीवाधीनैवेश्वराधीनता तु वचनवेतनदानादिवदुत कर्तृत्वशक्तिरपीश्वराधीना । यद्याद्यस्तर्हि ईश्वरस्यैव कर्तृत्वमिति गतः पक्षः । द्वितीये न जीवस्य कर्तृत्वमित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ परादिति ॥ नास्माभिस्तत्कर्तृत्वसामर्थ्यं जीवाधीनमुच्यते येनापसिद्धान्तः स्यात् किं तु परमात्माधीनमेव । तथा श्रुतेरिति भावः ॥ ४१ ॥

भावदीपः—

॥ ॐ परात्तु तच्छ्रुतेः ॐ ॥ ४१ ॥ गतः पक्ष इति ॥ एतेन कर्तृशक्तेरी-

शायत्तत्वोक्तेः पूर्वोक्तविरोधनिरासः फलमिति दर्शितम् ॥ द्वितीय इति ॥ दारुप्रतिमावदिति भावः । परात्तु परादेवेत्युक्त्यवधारणव्यावर्त्योक्तिपूर्वं भाष्यं व्याचष्टे ॥ नास्माभिरिति ॥ ४१ ॥

सूत्रभाष्यम् –

॥ ॐ कृतप्रयत्नापेक्षस्तु विहितप्रतिषेधावैयर्थ्यादिभ्यः ॐ ॥४२॥

ततोऽप्रयोजकत्वं शास्त्रस्य नाऽऽपद्यते । कृतप्रयत्नापेक्षत्वात्तत्प्रेरकत्वस्य । आदिशब्देनावैषम्यादि ।

'पूर्वकर्म प्रयत्नं च संस्कारं चाप्यपेक्ष्य तु ।
ईश्वरः कारयेत्सर्वं तच्चेश्वरकृतं स्वयम् (मतम्) ॥
अनादित्वाद्दोषश्च पूर्णशक्तित्वतो हरेरि'ति भविष्यत्पर्वणि ।
'एतदेवं न चाप्येवमेतदस्ति च नास्ति चे' ति च मोक्षधर्मे ॥ ४२ ॥

॥ इति कर्तृत्वाधिकरणम् ॥ १७ ॥

तत्वप्रकाशिका––

नन्वस्मिन्नपि पक्षे दोष उक्तः । कर्तृत्वशक्तेरीश्वराधीनत्वे तस्यैव कर्तृत्वं न जीवस्येति पुनः शास्त्रवैयर्थ्यमित्येतामाशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥कृतेति॥ यतोऽयं परो विधिनिषेधशास्त्रावैयर्थ्यायैव स्वस्य वैषम्यनैर्घृण्यपरिहाराय च जीवस्यानादिकर्मप्रयत्नयोग्यतापेक्ष एव जीवं प्रेरयति न त्वनपेक्षोऽतो न जीवशक्तेरीश्वराधीनत्वेऽपि शास्त्रवैयर्थ्यम्। अनपेक्षया प्रेरणे हि तत्स्यादिति भावः। अवैषम्यादि संगृहीतमिति शेषः। उक्तोऽपि दोषपरिहारः स्मारयितुं पुनरत्रोक्तः। सूत्रार्थे स्मृतिसंमतिमाह ॥पूर्वेति॥ संस्कारो योग्यता। कर्मापेक्षया प्रेरकत्वे न तत्कर्मकर्तृत्वमीश्वरस्येत्यत आह ॥ तच्चेति ॥ तर्हि तत्प्रेरणापेक्षाभाव इत्यत आह ॥ अनादित्वादिति ॥ तर्हि कर्मणामानन्त्यात्कथं तत्कारयितृत्वमीश्वरस्येति तत्राह ॥पूर्णेति॥ अधिकरणार्थे स्मृतिं चाह ॥ एतदिति ॥ एतज्जीवस्य कर्तृत्वमेवं प्रामाणिकम्। न चाप्येवमीश्वरवत्स्वातन्त्र्येणात एतदस्ति न चास्ति चेत्युच्यत इत्यर्थः। अतः श्रुत्यविरोधेन जीवस्य कर्तृत्वसिद्धेर्युक्तो भगवति श्रुतिसमन्वय इति सिद्धम् ॥ ४२ ॥ अ० १७ ॥

भावदीपः—

॥ ॐ कृतप्रयत्नापेक्षस्तु० ॐ ॥ ४२ ॥ दोष उक्त इत्येतदेव व्यनक्ति ॥ कर्तृत्वेति ॥ भाष्ये तत इत्यस्य परामर्शविषयं दर्शयन् भाष्यसूत्रयोरर्थमाह ॥ यत इति ॥ पूर्वस्मात्पर इत्यनुवृत्तिं मत्वाह ॥ अयं पर इति ॥ अवैयर्थ्यायैव न त्वशक्तस्य स्वस्य सहायार्थमित्येवार्थः । कृतपदार्थः कर्मेति । सूत्रोक्तमुपलक्षणं मत्वाह ॥ योग्यतेति ॥ सौत्रतुशब्दार्थ एवेति । शेषमाह ॥ जीवं प्रेरयतीति ॥ एवकारव्यावर्त्योक्तिर्न त्विति । तत इत्यादिभाष्यवाक्यं व्याचष्टे ॥ अत इति ॥ विवृतमेतद्गीताभाष्ये अष्टादशेऽध्याये । अकर्तृत्वेऽपि विधिद्वारा ईश्वरप्रसादादिच्छोत्पत्त्योक्तकारणैः कर्मद्वारा पुरुषार्थी भवतीत्यादिना वैषम्यनैर्घृण्येनेत्यनेनापौनरुक्त्यायाह ॥उक्तोऽपीति॥ स्मारणं च कर्तृशक्तेरीशाधीनत्वप्रयुक्तवैषम्यादिशंकानिवृत्त्यर्थमिति भावः ॥ उच्यत इति ॥ नान्यः कर्तेत्यादावित्यर्थः ॥ अत इति ॥ युक्तिप्रत्यक्षश्रुतीनां भावात् । अकर्तृत्वश्रुतेः स्वातंत्र्यनिषेधपरत्वाच्चेत्यर्थः ॥ ४२ ॥ अ० १७ ॥

सूत्रभाष्यम्—

'अंशा एव हीमे जीवा अंशी हि परमेश्वरः ।
स्वयमंशैरिदं सर्वं कारयत्यचलो हरिः' ॥

इति गौपवनश्रुतौ अंशत्वं जीवस्योपलभ्यते ।

'नैवांशो न सम्बन्धो नापेक्ष्यो जीवः परस्य ।
तथाऽपि तु यथायोगं फलदः प्रभुरेकराट् ।
न नियम्यः स कस्यापि स सर्वस्य नियामकः' ॥

इति च भाल्लवेयश्रुतौ ॥

अतो ब्रवीति—

**॥ ॐ अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॐ ॥ ४३ ॥**

'मां रक्षतु विभुर्नित्यं पुत्रोऽहं परमात्मनः' । 'अवः परेण पितरं यो अस्यानुवेद

पर एनावरेण'(ऋ. सं. १-१६४-१८) । 'यस्तद्वेद स पितुष्पिताऽसत्'(म. ना. उ. २ – ४)। 'यस्ता विजानात्स पितुष्पिताऽसत्'(ऋ. सं. १-१६४-१६) ।

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीती' (मुं. उ. ३–१–१)

त्यादिना नानाव्यपदेशादंशो जीवः। तथा च पाराशर्यायणश्रुतिः—

'अंशो ह्येष परस्य योऽयं पुमानुत्पद्यते च म्रियते च नाना ह्येनं व्यपदिशन्ति पितेति पुत्रेति भ्रातेति च सखेति चे'ति । 'अन्यः परोऽन्यो जीवो नासावस्य कुतश्चन । नायं तस्यापि कश्चने' त्यन्यथा च काषायणश्रुतिः । 'ब्रह्म दाशा ब्रह्म कितवाः, ब्रह्मैवेमे दाशा' इत्यभेदेनाप्येकेऽधीयते । तथा चाग्निवेश्यश्रुतिः— 'अंशो ह्येष परस्य भिन्नं ह्येनमधीयिरेऽभिन्नं ह्येनमधीयिर' इति । वाराहे च—

'पुत्रभ्रातृसखित्वेन स्वामित्वेन यतो हरिः ।
बहुधा गीयते वेदैर्जीवोऽशस्तस्य तेन तु ॥
यतो भेदेन तस्यायमभेदेन च गीयते ।
अतश्चांशत्वमुद्दिष्टं भेदाभेदौ न मुख्यत' इति ॥ ४३ ॥

तत्वप्रकाशिका—

अत्र परमात्मनि श्रुतिसमन्वयसिद्ध्यर्थं जीवविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसंगतिः । हरौ श्रुतिसमन्वयो निरूपितः । स च जीवविषयश्रुतिविरोधेनाप्रामाण्येऽनुपपन्नः स्यादिति निराकार्यः । प्रकृतो जीवोऽत्र विषयः । किमीश्वरांशो न वेति संदेहः । संशयबीजं श्रुतिविगानं दर्शयति ॥ अंशा एवेति ॥ तत्र न जीवो हरेरंशः नाप्यनंश इति निर्णयो युज्यत इति पूर्वः पक्षः । न तावदंशत्वं निर्णेतुं शक्यम् । नैवांश इति श्रुतेः । न च तत्र परस्येति जीवान्तरविवक्षा । तथापीत्यादिवाक्यशेषविरोधात् । नाप्यनंशत्वनिर्णयः । 'अंशा एव' इति श्रुतेः । न च विकल्पेनाविरोधो यवव्रीहिश्रुत्योरिव । वस्तुविकल्पायोगात् । 'अंशा एव' नैवांश इति सावधारणत्वात् । न च देशकालविभेदेन व्यवस्थितो विकल्पः । विशेषप्रमाणमन्तरेण तादृशनिश्चयायोगात् । न च जीवेशाभेदस्य सयुक्तिकं निरस्तत्वादनंशत्वश्रुतिर्बलव-

तीति वाच्यम् । अभेदाभावेऽप्यंशत्वस्याविरोधात् । समस्तपटाद्भिन्नस्याप्येकस्य तन्तोस्तदंशत्वदर्शनात् । अतः श्रुतिद्वयस्यापि नानात्वादप्रामाण्यमेवेति नोक्तसमन्वयो युक्त इति प्राप्ते सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ जीवः परमात्मनोंऽशो भवत्येव । मां रक्षत्वित्यादिना नानाप्रकारेण जीवस्येशसंबन्धित्वव्यपदेशात् । तत्संबन्धित्वमेव तदंशत्वमिति वक्ष्याम इति भावः । यः पराद्धरेरवमो जीवोऽस्य जगतः पितरं वेदानेनावरेणायं परो जात इति व्यपदिश्यते तज्ज्ञानं च दुर्लभं को नु सर्वज्ञकल्पः प्रजासु ब्रह्म प्रावोचत् कस्य चैतदेवं मनो ज्ञानमाधिवयेन जातमित्यर्थः । यस्तद् ब्रह्म वेद स तस्य पितुः पिताभवदित्यर्थः । या भगवन्मूर्तयो मदुपास्याः स्त्रीलिङ्गशब्दवाच्यास्ता एव परमपुरुषानाहुः । यस्ताः पश्यति स एव चक्षुष्मान् यो न जानाति सोऽन्धः । यः सर्वज्ञो भगवत्पुत्रो विरिञ्चः स एव सम्यक् जानाति । यश्च जानाति स तस्य जगत्पितुरभिव्यञ्जकत्वात् पिताभवदित्यर्थः । एतद्दीर्घतमो वाक्यम् । नानाव्यपदेशादंशो जीव इत्यत्र श्रुतिं चाह ॥ तथा चेति ॥ हेत्वन्तरेणैतत्समर्थयति ॥ अन्य इति ॥ अन्यथा वक्ष्यमाणाभेदापेक्षया । एतच्छ्रुतिद्वयेन जीवेशयोर्भेदाभेदावुच्येते । न चान्यतरश्रुतिबाधो युक्तः । न च साक्षाद्भेदाभेदावुपपन्नौ । विरोधात् । अतः श्रुतिद्वयान्यथानुपपत्त्या भेदमङ्गीकृत्याभेदस्थानेंऽशत्वं वक्तव्यमिति भावः । उक्तं चाभेदश्रुतयोंऽशत्वादिति । भेदाभेदोक्त्यन्यथानुपपत्त्यांऽशो जीव इत्यत्रापि श्रुतिमाह ॥ तथा चेति ॥ समस्तसूत्रार्थे स्मृतिं चाह ॥ वाराहे चेति ॥ ४३ ॥

भावदीपः—

॥ ॐ अंशो नानाव्यपदेशात्० ॐ ॥ ४३ ॥ किमीश्वरांशो न वेतीति वक्ष्यमाणपूर्वपक्षानुगुण्याय जीवानां ब्रह्मांशत्वं निर्णेतुं शक्यमुत नेति संदेहकोटिप्रदर्शने कार्येऽप्येवमुक्तिः भाष्ये श्रुतिविगानरूपसंदेहबीजोक्त्यनुरोधेन वा एवं संशयकोटिकीर्तने तद्विरुद्धसिद्धांतकोटिरर्थलब्धेति वा बोध्यम् । नानाश्रुतेरप्रामाण्यमित्यन्यत्रोक्त्यनुरोधेन श्रुतिद्वयाप्रामाण्यमुपपादयन् अनिर्णयेन पूर्वपक्षमाह ॥ तत्रेत्यादिना ॥ श्रुतिशेषोक्तेरुपयोगं व्यनक्ति ॥ न चेत्यादि ॥ अंशा एवेति श्रुतेरिति भाष्ये श्रुतिशेषोक्तिः । सिद्धांते भिन्नांशत्वोपपादकतयोपयोज्यत इति भावः । श्रुतिद्वयस्यावधारणव्यावर्त्यमाशंक्य बीजोक्त्या निरस्यति ॥ न चेति ॥ व्रीहिभिर्यजेत यवैर्यजेतेति श्रुत्योरित्यर्थः । उक्तं च जैमिनिसूत्रे द्वादशस्य तृतीयपादे एकार्थास्तु विकल्प्येरन् समुच्चये चावृत्तिः स्यात् प्रधानस्येति व्रीहीणां यवानां चोभयेषामपि पुरोडा-

शप्रकृतित्वेन पुरोडाशसाधनतत्ररूपैकार्थेन विरोधप्राप्तौ कदाचिद् व्रीहीणामनुष्ठानं प्रयोगांतरे च यवानामिति विकल्पस्तथेत्यर्थः ॥ वस्त्विति ॥ अनुष्ठानरूपक्रियायाः कृतिसाध्यत्वेनैच्छिकत्वेऽपि इह जीवाख्ये वस्तुनि अंशत्वमनंशत्वं चायुक्तमित्यर्थः । अवधारणस्यान्यथोपपत्तिमाशंक्य देशादिविशेषोक्तिरहितसामान्यश्रुतिद्वयोक्त्या लब्धं समाधिमाह ॥ न च देशेत्यादिना ॥ यथा एकस्यैव वस्तुनो घटादेर्देशकालभेदेन सत्त्वमसत्त्वं च तथेत्यर्थः । श्रुतावंशैरिदं कारयतीति कर्तृत्वकारयितृत्वाभ्यां जीवपरयोर्भेदप्रतीतेरंशत्वोक्तिरयुक्तेति प्रतीतं विरोधमाशंक्य भिन्नस्याप्यंशत्वं सदृष्टांतमाह ॥ न चेत्यादिना ॥ समस्तपटाद्भिन्नस्यापीति ॥ यद्यपि समस्तपटेन सर्वतंतूनामत्यंताभेदः एकैकस्य तु खंडपटेनात्यंतभेदः समस्तेन तु भेदाभेदौ । यथोक्तं अंशिनो हि पटाद्या ये भिन्नैरेव परस्परम् । अंशैरंशिन उच्यंते नैवमेव हि चेतना इति इतरव्यपदेशादित्यधिकरणानुव्याख्याने सुधायां चांशिना भिन्नाभिन्ना इति । तथापि भेदांशमात्रस्यायमनुवादः । उक्तं सर्वं नानाश्रुतेरप्रामाण्यमित्यन्यत्रोक्तनानात्वोपपादकमिति दर्शयन्नर्थतस्तदनुवादेन फलोक्त्योपसंहरति ॥ अत इति ॥ विकल्पेन वान्यतरबाधेन वा निर्णयासंभवादित्यर्थः । श्रुतेरिति जात्येकवचनमिति भावेन श्रुतिद्वयस्येत्युक्तम् । नानात्वात् भिन्नार्थत्वादित्यर्थः ॥ छ ॥ सूत्रे परस्येति ज्ञ इति च पदद्वयानुवृत्तिं मत्वा भाष्यं सूत्रानुरोधेन व्युत्क्रमेण व्याचष्टे ॥ जीव इति ॥ अनिर्णयपूर्वपक्षनिरासाय भवत्येवेत्युक्तिः ॥ वक्ष्याम इति ॥ अंशो ह्येष इत्यादिप्रमाणैरित्यर्थः । जीवेशसंबंधपरत्वप्रतीत्यर्थं शेषोक्त्या श्रुत्यर्थमाह ॥ य इति ॥ परेणेत्यस्य परादित्यर्थः । अवोऽवमः । एना एनेन अनेनेत्यर्थः । द्वितीयाटौस्वेनः । कवीयमानः क इहप्रवोचद्देवं मनः कुतो अधिप्रजातमित्युत्तरार्धमवतारयति ॥ तज्ज्ञानं च दुर्लभमिति ॥ इह प्रजासु । कुतः कस्य । ब्रह्मपरत्वस्फोरणायोत्तरार्धोक्तिः । न हीशादन्यस्य ज्ञानं दुर्लभमिति भावः । अत एव ब्रह्मेति शेषोक्तिः तच्छब्दपरामर्शविषयं दर्शयन् स्त्रियः सतीस्तां उमे पुंस आहुः पश्यदक्षण्वान्नविचेतदंधः । कविर्यः पुत्रः स ईमाचिकेतेति पूर्ववाक्यद्वयमपि व्याचष्टे ॥ या इति ॥ तच्छब्दश्रवणाद्या इत्युक्तिः । मे मत्संबंधिन्यः मदुपास्या इति यावत् । उ एव । मे इत्यस्मच्छब्दस्याहं शतधा सहस्रधा चेत्यादाविवेश्वरवाचित्वभ्रमनिरासायाह ॥ एतदिति ॥ दीर्घतमा नाम कश्चिदृषिः । अतो मदुपास्या इति व्याख्या युक्तेति भावः । सूत्रादावन्यथा चेति चशब्दो हेतुसमुच्चय इति भावेनाह ॥ हेत्वंतरेणेति ॥

तत्वप्रदीपरीत्यांशो ह्येष इत्येतदपेक्षयैवेति प्रतीतिनिरासायाह ॥ वक्ष्यमाणेति ॥ दृष्टभेदानुसारेण तासामर्थोपपत्तेरित्यन्यत्रोक्तिसूचितं भावमाह ॥ एतच्छ्रुतिद्वये-नेत्यादिना ॥ अभेदस्थानेंशत्वमित्यत्रैतदधिकरणानुभाष्यसंमतिमाह ॥ उक्तं चेति ॥ ॥ समस्तसूत्रार्थ इति ॥ नानाव्यपदेशादंशो जीव इत्यर्थं अन्यथाऽधीयते दाशकित-वादित्वमधीयते अतश्चांश इत्यर्थे चेत्यर्थः ॥ ४३ ॥

सूत्रभाष्यम्—

॥ ॐ मन्त्रवर्णात् ॐ ॥ ४४ ॥

'पादोऽस्य विश्वा भूतानी(ऋ. सं. १०-९०-३) ति ॥ ४४ ॥

तत्वप्रकाशिका—

श्रुत्या चैतमर्थं साधयत्सूत्रं पठित्वा तां श्रुतिमुदाहरति ॥मन्त्रेति॥ पादोंऽशः ॥ ४४ ॥

भावदीपः—

॥ ॐ मंत्रवर्णात् ॐ ॥ ४४ ॥

सूत्रभाष्यम्—

॥ ॐ अपि स्मर्यते ॐ ॥ ४५ ॥

'ममैवांशो जीवलोके जीवभूतः सनातन'(भ. गी. १५-७) इति ॥ ४५ ॥

तत्वप्रकाशिका—

स्मृत्याप्येतमर्थं साधयत्सूत्रं पठित्वा तां स्मृतिमुदाहरति ॥ अपीति ॥ जीव-लोके जीवच्छरीरे जीवभूतो जीवाख्यः ॥ ४५ ॥

भावदीपः—

॥ ॐ अपि स्मर्यते ॐ ॥ ४५ ॥ श्रुत्या चेति ॥ ४५ ॥

सूत्रभाष्यम्—

अनंशत्वश्रुतेर्गतिं चाऽऽह—

॥ ॐ प्रकाशादिवन्नैवं परः ॐ ॥ ४६ ॥

अंशत्वेऽपि न मत्स्यादिरूपी पर एवंविधः । यथा तेजोंऽशस्यैव कालाग्नेः खद्योतस्य च नैकप्रकारता । यथा जलांशस्यामृतसमुद्रस्य मूत्रादेश्च । यथा च पृथिव्यंशस्य मेरोर्विष्ठादेश्च । अभिमानिदेवतापेक्षयैतत् ॥ ४६ ॥

तत्वप्रकाशिका—

न जीवस्येश्वरांशत्वं युक्तम् । तथा सत्यंशत्वाविशेषान्मत्स्यादिसाम्यापातादनंशत्वश्रुतिविरोधाच्चेत्याशङ्कां परिहरत्सूत्रमवतारयति ॥ अनंशत्वेति ॥ मत्स्याद्यसाम्यं चार्थः । सूत्रं व्याचष्टे ॥ अंशत्वेऽपीति ॥ जीवानां मत्स्यादीनां च भगवदंशत्वाविशेषेऽपि न सर्वसाम्यम् । मत्स्यादीनां स्वरूपांशत्वात् जीवानां भिन्नांशत्वात् । न चांशत्वाविशेषाद्भेदाभेदानुपपत्तिः । कालाग्निखद्योतादिष्वग्न्याद्यंशेष्वंशत्वाविशेषेऽपि तद्दर्शनादिति भावः । ननु कालाग्निखद्योतादीनां तेजःप्रभृतिभूतकार्याणां भेदाभेदसाम्यात्कथमत्रैते दृष्टांता इत्यत आह ॥ अभिमानीति ॥ तेजोजलपृथिव्यभिमानिनां कालाग्न्यमृताब्धिमेर्वभिमानिनामभिन्नत्वात्खद्योताद्यभिमानिनां भिन्नत्वाद्युक्तं दृष्टान्तत्वमिति भावः ॥ ४६ ॥

भावदीपः—

॥ ॐ प्रकाशादिवन्नैवं परः ॐ ॥ ४६ ॥ सूत्रे पूर्वस्माच्चापिशब्दयोरन्यतराकर्ष सूचयति ॥ चार्थ इति ॥ चशब्दार्थ इत्यर्थः । मत्स्यादेर्जीवसाम्यनिरासमात्रपरत्वप्रतीतेर्जीवेषु मत्स्याद्यसाम्योक्तिपरतयापि दृष्टांतभाष्योक्त्यनुरोधेन सूत्रभाष्ययोरर्थमाह ॥ जीवानामिति ॥ दृष्टांतोक्तेर्वैयर्थ्यनिरासायाह ॥ न चांशत्वेति ॥ ॥ भेदाभेदसाम्यादिति ॥ खंडिते भेद ऐक्यं चेत्युक्त्योपादानोपादेययोर्भेदाभेदस्वीकारात् । कार्यमात्रे भेदाभेदौ समौ । इह तु जीवानां भेदो मत्स्यादेरभेद इति कथं दृष्टांत इत्यर्थः । अनंशत्वश्रुतिगतिस्तु सूत्रपंचकव्याख्यानानंतरं विवरिष्यते इति भावः ॥ ४६ ॥

सूत्रभाष्यम्—

॥ ॐ स्मरन्ति च ॐ ॥ ४७ ॥

'एते स्वांशकलाः पुंसः कृष्णस्तु भगवान्स्वयम्' (भागवते.) ।

(पा. : इन्द्रारिव्याकुलं लोकं मृडयन्ति युगे युगे ।)

'अतः परं यद्व्यक्तमव्यूढगुणबृंहितम् ।
अदृष्टाश्रुतवस्तुत्वात्स जीवो यः पुनर्भवः'(भागवते.) ॥
'स्वांशश्चाथो विभिन्नांश इति द्वेधांऽश इष्यते ।
अंशिनो यत्तु सामर्थ्यं यत्स्वरूपं यथास्थितिः ॥
तदेव नाणुमात्रोऽपि भेदः स्वांशांशिनोः क्वचित् ।
विभिन्नांशोऽल्पशक्तिः स्यात्किञ्चित्सादृश्यमात्रयुक्' ॥ इति वाराहे ।
'न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्य'(भ. गी. ११-४३)इत्यादि ॥ ४७ ॥

तत्वप्रकाशिका—

ननु तत्र तथात्वेऽपि जीवानां मत्स्यादीनां स्वरूपांशत्वं चाभेदः किं न स्यादित्याशङ्कां स्मृतिभिः परिहरत्सूत्रमुपन्यस्य ताः स्मृतीरुदाहरति ॥ स्मरन्ति चेति ॥ परमपुरुषांशैः सर्वमवतिष्ठतः इत्युक्ते के तेंऽशा इत्याशङ्कायां सविस्तरं वराहादीनां भगवदंशत्वमुक्त्वा जीवानामपि तदुक्तम् । 'ऋषयो मनवो देवा मनुपुत्रा महौजसः । कलाः सर्वे हरेरेव सप्रजापतयः स्मृताः' इति । तत्र वराहादीनां स्वरूपांशत्वमभिधीयते । एते परमपुरुषस्य स्वरूपांशविभागाः स्वयं कृष्णो भगवान्मूलरूप्येव । वराहादयो लोकं मृडयन्तीति जीवानामंशत्वेनोक्तानां भिन्नत्वमुच्यते । यदतः परमपुरुषाद्भिन्नमकार्यमनाद्यनपगतसत्त्वादिगुणयुक्तं चैतन्यं स जीवः । यश्चादृष्टाश्रुतभगवत्स्वरूपत्वात्संसरतीति । कृष्णशब्दश्च नारायणेऽपि दृष्टः 'कृष्णो मुक्तैरिज्यते वीतमोहैः' इत्यादौ । मत्स्यादीनां जीवानां च स्वरूपास्वरूपांशलक्षणयोगित्वाच्चांशिना भेदाभेदाविति भावेन स्वरूपास्वरूपांशलक्षणं तावत्स्मृत्या दर्शयति ॥ स्वांशश्चेति ॥ यत्स्वरूपं यथानन्दादि यथास्थितिर्यथासर्वोत्तमत्वादि तदेव स्वरूपांशस्य भवति । एतच्च स्वरूपांशलक्षणं कृष्णाद्यवतारेष्वस्तीति स्मृत्याह ॥ नेति ॥ जीवेषु विभिन्नांशलक्षणं त्वनुभवसिद्धम् ॥ ४७ ॥

भावदीपः—

॥ ॐ स्मरंति च ॐ ॥ ४७ ॥ सूत्रे बहुवचनानुरोधादाह ॥ स्मृतिभिरिति ॥ ॥ इत्युक्त इति ॥ प्रथमस्कंधे तृतीयेऽध्याये जगृहे पौरुषं रूपमित्यादिना यस्यांशांशे न सृज्यंते देवतिर्यङ्नरादय इत्यंतेनोक्त इत्यर्थः । सृष्ट्युक्त्यैवावस्थितिरपि 'लब्धेत्यवतिष्ठत इत्युक्तइत्युक्तम् । यद्वा भावयन्नेव सत्त्वेन लोकान्वै लोकभावन इति । लीलावतारानुगतस्तिर्यङ्नरसुरादिष्विति द्वितीयाध्यायांतिमश्लोकेनेत्यर्थः ॥ उक्त्वेति ॥ द्वितीयं तु

भवायास्य रसातलगतां महीम् । उद्धरिष्यन्नुपादत्त यज्ञेशः सौकरं वपुरित्यादिनेत्यर्थः । यद्यपि स एव प्रथमं देवः कौमारं सर्गमाश्रित इति कुमारावतारस्य प्रथममुक्तेः कुमारादीनामित्यनुवादो युक्तः । तथापि भगवदवतारवदन्यस्यापि कुमाराख्यजीवस्य सत्वात्तद्भ्रांतिनिरासाय वा जीवास्तत्प्रतिबिंबांशा वराहाद्याः स्वयं हरिरिति । नारायणवराहाद्याः परमं रूपमीशितुः । जैवं तु प्रतिबिंबाख्यं इति च तत्रैव तात्पर्योक्तब्रह्मवैवर्तपाद्मस्मृत्योरनुरोधेन वा वराहादीनामित्युक्तम् । तदुक्तं भगवदंशत्वमुक्तमित्यर्थः । कुत्रेत्यतस्तत्पठति ।। ऋषय इति ।। एतदित्येतच्छब्देनाव्यवहितऋष्यादिजीवपरामर्शभ्रांतिं निराह ।। तत्र वराहादीनामिति ।। कलाशब्दार्थो विभाग इति। तात्पर्योक्तार्थमाह ।। मूलरूप्येवेति ।। ब्रह्मलिंगस्फोरणाय इंद्रारिव्याकुलं लोकं मृडयंति युगे युग इत्युत्तरार्धार्थमाह ।। वराहाद्य इति ।। अतः परमित्यादि व्याचष्टे ।। जीवानामिति ।। ऋषय इत्यादिनोक्तानामित्यर्थः । क्रमेण स्मार्तपदानामर्थोऽतः परमपुरुषादित्यादि । पुनर्भवः संसारी कृष्णस्त्वित्यस्य मूलरूप्येवेति कथं व्याख्येत्यत आह ।। कृष्णेति ।। कृष्णो यज्ञैरिज्यते सोमपूतैः कृष्णो वीरैरिज्यते विक्रमद्भिः । कृष्णो वन्यैरिज्यते संमृशानैः कृष्णो मुक्तैरिति द्वितीयाध्यायभारततात्पर्योक्तस्मृतौ त्रिपाद्यां मूलरूपार्थत्वस्यास्पष्टत्वेप्यंत्यपादे मुक्तैरित्याद्युक्त्या मूलरूपत्वप्रतीतेरिति भावः ।। भेदाभेदाविति ।। यथायोगमन्वयः । वक्ष्यमाणस्मृत्यनुरोधादाह ।। यथा सर्वोत्तमत्वादीति ।। कृष्णेति । गीतायामर्जुनेन कृष्णं प्रति न त्वत्समोऽस्तीत्याद्युक्तेरिति भावः ।। ४७ ।।

सूत्रभाष्यम्—

### ।। ॐ अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ॐ ।। ४८ ।।

परानुज्ञया प्रवृत्तिः, परतो बन्धनिवृत्तिश्च जीवस्य प्रतीयते, अंशत्वेऽपि देहसम्बन्धात् । 'य आत्मानमन्तरो यमयति' (माध्यन्दिनपाठः) । 'तमेवं विद्वानि' ( तै. आ. ३–१२ ) त्यादिना । न तु परस्य । 'वासुदेवः सङ्कर्षणः प्रद्युम्नोऽनिरुद्धोऽहं मत्स्यः कूर्मो वराहो नारसिंहो वामनो रामो रामः कृष्णो बुद्धः कल्किरहं शतधाऽहं सहस्रधाऽहममितोऽहमनन्तोऽहं नैवैते जायन्ते न म्रियन्ते नैषामनुज्ञा न बन्धो न मुक्तिः सर्व एव ह्येते पूर्णा अजरा अमृताः परमाः परानन्दा' इति हि चतुर्वेदशिखायाम् । युज्यते च ज्योतिरादिवत् यथाऽऽदित्यो वियद्गतस्तत्प्रकाशश्चैकप्रकारः । 'शुक्लं कृष्णं कनी-

निके’(ऐ. आ. २-१-५) ति तदंशस्याप्यक्ष्णो देहसम्बन्धान्न तादृशी शक्तिः । तदनुग्राह्यत्वं तेनैवाऽऽवृतिपरिहारश्च । यथा बाह्यामृतजलस्यामृतसमुद्रस्य चैकत्वं तदंशस्यापि श्लेष्मणस्तदनुग्राह्यत्वं तेनैव विरोधिनिवृत्तिश्च । मोक्षधर्मे च—

‘यत्किञ्चिदिह लोकेऽस्मिन्देहबद्धं विशांपते ।
सर्वं पञ्चभिराविष्टं भूतैरीश्वरबुद्धिजैः ॥
ईश्वरो हि महद्भूतं प्रभुर्नारायणो विराट् ।
भूतान्तरात्मा विज्ञेयः (पा. : वरदः) सगुणो निर्गुणोऽपि च ॥
भूतप्रलयमव्यक्तं शुश्रूषुर्नृपसत्तमे’ति ।

वाराहे च—

‘अंशाश्च देहयोग्यत्वाज्जीवा बन्धादिसंयुताः ।
अनुग्राह्याश्चेश्वरेण न तु मत्स्यादिको हरिः ॥
अदेहबन्धयोग्यत्वाद्यथासूर्यप्रभाऽक्षिणी ।
यथाऽमृतसमुद्रस्य श्लेष्मादेश्च द्विरूपता ॥
अनुग्राह्यत्वमन्यस्य तेनैवाऽऽवृतिरोधनमि’ति ॥ ४८ ॥

तत्त्वप्रकाशिका—

एवं जीवानां मत्स्यादीनां चांशिना भेदाभेदसद्भावान्नैकविधतेत्युक्तम् । युक्त्यन्तरेणैकविधतां पराकुर्वत्सूत्रमुपन्यस्य व्याचष्टे ॥ अनुज्ञेति ॥ जीवानां प्रवृत्तिमोक्षयोरंशिपरमात्माधीनत्वात्तेषां मत्स्यादीनां चांशत्वसाम्येऽपि नैकविधतेत्यर्थः । केन प्रतीयत इत्यत आह ॥ देहेति ॥ परानुज्ञया प्रवृत्तिः परतो बन्धनिवृत्तिश्च जीवस्येत्यत्र क्रमेण श्रुती चाह ॥ य इति ॥ मत्स्यादीनामपि प्रवृत्तिमोक्षयोरीश्वराधीनत्वात्कथं न जीवविधतेत्यत आह ॥ नेति ॥ तदेव कुत इत्यत आह ॥ वासुदेव इति ॥ शतधा नारायणादिः । सहस्रधा विश्वादिः । अमितोऽतिबहुरूपः परादिः । अनन्तोऽजितादिः । यदुक्तं जीवोंऽश्यधीनप्रवृत्त्यादिमान् देहसंबन्धित्वादिति तद्व्याप्त्यभावान्न युज्यत इत्यत आह ॥युज्यते चेति॥ तदेव स्फुटयति ॥यथेति॥ आदित्यो मण्डलाभिमानी वियद्गतस्तत्प्रकाशाभिमानी तदंशश्चैकप्रकारोऽनुज्ञादिरहितः । ‘त्रिवृदिव वै चक्षुः शुक्लं कृष्णं कनीनिका’ इति श्रुतावक्ष्णः सूर्यमण्डलसाम्योक्त्या

तदंशत्वमुच्यते । अत एव तदभिमानिनोऽपि तदभिमान्यंशत्वं तस्य चापभ्रष्टस्य देहदोषलिप्तत्वादंश्यधीनप्रवृत्त्यादिमत्त्वमिति भावः । आवरणं तमः । एकमुत्तरत्राप्यभिमानिविवक्षा द्रष्टव्या । विरोधी पित्तधातुः । अत्रायं प्रयोगो भवति । जीवः स्वांश्यधीनप्रवृत्त्यादिमान् स्वांशिकर्मानिर्मितशरीरसंबंधित्वादपभ्रष्टवदिति । यदुक्तं मत्स्यादीनां नांश्यधीनप्रवृत्त्यादिमत्वमिति । तदसत् । तेषामप्युक्तविधदेहसम्बन्धित्वात् । तथा च न विशेषः । अथ देहसम्बन्धित्वेऽपि नांश्यधीनप्रवृत्तित्वं तर्हि तत्रैव हेतोर्व्यभिचार इत्यत आह ॥ मोक्षधर्मे चेति ॥ शुश्रूषुः तस्येति शेषः । अवतारप्रसङ्गे चैतदुक्तम् । अत्राप्ययं प्रयोगः । मत्स्यादिः स्वांश्यधीनप्रवृत्त्यादिर्न भवति स्वांशिकर्मानिर्मितदेहासंबन्धित्वात् वियद्गतप्रकाशाद्यभिमानिवदिति । अत एव दृष्टांतो विवृतः । सूत्रार्थे स्मृतिं चाह ॥ वाराहे चेति ॥ देहयोग्यत्वादित्युक्त्या मुक्तानामपि संग्रहो । भवति । सूर्यप्रभाक्षिणी नैक प्रकारे ॥ ४८ ॥

भावदीपः—

॥ ॐ अनुज्ञापरिहारौ० ॐ ॥ ४८ ॥ भाष्यं व्याचष्टे ॥ जीवानामिति ॥ ॥ केनेति ॥ निमित्तेनेत्यर्थः । शतं नारायणाद्यात्मा विश्वाद्यात्मसहस्रकः । परादिरूपो बहुधा सोऽनंतात्माऽजितादिक इति चतुर्थाध्यायबृहद्भाष्यदिशार्थमाह॥ शतधेति ॥ अपौनरुक्त्यायोक्तममितेति ॥ बहुरूप इति ॥ सूर्यमंडलमान्येकस्तत्प्रकाशाभिमानवानित्याद्यनुभाष्यदिशा भाष्यं व्याचष्टे ॥ आदित्य इति ॥ सूर्यमंडलसाम्योक्त्येति ॥ अत्र यदेतदादित्यस्य शुक्लंभाः सैवर्गथयन्नीलं परः कृष्णं अथ यदेतदक्ष्णः शुक्लं भाः सैवर्क अथ यन्नीलं परः कृष्णमिति । तत्वप्रदीपोदाहृतछांदोग्यप्रथमाध्यायस्थश्रुत्यंतरोक्तस्याक्षिगतस्य शुक्लादिरूपत्रयवत्त्वेनादित्यसाम्यस्य त्रिवृदिव वै चक्षुरित्यैतरेये कथितत्वादित्यर्थः । देहसंबंधादित्यादिभाष्यस्थदेहदोषैश्च दुष्टत्वादपभ्रष्टाख्यदेवता इत्याद्यनुभाष्यदिशा भावमाह ॥ तस्य चेति ॥ आवृतीत्यस्याज्ञानभ्रांतिं निराह ॥ तम इति ॥ अंधकार इत्यर्थः । सूत्रे हेतुदृष्टांतोक्त्याभिमतं प्रयोगप्रकारं दुर्ज्ञानत्वाद्दर्शयति ॥ अत्रायमिति ॥ स्वरूपांशे व्यभिचारव्युदासाय स्वांशिकर्मानिर्मितेति । प्रकाशाद्यभिमानिरूपांशसंबंधिशरीरस्य सूर्यमंडलाद्यभिमानिरूपस्वांशिकर्मानिर्मितत्वात् न व्यभिचारः । न च जीवांशिनो भगवतः पुण्यपापकर्म नेति वाच्यम् । तदभावादेव तेनानिर्मितत्वोपपत्तेरिति भावः ॥इत्यत आहेति॥ स्मृतौ यत्किंचिज्जीवजातं देहसंबद्धं तत्सर्वं ईश्वरबुद्धिजैः पंचभिर्भूतैराविष्टम् । भूतप्रलयं भूतसंबंधाधीनप्रलयोपेतं

अकार्यत्वादव्यक्तशब्दितमिति जीवानां देहबंधमुक्त्वा ईश्वरो हीत्यादिनांशिनो नारायणस्यैव निर्गुणादिशब्दैर्देहासंबंधस्योक्तत्वादिति भावः ॥ शुश्रूपुस्तस्येति ॥ देहबद्धं भूतप्रलयमव्यक्तं जीवजातं तस्य प्रकृतनारायणस्य शुश्रूषुः श्रोतुमिच्छावत् जिज्ञासु इति योजना सूचिता । तत्वप्रदीपे तु भूतप्रलयस्थानभूताव्यक्तशब्दिता श्रीः प्रकृतनारायणस्य शुश्रूषुः ये चाप्यक्षरमव्यक्तमिति स्मृतेरिति प्रकारांतरेण योजितमित्युक्तं चंद्रिकायाम् । नवमे प्रमेयदीपिकायां तु कृष्णस्य मानुषवपुष्ट्वं कुतो नेत्यत आहेत्यवतार्य शरीराणि हि भौतिकानि भवंति । भूतानि चेश्वरबुद्धिजानि तत्कथमवतारान्निबध्नीयुरित्यर्थः । अत्रेश्वरो हीत्यादिनान्ये हेतवोऽभिधीयंते विराट्नित्याभिव्यक्तरूपः वरदो मोक्षदः सगुणः स्वातंत्र्यादिगुणवान् भूतानि प्रलीयंते यस्मिन् तत् अव्यक्तम् । तदभिमानिदेवता तस्य शुश्रूषुः लिंगव्यत्यासः छांदस इति व्याख्यानं कृतम् । नन्वीश्वरो हीत्यादिनांशिनो नारायणस्यैव निर्गुणादिशब्दैर्देहासंबंध उक्तो न त्ववताराणामंशानामित्यत आह ॥ अवतारप्रसंगे चेति ॥ प्रकरणादवतारविषयमेवेदं वाक्यं नारायणशब्दस्त्वंशांश्यभेदाभिप्राय इत्यर्थः । तथा चोक्तं गीताभाष्ये नवमे अवतारप्रसंगे चैतदुक्तमतो नावताराश्च पृथक् शंक्या इति व्याख्यातं च तत्रैव टीकायां यत्तद्दृशिवान्ब्रह्मा रूपं हयशिरोधरमिति हयग्रीवावतारप्रसंग इत्यादि ॥ अत्रापीति ॥ मत्स्यादेरंश्यधीनप्रवृत्तिर्नेत्यत्रापीत्यर्थः । अत्र स्वांशिकर्मनिर्मितदेहसंबंधित्वादित्युक्तावार्जवं दृष्टांते साधनानुगतिश्चास्ति तथाप्यसिद्धिनिरासाय नञ्द्वयप्रक्षेपः । तथा च दृष्टांते स्वांशिकर्मानिर्मितत्वाभावेन पक्षे देहसंबंधित्वाभावेन पक्षदृष्टांतयोः साधनानुगम इति भावः । ननु सूत्रभाष्ययोः स्पष्टमप्रतीतोऽप्ययं प्रयोगः कस्मादुच्यते इत्यत आह ॥ अत एवेति ॥ एवंरूपप्रयोगस्याभिमतत्वादेव पूर्वं भाष्ये यथादित्येत्यादिना ज्योतिरादिवदिति दृष्टांतो विवृत इत्यर्थः । शेषमाह ॥ नैकप्रकारे इति ॥ ॥ ४८ ॥

सूत्रभाष्यम्—

॥ ॐ असन्ततेश्चाव्यतिकरः ॐ ॥ ४९ ॥

अपूर्णशक्तित्वाच्च जीवस्य न मत्स्यादिसाम्यम् । तथा च चतुर्वेदशिखायाम्—
'तस्य ह वा एतस्य परमस्य त्रीणि रूपाणि कृष्णो रामः कपिल इति । तस्य ह वा एतस्य परमस्य पञ्चरूपाणि दशरूपाणि शतरूपाणि सहस्ररूपाण्यमितरूपाणि । तानि ह

वा एतानि सर्वाणि पूर्णानि सर्वाण्यनन्तानि सर्वाण्यसम्मितानि । अथावराः सर्व एवापूर्णाः सर्व एव बध्यन्तेऽथ मुच्यन्ते च केचने'ति ॥ ४९ ॥

तत्वप्रकाशिका—

युक्त्यन्तरेण मत्स्यादीनां जीवानां चैकविध्यं निराकुर्वत्सूत्रं पठित्वा व्याचष्टे ॥ असन्ततेश्चेति ॥ जीवस्य सम्यक् शक्त्यभावान्मत्स्यादीनां तु तद्भावादंशत्वेऽप्यु-क्तस्याव्यतिकरो व्यत्यासाभाव इति भावः । मत्स्यादीनां पूर्णशक्तित्वं न जीवस्येत्ये-तत्कुत इत्यत आह ॥ तथा चेति ॥ कृष्णादिः कश्चन व्यूहः । पञ्च नारायणा-दीनि । असंमितानि निरुपमानि ॥ ४९ ॥

भावदीपः—

॥ ॐ असंततेश्चाव्यतिकरः ॐ ॥ ४९ ॥ भाष्यं सूत्रारूढं कुर्वन् सूत्राक्षरार्थ-माह ॥ जीवस्येति ॥ ज्ञस्येत्यनुवर्तत इति भावः । उक्तस्य नैवं पर इत्युक्तस्य । ननु श्रुतौ पंच रूपाणीत्यादौ सामान्यतो निर्दिष्टानां विशेषोद्देशमकृत्वा त्रीणि रूपा-णीति निर्दिष्टानां विशेषोद्देशे किं बीजमित्यत आह ॥ कृष्णादिः कश्चनेति ॥ प्रागुक्त-त्वादाह ॥ पंचेति ॥ दशेत्यस्य प्रसिद्धत्वाद्वा मत्स्यः कूर्मो वराह इति प्रागुदाहृतश्रुतौ स्पष्टत्वाद्वानुक्तिः । अन्योन्यमसमानानीति भ्रमनिरासायाह ॥ निरुपमानीति ॥ ॥ ४९ ॥

सूत्रभाष्यम्—

॥ ॐ आभास एव च ॐ ॥ ५० ॥

'रूपं रूपं प्रतिरूपो बभूवे'(ऋ. सं. ६-४७-१८) ति प्रतिबिम्बत्वाच्च न साम्यम् । वाराहे च—

'द्विरूपावंशकौ तस्य परमस्य हरेर्विभोः ।
प्रतिबिम्बांशकश्चाथ स्वरूपांशक एव च ॥
प्रतिबिम्बांशका जीवाः प्रादुर्भावाः परे स्मृताः ।
प्रतिबिम्बेष्वल्पसाम्यं स्वरूपाणीतराणि त्वि'ति ॥
'सोपाधिरनुपाधिश्च प्रतिबिम्बो द्विधेयते ।
जीवः परस्यानुपाधिरिन्द्रचापो यथा रवेरि'ति पैङ्गिश्रुतिः ॥

'यथैषा पुरुषेच्छाया एतस्मिन्नेतदाततामि'(प्र. उ. ३-३) ति च श्रुतिः ॥ ५० ॥

॥ इति अंशाधिकरणम् ॥ १८ ॥

तत्वप्रकाशिका—

युक्त्यन्तरेणोक्तमर्थं स्थापयत्सूत्रमुपन्यस्य व्याचष्टे ॥ आभास एवेति ॥ अंशत्वाविशेषेऽपि जीवानां प्रतिबिम्बांशत्वमस्ति। 'रूपं रूपम्' इति श्रुतेः। न च तन्मत्स्यादीनामतो नैकविधतेति भावः। जीवसमुदायः परमेश्वरस्य रूपं रूपं प्रतिरूपो भूत्वा वर्तते तद्बिम्बरूपमस्य मुक्त्यर्थं साक्षात्कारविषयो भवति। स च परमेश्वरः स्वसामर्थ्येनानन्तजीवबिम्बरूपो ज्ञायते। अस्यानन्तानि हरिनामकानि रूपाणि व्यूहशः सन्तीति प्रसिद्धमित्यर्थः। सूत्रार्थे स्मृतिं चाह ॥ वाराहे चेति ॥ परे स्वरूपांशाः। न जीवस्य परमात्मांशत्वं युक्तं तदतिरिक्तोपाध्यभावादित्यत आह ॥ सोपाधिरिति ॥ एवमंशत्वेन श्रुत्यादिसिद्धस्य जीवस्य मत्स्यादिवदंशत्वं नास्ति। अत एवानंशत्वश्रुतिरुपपन्नेत्युक्तं भवति। न चाप्रामाण्यमेव किं न स्यात्किं यथाकथंचिदविरोधापादनेनेति वाच्यम्। वाक्याप्रामाण्यकल्पनस्य वक्तृमिथ्याज्ञानादिमूलत्वात्। वेदस्यापौरुषेयत्वादिति। अतः श्रुत्यविरोधेन जीवस्येश्वरांशत्वोपपत्तेर्युक्तो हरौ श्रुतिसमन्वय इति सिद्धम् ॥ ५० ॥ अ० १८ ॥

भावदीपः—

॥ ॐ आभास एव च ॐ ॥ ५० ॥ रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय। इंद्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयश्शता दशेति श्रुताविद्रशब्दितेश्वरस्य प्रतिरूपो बभूवेति प्रतिबिंबत्वमुच्यत इति भ्रमनिरासाय भगवतो रूपं रूपं प्रति जीवाख्यः प्रतिरूपो बभूवेति चतुर्थाध्यायबृहदारण्यकभाष्योक्तमर्थमाह ॥ जीवसमुदाय इत्यादिना ॥ शृण्वे वीर उग्रमुग्रं दमायन्नन्यमन्यमति नेनीयमानः। एधमानद्विळुभयस्य राजा चोष्कूयते विश इन्द्रो मनुष्यानिति पूर्वत्र त्रिविधजीवराशेः प्रकृतत्वादस्येतीदंशब्देनात्र परामर्शाच्चेति भावः। इंद्र इति श्रवणात्परमेश्वरस्येत्युक्तम्। इदिपरमैश्वर्ये इति धातोः। बभूवेत्यस्यातीतार्थत्वमात्रभ्रांतिनिरासायार्थमाह ॥ भूत्वा वर्तत इति ॥ अनादिकालमारभ्य प्रतिबिंबतयास्त इत्यर्थः। बभूवेति सदेव सोम्येदमग्र आसीदितिवदनादित्वार्थ इति बृहद्भाष्योक्तेरिति भावः। कुत एवमर्थ इत्यत उक्तार्थदार्ढ्याय श्रुतिशेषार्थमाह ॥ तद्बिंबरूपमिति ॥ अस्य प्रतिबिंबत्वेनोक्तजीवस्येत्यर्थः। योग्यस्येति भावः।

प्रतिचक्षणायेत्यस्य तात्पर्यं साक्षात्कारेति । मायाभिरित्यादिपदत्रयस्य क्रमेणार्थः स्वसामर्थ्येनेत्यादि । बहुवचनमनंतविशेषाभिप्रायमिति भावः । ननु कथमेकस्य (पुरूणां रूपः पुरुरूप इति) पुरूणामनंतजीवानां रूपो बिंब इत्यत उत्तराधिकरणोपयोगित्वाय चतुर्थपादं व्याचष्टे ॥ अस्येति ॥ इंद्रस्येत्यर्थः । युक्ता इत्यस्य व्यूहश इति हिशब्दार्थः प्रसिद्धमिति । यावदात्मभावित्वाच्चेत्यत्रोक्तविरोधनिरासायाह ॥ तदतिरिक्तोपाधीति ॥ स्वरूपातिरिक्तप्रतिबिंबोपाध्यभावादित्यर्थः । ननु अनंशत्वश्रुतेर्गतिं चाहेति संबंधभाष्यस्यैतावता सूत्रपंचकेन कोऽर्थः संपन्न इत्यत आह ॥ एवमिति ॥ सूत्रपंचकभाष्योक्तप्रकारेणेत्यर्थः । अत एव मत्स्यादिवत्स्वरूपांशत्वाभावादेवेत्यर्थः । एतेन दृष्टभेदानुसारेण तासामर्थोपपत्तेरिति न्यायविवरणोक्तं विवृतम् । श्रुतेरप्रामाण्यकल्पनस्य विपरीतज्ञानमूलत्वादिति तत्रत्यं वाक्यं विवृणोति ॥ न चेत्यादिना ॥ अत इति ॥ अंशत्वे श्रुतिस्मृत्यर्थापत्त्यादीनां भावात् भिन्नांशत्वेन मत्स्याद्यसाम्यात् अनंशत्वश्रुतेः स्वरूपांशत्वाभावपरत्वाच्चेत्यर्थः ॥५०॥ अ० १८ ॥

सूत्रभाष्यम्––

प्रतिबिम्बानां मिथो वैचित्र्ये कारणमाह––

॥ ॐ अदृष्टानियमात् ॐ ॥ ५१ ॥

अनादिविद्याकर्मादिवैचित्र्याद्वैचित्र्यम् ॥ ५१ ॥

तत्वप्रकाशिका––

अत्र ब्रह्मणि श्रुतिसमन्वयसिद्ध्यर्थं जीवस्येश्वरप्रतिबिम्बत्वविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसंगतिः । हरौ सर्वश्रुतीनां समन्वयो निरूपितः । तत्र जीवप्रतिबिम्बताविषयश्रुतीनां विरोधेनाप्रामाण्ये समन्वयानुपपत्तिरित्यसौ निरसनीय एव। प्रकृतो जीव एव विषयः । भगवत्प्रतिबिम्बो न वेति संदेहः । श्रुतिविगानं संदेहबीजम् । 'रूपं रूपम्' इति श्रुतिरेका । प्रकरणवशाद्विरुद्धश्रुत्यन्तरमनुमीयते । न जीवा भगवत्प्रतिबिम्बा इति पूर्वः पक्षः । तथा श्रुतेर्विद्यमानत्वात् । न च प्रतिबिम्बत्वश्रुतिविरोधः । अन्यश्रुतेः सयुक्तिकत्वात् । अस्ति खल्वयं जीवानामन्योन्यं भेदः सुरनरतिर्यगादिरूपः । न चैकप्रतिबिम्बानां मिथो वैचित्र्यं संभवति । भवति चेद्भवत्वेको भगवत्प्रतिबिम्बः । तदयं प्रयोगः । न जीवा एकप्रतिबिम्बा भेदवत्वात् घटपटवदिति । अतः सयुक्तिकश्रुतिविरोधात्प्रतिबिम्बत्वश्रुतिरप्रमाणमिति नोक्त-

समन्वयसिद्धिरित्येवं प्राप्ते सिद्धान्तयत्सूत्रमवतारयति ॥ प्रतिबिम्बानामिति ॥ जीवानां प्रतिबिम्बत्वमभ्युपेत्य तेषां वैचित्र्ये कारणांतरमाह सूत्रकार इत्यर्थः । सूत्रं व्याचष्टे ॥ अनादीति ॥ न वैचित्र्यान्यथानुपपत्त्या सर्वेषां प्रतिबिम्बत्वाभावो वाच्यः । अशेषजीवानां भगवत्प्रतिबिम्बत्वेऽपि विद्याद्यदृष्टवैचित्र्येण देवदानवमानवादिवैचित्र्यस्योपपत्तेः । 'यथाप्रज्ञं हि संभवाः' इत्यादिश्रुतेः । न चादृष्टवैचित्र्यमेवासंभावितम् । तस्यापि पूर्वादृष्टवैचित्र्यादुपपत्तेः । तस्याप्येवमनादित्वादिति भावः ॥ ५१ ॥

भावदीपः—

॥ ॐ अदृष्टानियमात् ॐ ॥ ५१ ॥ भाष्ये श्रुतिविगानानुक्तेः कथमेतदित्यत आह ॥ रूपं रूपमिति ॥ प्रकरणेति ॥ न संबंध इत्यतीताधिकरणोदाहृतबिंबप्रतिबिंबभावरूपसंबंधनिषेधकं श्रुत्यंतरमिह भाष्ये संदेहबीजत्वेनोदाहृतमित्यनुमीयते। संदेहबीजत्वेन श्रुतिविगानोक्तेः पूर्वाधिकरणभाष्येषु प्रकृतत्वादित्यर्थः । प्रतिरूपो बभूवेति न संबंध इति श्रुतिविगानं संदेहबीजमित्येव वाच्ये एवमुक्तिर्भाष्यानुक्तं श्रुतिविगानवचनं निर्बीजमिति शंकाव्युदासाय तथैव प्रस्तावादिति युक्तिसूचनाय । एवमन्यत्राप्यूह्यमिति सूचनाय चेति ॥ तथा श्रुतेरिति॥ न संबंध इति श्रुतेरित्यर्थः । वैचित्र्यमनाभासत्वे कारणमित्यन्यत्रोक्तयुक्ति हेत्वसिद्धिनिरासपूर्वं व्यनक्ति ॥ अस्ति खल्विति ॥ भेदो वैचित्र्यम् । भेदवत्त्वात् वैचित्र्यवत्त्वादित्यर्थः ॥ अत इति ॥ यतो घटादिवन्मिथो भेदवत्त्वेनैकप्रतिबिंबत्वायोगो न संबंध इति श्रुतिश्चास्ति अत इत्यर्थः ॥ छ ॥ प्रतिबिंबत्वस्यैवासिद्धेः कथं तद्वैचित्र्ये कारणोक्तिरित्यतो व्याचष्टे, ॥ जीवानामिति ॥ बिंबवैचित्र्यभ्रांतिं निराह । कारणांतरमिति । बिंबवैचित्र्यादन्यदेव अदृष्टादिवैचित्र्यरूपमित्यर्थः । बिंबसामर्थ्यरूपं तु कारणं स्थानविशेषात्प्रकाशादिवदित्यत्र भक्तिपादे वक्ष्यत इति भावः । जीवानां सामान्यत आभासत्वेऽपि विशेषादृष्टाद्वैचित्र्योपपत्तेरित्यन्यत्रोक्त्यनुरोधेन भाष्यं हेतुत्वेन व्याकुर्वन्साध्यमाह । ॥ न वैचित्र्येति ॥ एतेन सूत्रे आभास एवेत्यनुवृत्तिः सूचिता । अत एव पूर्वसूत्रे प्रथमांतनिर्देशः ॥इत्यादिश्रुतेरित्यादि॥ ऐतरेये आदिपदेन च रमणीयचरण रमणीयां योनिमापद्यंत इत्यादेर्ग्रहः । अनादीत्युक्तिसाफल्यं व्यनक्ति ॥ न चादृष्टेत्यादि ॥ ५१ ॥

सूत्रभाष्यम्—

**॥ ॐ अभिसन्ध्यादिष्वपि चैवम् ॐ ॥ ५२ ॥**

इच्छाद्वेषसुखदुःखादिवैचित्र्यं चादृष्टादेव । चशब्देन प्रतिक्षणवैचित्र्यं च ॥ ५२ ॥

तत्वप्रकाशिका—

किं वैचित्र्यस्यादृष्टकारणकल्पनया रागद्वेषमोहादीनां दोषाणामेव तन्निमित्तत्वोपपत्तेरित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे॥ अभिसंधीति ॥न दोषवैचित्र्यादेतद्वैचित्र्यं वाच्यम् । तस्यापि सादित्वेन कारणगवेषणेऽदृष्टस्यैव ग्राह्यत्वादिति भावः । पूर्वदोषवैचित्र्यादुत्तरोपपत्तौ किमदृष्टेनेत्यत आह ॥चशब्देनेति॥ संगृहीतमिति शेषः । दोषवैचित्र्यस्यादृष्टवैचित्र्यं विना जीववैचित्र्यनिमित्तत्वे तदभावेऽप्येकस्मिन्पुंसि प्रतिक्षणवैचित्र्यं न स्यात् । अस्ति चैतदतस्तदन्यथानुपपत्त्याऽदृष्टमेव कारणं ग्राह्यमिति भावः । ५२ ॥

भावदीपः —

॥ ॐ अभिसंध्यादिष्वपि चैवम् ॥ ॐ ॥ ५२ ॥ उक्तशंकानिरासाप्रतीतेर्भाष्यभावोक्त्या तां निराह ॥ न दोषेत्यादि ॥ ५२ ॥

सूत्रभाष्यम्—

**॥ ॐ प्रदेशादिति चेन्नान्तर्भावात् ॐ ॥ ५३ ॥**

न स्वर्गभूम्यादिप्रदेशविशेषाद्वैचित्र्यम्। तत्प्राप्तेरप्यदृष्टापेक्षत्वात्। एकदेशस्थितानामेव वैचित्र्यदर्शनाच्च ॥ ५३ ॥　॥ इति अदृष्टाधिकरणम् ॥ १९ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये कृष्णद्वैपायनकृत
द्वितीयाध्यायस्य तृतीयः पादः ॥ २ ॥ ३ ॥

तत्वप्रकाशिका—

स्वर्गस्थाः सुरा भूमिष्ठाः नरा इत्यादिस्थानवैचित्र्यादेव वैचित्र्योपपत्तेः किमदृष्टेनेत्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ प्रदेशादिति ॥ न स्थानवैचित्र्यमेव वैचित्र्ये हेतुः। निष्कारणस्थानवैचित्र्यस्यैवानुपपत्त्या तत्कारणान्वेषणेऽदृष्टस्यैवाङ्गीकार्यत्वादिति भावः । युक्त्यन्तरमाह ॥ एकेति ॥ एवं युक्तेरविरुद्धत्वादन्या श्रुति-

निरुपाधिप्रतिबिम्बत्वादिविषयेति द्रष्टव्यम् । तदेवं श्रुत्यविरोधेन जीवस्य प्रतिबिम्बत्वसिद्धेर्युक्तो जगत्कारणे नारायणे श्रुतिसमन्वय इति सिद्धम् ।। ५३ ।। अ० १९ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्रभाष्यस्य टीकायां श्रीमज्जयतीर्थमुनिविरचितायां तत्वप्रकाशिकायां द्वितीयाध्यायस्य तृतीयः पादः ।।

।। श्रीरस्तु ।।

।। ॐ प्रदेशादिति चेन्नांतर्भावात् ॐ ।। ५३ ।। एवमिति ।। अदृष्टवैचित्र्येणान्यथोपपत्त्या मिथो वैचित्र्यरूपयुक्तेरविरुद्धत्वादित्यर्थः । श्रुतिः न संबंध इति श्रुतिरित्यर्थः । स्वरूपातिरिक्तोपाधिनिमित्तकप्रतिबिंबत्वाभावविषया । जीवोपाधिर्द्विधा प्रोक्तः स्वरूपं बाह्य एव चेत्यादेः । स्वरूपोपाधिनिमित्तकप्रतिबिंबत्वं तु स्यादेवेत्यर्थः । अत एव पूर्वं भाष्ये सोपाधिरनुपाधिश्चेति श्रुतिरुदाहृता । एतेन प्रतिबिंबवैचित्र्यस्योपाधिवैचित्र्यनिमित्तत्वात्कथमदृष्टानियमेन तद्वैचित्र्यमिति निरस्तम् । स्वरूपोपाधिवैचित्र्यस्यैवादृष्टानियमपदेनाभिप्रेतत्वात् । विवृतमेतच्चंद्रिकायाम् । तत्तस्माच्छ्रुतेर्युक्तेश्च सावकाशत्वादित्यर्थः । युक्तो जगत्कारणे नारायण इत्यादिफलोक्तिः ।। ५३ ।। अ० १९ ।।

।। इति श्रीमद्भाष्यटीकाभावदीपे श्रीराघवेंद्रयतिकृते द्वितीयाध्यायस्य तृतीयः पादः ।।

।। श्रीकृष्णार्पणमस्तु ।।

॥ श्रीः ॥

॥ अथ चतुर्थः पादः ॥

सूत्रभाष्यम् –

युक्तिसहितश्रुतिविरोधं श्रुतीनामपाकरोत्यनेन पादेन । 'प्राणा एवेदमग्र आसुस्तेभ्यो भूतानि जज्ञिरे । भूतेभ्योऽण्डमण्डस्यान्तास्त्विमे लोकाः । अथ प्राणा एवानादयः प्राणा नित्या' इति काषायणश्रुतौ प्राणानामनुत्पत्तिः प्रतीयते (श्रूयते)।

'नोपादानं हीन्द्रियाणामतोऽनुत्पत्तिरिष्यते ।
उपादानकृता सृष्टिः सर्वलोकेषु दृश्यत' इति भविष्यत्पर्वणि ॥

'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च' ( मुं. उ. २-१-३ ) ति च । अत उच्यते—

॥ ॐ **तथा प्राणाः** ॐ ॥ १ ॥

यथाऽऽकाशादयः परमात्मन उत्पद्यन्ते तथा प्राणा अपि ॥ १ ॥

तत्वप्रकाशिका—

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः । एतत्पादार्थं दर्शयति ॥ युक्तीति ॥ अत्रापि पूर्ववच्छ्रुतीनां परस्परविरोधपरिहार एव पादार्थः । युक्तिसाहित्यस्य पूर्वत्रापि साम्यात् । अत्रत्ययुक्तीनां श्रुत्यादिसिद्धत्वेन प्राबल्यात्पादभेदः । अध्यात्मविषयतया च । तत्रादावीश्वरस्य श्रुतिसमन्वयेन जगत्कारणत्वसिद्ध्यर्थमिन्द्रियोत्पत्तिविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसंगतिः। जगत्कारणे ब्रह्मणि सर्वश्रुतिसमन्वयो निरूपितः । तत्र प्राणोत्पत्तिविषयश्रुतीनां विरोधेनाप्रामाण्ये तदसिद्धेः स परिहर्तव्यो भवति । सर्वजगदन्तःपातिनः प्राणा एव विषयः । किमुत्पत्तिमन्तो न वेति संदेहः । संशयबीजं श्रुतिविगानं दर्शयन् पूर्वपक्षं सूचयति ॥ प्राणा इति ॥ अथ तस्मात् । इति च प्राणानामुत्पत्तिः श्रूयत इति शेषः । प्राणा नोत्पत्तिमन्तः 'प्राणा एवानादयः' इति श्रुतेः । न चोत्पत्तावपि श्रुतिरस्तीति वाच्यम् । अस्याः स्पष्टार्थाया निरवकाशत्वेन प्राबल्यात् । प्राणा नोत्पत्तिमन्तो निरुपादानत्वाद् व्यतिरेकेण घटवदिति युक्तियुक्तत्वेनापि प्राबल्यात् । न चात्रासिद्ध्यादिशङ्का कर्तव्या नोपादानमिति स्मृतिगृहीतत्वात् । अतः प्रबलश्रुतिविरोधादुत्पत्तिश्रुतिरप्रमाणमेवेति नेश्वरस्य श्रुतिसमन्वयेन जगत्कारणत्वसिद्धिरिति भावः ।

सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ।। अत इति ।। उत्पत्तिमन्त एव प्राणाः । आकाशादीनामुत्पत्तिमत्त्वे कथितयुक्तिसमुदायादेवेत्यर्थः । अत्र पुनर्विप्रतिपत्त्यभावेन कारणस्याविचारात्सिद्धवत्कृत्य परमात्मन इत्युक्तम् ॥ १ ॥

भावदीपः—

श्रीमद्धनुमद्भीमध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः । हरिः ॐ । अस्य पूर्वपादसांकर्यमुद्भाव्य द्वेधा भेदमाह ।। अत्रापीति ।। तथैव प्रतिनयं दर्शितत्वात् अन्यथा तत्र पूर्वपक्षानुदयादिति भावः ।। अत्रत्येति ।। श्रुतिप्रायोपपत्तिभिः । अविरोधश्चतुर्थे तु पादे सम्यक्समर्थ्यत इत्यसदितिनयानुव्याख्याने अध्यात्मप्रवणो भूत्वा तस्य सन्निहितत्वतः । इत्युपासनापादीयानुभाष्ये चोक्तेरिति भावः ।। तत्रादाविति ।। अध्यात्मं विचार्यमाणेषु आदावित्यर्थः । मुख्यप्राणश्चेंद्रियाणीति संक्षेपभाष्यदिशाऽभ्यर्हितत्वेन श्रेष्ठस्यादौ विचार्यत्वेऽपि सर्वप्रेरकस्य तस्येंद्रियविषयचिंतानंतरमेव चिंतावसर इति तथालब्धात्मन एव संख्यापरिमाणादिरूपधर्मचिंतावसर इति तथा इंद्रियसामान्यजन्मचिंतानंतरमेतद्विशेषे मनःप्रभृतौ चिंतावसर इति तच्चितात आदाविंद्रियजन्मचिंता अवसरप्राप्तेतिभावेनादावित्युक्तम् । अत्र सिद्ध्यर्थमित्यनेन शास्त्रे विरोधपरिहारादित्यनेनाध्याये श्रुतीत्यनेन पादे चांतर्भावसंगतिरुपपादिता । एवमग्रेऽपि । प्रबलयुक्तिसहितश्रुतीत्यपि योज्यम् । सिद्ध्यर्थमित्येतद् व्यनक्ति ।। जगत्कारण इति ।। यद्वा पूर्वसंगतिमाह ।। जगत्कारण इति ।। एव ग्रेऽपि द्वेधामयोज्यम् । जन्मादिसूत्रसंगत्यर्थमाह ।। सर्वजगदंतःपातिन इति ।। श्रुतौ प्राणा एवानादय इत्यस्य पौनरुक्त्यमाशंक्य निगमनपरतयार्थमाह ।। अथ तस्मादिति ।। अंडादिहेतुभूलकारणत्वात् लयवर्तित्वाद्वेत्यर्थः । एतेन भाष्ये पूर्वांशोदाहरणमनादय इत्यस्योपपादकत्वेनेति दर्शितम् । इति चेति भाष्यानुवादः । ।। श्रुतिरस्तीति ।।इदं सर्वमसृजतेति सामान्यश्रुतिः एतस्माज्जायते इत्यादिविशेषश्रुतिश्चास्तीत्यर्थः । तत्राद्यायाः सामान्यश्रुतेर्बाधाय पूर्वपक्षन्यायविवरणे स्पष्टार्थवद्विशेषश्रुतिविरोध इत्युक्तम् । तत्र सामान्यव्यवधानाभावरूपविशेषश्रुतित्वे हेतुरिति भावेनाह ।। अस्याः स्पष्टार्थाया इति ।।अनुत्पत्तिश्रुतेरित्यर्थः। द्वितीयायाः सिद्धांतीयविशेषश्रुतेर्बाधाय नोपादानमिति भाष्योक्तयुक्तिमाह ।। प्राणा इति ।। एवं च युक्तिद्वयोक्तिरपि सफलेति बोध्यम् ।। व्यतिरेकेणेति ।। अन्वयदृष्टांतस्य ब्रह्मणः

संभवेप्युपादानकृता सृष्टिरित्युत्तरार्धानुरोधादेवमुक्तम् । स्मृतावपि तथोक्तेर्बीजं चंद्रिकायामुक्तम् ॥ अत इति ॥ निरवकाशत्वनिरुपादानत्वयुक्त्युपेतत्वात्प्रबलेत्यर्थः।

॥ ॐ तथा प्राणाः ॐ ॥ १ ॥ अत्र यथा यैर्न्यायैस्तथा तैरेव न्यायैरिति भाष्यार्थं मत्वा सूत्रे तथाशब्दस्तथाऽन्यत्प्रतिषेधादित्यत्रेव प्रागुक्तयुक्तिपरामर्शी साध्यपरामर्शी चेति भावेन सूत्रभाष्ययोरर्थमाह ॥ उत्पत्तिमंत एवेति ॥ पराधीनविशेषावाप्तिरूपोत्पत्तिमंत एवेत्यर्थः । तत्रोक्तन्यायानुकर्षार्थं तथेत्युक्तमिति तत्वप्रदीपोक्तेः ॥ कथितेति ॥ अश्रुतेः। उत्पत्तिश्रुतिबाहुल्यादल्पशक्तित्वादेकस्याप्यनुत्पत्तिशब्दस्य ब्रह्मशब्दवन्मुख्यामुख्यत्वसंभवादित्युक्तयुक्तिसमुदायादित्यर्थः। ॥ विप्रतिपत्तीति ॥ अन्यजातत्वविवादाभावेनेत्यर्थः ॥ अविचारादिति ॥ तेजोऽत इत्यादिवद्ब्रह्मजातत्वोक्त्यर्थं सूत्रांतराकरणादित्यर्थः ॥ १ ॥

सूत्रभाष्यम्––

॥ ॐ गौण्यसम्भवात् ॐ ॥ २ ॥

अनादित्वश्रुतिर्गौणानादित्वापेक्षया । मुख्यासम्भवात् ।

'नित्यान्येतानि सौक्ष्म्येण हीन्द्रियाणि तु सर्वशः ।
तेषां भूतैरुपचयः सृष्टिकाले विधीयते ॥
परेण साम्यसम्प्राप्तेः कस्य स्यान्मुख्यनित्यते' ति हि भविष्यत्पर्वणि ॥ २ ॥

तत्वप्रकाशिका––

नन्वाकाशोत्पत्तिसिद्धयर्थमनुत्पत्तौ श्रुत्यभावो हेतुरुक्तः। कथमसाविह संभवति श्रुतेर्विद्यमानत्वादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ गौणीति ॥ सत्यमस्त्यनुत्पत्तिश्रुतिरिति तथापि नासौ प्राणानामनुत्पत्तिं वक्ति किं तु गौणानुत्पत्तिवादिन्येव। मुख्यानुत्पत्तेरसंभवात्। मुख्यासंभवे गौणार्थाङ्गीकारस्य न्यायप्राप्तत्वादिति भावः । 'एतस्माज्जायते' इत्यादिश्रुत्यसंभवोऽपि द्रष्टव्यः । किं तद्गौणानादित्वं प्राणानां कथं च मुख्यासंभवः प्रत्युतोत्पत्तिरेव न संभवत्युपादानाभावादित्यत आह ॥ नित्यानीति ॥ उपचयात्पूर्वमसमर्थानि न संसारकारणानि स्युरित्यत उक्तम् ॥ सृष्टिकाल इति ॥ प्रलये वियुक्तांशानां प्रति सृष्टिकालमिति भावः। अत्राहङ्कारकारणत्वस्याप्यनिषेधादविरोधः। अहङ्कारोत्पन्नभूतानामपि सूक्ष्मप्राणैरस्त्युपचय

इति तत्राप्यविरोधः । मुख्यनित्यतायां स्वातन्त्र्यं भवति । अनेन यावद्विकारमित्यादियुक्तयो गृहीता भवन्ति ।। २ ।।

भावदीपः ––

।। ॐ गौण्यसंभवात् ॐ ।। २ ।। अनुत्पत्ति पराधीनविशेषावाप्त्यभावरूपानुत्पत्ति न वक्तीत्यर्थः ।। मुख्येति ।। अत्राभिमतपराधीनविशेषावाप्तिरूपोत्पत्त्यभावरूपाया इत्यर्थः । नन्वत्र कथमसंभवयुक्तिमात्रेण सयुक्तिकायाः श्रुतेर्गौणत्वं प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतमित्युक्तेरित्यतः आत्मैवेदमग्र आसीत्स प्राणमसृजत स प्राणानित्यादिवचनादनादित्व एव स्पष्टार्थवद्विशेषश्रुतिविरोधादिति न्यायविवरणोक्त्या जन्मश्रुतिबलाच्चेति भावेनाह ।। एतस्मादिति ।। एतेन न्यायविवरणस्थादिपदेन भाष्योक्तैतस्मादित्यादिश्रुतिग्रह इति सूचितम् । अत्रादिपदेन स प्राणानित्यादिश्रुतिग्रहः । स्मृतौ पूर्वार्धव्यावर्त्यं चोद्यमाह ।। किं तदिति ।। प्रलये सूक्ष्मरूपमात्रस्यैव स्थित्यवगमेन तस्य नित्यांशस्य तनीयस्त्वेनानादित्वश्रुतेर्गौणत्वमुक्तं भवति । तृतीयार्धव्यावर्त्यमाह ।। कथं चेति ।। द्वितीयार्धव्यावर्त्यमाह ।।प्रत्युतेति।। एतेन निरुपादानत्वरूपविशेषशंकानिरासार्थं गौणीति पुनर्योगारंभ इति सूचितम् । तथा निरुपादानत्वोक्तिः सूक्ष्मेंद्रियाभिप्राया । जन्मश्रुतिरुपचितस्थूलेंद्रियपरेति भावः । सृष्टिकाल इत्युक्तेः प्रकृतानुपयोगं ह्याशंक्य कृत्यमाह ।। उपचयादिति ।। तथा च यदा नोपचितानि प्रलये तदा न समर्थानि यदा तु शक्तानि सृष्टिकाले तदोपचितानीति भावः । तैजसात्तु विकुर्वाणादिंद्रियाणि दशाभवन्निति द्वितीयस्कंधादौ तथा विशिष्टकार्यशक्तित्वाद्देवा वैकारिकाः स्मृताः । अतिजाज्वल्यमानत्वात्तैजसानींद्रियाण्यपि । तामसानि तु भूतानि यतस्तावदभूत्त्रयमिति द्वितीयस्कंधपंचमाध्यायतात्पर्योक्तपाद्मस्मृत्यादौ च तैजसाहंकारकार्यत्वोक्तिविरोधं निराह ।। अत्रेति ।। ननु तथापि तामसानि तु भूतानि त्वित्याद्युक्त्या तामसाहंकारकार्याणां भूतानां कथं तेभ्यो भूतानि जज्ञिर इति भाष्योक्तश्रुतौ प्राणकारणकत्वोक्तिरित्यत आह ।। अहंकारेति ।। स्मृतौ तृतीयार्धं व्यनक्ति ।। मुख्यनित्यतायामिति ।। पराधीनविशेषावाप्त्यभावरूपायामित्यर्थः । स्वातंत्र्यं च द्वयोर्विरुद्धमिति भावः ।। अनेनेति ।। सौत्रासंभवशब्दार्थविवरणपरेण परेणेत्यर्धेनेत्यर्थः । जन्मश्रुतिबाहुल्यादिरादिपदार्थः। तत्वप्रदीपे तु चकाराद्विभक्तशक्तित्वाच्चेत्युत्तरसूत्रे चकारेण संग्रह उक्तः । एतेन पूर्वसूत्रे तथाशब्देनानुकृष्टानामेव हेतूनामुत्तरसूत्राभ्यां विवरणमिति सूचितम् ।। २ ।।

सूत्रभाष्यम्—

॥ ॐ प्रतिज्ञानुपरोधाच्च ॐ ॥ ३ ॥

'स इदं सर्वमसृजते'(तै. उ. २-६) ति ॥ ३ ॥

॥ इति प्राणाधिकरणम् (प्राणोत्पत्त्यधिकरणम्. पा.) ॥ १ ॥

तत्वप्रकाशिका—

प्रतिज्ञाहानिरित्युक्तयुक्त्याप्येतमर्थं समर्थयत्सूत्रं पठित्वा तदुपात्तश्रुतिमेवोदाहरति ॥ प्रतिज्ञेति ॥ सूत्रेणान्वयः। प्राणानामुत्पत्त्यङ्गीकारे 'सर्वमसृजत' इति श्रुत्युक्तप्रतिज्ञानुपरोधादुत्पत्तिमन्तः प्राणा इति। अतः श्रुत्यविरोधेन प्राणानां परमात्मोत्पन्नत्वसिद्धेर्युक्तमीश्वरस्य श्रुतिसमन्वयेन जगत्कारणत्वमिति सिद्धम्। ॥ ३ ॥ अ० १ ॥

भावदीपः—

॥ ॐ प्रतिज्ञानुपरोधाच्च ॐ ॥ ३ ॥ अत इति ॥ अनुत्पत्तिश्रुतेर्गौणत्वात्सयुक्तिकोत्पत्तिश्रुतिबाहुल्यादीशजत्वे विवादाभावाच्चेत्यर्थः ॥ ३ ॥ अ० १ ॥

सूत्रभाष्यम्—

'द्विधा ह्येवेन्द्रियाणि नित्यानि चानित्यानि च। तत्र नित्यं मनोऽनादित्वान्न ह्यमनाः पुमांस्तिष्ठत्यनित्यान्यन्यानी' ति गौपवनश्रुतौ मनसोऽनुत्पत्तिः सयुक्तिका श्रूयते। अत आह—

॥ ॐ तत्प्राक्श्रुतेश्च ॐ ॥ ४ ॥

'मनः सर्वेन्द्रियाणि चे'(मुं. उ. २-१-३) ति पूर्वोक्तत्वान्नानुत्पत्तिर्मनसो युज्यते।

'पूर्वं मनः समुत्पन्नं ततोऽन्येषां समुद्भवः।

तदनुत्पत्तिवचनमल्पोपचयकारणादि' ति वायुप्रोक्तवचनं चशब्देन गृहीतम् ॥ ४ ॥

॥ इति मनोधिकरणम् (पा. तत्प्रागधिकरणम्.) ॥ २ ॥

तत्वप्रकाशिका—

अत्र ब्रह्मणि श्रुतिसमन्वयेन जगत्कारणत्वसिद्ध्यर्थं मनोजन्मविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसंगतिः। जगत्कारणे ब्रह्मणि श्रुतिसमन्वय उक्तः।

तत्र मनोजन्मविषयश्रुतीनां विरोधेनाप्रामाण्ये नासावुपपद्यत इति स निराकार्य एव। अत्र प्रकृतेन्द्रियान्तर्गतं मनो विषयः। किमुत्पत्तिमन्न वेति संशयः। 'मनः सर्वेन्द्रियाणि च' 'नित्यं मनोऽनादित्वात्' इतिश्रुतिविरोधः संदेहबीजम्। पूर्वपक्षयति ॥ द्विधेति ॥ मनो नोत्पत्तिमत्। 'नित्यं मनोऽनादित्वात्' इतिश्रुतेः। न चोत्पत्तिश्रुत्यनुसारेणेन्द्रियानुत्पत्तिश्रुतिवदनादित्वश्रुतेर्गौणार्थत्वमिति सांप्रतम्। इन्द्रियाणामनित्यत्वमुक्त्वा विशिष्य मनसो नित्यत्वाभिधानात्। किं च मनसः सादित्वे तद्विना कदाचिदनादिपुरुषेणावस्थातव्यम्। न चैवं भवति। तथा सति तदा संसाराभावप्रसङ्गात्। मनो हि संसारहेतुः। यदाहुः। 'मन एव मनुष्याणां कारणं बन्धमोक्षयोः'। इति। संसारसादित्वं त्वप्रामाणिकं सर्वप्रमाणविरुद्धं च। अतो नित्यमेव मनः। एवं च युक्तियुक्तविशेषश्रुतेः प्राबल्यात्तद्विरोधेनोत्पत्तिश्रुतेरप्रामाण्यान्न श्रुतिसमन्वयेनेश्वरस्य जगत्कारणत्वसिद्धिरिति भावः। सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ नानुत्पत्तिर्मनसः। उत्पन्नत्वे श्रुतिसद्भावात्। न चास्या गत्यन्तरं वाच्यम्। पृथङ्मनसो जन्माभिधायकत्वेन विशेषश्रुतित्वात्। न चान्येन्द्रियवन्मनसोऽप्युत्पत्तिमत्त्वे तस्येन्द्रियान्तर्गतस्य पृथगभिधानं व्यर्थमिति मन्तव्यम्। अन्येन्द्रियेभ्योऽपि प्रागुत्पन्नत्वाभिप्रायेण तदुपपत्तेरिति भावः ॥ पूर्वोक्तत्वादिति ॥ पूर्वमुत्पन्नतयोक्तत्वात्। ननु कुतो मनसः पूर्वोत्पत्तिः कथं चोत्पत्त्यङ्गीकारे श्रुत्यादिविरोधपरिहार इत्यत आह ॥ पूर्वमिति ॥ नोत्पत्तिमत्वे मनसः श्रुतिविरोधः। प्रलयेऽपीन्द्रियवत्सूक्ष्मस्वरूपसत्ताभ्युपगमात्। अत एव न युक्तिविरोधः। न च विशिष्योक्तिविरोधः। अन्येन्द्रियेभ्योऽल्पोपचयाभिप्रायेण तदुपपत्तेरिति भावः। अतः श्रुत्यविरोधेन मनसो भगवदुत्पन्नत्वसिद्धेर्युक्तो जगत्कारणे ब्रह्मणि श्रुतिसमन्वय इति सिद्धम् ॥ ४ ॥ अ० २ ॥

भावदीपः—

॥ ॐ तत्प्राक्श्रुतेश्च ॐ ॥ ४ ॥ भाष्ये नित्यं मनोनादित्वान्नह्यमनाः पुमांस्तिष्ठतीत्येव पूर्तौ अवशिष्टोक्तिरपि पूर्वस्माद्विशेषशंकाप्रदर्शनपरेति भावेन तद्व्यावर्त्यशंकापूर्वं तदंशोपयोगमाह ॥ न चोत्पत्तीति ॥ एतस्माज्जायत इत्यादिश्रुतीत्यर्थः। गौणार्थत्वं सूक्ष्ममनःपरत्वमित्यर्थः ॥ विशिष्येति ॥ इंद्रियाण्यनित्यकोटौ निक्षिप्य विशिष्य मनसोनित्यत्वोक्तिरूपविशेषश्च न जन्मश्रुतावस्ति किंतु मनः सर्वेंद्रियाणि चेति विशिष्य धर्मिनिर्देशमात्रमेव नापि प्राणा एवानादय इत्यत्रा-

प्यस्ति। तेन न पूर्वसांकर्यमपीति भावः। तावतैव पूर्तौ न ह्यमना इत्यंशस्योपयोगमाह ॥ किंचेति ॥ एतेन नित्यं मनोनादित्वादिति विशेषश्रुतिविरोध इति न्यायविवरणे नित्यं मन इति मध्ये प्रतीकग्रहणेन भाष्योक्तपूर्वोत्तरांशयोरप्युपादानं श्रुतेर्विशेषत्वं च विशिष्य नित्यत्वाभिधायकत्वं अनादिपुरुषाविनाभूतत्वाभिधायकत्वं चेति द्वेधेति दर्शितं भवति। पुरुषेण जीवेनेत्यर्थः। तदनादित्वं च यावदात्मभावित्वाच्चेत्यत्र सिद्धम्। सौत्रचशब्दार्थसूचितं व्यनक्ति ॥ तदा संसारेति॥यदाहुरिति ॥ गीताभाष्ये षष्ठे ॥ सर्वेति ॥ सोऽनादिना पुण्येन पापेन चानुबद्धः परेण निर्मुक्त इति एषोऽश्वत्थः सनातनः नांतो न चादिर्न च संप्रतिष्ठा अश्वत्थमेनं सुविरूढमित्यादिश्रुतिस्मृत्यादिविरुद्धमित्यर्थः ॥ अत इति ॥ विशिष्य नित्यत्वश्रवणात्। अनादिबंधहेतुतया अनादिपुमविनाभूतत्वश्रवणाच्चेत्यर्थः। उक्तयुक्तिद्वयं सयुक्तिकेति भाष्येऽभिमतमेतदेव च विशेषश्रुतिविरोध इत्यन्यत्रोक्तविशेषपदेन चाभिमतमिति दर्शयन् भाष्ये कांक्षितपूर्त्यै न्यायविवरणोक्तं संयोजयन् फलोक्त्योपसंहरति ॥ एवंचेति ॥

॥ छ ॥ न वियदित्यतो नोत्पत्त्यसंभव इत्यस्यात्र प्राप्तिं मत्वा भाष्यं व्याचष्टे। ॥ नानुत्पत्तिरिति ॥ एतेन सूत्रे तत्प्रागित्यनेन तेभ्यः पूर्वप्रकृतप्राणेभ्यः प्रागित्युक्त्या तथा श्रूयमाणो मनोरूपो विषयो लब्ध इति दर्शितम्। उत्पत्तिमदिति वाच्ये नानुत्पत्तिरित्युक्तिः पूर्वोक्तोत्पत्त्याक्षेपनिरासकत्वमस्य योगस्य सूचयितुम्। एवमग्रेपि भाष्ये उक्तत्वादित्येतच्छ्रुतेरित्यस्य व्याख्येति भावेनाह ॥ उत्पन्नत्व इति ॥ भाष्ये तत्प्रागित्यंशव्याख्यापूर्वेति। तस्य कृत्यं वक्तुं पूर्वोक्तमनुवदति ॥न चेति॥ गत्यंतरं विशेषश्रुतिविरोधेनाप्रामाण्यमित्युक्तगत्यंतरमित्यर्थः। एतस्माज्जायते प्राणो मनः सर्वेंद्रियाणि चेति विशेषश्रुतेरित्यन्यत्रोक्तं श्रुतेर्विशेषत्वं वक्तुं पूर्वोक्तत्वरूपं भाष्योक्तमेवेति दर्शयन् पूर्वोक्तत्वादित्येतद्भावमाह ॥ पृथगिति ॥ तर्हि सूत्रे पृथक्श्रुतेरिति भाष्ये च पृथगुक्तत्वादित्येव वाच्यम्। न तु तत्प्रागित्यादिरूपेणेत्यतस्तत्कृत्यं व्यनक्ति ॥ न चेत्यादिना ॥ सौत्रतच्छब्दार्थविवरणमन्येंद्रियेभ्य इति भाष्ये च शेषोक्तिः। अक्षरार्थमाह ॥ पूर्वेति ॥ सूत्रे चोत्पन्नतयेति शेष इति भावः ॥कुत इति॥प्रमाणादिति योज्यम्। अन्यथा पूर्वार्धस्य नातीवोपयोगः स्यादिति भावः। उत्तरार्धभावमाह ॥ नेति ॥ सूक्ष्मेति ॥ नित्यान्येतानि सौक्ष्म्येणेति प्रागुक्तस्मृतेरिति भावः। अत एव भाष्ये अत्र तदनुद्धार इति भावः ॥ अत एवेति ॥ सौक्ष्म्येणानादिनित्यत्वादेव न ह्यमना इत्युक्तयुक्तिविरोधो नेत्यर्थः ॥ विशिष्येति ॥

विशिष्यनित्यत्वोक्तिविरोध इत्यर्थः ॥ अत इति ॥ अनुत्पत्तिश्रुतेः सूक्ष्ममनःपरत्वाज्जन्मश्रुतेरल्पोपचयविषयत्वादीशजत्वे विवादाभावाच्चेत्यर्थः ॥ ४ ॥ अ० २ ॥

सूत्रभाष्यम्—

'नित्ययाऽनित्यया स्तौमि परमात्मानमच्युतमि'ति । 'वाग्वाव नित्या न ह्येषोत्पद्यतेऽस्यां हि श्रुतिरवतिष्ठत' इति सयुक्तिकं पौष्यायणश्रुतौ वाचोऽनुत्पत्तिरुच्यते । अतो ब्रवीति—

॥ ॐ तत्पूर्वकत्वाद्वाचः ॐ ॥ ५ ॥

'तस्मान्मन एव पूर्वरूपं वागुत्तररूपमि' (ऐ. आ. ३-१-१) ति मनःपूर्वकत्वाद्वाचो नानुत्पत्तिः ।

'वागिन्द्रियस्य नित्यत्वं श्रुतिसन्निधियोग्यता ।
उत्पत्तिर्मनसो यस्मान्न नित्यत्वं कुतश्चने' ति वायुप्रोक्तेः ॥ ५ ॥

॥ इति वागधिकरणम् (पा. तत्पूर्वकत्वाधिकरणम्.) ॥ ३ ॥

तत्वप्रकाशिका—

अत्र जगत्कारणे हरौ श्रुतीनां समन्वयसिद्ध्यर्थं वागुत्पत्तिविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसंगतिः । श्रुतिसमन्वयेन जगत्कारणत्वं विष्णोरुक्तम् । तद्वागुत्पत्तिविषयश्रुतिविरोधेनाप्रामाण्येऽनुपपन्नं स्यादिति तस्य निराकरणमावश्यकम् । प्रकृतेन्द्रियान्तःपाति वागिन्द्रियमत्र विषयः । उत्पत्तिमन्न वेति संदेहः । 'सर्वेन्द्रियाणि च' 'न ह्येषोत्पद्यत' इति श्रुतिविगानं संदेहबीजम् । पूर्वपक्षयति ॥ नित्ययेति ॥ न वागुत्पत्तिमती । अनादित्वे श्रुतिसद्भावात् । न चेयं श्रुतिर्वेदविषया । समाख्याश्रुतौ नित्ययानित्ययेत्यवतार्य श्रुतिर्वाव नित्येति व्याख्यातत्वात्सामान्यवाक्शब्दस्य विशेषार्थकल्पनोपपत्तेरुत्पत्तिश्रुत्यानुकूल्याच्चेति वाच्यम् । अस्यां हि श्रुतिरवतिष्ठत इतिवाक्यशेषादस्याविशेषश्रुतित्वात् । न हि श्रुतौ श्रुतिरवतिष्ठते । किं चोत्पत्तिमत्त्वे वाचः श्रुतं श्रुत्याश्रयत्वं तस्या नोपपद्यते । न हि नित्याश्रयोऽनित्यः क्वचित् दृष्टः । अथापि स्यात् । सूक्ष्मरूपानादित्वपरा श्रुतिः किं न स्यात् । उत्पत्तिश्रुत्यानुकूल्यादुपचयोऽप्यस्तीति । मैवम् । श्रुतश्रुत्याश्रयत्वादेव । श्रुत्याश्रयत्वं नाम वाचो नित्यं श्रुत्युच्चारणसामर्थ्यम् । नित्यसर्वगतानां

वर्णानामन्यथा विशिष्य वागाश्रयत्वोक्तिवैयर्थ्यात् । सदा वेदोच्चारणसमर्थाया वाचो व्यर्थमुपचयकल्पनम् । अतः सयुक्तिकविशेषश्रुतिविरोधादप्रामाण्यं वागुत्पत्तिश्रुतेरतो न श्रुतिसमन्वयेन हरेर्जगत्कारणत्वसिद्धिरिति भावः । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ।। अत इति ।। वागुत्पत्तिमत्येव । 'मनः पूर्वरूपं वागुत्तररूपम्' इति मनोलक्षणकारणवत्त्वश्रुतेः । कारणवतश्च कार्यतानियमात् । न च वाक्शब्दस्य साधारणत्वाद् व्याहरणार्थता । वाचा व्याहरतीति पूर्ववाक्यबलेनेन्द्रियार्थत्वे विशेषश्रुतित्वादिति भावः । अत्र श्रुतौ पूर्वोत्तरशब्दौ कारणकार्यपरौ । वागिन्द्रियस्योत्पत्तिपक्षे श्रुत्यादिविरोध इत्यत आह ।। वागिन्द्रियस्येति ।। नित्यश्रुतिसन्निधानान्नित्यत्वोपचारो न तु नित्यत्वम् । न च नित्याश्रयत्वादेव नित्यत्वम् । यतो नित्याश्रयत्वं न नित्यदाऽपि तु तद्योग्यतैव । अत एव नोपचयवैयर्थ्यं चेति भावः । मनसः सकाशात् । एवमभ्युपगम एव नित्यत्वश्रुतिः श्रुत्याश्रयत्वश्रुतिरप्युपपन्ना न नित्यत्वे । तस्या अप्येतदर्थत्वात् । 'वाग्वाव नित्या' इत्युक्ते तत्कथमित्याशङ्कायामुपचारोऽयमित्युपचारबीजं ह्युच्यते अस्यां हीति । एवं च सति वेदाश्रयत्वेन नित्यया पुराणाद्याश्रयत्वेन चानित्ययेति वाक्यार्थो घटते । एवं च समाख्यानुरोधः । अन्यथा न वाक्यार्थोपपत्तिः । अतः श्रुत्यविरोधेनोत्पत्तिसिद्धेर्वाचो युक्तः श्रुतिसमन्वयो जगत्कारणे हराविति सिद्धम् ।। ५ ।। अ० ३ ।।

भावदीपः—

।। ॐ तत्पूर्वकत्वाद्वाचः ॐ ।। ५ ।। अत्र वागिंद्रियचिंतायाः प्रसक्तिमाह ।। प्रकृतेति ।। अनादित्वे श्रुतीति ।। न ह्येषेति भाष्योक्तेत्यर्थः । भाष्ये वाग्वाव नित्येत्युत्तरांशेनैव पूर्तौ पूर्वार्धोक्तिः नित्ययानित्यया स्तौमि ब्रह्म तत्परमं पदमिति श्रुतिर्वा व नित्या अनित्या वा व स्मृतय इति तत्वनिर्णयोक्तपैंग्याश्रुतिरूपसमाख्यास्मारणेन वाचः श्रुतित्वशंकोत्थापनायेति भावेनाह ।। न चेत्यादिना ।। वाच्यमित्यन्वयः ।। सामान्यवाक्शब्दस्येति ।। एतेन वाग्वा व नित्येति विशेषश्रुतिविरोध इति न्यायविवरणे नित्ययेत्यादिश्रुतिविरोध इति वा नित्ययेत्यादिसयुक्तिक श्रुतिविरोध इत्यादि (वा) वाक्यमप्रयुज्य वाक्पदप्रतीकपूर्वं विशेषश्रुतीति विशेषपदप्रयोगस्य व्यावर्त्यं विभावितं भवति । व्यावर्त्यांतरमाह ।।उत्पत्तीति।। इंद्रियोत्पत्तीत्यर्थः। एतच्छंकानिरासश्च वाक्यशेषेणैवेति भावेनाह ।। अस्यामिति ।। वागिंद्रियपरत्वरूपविशेषेणेत्यर्थः । यथा प्राणादयो वाक्यशेषादित्यत्र प्राणस्य प्राणमित्यादिना

प्राणप्राणदत्वादिबोधकवाक्यशेषान्यथानुपपत्त्या यस्मिन्पंचपंचजना इति श्रुतजन-शब्दितस्य ब्रह्मरूपविशेषार्थत्वं तथेति भावः। एतेन भाष्ये वाक्यशेषोक्तिरन्यत्रोक्तविशेषश्रुतित्वविवरणायेति दर्शितम्। तथा चेंद्रियाणि चेति सामान्यश्रुतेरनया बाध इति भावः। नन्वेवं वाचो वागिंद्रियपरत्वार्थं भाष्ये वाक्यशेषोक्तिश्चेत्कथं तर्हि सयुक्तिकमनुत्पत्तिरुच्यत इति वागनुत्पत्तेः सयुक्तिकत्वोक्तिर्भाष्ये इत्यतो अन्यथाप्यर्थमाह ॥ किं चेति ॥ पूर्वस्माद्विशेषशंकोत्थापकयुक्तिपरत्वेनापि शेषं शंकापूर्वं व्याकरोति ॥ अथापि स्यादित्यादिना ॥ अथापि विशेषश्रुतित्वेपीत्यर्थः ॥ श्रुत्युच्चारणेति ॥ अत एव वक्ष्यत्यस्य समाधिम्। वागिंद्रियस्य नित्यत्वं श्रुतिसन्निधियोग्यतेतीतिभावः ॥ अत इति ॥ निरवकाशवाक्यशेषसाहित्यात्सयुक्तिकेत्यर्थः। यद्वा तस्यैव विवरणं सयुक्तिकेत्यादि ॥ वागुत्पत्तीति ॥ इंद्रियाणि चेति सामान्यश्रुतिरित्यर्थः ॥ छ ॥ भाष्ये नानुत्पत्तिरित्युक्त्यार्थलब्धवाक्पदानुवादेन फलितार्थमाह ॥ वागिति ॥ तत्पूर्वकत्वपदं श्रुत्युपलक्षणम्। पूर्वशब्दः कारणपरः। बहुव्रीहौ कप्रत्ययः। तदिति च मन इति भावेनार्थमाह ॥ मनइत्यादिना ॥ इदमुपलक्षणं मनसो वा व वागुत्पद्यते। वाचो व्याहरणमिति न्यायविवरणोक्तश्रुतिरपि ग्राह्या। सूत्रे पूर्वपदेन मनःपूर्वरूपमित्यस्य सूचनात् भाष्ये अस्यैवोक्तिः। भाष्ये संकल्परूपमनोव्यापारानंतरमेव व्याहरणरूपवाक्करणकव्यापारादित्यर्थकस्य तस्मादित्यंशस्याप्युक्तेरुपयोगं व्यावर्त्यं पूर्वं व्यनक्ति ॥ न च वागिति ॥ मनसा वा अग्रे संकल्पयति। अथ वाचा व्याहरति। तस्मान्मन एव पूर्वरूपमित्यैतरेये पाठात्पूर्ववाक्येत्युक्तम्। एतदुपलक्षणं मनसो वा व वागुत्पद्यते वाचो व्याहरणमितिविशेष श्रुतेरितिन्यायविवरणोक्तश्रुत्यंतरे वाचो व्याहरणमिति उत्तरत्र श्रुतवाक्यशेषबलाच्चेत्यपि ध्येयम्। तत्वप्रदीप एवास्योक्तत्वादत्र साक्षादनुक्तिः। एतेन निरवकाशवाक्यशेषसाहित्यमेव न्यायविवरणोक्तविशेषश्रुतित्वमिति दर्शितम्। श्रौतपदयोरर्थमाह ॥ अत्र श्रुताविति ॥ ॥ श्रुत्यादीति ॥ युक्तिरादिपदार्थः। वागिति पूर्वार्धभावमाह ॥ नित्येति ॥ तत्र योग्यतापदं प्रागुक्तयुक्तिविरोधशामकतया व्याचष्टे ॥ नचेति ॥कुत एवं श्रुतेरुपचारकल्पना सयुक्तिकत्वान्मुख्यनित्यत्वमेव कुतो न श्रुत्यर्थ इत्यतः कुतश्चन नित्यत्वं नेत्यवधारणोपेतोत्तरार्धतात्पर्यमाह ॥ एवमिति ॥ उपचारबीजमिति ॥ अन्यथा न वाक्यार्थोपपत्तिरिति वक्ष्यमाणमत्रापि योज्यम्। तदर्थमग्रे वक्ष्यामः। नन्वस्तु वाचो नित्यत्वं नित्यवेदाश्रयत्वेनोपचरितं वाक्यशेषबलात् अनित्यत्वं तु स्वरूपेणैवास्तु

तत्र वाक्यशेषाभावादित्यत आह ॥ एवं च सतीति ॥ नित्यत्वे उपचरिते सतीत्यर्थः। किमत्र कल्पकमित्यतो द्वयमाह ॥ एवं चेति ॥ अन्यथेति ॥ च समाख्याश्रुतावनित्या वा व स्मृतय इति । वागिन्द्रियाश्रयस्मृतीनामनित्यत्वोक्तेरत्रापि तदाश्रयत्वेनैवानित्यत्वं विवक्षितं न तु स्वरूपेणेत्यर्थः । अन्यथा स्वरूपेणैव नित्यत्वान्नित्यत्वविवक्षायां विरोधादिति भावः । शिष्टं चंद्रिकायां बोध्यम् ॥ अत इति ॥ नित्यत्वश्रुतेरुपचरितार्थत्वादनित्यत्वे श्रुतिसत्वाच्चेत्यर्थः ॥ ५ ॥ अ० ३ ॥

सूत्रभाष्यम्—

'सप्त प्राणाः प्रभवन्ति तस्मात्' (मुं. उ. २-१-८) इति श्रुतिः । 'सप्तैव मारुता बाह्ये प्राणाः सप्त तथाऽऽत्मनि । अधिदैवे तथाऽध्यात्मे सङ्ख्यासाम्यं विदो विदुरि'ति च स्कान्दे । 'द्वादश वा एते प्राणा द्वादश मासा द्वादशाऽदित्या द्वादशराशयो द्वादश ग्रहा' इति कौण्डिन्यश्रुतौ द्वादशप्राणा दृश्यन्ते । अतो वक्ति—

॥ ॐ सप्तगतेर्विशेषितत्वाच्च ॐ ॥ ६ ॥

ज्ञानेन्द्रियापेक्षया सप्तत्वम् । 'गुहाशयां निहिताः सप्तसप्ते' (मुं. उ. २-१-८) ति विशेषणात् ।

'सप्तप्राणास्त्ववगतेः पञ्चप्राणाश्च कर्मणः ।
एवं प्राणद्वादशकं शरीरे नित्यसंस्थितमि'ति भविष्यत्पर्ववचनं चशब्दात् ॥ ६ ॥

तत्त्वप्रकाशिका—

अत्र श्रुतिसमन्वयेन विष्णोर्जगत्कारणत्वसिद्धये प्राणसंख्याविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसंगतिः । उक्तो जगत्कारणे ब्रह्मणि श्रुतिसमन्वयः प्राणसंख्याश्रुतीनां विरोधेनाप्रामाण्येऽनुपपन्नः (तां) प्राप्नोतीत्यवश्यमयं पराकार्यः । प्रकृतप्राणा एवात्र विषयः । किं सप्तोत द्वादशेति संदेहः । संदेहबीजं श्रुतिविगानं दर्शयन् पूर्वपक्षं च सूचयति ॥सप्तेति॥ श्रुतिः प्राणानां सप्तत्वं वक्तीति शेषः । 'ग्रहाः सोमस्य सप्तैव प्राणाः सप्त प्राणाः' इति श्रुतेः । न च द्वादशप्राणेषु सप्तापि संभवन्तीति द्वादशत्वाविरोधिनीयं श्रुतिरिति वाच्यम् । द्वादशत्वे कारणविशेषमन्तरेण सप्तत्वोक्तेरयोगात् । किं चाभिमानिनां सप्तत्वाच्च प्राणानां सप्तत्वमभिमान्य

भिमन्यमानयोः समसंख्यात्वनियमादितिं । अथवा द्वादश प्राणाः । 'द्वादश वा एते प्राणाः' इति श्रुतेः । न च सयुक्तिकत्वेन बलवत्या सप्तत्वश्रुत्या बाधः । द्वादश मासा इत्यादिश्रुतेरेकदैवत्याभिप्रायेण प्रवृत्तत्वेन प्राणाभिमानिनां द्वादशत्वस्याभिप्रेतत्वात्सप्तत्वे कथितयुक्तेरत्रापि साम्यात् । अन्यथा श्रुतेरुन्मत्तवाक्यत्वापातात् । अत एव श्रुतिद्वयस्यापि समबलत्वेनान्यतरमात्रबाधायोगात् परस्परविरोधेनाप्रामाण्यात्त श्रुतिसमन्वयेन नारायणस्य जगत्कारणत्वमिति भावः । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ।। अत इति ।। न प्राणसंख्यानिर्णयाभावेन श्रुतिद्वयस्याप्रामाण्यं कल्प्यम् । द्वादश प्राणा इति निर्णयोपपत्तेः । न च सप्तत्वश्रुतियुक्तिविरोधः । द्वादशप्राणेषु सप्तप्राणानामपि विद्यमानत्वात् । न च विवक्षाविशेषमन्तरेण सप्तत्वोक्तिर्व्यर्थेति वाच्यम् । श्रोत्रचक्षुःस्पर्शनरसनघ्राणमनोबुद्धीनां ज्ञानसाधनेन्द्रियत्वात्तद्विवक्षया सप्तत्वश्रुतेः प्रवृत्तत्वात् । सप्तानां श्रुत्युक्तानां ज्ञानेन्द्रियत्वं कुत इति चेन्न । तद्वाक्यशेषे सप्तानां ज्ञानार्थत्वेन विशेषितत्वादिति भावः । गुहा हृदयमाशयः स्थानं यस्या बुद्धेस्तदर्थं ये प्रतिशरीरं सप्त सप्त प्राणा निहितास्ते यत्र चरन्तीत्यर्थः । विशेषणबलेन तेषां ज्ञानार्थत्वमस्तु तथापि ते तावन्त एव किं न स्युरित्यत आह ।। सप्तेति ।। च शब्दात्संगृहीतमिति शेषः । एतच्छ्रुतावेवं सावकाशायामितराऽपि श्रुतिरत्रोदाहर्तव्या ।। ६ ।।

भावदीपः—

।। ॐ सप्तगतेर्विशेषितत्वाच्च ॐ ।।६।। श्रुतीनामिति ।। दशेमे पुरुषे प्राणा इति न्यायविवरणोक्तश्रुत्युपसंग्रहाय बहुवचनम्।। किं सप्तेति ।। अत्र किं सप्तोत द्वादशेत्यनंतरं इति निर्णयः शक्योऽथाशक्य इति योज्यम् । तेन वक्ष्यमाणपूर्वपक्षानुगुण्यं संशयस्य बोध्यम् । तथैवानुक्त्वा एवमुक्तिर्भाष्योक्तश्रुतिविगानरूपसंशयबीजप्रदर्शनाय ।। सोमस्येति ।। ज्योतिष्टोमयागे सोमरसस्य ग्रहणार्थाः सूक्ष्मोलूखलाकाराः पात्रविशेषा ग्रहा इत्यर्थः । तेषां द्वादशत्वसमाधिश्चंद्रिकायाम् । सप्तेति सूत्रव्यावर्त्यपूर्वपक्षमाह ।। सप्तैवेति ।। इष्टापत्तिनिरासायैवकारः । स्फुटत्वाद्भाष्यादावनुक्तमपि सौत्रगतिपदव्यावर्त्यं हेतुमाह ।।द्वादशत्व इति ।। भाष्यस्थस्मृत्युक्तयुक्तिं व्यनक्ति ।। किंचेति ।। नियमादिति ।। यद्यप्येकैकस्यापि अव्यक्तादेरनेके ब्रह्माणीभारतीप्रभृतयोऽभिमानिनः संति । तथा न केषामपि एको ब्रह्मादिरभिमान्यस्ति तथापि प्रातिस्विकासाधारणाभिमान्याशयेनेयमुक्तिरित्यदोषः । इति शब्दः सप्तत्वपक्षसमाप्तौ।

भाष्यस्थश्रुत्यंतरानुरोधात् पक्षांतरमाह ।। अथवेति ।। श्रुतिशेषोक्तेः शंकापूर्वमुपयोगं व्यनक्ति ।। न चेत्यादिना ।। एकदैवत्येति ।। समसंख्याकदेवताभिप्रायेणेत्यर्थः । द्वादशमासानां हि द्वादशादित्यादयो देवताः।। कथितेति ।। अभिमान्यभिमन्यमानयोः समसंख्यत्वनियमादित्युक्तेरित्यर्थः । अन्यथाऽनुपयुक्तकथनेनेत्यर्थः । अस्त्वेवं पक्षद्वयं सयुक्तिकश्रुतिसिद्धम् । तथा च किमित्यतः संख्याविशेषश्रुत्योरेव परस्परं विरोध इति न्यायविवरणं हेतूक्त्या विवृण्वन्फलोक्त्योपसंहरति।। अत इति ।। सयुक्तिकत्वादित्यर्थः ।। छ ।। सौत्रसप्तत्वोक्तौ हेतूक्तिपरत्वेन सूत्रभाष्ये व्याकर्तुं परिष्करोति ।। न प्राणेति ।। शंकापूर्वं सूत्रभाष्ये व्याचष्टे ।। न चेत्यादिना ।। सप्तभावस्य बुद्धींद्रियविषयत्वेन विशेषितत्वादित्यन्यत्रोक्तिमनुरुध्य शेषं व्याचष्टे ।। सप्तानामिति ।। गुहाशयां बुद्धौ । लोपः समान इति सूत्रादेकयकारलोप इत्याथर्वणभाष्यं विग्रहोक्त्या विवृण्वान एवोक्तमर्थं श्रुतावस्फुटत्वाद् व्यनक्ति।। गुहेति ।। गुहाशयामिति तादर्थ्ये सप्तमीति भावेनार्थमाह ।। तदर्थमिति ।। तत्वप्रदीपे तु गुहाशयां बुद्धिं प्रति बुद्धयर्थं निहिता इति वेत्यादिरूपेणार्थांतरं चोक्तम्। तदनुरोधेन द्वितीयांतपक्षमप्युपेत्य वार्थमाह ।। तदर्थमिति ।। सप्तसप्तेति वीप्सालब्धार्थमाह ।। प्रतिशरीरमिति ।। प्रतिपुरुषं सप्तसप्तेत्याथर्वणभाष्योक्तेरिति भावः । एषु चरंतीत्यस्यार्थः यत्रेत्यादि । लोकशब्दितगोलकेष्वित्यर्थः । त इमे सप्तलोका इत्यन्वयः । ननु सयुक्तिकसप्तत्वश्रुतिविरोधेन द्वादश वा इति श्रुतेरेवाप्रामाण्ये कथं स्मृतिमात्रेण द्वादशत्वसिद्धिरित्यत आह ।। एतच्छ्रुताविति ।। सप्त प्राणा इति श्रुतावित्यर्थः । अत्र इंद्रियद्वादशत्वे । सप्तभावस्य बुद्धींद्रियविषयत्वेन विशेषितत्वात्संख्याश्रुत्योर्विषयवैलक्षण्यादित्यन्यत्रोक्तेरिति भावः ।। ६ ।।

सूत्रभाष्यम्—

**।। ॐ हस्तादयस्तु स्थितेऽतो नैवम् ॐ ।। ७ ।।**

हस्तादीनां कर्मविषयत्वान्न सहपाठः ।

'संसारस्थितिहेतुत्वात्स्थितं कर्म विदो विदुः ।
तस्माद्द्रुतिहेतुत्वाज्ज्ञानं गतिरिहोच्यत' इति (च) वायुप्रोक्ते ।। ७ ।।

।। इति सप्तगत्यधिकरणम् ।। ४ ।।

तत्वप्रकाशिका—

न सप्तप्राणेभ्योऽन्ये प्राणाः सन्ति । सद्भावेऽत्र सहपाठप्रसङ्गात् । अत्र च सहपाठाभावोऽनादित्वेन वा भवेत् परमात्मनो वा तदकारणत्वेन । तदुभयं चोक्तविरुद्धम् । न च कारणांतरं पश्यामः । अतः प्राणान्तराणामेभिः परमात्मनः सकाशादुत्पन्नत्वेनोच्यमानैः सहपाठाभावादभाव इत्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ हस्तादय इति ॥ न सहपाठाभावेन प्राणान्तराभावः । अनादित्वाद्यभावेऽपि पाणिपादपायुगुह्यवाचः कर्मार्थानीन्द्रियाणि । अत एतावतैव वैलक्षण्येनासहपाठोपपत्तेरिति भावः । ननु गतिस्थितशब्दौ कुतो ज्ञानकर्मार्थावित्यत आह ॥ संसारेति ॥ सजातीयत्वेनान्यत्रापि शब्दः प्रपदशब्दवदिति ज्ञातव्यम् । अतः श्रुत्यविरोधेन प्राणानां द्वादशत्वसिद्धेर्युक्तं श्रुतिसमन्वयेनेश्वरस्य जगत्कारणत्वमिति सिद्धम् ॥ ७ ॥ अ० ४॥

भावदीपः—

॥ ॐ हस्तादयस्तु स्थितेऽतो नैवं ॐ ॥ ७ ॥ शंकते ॥ नेति ॥ अत्रेति ॥ सप्त प्राणाः प्रभवंति तस्मात्सप्तार्चिषः समिधः सप्तहोमाः । सप्त इमे लोका एषु चरंति प्राणा गुहाशयां निहिताः सप्त सप्तेति श्रुतावित्यर्थः ॥ उक्तेति ॥ तथा प्राणा इत्यादावीशजातत्वेनोक्तत्वादिति भावः ॥ न चेति ॥ सहपाठाभावे इत्यनुषंगः । पूर्वपक्षं निराह ॥ सहपाठाभावेनेत्यादि ॥ हस्तादयस्तु स्थित इत्यंशस्यार्थमाह ॥ अनादित्वादीति ॥ सूत्रे स्थित इति तादर्थ्ये सप्तमीति भावेनाह ॥ कर्मार्थानीति ॥ प्राणा इत्यनुवृत्ति मत्त्वोक्तमिंद्रियाणीति । इदानीं तत्र हेतुत्वेन भाष्यं व्याचष्टे ॥ अत एतावतेति ॥ संख्याश्रुत्योर्विषयवैलक्षण्यादिति न्यायविवरणे सहपाठाभावोपपत्त्यर्थं वैलक्षण्यमिति वचनमिति भावेनोक्तं वैलक्षण्येनेति । एतेन सौत्रस्तुशब्दो वैलक्षण्यार्थ इति दर्शितम्॥ गतीति ॥ सूत्रद्वयस्थाविति योज्यम् । ननु निवृत्तकर्मणः संसारस्थित्यहेतुत्वात् अब्रह्मज्ञानस्य च तस्मादुद्गत्यहेतुत्वात्तयोः कथंस्थितिगतिशब्दावत आह ॥ सजातीयत्वेनेति ॥ यथा यत्प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं तस्मात्प्रपदे इति श्रुत्युक्तस्य प्रपदशब्दस्य चतुर्मुखपादतलोपरिभागगतत्वेऽपि तज्जातीये पुरुषांतरसंबंधिन्यपि तस्मिन्प्रपदशब्दस्तथेह प्रवृत्तकर्मणः संसारस्थितिहेतुत्वाद् ब्रह्मज्ञानस्य च तस्मादुद्गतिहेतुत्वात्सजातीययोः कर्मज्ञानांतरयोरपि स्थितिगतिशब्दावित्यर्थः ॥ अत इति ॥ ज्ञानार्थत्वेन सप्तत्वोक्तेः कर्मार्थत्ववैलक्षण्येनासहपाठस्य चोपपन्नत्वादित्यर्थः ॥ ७ ॥ अ० ४ ॥

'दिवीव चक्षुराततमि'(ऋ. सं. १-२२-२०)ति व्याप्तिः प्रतीयते। दूरश्रवणदर्शनादियुक्तिश्च। अणुभिः पश्यत्यणुभिः कृणोति प्राणा वा अणवः प्राणैर्ह्येतद्भवती'ति च कौण्डिन्यश्रुतिः। अतो वक्ति—

॥ ॐ अणवश्च ॐ ॥ ८ ॥

'तद्यथा ह्यणुनश्चक्षसः प्रकाशो व्यातत एवमेवास्य पुरुषस्य प्रकाशो व्याततोऽणुर्ह्येवैष पुरुषो भवती' ति शाण्डिल्यश्रुतिः ॥ ८ ॥

॥ इति अण्व (णुत्वा) धिकरणम् ॥ ५ ॥

तत्वप्रकाशिका—

अत्र पुरुषोत्तमे जगज्जन्मादिकारणे श्रुतिसमन्वयसिद्ध्यर्थं प्राणपरिमाणविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसंगतिः। जगत्कारणे ब्रह्मण्युक्तः श्रुतिसमन्वयः प्राणपरिमाणविषयश्रुतीनां विरोधेऽनुपपन्नः प्रसज्यतेऽतोऽसौ निराकर्तव्यः। प्रकृतप्राणा एवात्र विषयः। किं व्याप्ता उताणव इति संदेहः। संदेहबीजं श्रुतिविरोधं दर्शयन् पूर्वपक्षं च सूचयति ॥ दिवीति ॥ व्याप्तिः प्राणानामिति शेषः। श्रुतिः प्राणानामणुत्वं वक्तीति शेषः। पश्यति जानाति। कुतोऽत्रोक्ता अणवः प्राणाः। ज्ञानकर्मकरणत्वलिङ्गादित्यर्थः। व्याप्ताः प्राणाः। तथा श्रुतेः। न चाणुत्वश्रुतिविरोधः। विष्णोर्व्याप्तत्वे दृष्टांतत्वेन चक्षुर्व्याप्तेरुक्तत्वादेतच्छ्रुतेः प्राबल्यात्। अतिसुदृढं हि दृष्टांतत्वेनोपादीयते। किं चास्ति तावद्दूरस्थवस्तुदर्शनश्रवणस्मरणादि तेन पश्यामोऽस्ति प्राणानां व्याप्तिरिति। इन्द्रियाणां प्राप्यकारित्वात्। अन्यथा करणत्वविरोधात्। न च स्वस्थानं विहाय विषयेणेन्द्रियं सन्निकृष्यत इति विशेषप्रमाणमस्ति। अतः प्रबलश्रुतिविरोधादणुत्वश्रुतिरप्रमाणमेवेति न जगत्कारणे ब्रह्मणि श्रुतिसमन्वयो युक्त इति भावः। सिद्धान्तयत्सूत्रमवतारयति ॥ अत इति ॥ अणव एव प्राणाः। न चैतावता श्रुतियुक्तिविरोधः। यावता तेजसा व्याप्ताश्चेति सूत्रार्थः स्फुटतया नोक्तः। अतिसुदृढार्थश्रुतिसिद्धे व्याप्तत्वे कुतोऽणुत्वं प्राणानां तेजसा व्याप्तिश्चेत्यत आह ॥ तद्यथेति ॥ चक्षसः चक्षुषः। न च व्याप्तिश्रुतेः सुदृढार्थतया बलवत्त्वम्। अत्राप्यात्मनोऽणुत्वादौ चक्षुषो दृष्टान्ततयोक्तत्वाद्विशेषश्रुतित्वाच्च बलवत्त्वमिति। यदीन्द्रियाणि स्वरूपतो विततत्यावस्थितानि तदा सर्वग्रहणं च प्रसज्येत सुप्त्याद्यभावश्च। स्यादेतत्। शब्दो हि वक्तृवक्त्रादुत्पन्नः शब्दान्तरमु-

त्पादयति सोऽप्येवम् । यत्र तु प्रतिघातकारणेन द्रव्येणाहन्यते न तत्रोत्पादयति । तत्र यः कर्णशष्कुल्यवच्छिन्ने वियत्युत्पद्यते स श्रूयते इति कथं दूरस्थश्रवणमनुज्ञायत इति । मैवम् । श्रोत्रोत्पन्नशब्दग्रहणे मानाभावात् । अन्यथाऽप्राप्यग्रहणप्रसङ्ग इति चेन्न । चक्षुर्वच्छ्रोत्रस्यैव गमनोपपत्तेः । श्रोत्रस्याकाशतयाऽमूर्तत्वान्नेति चेन्न । किमाकाशपदेनोच्यते । अवकाश इति चेत्तत्कुतोऽवकाशत्वं श्रोत्रस्य । परिशेषादिति चेन्न । भूताकाशस्य द्रव्यान्तरस्य विद्यमानत्वेन परिशेषानुपपत्तेः । तदनभ्युपगमे श्रुत्यादिविरोधः । पृथिव्यादीनामप्युपपद्यते श्रोत्रत्वम् । अन्यत्रोपक्षीणानि तानीति चेत् । तच्छरीरानारम्भकत्वप्रसङ्गः । बधिराभावप्रसङ्ग इति चेत्सममवकाशेऽपि । अदृष्टकारणत्वं च समानम् । उपहतिश्च पृथिव्यादीनामेव संभवति नावकाशमात्रस्येति युक्त एवाभ्युपगमः । यद्वा चक्षुर्विषय एव तदभ्युपगमः । अत एव पूर्वोत्तरपक्षयोस्तद्विषयश्रुत्युदाहरणम् । अतः श्रुत्यविरोधेन प्राणानामणुत्वसिद्धेर्युक्तो जगत्कारणे हरौ श्रुतिसमन्वय इति सिद्धम् ॥ ८ ॥ अ० ५ ॥

भावदीपः—

॥ ॐ अणवश्च ॐ ॥ ८ ॥ प्राणानामिति शेष इति ॥ श्रुतौ चक्षुःपदे उपलक्षणमिति वा चक्षुष इवान्यस्यापि व्याप्तिश्रुतिरूह्येति वाभिप्रायः । चक्षुर्मात्रव्याप्तत्वाभिप्राये तु श्रुत्यनुग्राहकदूरश्रवणादियुक्त्युक्तिरयुक्ता । तथा प्राणा वा अणव इति सामान्यश्रुतेरचक्षुःपरत्वसंभवेन श्रुत्योर्विरोधोक्तिश्चायुक्तेति भावः ॥ जानातीति ॥पश्यार्थैश्चानालोचन इति पाणिनीयस्मृतौ ज्ञानमात्रेऽपि पश्यतिशब्दप्रयोगात् । अत एव चापरोक्षदृशो मिथ्यादर्शनं न क्वचिद्भवेदिति ब्रह्मांडस्मृतावपरोक्षविशेषणं चेति भावः । अन्यथा अणुभिरितिबहुवचनास्वारस्यमिति ध्येयम् । प्राणा अणव इत्येवपूतौ श्रुतिशेषोक्तेः फलमाह ॥कुतोऽत्रेति॥ अणुत्वश्रुतावित्यर्थः । ॥ तथाश्रुतेरिति ॥ यद्यपि दिवीवेति श्रुतौ चक्षुष एव व्याप्तत्वं न सर्वप्राणानां । तथापि तुल्यन्यायतया प्रमाणमात्रेऽपि तदभिमतमिति भावेन वा चक्षुष इव प्राणांतरेष्वपि व्याप्तत्वे श्रुतिरनुमेयेति भावेन वा तथा श्रुतेरित्युक्तम् । व्याप्त्याख्यविशेषवाचकश्रुतिविरोध इत्यन्यत्रोक्त्यनुरोधेनाह ॥ व्याप्तत्व इति ॥ चक्षुर्दिवीवव्याप्तं यददृश्यं फलदर्शितमिति ऋग्भाष्ये तट्टीकायां च यथा चक्षुराकाशे व्याप्तमपि न दृश्यते केवलं विषयोपलब्धिलक्षणेन फलेनानुमीयते तथा परमेश्वरस्वरूपं सर्वगमपि न दृश्यं किं तु अस्वतंत्राणां पदार्थानां सत्ताप्रतीतिप्रवृत्तिभिर्ज्ञायत इत्युपमानधर्मा-

ध्याहारेणार्थांतरमुक्तम् । दूरश्रवणेत्यादिभाष्यं व्यनक्ति ।। किं चेति ।। करणत्वेति ।। व्यापारवतः करणत्वात्संनिकर्षरूपव्यापारवत्त्वेनैवेहकरणत्वनिर्वाहादिति भावः । अणुत्वेऽपि शरवद्विषयसंबंधोऽस्त्वित्याशंक्य निराह।। न चेति ।। अत इति ।। सयुक्तिकत्वात्प्रबलेत्यर्थः ।। छ ।। भाष्योक्तश्रुत्यनुरोधात्सूत्रार्थं प्राणपदमनुवर्त्याह ।। अणव एव प्राणा इति ।। स्वरूपेणेति भावः । अनेन चोऽवधारण इति समुच्चयार्थं च मत्वाह ।। तेजसा व्याप्ताश्चेति ।। भाष्योक्तश्रुतौ चक्षुःपदमणूनि वा इंद्रियाणि तेषां प्रकाशो व्यातत इत्यन्यत्रोक्तश्रुत्यनुरोधात्प्राणांतरोपलक्षणं मत्वाऽवतारयति ।। कुतोऽणुत्वं प्राणानामिति ।।दृष्टांतत्वोक्तेरुपयोगमाह ।। न चेत्यादिना ।। विशेषश्रुतिविरोधादित्यन्यत्रोक्त्यनुरोधेन प्रकाशो व्यातत इति विशिष्योक्तेरुपयोगमाह ।। विशेषश्रुतित्वाच्चेति ।। इतिशब्दः सूत्रभाष्यव्याख्यासमाप्तौ । स्वरूपव्याप्त्यैवोक्तदूरश्रवणाद्युपेयताम् । किं च प्राणानां कदंबमुकुलन्यायादिना स्वदेशमागतशब्दादिविषयग्रहणोपपत्तौ तेजसा व्याप्त्युपगमो निर्बीज इति हैतुकं मन्यस्योक्तवचनमकिंचित्करमित्यतो युक्त्याप्युक्तमर्थं साधयितुमाह ।। यदीत्यादिना ।। युक्तएवाभ्युपगम इत्यंतेन ।। सर्वग्रहणं चेति ।। न केवलं उक्तश्रुतिविरोध इति चार्थः ।। सुप्तीति ।। समनस्केंद्रियसन्निकर्षस्य विषयाणां सार्वकालिकत्वेन ज्ञानोपरमानवसरात् । सुषुप्तिमरणमूर्छा न स्युरित्यर्थः । अतिप्रसंगं निराह ।। यत्रत्विति ।। अनुज्ञायते अंगीक्रियते इत्यर्थः ।। श्रोत्रेति ।। श्रोत्रदेशे परंपरया कदंबमुकुलन्यायेनोत्पन्नशब्दग्रहणे इत्यर्थः ।। मानाभावादिति ।। शंखभेर्यादिशब्द एव मया श्रुत इति प्रत्यभिज्ञाविरोधाच्चेत्युपलक्ष्यते । अन्यथा शंखादिशब्दजातीय एव श्रुत इति धीः स्यादिति भावः । प्रागुक्तदिशेंद्रियाणां तैजसत्वमपि मत्वाऽऽह।। चक्षुर्वच्छ्रोत्रस्यैवेति ।। क्वचिच्छब्दे संदेहस्तु रूपादाविव दोषवशाद्युक्तः ब्रह्मभाषितादीनामग्रहणं ब्रह्मरूपादेरिव युक्तमितिभावः । अवकाशोऽव्याकृताकाश इत्यर्थः ।।परिशेषादिति।। पृथिव्यादिभूतपंचकमध्ये पृथिव्यप्तेजोवायूनां घ्राणरसनचक्षुःस्पर्शनेषूपक्षीणत्वेन श्रोत्रस्यावकाशात्मकत्वमेव परिशिष्यत इति परिशेषप्रमाणात्सिद्धमित्यर्थः।।श्रुत्यादीति।। आकाशः संभूतः आकाशो नीलिमोदेति शब्दमात्रमभून्नभ इत्यादिविरोध इत्यर्थः । तेषां भूतैरुपचय इत्युक्तमनुरुध्याह ।। पृथिव्यादीनामिति ।। अन्यत्र घ्राणादौ ।। बधिरेति ।। पृथिव्यादीनामेव श्रोत्रत्व इत्यनुषंगः ।। अभ्युपगम इति ।। स्वरूपतो अणवः अतस्ते-

जसा व्याप्ता इत्यभ्युपगम इत्यर्थः ।। यद्वेति ।। अस्मिन्पक्षे सूत्रे बहुवचनं प्रतिशरीरापेक्षया तदभावो नाडीष्वित्यत्रैवेति भावः ।। अत इति ।। प्राणानां स्वकार्यबलेन स्वरूपाणुत्वप्रकाशव्याप्तत्वोपगमाद्विशेषवचनाभावाच्चेत्यर्थः ।। ८ ।। अ० ५ ।।

सूत्रभाष्यम्—

'नैष प्राणा उदेति नास्तमेत्येकल एव मध्ये स्थाता । अथैनमाहुर्मध्यम' इति मुख्यप्राणस्यानुत्पत्तिः श्रूयते ।

'यत्प्राप्तिर्यत्परित्याग उत्पत्तिर्मरणं तथा ।
तस्योत्पत्तिर्मृतिश्चैव कथं प्राणस्य युज्यत' इति (च) युक्तिर्वायुप्रोक्ता ।

'आत्मत एष प्राणो जायत' (प्र. उ. ३-३) इति च । अत आह—

।। ॐ श्रेष्ठश्च ॐ ।। ९ ।।

'सौक्ष्म्येण ह वा एषोऽवतिष्ठते स्थूलत्वेनोदेति सूक्ष्मश्चाथो स्थूलश्च प्रकीर्तितः सूक्ष्मोऽन्यतः स्थूलोऽथैनमाहुः सादिरनादिरिती' ति गौपवनश्रुतेः ।। ९ ।।

तत्वप्रकाशिका—

अत्र श्रुतिसन्वयेन परमात्मनो जगत्कारणत्वसिद्ध्यर्थं मुख्यप्राणजन्मविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसंगतिः । जगत्कारणे हरावुक्तः श्रुतिसमन्वयो मुख्यप्राणजन्मविषयश्रुतीनां विरोधेऽनुपपन्नः स्यादतोऽसौ निरसनीय एव । सर्वप्राणप्रेरकः प्राणश्रुत्या सन्निधापितो मुख्यप्राणोऽत्र विषयः । उत्पत्तिमान्न वेतिसंदेहः । संदेहबीजं श्रुतिविरोधं दर्शयन् पूर्वपक्षं च सूचयति ।।नेति।। मध्ये जननमरणयोर्मध्यावस्थायाम् । इति चोत्पत्तिः श्रूयत इति शेषः । मुख्यप्राणो नोत्पत्तिमान् । 'नैष प्राण उदेति' इति श्रुतेः । न च मुख्यवाय्वनुत्पत्तिश्रुतिवदियमन्यथा योजनीयोत्पत्तिश्रुत्यानुकूल्यादिति युक्तम् । 'तस्याखिलोत्पत्तिमरणकारणत्वेनोत्पत्याद्ययोगयुक्तियुक्तानादित्वश्रुतेः प्राबल्यात् । न हि सर्वजननहेतोर्जन्मोपपद्यते । दुःखहेतवे स्वजननाय प्रवृत्त्ययोगात् । अतः प्रबलानादित्वश्रुतिविरोधादुत्पत्तिश्रुतिरप्रमाणमेव । अतो न जगत्कारणे परमेश्वरे श्रुतिसमन्वयोपपत्तिरिति भावः । सिद्धान्तयत्सूत्रमवतारयति ।। अत इति ।। यथेतरे प्राणा उत्पद्यन्ते तथा श्रेष्ठश्च प्राणो जायत इति सूत्रार्थोऽतिरोहित इति नाभिहितः । ननु कुतो मुख्यप्राणस्योत्पत्तिस्तदङ्गीकारेऽनादित्वश्रुति-

विरोधादित्यत आह ॥ सौक्ष्म्येणेति ॥ स्थूलादिभावस्य स्वरूपत्वात्कथं तस्योत्पत्त्यादीत्यत उक्तम् ॥ प्रकृतित इति ॥ स्वभावतः । अन्यतः शरीरादितः ॥९॥

भावदीपः—

॥ ॐ श्रेष्ठश्च ॐ ॥ ९ ॥ अत्र चंद्रिकायां संगतिं सूचयति। सर्वप्राणप्रेरकः प्राणश्रुतिसन्निधापितश्चेत्येवं प्रतीकग्रहणं कृतम्। तदा अणवश्चेत्यंतं प्राणपदानुवृत्तेः प्राणश्रुतिसन्निधापितेत्यर्थः। क्वचिट्टीकायां प्राणप्रकृत्या सन्निधापित इति पाठः। तदा प्राणप्रकरणेनेत्यर्थः। श्रुतावथैनमित्यथपदस्य तस्मादित्यर्थत्वात्तदनुरोधेन मध्ये स्थातेत्यत्र मध्यशब्दार्थमाह ॥ जननेति ॥ तत्वप्रदीपे तु एकलः प्रधानः उदयास्तमययोर्मध्ये यौवने स्थातां देहमध्ये वा इति श्रुत्यर्थ इत्युक्तम्। यत्प्राप्तिरित्यादिभाष्यं यत्प्राप्तिरित्यादिमाहात्म्यवचनान्मुख्यप्राणस्य नोत्पत्तिरित्यन्यत्रोक्त्यनुरोधेन। एतेन मातरिश्वा व्याख्यात इत्यनेन गतार्थताशंकानिवर्तकतया व्याचष्टे ॥ न चेत्यादिना ॥ तस्येति ॥ देहे स्थितप्राणरूपस्येत्यर्थः। बाह्यमुख्यवायुरूपस्य तु नैतन्माहात्म्यमिति भवति ततोऽत्र विशेषाशंकेति भावः। स्मृतौ सर्वजीवानामिति शेषं मत्वोक्तं अखिलेति। मूलसृष्टावुत्पन्नस्य सर्वजन्महेतुत्वमस्त्वित्यत आह ॥ दुःखेति ॥ अत इति ॥ सयुक्तिकत्वात्प्रबलेत्यर्थः ॥ छ ॥ चकारं समुच्चयार्थं मत्वा व्यनक्ति ॥ यथेति ॥ प्रस्तावप्राप्तार्थमाह ॥ जायत इति ॥प्राणो वै ज्येष्ठश्च श्रेष्ठश्च। तान्वरिष्ठः प्राण उवाचेति मुख्यप्राणस्य प्राणेषु श्रेष्ठत्वात् प्राण इत्युक्तम्। तेनाध्यात्मप्राणरूपेणेह मुख्यवायोरुत्पत्तिरुच्यते। एतेन मातरिश्वेत्यत्र तु अधिदैवबाह्यरूपेणोत्पत्तिरिति भेदः सूचितः। तत्वप्रदीपे तु तत्रभूतप्रकरणत्वाद्भूतमुख्यवाय्वोस्संमुग्धयोर्विचार इह केवलो मुख्यविषय इति भेद इत्युक्तम् ॥ ९ ॥

सूत्रभाष्यम्—

॥ ॐ न वायुक्रिये पृथगुपदेशात् ॐ ॥ १० ॥

'चेष्टायां बाह्यवायौ च मुख्यप्राणे च गीयते ।
प्राणशब्दस्त्रिषु ह्येषु मुख्ये मुख्यः प्रकीर्तितः'।

इति वायुक्रिययोरपि व्यपदेशादुत्पत्तिश्रुतिस्तयोर्न स्यात्। 'स प्राणमसृजत ... खं वायुर्ज्योतिरापः ... तपो मन्त्राः कर्म' (प्र. उ. ६-४) ति पृथगुपदेशात्।

'भूतानि चेष्टा मन्त्राश्च मुख्यप्राणादिदं जगत् ।
मुख्यप्राणः परस्माच्च न परः कारणान्वित' इति (च) वायुप्रोक्ते ॥ १० ॥
॥ मुख्यप्राणाधिकरणम् (पा. श्रेष्ठाधिकरणम्) ॥ ६ ॥

तत्वप्रकाशिका—

नन्वनादित्वश्रुतिः सयुक्तिकत्वेन प्रबला कथमुत्पत्तिश्रुतिमात्रानुसारेणान्यथा व्याख्यायते । अपि तूत्पत्तिश्रुतिरेव चेष्टाबाह्यवायुविषयतया व्याख्यातव्या तयोरपि चेष्टायामिति वाक्येन प्राणशब्दवाच्यत्वोक्तेः । उत्पत्त्यङ्गीकारे च विरोधाभावादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ नेति ॥ प्राणशब्दस्य चेष्टायां बाह्यवायौ च वृत्युक्तेः प्राणोत्पत्तिश्रुतिस्तयोरुत्पत्तिवादिनी स्यादिति नोपपद्यते । 'स प्राणमसृजत' इति प्राणोत्पत्तिश्रुतेश्चेष्टादिविषयत्वानुपपत्या मुख्यप्राणविषयत्वात् । न चात्रापि चेष्टादिकं वाच्यम् । 'स प्राणमसृजत' इति प्राणोत्पत्तिमुक्त्वा 'प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोका लोकेषु नाम च' इति वायुकर्मणोः पृथगुत्पत्त्यभिधानात् । अन्यथा पुनरुक्तिप्रसङ्ग इति भावः । मुखे प्रधाने । 'मणिर्मुखं प्रधानश्चेत्युत्तमस्य वचो भवेत्' इत्यभिधानात् । श्रुत्यर्थनिश्चायिकां स्मृतिं चाह ॥ भूतानीति ॥ 'स प्राणमसृजत' मुख्यप्राणः परस्माच्च' इति श्रुतिस्मृतिभ्यां युक्तिविरोधोऽपि परिहृतः । मुख्यप्राणस्य परमात्मजातत्वाभिधानात् । यत्प्राप्तिरित्याद्युक्तमाहात्म्यवतोऽपि मुख्यप्राणस्यातिमाहात्म्यवद्विष्णूत्पन्नत्वोपपत्तेः । तदुक्तम् । 'महत्त्वान्महतां विष्णुः कर्ता प्राणस्य चैकराट् । किं नाम न सृजेदेष येन शक्त्येदमावृतम् ॥' इति । अतः श्रुत्यविरोधेन मुख्यप्राणस्य जननसिद्धेर्युक्तं जगत्कारणत्वं श्रुतिसमन्वयेन वासुदेवस्येति सिद्धम् ॥१०॥ अ० ३॥

भावदीपः—

॥ ॐ न वायुक्रिये पृथगुपदेशात् ॐ ॥ १० ॥ शेषपूर्त्या चेष्टायामित्यादिभाष्यं व्याचष्टे ॥ प्राणशब्दस्येति ॥ अत्रापि सप्राणमिति षट्प्रश्नवाक्येऽपि । बृहद्भाष्ये प्रथमाध्यायोक्तमाह ॥ मणिरिति ॥ ननूक्तमनादित्वश्रुतिः सयुक्तिकत्वेन प्रबलेति तत्राह ॥ स प्राणमिति ॥ ततोऽपि माहात्म्याद्विष्णोरिति न्यायविवरणानुरोधेन श्रुतिस्मृतितात्पर्यमाह ॥ यत्प्राप्तिरिति ॥ श्रुतिस्मृत्योर्माहात्म्यानुक्तेर्न्यायविवरणोक्तां श्रुतिमाह ॥ तदुक्तमिति ॥ अत इति ॥ अनादित्वश्रुतेः स्वरूपपरतयोत्पत्तिश्रुतेर्देहपरतया व्यवस्थितत्वादित्यर्थः ॥ १० ॥ अ० ६ ॥

सूत्रभाष्यम् –

'प्राणादिदमाविरासीत्प्राणो धत्ते प्राणे लयमभ्युपैति न प्राणः किञ्चिदाश्रित' इत्याग्निवेश्यश्रुतौ।

'यदाश्रयादस्य चेष्टा सोऽन्यं कथमुपाश्रयेत्।
यथा प्राणस्तथा राजा सर्वस्यैकाश्रयो भवेदि' ति च युक्तिभारते।
'प्राणस्यैतद्वशे सर्वं प्राणः परवशे स्थितः।
न परः क(कि) ञ्चिदाश्रित्य वर्तते परमो यत' इति पैङ्गिश्रुतिः। अत आह–

॥ ॐ चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॐ ॥ ११ ॥

चक्षुरादिवन्मुख्यप्राणोऽपि परमात्मवश एव। 'सर्वं ह्येवैतत्परमेऽवतिष्ठते प्राणश्च प्राणाश्च प्राणिनश्च स ह्येक एवैतान्नयत्युन्नयति वशीकरोती' ति गौपवनश्रुतौ चक्षुरादिभिः सह तद्वशत्वेनैव शासनात्।

'सर्वकर्ताऽपि सन्प्राणः परमाधारतः स्थितः।
कथमेवान्यथा स स्याद्यतो नैवेश्वरद्वयम्।
अवान्तरेश्वरत्वेन तस्येश्वरवचो भवेत्।
अतो मध्यमतामाहुस्तस्य वेदेषु वेदिनः।
अनन्येश्वरता प्राणे तदन्येश्वरवर्जनम् (ना)।
यतो विशेषवाक्येन ह्रियते समतावचः'।

'नान्योऽतोऽस्ति द्रष्टा' (बृ. उ. ५-७-२३) 'नान्यदतोऽस्ति द्रष्टृ' (बृ. उ. ५-८-१२) इत्यादिवचनयुक्तयश्चादिशब्दोक्ताः ॥ ११ ॥

तत्वप्रकाशिका—

अत्र जगत्कारणे हरौ श्रुतिसमन्वयसिद्ध्यर्थं मुख्यप्राणविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसंगतिः। जगत्कारणे ब्रह्मण्युक्तः श्रुतिसमन्वयो मुख्यप्राणविषयश्रुतीनां विरोधेनाप्रामाण्ये अयुक्तः स्यादिति स निराकार्यः। प्रकृतो मुख्यप्राण एवात्र विषयः। स्वतन्त्रः परतन्त्रो वेति संदेहः। संदेहबीजं श्रुतिविगानं दर्शयन् पूर्वपक्षं च सूचयति ॥ प्राणादिति ॥ श्रुतौ प्राणस्य स्वातन्त्र्यं प्रतीयते इति शेषः।

उपाश्रयेत् तस्मात्प्राणः स्वातन्त्र्येण सर्वाश्रय इति शेषः। श्रुतिः पारतन्त्र्यं वक्तीति शेषः। मुख्यप्राणः स्वतन्त्र एव। न प्राणः किंचिदाश्रित इति श्रुतेः। न च पारतन्त्र्येऽपि श्रुतिरस्तीति तद्विरोधः। अखिलजगच्चेष्टकत्वमाहात्म्यवत्त्वेन तस्यानन्याश्रयत्वयुक्तियुक्ततया स्वातन्त्र्यश्रुतेः प्राबल्यात्। न चोत्पत्तिमतः स्वातन्त्र्यायोगात्पारतन्त्र्यश्रुतिरपि युक्तियुक्तेति वाच्यम्। स्वातन्त्र्यवादिनो जन्मासंप्रतिपत्तेः। तच्छ्रुतीनामपि स्वातन्त्र्यश्रुतियुक्तिविरोधेनाप्रामाण्यात्। लीलया विग्रहग्रहणोपपत्तेश्च। अतः प्रबलश्रुतिविरोधापरिहारादप्रमाणं पारतन्त्र्यश्रुतिः। अतो न नारायणस्य श्रुतिसमन्वयेन जगत्कारणत्वासिद्धिरिति भावः। सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥अत इति॥ मुख्यप्राणः परमात्माधीन एव न तु स्वतन्त्रः। तद्वशत्वेन श्रुत्युक्तत्वात्। न चोत्पत्ताविव पारतन्त्र्येऽपि काचन व्यवस्थाऽपि तु चक्षुरादिवदेव सर्वात्मना। तैः सह परमात्मवशत्वोक्तेरिति भावः। उन्नयति ऊर्ध्वं नयति। ननु स्वातन्त्र्ये युक्तियुक्तश्रुतिसद्भावान्न श्रुतिमात्रेण निर्णय इत्यत आह ॥ सर्वेति ॥ तर्हि तस्येश्वरत्वानन्येश्वरत्वश्रुतिविरोध इत्यत आह॥कथमिति॥ युक्तिविरोधाच्छ्रुतिर्बाध्यत इति भावः। तर्हि कोऽर्थः श्रुतेरित्यत आह ॥ अवान्तरेति ॥ न केवलं युक्तिविरोधाच्छ्रुतेरन्यार्थता किं तु विशेषश्रुतेरपीत्याह ॥यत इति॥ विशेषवाक्येन 'प्राणस्यैतद्वशे सर्वम्' इत्यादिना समतावचः साधारणवाक्यं ह्रियते बाध्यत इत्यर्थः। यतोऽत उक्त एवार्थः इति शेषः। 'नान्योऽतः' इत्यनेन भगवदितरस्य स्वातन्त्र्येण द्रष्टृत्वाद्यभाव उच्यते। वचनयुक्तयो वचनानि युक्तयश्च वचनोक्ता युक्तय इति वा ॥ ११ ॥

भावदीपः—

॥ ॐ चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॐ ॥ ११ ॥ प्राणस्य स्वातंत्र्यं प्रतीयत इति शेष इति ॥ यद्यपि नैव प्राण उदेतीति श्रुतौ अवरा दुःखसंबंधाज्जीवा एव प्रकीर्तिताः। नित्यनिर्दुःखरूपत्वात्पराश्रीरेकधैव तु। दुःखासंपीडितत्वात्तु मध्यमो वायुरुच्यत इति सप्तमे गीतातात्पर्योक्तस्मृतिनिर्णीतमध्यमत्वरूपमुख्यप्राणलिंगमिव प्राणादिदमिति श्रुतौ मुख्यप्राणलिंगं नास्ति। तथापि प्राणादिदमिति श्रुतिशेषे भाष्यकृद्वचनसामर्थ्येन मुख्यप्राणलिंगकल्पनात्। न परब्रह्मपरः प्राणशब्द इति चंद्रिकोक्त्या प्राणपरत्वं बोध्यम्। तत्वप्रदीपे तु प्राणशब्दस्य विष्णौ समन्वितत्वेऽपि अत्र श्रीपतित्वादिलिंगानामभावात् जगत्कारणत्वादेः प्राणेऽपि कथंचिद्योजनीय-

त्वात् यत्राविरोधस्तत्रान्योप्युच्यते। यत्र विरोधः तत्र ब्रह्मैवोच्यत इति नियमान्मुख्य-प्राणपरोऽयं प्राणशब्द इत्युक्तम्। सर्वस्यैकेत्यादिवाक्यशेषमनुरुध्याह।।तस्मादित्यादि।। इत्यादिमाहात्म्यवचनान्मुख्यप्राणस्य नोत्पत्तिरिति पूर्वाधिकरणन्यायविवरणमत्रापि योज्यम्। तत्रादिपदेन यदाश्रयेत्यादिभाष्योक्तवचनं ग्राह्यमित्युपेत्य माहात्म्यशब्दार्थं वदन्नुक्तशंकानिरासे यदाश्रयादिति भाष्याभिप्रेतं हेतुमाह ।। आखिलेति ।। अस्येत्यस्यार्थोऽखिलजगदिति। मुख्यप्राणस्य नोत्पत्तिरिति न्यायविवरणशेषं पूर्वाधिकरणेन परिहृतत्वशंकानिवर्तकतया व्याचष्टे ।। न चोत्पत्तिमत इत्यादिना।।प्राणजन्मश्रुतेरपि गौण्यसंभवादित्यादिवियन्नयोक्तयुक्तियुक्ततया प्राबल्य-मुपेत्याह।। लीलयेति ।। एतेन प्राणस्वातंत्र्यश्रुतिप्राबल्यकथनेन यद्भूमाधिकरणे प्राणाद्विष्णोर्भूयस्त्वमुक्तं तदप्याक्षिप्तं बोध्यम् ।। अत इति ।। सयुक्तिकत्वात्प्रबलेत्यर्थः ।। छ ।। सूत्रे श्रेष्ठ इत्यनुवृत्तिः। दृष्टांतोक्त्यैव साध्यहेत्वोर्लाभ इति भावेन भाष्यं व्याचष्टे ।। मुख्यप्राण इति ।।एवेत्यस्य व्याख्या न त्वित्यादि ।। श्रुतीति ।। प्राणः परवशे स्थित इति श्रुत्युक्तत्वादित्यर्थः। भाष्ये साध्योक्तिर्हेतूक्तेरप्युपलक्षण-मिति भावः। तदुक्तिश्च यतो विशेषवाक्येनेति वक्ष्यमाणोपयोगितयेति ध्येयम्। चक्षुरादिवदित्येतत्सर्वं ह्येवैतदित्यादिभाष्येणाप्यन्वेतीति भावेन सौत्रतुशब्दमेवार्थमु-पेत्य तद्व्यावर्त्यं व्यंजयन् सर्वमित्यादिभाष्यशेषार्थमाह।। न चोत्पत्ताविवेति ।। एवे-त्यस्य व्याख्या सर्वात्मनेति। यद्वा तद्वशत्वेनैव शंसनादिति भाष्यांशस्यार्थस्तद्वशत्वे-नेति। अवशिष्टपूर्वभाष्यांशभावार्थः न चेत्यादि ।। श्रुतिविरोध इति ।। प्राणादिदमा-विरासीदिति श्रुतिविरोध इत्यर्थः। स्मृतौ स मुख्यप्राणः अन्यथा स्वतंत्रः कथमेव स्यात् कुत इत्यतो यत इत्यर्थः। अस्याः युक्तेः एतेन मातरिश्वा व्याख्यात इत्यत्र विवृतत्वादत्र पुनर्विवरणमकृत्वा तात्पर्यमाह ।। युक्तीति ।।बाध्यते अर्थांतरपरा नीयते इत्यर्थः। इत्यादिनेत्यादिपदेन सर्वं ह्येवैतदित्यादेर्ग्रहः। श्रुत्युक्तेः प्रकृतोपयोगं दर्शयति ।। नान्योऽत इति ।। वचनोक्ता युक्तय इति ।। ईश्वरद्वयायोगान्मध्यमत्वाद्वि-शेषवाक्येन सामान्यवाक्यस्य नेयत्वादन्यस्य स्वातंत्र्ये द्रष्टृत्वादेरभावादिति युक्तय इत्यर्थः ।। ११ ।।

सूत्रभाष्यम्—

।। ॐ अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॐ ।। १२ ।।

इतरेषां प्राणानां करणत्वान्मुख्यस्याकरणत्वाच्च तस्यान्येभ्य उत्तमत्वं युज्यते । माण्डव्य-श्रुतिश्च— 'तानि ह वा एतानि सर्वाणि करणान्यथ प्राण एवाकरणस्तस्मान्मुख्य-स्तस्मान्मुख्य इत्याचक्षत' इति ॥ १२ ॥

॥ इति चक्षुराद्यधिकरणम् ॥ ७ ॥

तत्वप्रकाशिका—

यदि चक्षुरादिवदेवेश्वराधीनत्वं मुख्यप्राणस्य तर्हि तस्यावान्तरेश्वरत्वाद्यसंभवेन स्वातन्त्र्यश्रुतिर्व्यर्था स्यादित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ अकरणत्वाच्चेति ॥ चशब्दश्चक्षुरादीनां करणत्वसमुच्चयार्थः । 'प्राणस्य चक्षुरादीनां चेश्वरवशत्वसाम्येऽपि कर्तृप्रयोज्यत्वाप्रयोज्यत्ववैलक्षण्येनातिशयोपपत्तेर्नोक्तदोषः। एतच्च श्रुत्युक्तत्वात्सिध्यतीति भावः। अतः श्रुत्यविरोधेन मुख्यप्राणस्येश्वरवशत्व-सिद्धेर्युक्तं श्रुतिसमन्वयेन जगत्कारणत्वं हरेरिति सिद्धम् ॥ १२ ॥ अ० ७ ॥

भावदीपः—

॥ ॐ अकरणत्वाच्च न दोषस्तथाहिदर्शयति ॐ ॥१२॥ इतरेषामित्यादि-भाष्यं हृदि कृत्वा सूत्रार्थमाह ॥च शब्द इति॥ करणत्वशब्दार्थः कर्तृप्रयोज्यत्वेति । तथा हीत्यादिशेषार्थः । एतच्चेति । करणत्वादिरूपवैलक्षण्यमित्यर्थः ॥ अत इति ॥ स्वातंत्र्यश्रुतेरवांतरेश्वरपरत्वादिना सावकाशत्वात् पारतंत्र्ये विशेषश्रुतिभावाच्चे-त्यर्थः ॥ १२ ॥ अ० ७ ॥

सूत्रभाष्यम्—

'सर्वे वा एते मुख्यदासाः प्राणोऽपानो व्यान उदानः समान इति । अथ प्राणो वाव सम्राडिति' कौण्डिन्यश्रुतिः । 'प्राणापानाद्यः सर्वे मुख्यदासा यतोऽनिशम् । अतस्तदाज्ञया नित्यं स्वानि कर्माणि कुर्वत' इति युक्तिर्वायुप्रोक्ते । 'मुख्य-स्यैव स्वरूपाणि प्राणाद्याः पञ्चवायवः। स एव प्राणिनां देहे पञ्चधा वर्ततेऽनिशमि'ति च गौपवनश्रुतिः । अतो वक्ति—

॥ ॐ पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॐ ॥ १३ ॥

'अथ पञ्चवृत्त्यैतत्प्रवर्तते प्राणो वाव पञ्चवृत्तिः प्राणोऽपानो व्यान उदानः समान

इति । तेभ्यो वा एतेभ्यः पञ्चदासाः प्रजायन्ते । प्राणाद्वाव प्राणोऽपानादपानो व्यानाद्वयान उदानादुदानः समानादेव समानो यथा ह वै मनः पञ्चधा व्यपदिश्यते मनोबुद्धिरहङ्कारश्चित्तं चेतनेति । तेभ्यो वा एतेभ्यः पञ्च दासाः प्रजायन्ते । मनसो वाव मनो बुद्धेर्बुद्धिरहङ्काराद्हङ्कारश्चित्ताच्चित्तं चेतनाया एव चेतनैवंमिती' ति ॥१३॥

॥ इति पञ्चवृत्त्यधिकरणम् ॥ ८ ॥

तत्वप्रकाशिका—

अत्र जगत्कारणे हरौ श्रुतिसमन्वयसिद्धचर्थं प्राणादिविषयश्रुतीनां विरोधपरिहारादस्ति शास्त्रादिसंगतिः । विष्णोर्जगत्कारणत्वे कथितः श्रुतिसमन्वयः प्राणादिविषयश्रुतीनां विरोधेनाप्रामाण्येऽनुपपन्नः स्यादित्यसौ निराकार्यः । मुख्यप्राणप्रसङ्गसन्निधापिताः प्राणादयोऽत्र विषयः । किं मुख्यप्राणस्य दासा उत तत्स्वरूपाणीति संदेहः । संदेहबीजं श्रुतिविगानं दर्शयन् पूर्वपक्षं च सूचयति ॥ सर्व इति ॥ श्रुतिर्दासत्वं स्वरूपत्वं च वक्तीति शेषः । तत्र प्राणादयो मुख्यप्राणदासाः । 'सर्वे वा एते मुख्यदासाः' इति श्रुतेः । न च श्रुत्यन्तरविरोधः । प्राणादयो मुख्यप्राणदासाः । तदाज्ञया कर्मकारित्वात् । यो यदाज्ञया कर्म करोति स तद्दासः यथा लोक इति युक्तियुक्तत्वात् । तथा च श्रुतिः । 'एष प्राण इतरान्प्राणान् पृथक् पृथगेव सन्निधत्ते' इत्यादि । मुख्यप्राणस्वरूपाणि चैतानि 'मुख्यस्यैव स्वरूपाणि प्राणाद्याः' इति श्रुतेः । न च सयुक्तिकश्रुतिविरोधः । प्राणादयो मुख्यप्राण(स्व)रूपाण्येव व्यक्तसद्गुणत्वादिति युक्तियुक्तत्वात्स्वरूपत्वश्रुतेरपि 'पायूपस्थेऽपानं चक्षुः श्रोत्रे मुखनासिकाभ्यां प्राणः स्वयं प्रतिष्ठते। मध्ये तु समान एष ह्येतद्धु(हु)तमन्नं समं नयति। तस्मादेताः सप्तार्चिषो भवन्ति । नाडीसहस्राण्यासु व्यानश्चरत्यथैकयोर्ध्व उदानः पुण्येन पुण्यं लोकं नयति पापेन पापं पृथिव्यां या देवता सैषा पुरुषस्यापानमवष्टभ्य' इत्यादेः। न चैतद्व्यक्तसद्गुणत्वं दासेषु संभवति। उभयत्रापि तद्भावे स्वामिभृत्यभावानुपपत्तेः। एवं च श्रुतिद्वयस्यापि समानबलत्वेन विरुद्धत्वाच्चाप्रामाण्यम् । न चोभयं युक्तम् । वस्तुविकल्पा-(पाता) भावादिति । अतो न विष्णौ जगत्कारणे श्रुतिसमन्वयो युक्त इति भावः । सिद्धान्तयत्सूत्रमवतार्य तस्य स्पष्टार्थत्वात्तदुपात्तश्रुतिमेवोदाहरति ॥ अत इति ॥ न केवलं प्राणादयो मुख्यदासा एवापि तु तद्वृत्तयोऽपि । न च वस्तुविकल्पप्रसङ्गः । पृथगुभयविधाभ्युपगमात् । अत एव न श्रुतीनां युक्तियुक्तानामविरोधादप्रामाण्यम् । कुत एतत् । यतो मनो दृष्टान्तेन पञ्चदास-

वान्पञ्चवृत्तिश्च मुख्यप्राणो व्यपदिश्यतेऽत एवेति भावः। संकल्पविकल्परूपं मनः निश्चयरूपा बुद्धिः। अस्वरूपे स्वरूपमतिरहंकारः। स्मरणहेतुश्चित्तम्। चेतसो व्याप्तिश्चेतना। न च प्राणादीनां मुख्यदासत्वे व्यक्तसद्गुणत्वविरोध.। दासानामपि तदुपपत्तेः। न च स्वामिभृत्यभावानुपपत्तिः। मुख्यप्राणस्य ततोऽधिकव्यक्तसद्गुणतया तदुपपत्तेः। 'अशेषगुणपूर्णानि मुख्यरूपाणि पञ्च च तद्दासाः पञ्च चान्येऽपि प्राणाद्याः सद्गुणैर्युताः।' इति श्रुतेः। दासानुपक्रम्य सद्गुणत्वोक्तेर्न श्रुतेर्मुख्यप्राणविषयत्वम्। अतः श्रुत्यविरोधेन प्राणादिस्वरूपसिद्धेर्युक्तो जगत्कारणे ब्रह्मणि श्रुतिसमन्वय इति सिद्धम् ॥ १३ ॥ अ० ८ ॥

भावदीपः—

॥ ॐ पंचवृत्तिर्मनोवद्व्यपदिश्यते ॐ ॥ १३ ॥ प्राणादीति ॥ अपानव्यानादिरादिपदार्थः। संगतिं सूचयति ॥ मुख्यप्राणप्रसंगेति ॥ किमिति ॥ अत्र यद्यपि वक्ष्यमाणनिर्णयपूर्वपक्षानुरोधेन दासाः स्वरूपाणि वेति निर्णयः शक्य उताशक्य इति संशयो दर्शनीयः। तथापि भाष्ये संशयबीजश्रुतिद्वयोक्त्यनुरोधेनैवं संशयो दर्शितः। यद्वा संशयस्यैवं वा एवं वेत्येवं रूपत्वेऽपि नोभयथापि संभव इति पूर्वपक्षस्य उभयथापि संभव इति सिद्धांतस्य चोपपत्तेरिति भावः। भाष्योक्तयुक्त्युपेतश्रुतिमूलां पूर्वपक्षकोटिं तावद् व्यनक्ति ॥ तत्र प्राणाद्य इति ॥ भाष्योक्तयुक्तिं शंकानिरासपूर्वं व्यनक्ति ॥ न चेति ॥ कर्मकारित्वादिति ॥ यद्वै प्राणिति स प्राणः। यदपानिति सोऽपान इत्यादिप्रथमाध्यायछांदोग्यश्रुत्याद्युक्त्या व्यानो वीर्यवत्कर्महेतुः उदान उत्क्रांतिहेतुः समानः सर्वांगेषु रसनायक इति प्राणादीनां कर्माणि तथा तेषां स्थानानि च प्राणापानाविडायां च पिंगलायां च वर्ततः। व्यानः संधिषु सर्वत्र उदानो ब्रह्मनाडिगः सर्वत्रैव समानस्तु समं चरति सर्वग इति द्वितीयस्कंधस्थद्वितीयाध्यायतात्पर्योक्तभारतवाक्यमुदाहृत्य तत्वप्रदीपे चंद्रिकायां च दर्शितानि। प्राणः प्रवृत्तिहेतुः स्यादपानस्तु निवर्तने। बलकर्मा तथा व्यान उदानो योगकर्मकृत्। देहेंद्रियमनोनेता समानो न स्थितिप्रदः इति बृहद्भाष्ये प्रथमे सप्तान्नविद्यायां प्राणादिकर्माण्युक्तानि। टीकायां अत्रानुक्तिस्तु उतरत्र व्यक्तसद्गुणत्वविशेषणेन व्यक्तीभविष्यंतीत्यभिप्राया। वक्ष्यमाणव्यक्तसद्गुणत्वयुक्तेः श्रौतत्वेनास्याः युक्तेः स्मार्तत्वेन तुल्यबलत्वं नेति मंदाशंकाव्युदासाय स्मृतिमूलश्रुतिं चाह ॥ तथा चेति ॥ अत एवेतरानित्युक्तिः। तदाज्ञया कर्मकारित्वादित्यत्र श्रुतिश्चास्तीत्यर्थः। षट्प्रश्ने आत्मत एष प्राणो जायत इति प्रकृतो मुख्यप्राणः इतरान्प्राणान्प्राणापाना-

दिपंचवायून् पृथक्पृथगेव स्थानेषु संस्थापयतीत्यर्थः। कोटचंतरमाह ॥ मुख्येति ॥ एतानि प्राणादीनि। भाष्योक्तस्वरूपत्वश्रुतेः पूर्वोक्तसयुक्तिकदासत्वश्रुत्या समबलत्वायान्यत्रोक्तव्यक्तसद्गुणत्वयुक्तिसाहित्यमाह ॥ प्राणादय इति ॥ कथं दासेष्वनुपपद्यमानं व्यक्तसद्गुणत्वं प्राणादीनामित्यतः षट्प्रश्नवाक्योक्तं व्यनक्ति ॥ पायूपस्थ इति ॥सप्तम्यंतमिदम्। चक्षुःश्रोत्र इति च द्वंद्वश्च प्राणितूर्यसेनांगानामित्येकवद्भावः। ॥ अपानमिति ॥ प्रथमार्थे द्वितीयेतीहार्थोऽभिमतः। अग्रे प्राणादिषु चतुर्षु प्रथमादर्शनात्। मलादेरपनयनेन गुणेनापाननामा सन् प्रतिष्ठित इत्यर्थः। चक्षुःश्रोत्रे मुखनासिकाभ्यां सह मुखे नासिकायां चेति यावत्। प्राणः स्वयं मुख एव श्वासादिप्राणनयनगुणेन प्राणा नामा सन् प्रतिष्ठते प्रतितिष्ठति। समानस्तु मध्ये प्राणापानयोर्नाभिदेश इति यावत्। प्रतितिष्ठति। सचैष हि यस्मादेतद्धुतं भुक्तमन्नं समं यथाशरीरावयवं नयति तेन समानो नामेति शेषः। तस्मादन्नस्य समीकरणादेताः सप्तार्चिषः सप्तज्ञानेंद्रियवृत्तयो भवंति। आसु नाडीषु विविधं नयनाद् गुणाद् व्याननामा चरति। अथोदानस्तु एकया नाडचा सुषुम्नयोर्ध्वगतिश्चरति। स च तत्र चरन् जीवकृतपुण्येन मिमित्तेन पुण्यं स्वर्गादिलोकं नयति। अत एवोर्ध्वनयनगुणादुदाननामा बहिःपृथिव्यां या धारिका देवता सा पुरुषस्यापानं देहे वर्तमानमपानमवष्टभ्य शरीरांतर्वर्तत इत्यर्थः। षट्प्रश्ने टीकायामेतदधिकरणसिद्धांतसिद्धं वर्गद्वयमुपेत्याधिष्ठानाधिष्ठातृभावेन वर्गद्वयपरतया व्याख्यानेपीहैतत्पूर्वपक्षी स्वरूपमात्रपरत्वं मन्यत इति तत्परतयेदं वाक्यमत्रोक्तमित्यदोषः। अत एव पूर्वं दासपरत्वेनाप्युक्तिः। तथा वैषम्यनैर्घृण्येन सापेक्षत्वादित्यत्र द्वितीये पूर्वं तु बादरायणो हेतुव्यपदेशादित्यादौ तृतीये पुण्येनेति श्रुतेः पादांत्यप्राणनयन्यायेनेश्वरपरत्वेन भाष्यकृतोदाहृतत्वेप्यविरोधेऽन्यपरत्वस्यापि भावात् प्राणपरतयैतद्वाक्योक्तिरविरुद्धा ॥ एतदिति ॥ मलापनयनश्वासप्राणनादिरूपं व्यक्तसद्गुणत्वमित्यर्थः। सिद्धांते त्वीशरूपेषु मुख्यानामेवैषां गुणानां प्राणरूपेषु प्रतिबिंबितत्वेनैकरूपत्वाभावादीशप्राणयोः स्वामिभृत्यभावो युक्त इति भावः ॥ उभयमिति ॥ दासत्वं स्वरूपत्वं चेत्यर्थः ॥ अत इति ॥ श्रुतिद्वयाप्रामाण्यादित्यर्थः ॥ छ ॥ सूत्रभाष्ये व्याकर्तुं परिष्करोति ॥ न केवलमिति ॥ एतद्वर्गद्वयमित्यर्थः। सूत्रे पूर्वस्माच्छ्रेष्ठश्चेत्यनुवर्तते। तत्र चशब्दःपंचवृत्तिश्चेति भिन्नक्रमः सन् दासानां समुच्चायक इति भावेनाणुश्चेति चशब्दोऽत्राप्याकृष्यत इति भावेन वा सूत्रार्थमाह ॥ मनोदृष्टांतेनेति ॥ बुद्धिरध्यवसानाय संशयं कुरुते मनः। अभिमाने-

त्वहंकारः चित्तं स्मरणसाधनमिति स्कांद इति सप्तविंशेऽध्याये तृतीयस्कंधतात्पर्य हृदि कृत्वाऽर्थभेदमाह।। संकल्पेति ।। स्मरणेति ।। चितिर्बुद्धिरिति ज्ञेया चित्तं तु स्मृतिकारणमित्यष्टाविंशाध्याये चतुर्थस्कंधतात्पर्योक्तेरिति भावः ।। चेतस इति ।। बहुस्मरणशक्तिश्च चेतनेत्यभिधीयत इति तत्रैव एकविंशाध्याये तात्पर्योक्तेः। चित्तव्याप्तिस्तु चेतनेति गीतातात्पर्ये त्रयोदशेऽध्याये चोक्तेः। मुख्यप्राणस्य ततोऽपि व्यक्तसद्गुणत्वादिति न्यायविवरणं शंकापूर्वं व्यनक्ति ।। न चेति ।। तत्रोक्तामेव श्रुतिमाह ।। अशेषेति ।। मुख्यप्राणस्वरूपाणामेव व्यक्तसद्गुणात्वोक्तिपरोक्तश्रुतिविरोध इत्यत आह ।। दासानिति ।। स एष प्राण इतरान्प्राणानिति दासानुपक्रम्येत्यर्थः। पृथक् पृथक् संनिधत्ते। एतद्विवरणार्थं पायूपस्थेऽपानमित्यादेः प्रवृत्तेः अपानमित्यत्र सन्निधत्त इत्यन्वयादिति भावः। दासानित्यस्य मुख्यप्राणरूपैः प्राणादिभिरधिष्ठितान्प्राणादिदासानित्यर्थो बोध्यः। मुख्यप्राणविषयत्वं मुख्यप्राणमात्रविषयत्वं नेत्यर्थः ।। अत इति ।। पृथगुभयविधाभ्युपगमादित्यर्थः। प्राणाद्यास्त्रिविधाः पंच प्रधानो वायुरेव च। मुख्यपंचकरूपस्सन् गरुडो मध्यपंचकः। अवमः पंचकस्त्वन्ये प्राणाद्यास्तस्य सूनवः। इति त्रेधा विभागोऽयं विभागोऽन्यश्चतुर्थकः। प्राणापानौ शेषवींद्रौ तथोदानसमानकौ। रुद्रेंद्रौ तत्परः श्रेष्ठो वायुर्व्यान उदाहृत इति छांदोग्यभाष्ये प्रथमे अन्यथापि प्राणवृत्तिभेद उक्तः। तथा च तत्रैव तृतीये पंचमे चाध्याये प्राणादिभिः पंचभिरपि शब्दैः क्रमात् सूर्यचंद्राग्नींद्रमुख्यप्राणाः प्राणाभिमानिनः पंचोच्यंत इत्युक्तम्। तथा तृतीयस्कंधतात्पर्ये च नागकूर्मकृकलदेवदत्तधनंजयाश्च पंच प्राणादय इत्युक्तम् ।। १३ ।। अ० ८ ।।

सूत्रभाष्यम्—

'प्राण एवाधस्तात्प्राण उपरिष्टात्प्राणो मध्यतः प्राणः सर्वतः प्राण एवेदं सर्वमि' ति प्राणस्य व्याप्तिः प्रतीयते।

'यतः सर्वं जगद्व्याप्य तिष्ठति प्राण एव तु।
अतो धृतं जगत्सर्वमन्यथा केन धार्यत' इति च युक्तिर्वायुप्रोक्ते।

'अणुनैतत्सृज्यतेऽणुनैतद्धार्यते अणौ लयमभ्युपैति प्राणो वा अणुः प्राणो ह्येतद्भवती'ति च सौत्रायणश्रुतिः ।। अत आह—

।। ॐ अणुश्च ॐ ।। १४ ।।

स वा एष प्राणोऽणुर्महान्नामाऽन्तर्वाऽणुर्बहिर्महान्प्राणो वा ईशितव्येश ईशो ह्यसौ सर्वस्येशितव्यश्च परस्ये' ति हि कौण्डिन्यश्रुतिः ॥ १४ ॥

॥ इति प्राणाणुत्वाधिकरणम् ॥ ९ ॥

तत्वप्रकाशिका—

अत्रेश्वरे जगत्कारणे श्रुतिसमन्वयसिद्ध्यर्थं मुख्यप्राणपरिमाणविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसंगतिः । जगत्कारणत्वसिद्धये हरावुक्तः श्रुतिसमन्वयः मुख्यप्राणपरिमाणविषयश्रुतीनां विरोधेनाप्रामाण्येऽयुक्तः स्यादिति स निराकार्यः । प्रकृतो मुख्यप्राण एव विषयः व्याप्तोऽणुर्वेति संदेहः। संदेहबीजं श्रुतिविरोधं दर्शयन् पूर्वपक्षं च सूचयति ॥ प्राण एवेति ॥ सर्वं सर्वसत्ताप्रदः । अन्यथा व्याप्त्यभावेऽसौ न धारयेत् । तथा च केन धार्येत इत्यर्थः । श्रुतिरणुत्वं वक्तीति शेषः । व्याप्त एव मुख्यप्राणः । 'प्राण एवाधस्तात्' इति श्रुतेः । न चाणुत्वेऽपि श्रुतिरस्तीति तद्विरोधः । सर्वजगद्धारकत्वयुक्तियुक्तत्वाद् व्याप्तिश्रुतेः । तथा च श्रुतिः । 'महान्वै मुख्यप्राणो येन व्याप्तं चराचरम्' इति । 'सप्तस्कन्धगतो लोकान्यो बिभर्ति महाबलः ।' इति च हरिवंशे । अतः प्रबलश्रुतिविरोधादप्रमाणमणुत्वश्रुतिरिति न श्रुतिसमन्वयेन हरेर्जगत्कारणत्वसिद्धिरिति भावः । सिद्धान्तयत्सूत्रमवतारयति ॥अत इति॥ अणुरेव मुख्यप्राणः । न च श्रुत्यादिविरोधः । यतोऽसौ बहिर्देहाद्वर्तमानेन मुख्यरूपेण व्याप्तश्चेति सूत्रार्थः । कुतोऽयं विशेष इत्यत आह ॥ स इति ॥ प्राणश्च मुख्य एवेति ज्ञापनाय वाक्यशेषोद्धारः । न चेदं श्रुतिमात्रं सयुक्तिकश्रुतिबाधनाय नालमिति वाच्यम् । विशेषश्रुतित्वात् । नाडीसंचारित्वयुक्तेश्च । अणुर्वै मुख्यप्राणो य उत्क्रामति नाडीभिरिति श्रुतेः । अतः श्रुत्यविरोधेन मुख्यप्राणस्याणुत्वसिद्धेर्युक्तो जगत्कारणे ब्रह्मणि श्रुतिसमन्वय इति सिद्धम् ॥ १४ ॥ अ० ॥ ९ ॥

भावदीपः—

॥ ॐ अणुश्च ॐ ॥ १४ ॥ यदधीना यस्य सत्ता तत्तदित्येव भण्यत इति स्मृतेः श्रौतसर्वपदस्यार्थमाह ॥ सर्वमिति ॥ स्मार्तान्यथापदस्यार्थमाह ॥ अन्यथेति ॥ शेषपूर्त्या वाक्यं संगमयति॥ असाविति ॥ श्रुतेरिति ॥ पूर्वं विष्णौ प्राणपदसमन्वयेप्यविरोधेऽन्यपरत्वस्यापि सत्त्वादिति भावः । भाष्योक्तस्मृत्युक्तयुक्तिमाह ॥सर्वेति॥ व्याप्तिश्रुतेः प्राबल्याय मुख्यप्राणविषयत्वाय वा स्पष्टां न्यायविवरणोक्तां श्रुतिमाह

।। महानिति ।। पंचमे बृहद्भाष्योक्तां स्मृतिं चाह।। सप्तेति ।। अत इति ।। सयुक्तिकत्वात्प्रबलेत्यर्थः ।।छ।। सूत्रे चोऽवधारणेऽनुक्तसमुच्चये च श्रेष्ठ इति वर्तत इत्युपेत्यार्थमाह ।। अणुश्चेति ।। अध्यात्मविद्यारूपापेक्षयैवकारः प्रयुक्तः । चशब्दस्योपयोगं वदन्नेत्रार्थांतरमाह ।। न चेति ।। मुख्येति ।। अनेन व्याप्तिश्रुतौ प्राणशब्दो मुख्यवायुपर इति सूचितम् ।। वाक्यशेषेति ।। प्राणो वा ईशितव्येश इत्यादिरित्यर्थः ।। विशेषेति ।। अणुत्वमहत्त्वरूपव्यवस्थोक्तिपरत्वेन विशेषश्रुतित्वादित्यर्थः । न्यायविवरणस्थश्रुत्युक्तयुक्तिं च वदंस्तामेव श्रुतिमाह ।। नाडीति ।। उत्क्रांतिगत्यागतीनामित्युक्तन्यायादिति भावः ।। अत इति ।। अणुत्वानणुत्वश्रुत्योरध्यात्माधिदैवस्थभिन्नरूपविषयत्वादित्यर्थः ।। १४ ।। अ० ९ ।।

सूत्रभाष्यम्—

करणत्वं प्राणानामुक्तम् ।

'जीवस्य करणान्याहुः प्राणानेतांस्तु सर्वशः ।

यस्मात्तद्वशगा एते दृश्यन्ते सर्वदेहिष्वि' ति सौत्रयणश्रुतौ

सयुक्तिकं जीवकरणत्वं प्रतीयते । 'ब्रह्मणो वा एतानि करणानि चक्षुः श्रोत्रं मनो वागिति तद्ध्येतैः कारयती' ति च काषायणश्रुतौ अत आह—

।। ॐ ज्योतिराद्यधिष्ठानं तु तदामननात् ॐ ।। १५ ।।

यज्ज्योतिराद्यधिष्ठानं ब्रह्म तदेवैतैः करणैः प्रवर्तयति । 'यः प्राणे तिष्ठन्नि' (बृ. उ. ५-७-१६) त्यादि तदामननात् ।। १५ ।।

तत्वप्रकाशिका—

अत्र जगत्कारणे नारायणे श्रुतिसमन्वयसिद्ध्यर्थमिन्द्रियविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसंगतिः । श्रुतिसमन्वयेनोक्तं हरेर्जगत्कारणत्वमिन्द्रियविषयश्रुतीनां विरोधेनाप्रामाण्येऽयुक्तं स्यादिति निरसनीयोऽसौ। अधिकरणसंगतिं दर्शयति ।। करणत्वमिति ।। करणत्वाच्चेति चशब्देनेन्द्रियाणां करणत्वमुक्तम् । तान्येव विषयः। किं जीवकरणान्युत ब्रह्मकरणानीति संदेहः। संदेहबीजं श्रुतिविगानं दर्शयन् पूर्वपक्षं सूचयति ।।जीवस्येति।। श्रुतौ ब्रह्मकरणत्वं प्रतीयत इति शेषः । जीवकरणा-

नीन्द्रियाणि । 'जीवस्य करणान्याहुः प्राणान्' इति श्रुतेः । न च श्रुत्यन्तरविरोधः । जीववशत्वेन प्राणानां दृश्यमानत्वयुक्तियुक्तत्वेन जीवकरणत्वश्रुतेः प्राबल्यात् अनुभूयते खलु स्वाधीनत्वमिन्द्रियाणाम् । अतः प्रबलश्रुतिविरोधाद् ब्रह्मकरणत्वश्रुतिरप्रमाणमेवेति न श्रुतिसमन्वयेन विष्णोर्जगत्कारणत्वसिद्धिरिति भावः । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ।। अत इति ।। ब्रह्मैव चक्षुरादिभिः करणैर्दर्शनादि कारयति न पुनर्जीवकरणानि । ब्रह्मण एव तेजःप्रभृतिभूतप्रेरकत्वेन तदंशभूतानामपि चक्षुरादीनां ब्रह्म (प्र)योज्यत्वस्यैवोपपत्तेः । सर्वप्राणप्रेरकमुख्यप्राणप्रेरकत्वश्रुतेर्यश्चक्षुषि तिष्ठन्नित्यादिश्रुतेश्चेति भावः। चक्षुरादिवदिति प्रकृतत्वाज्ज्योतिरादिग्रहणम् ।। १५ ।।

भावदीपः—

।। ॐ ज्योतिराद्यधिष्ठानं तु तदामननात् ॐ ।। १५ ।। अधिकरणेति ।। अस्याधिकरणस्याप्रस्तुतचिंतापरत्वनिवृत्त्यर्थं पूर्वेण प्रस्तुतं स्मारयतीत्यर्थः। अन्यथा सामान्यासिद्धौ विशेषचिंताया अनवसरदुस्थत्वादिति भावः । एतेनास्य विचारस्य प्राणविषयत्वाच्छ्रेष्ठश्चेत्यतःपूर्वमेवोत्पत्तिसंख्यापरिमाणचिंतापेटिकायां निवेशः स्यादिति शंकाऽपास्ता । करणत्वोक्त्यनंतरमेवास्याकांक्षोदयात् । तर्हि तदनंतरमेव निवेशः स्यादिति न शंक्यम् । प्रस्तुतमुख्यप्राणचिंतासमाप्त्यनंतरमेवास्योत्थानौचित्यात् सर्वप्राणप्रेरकमुख्यप्राणप्रेरकत्वात् ब्रह्मणः तत्कारणत्वं युक्तमित्येवं रूपत्वादस्य विचारस्येति ।। श्रुताविति ।। श्रुतावित्यतः परमित्यर्थः । श्रुत्युक्तामेव युक्ति शंकापूर्वं व्यनक्ति ।। न चेत्यादिना ।। दृश्यंत इति श्रौतपदभावमाह ।। अनुभूयत इति ।। अत इति ।। सयुक्तिकत्वात्प्रबलेत्यर्थः ।। छ ।। तदेवेत्यादिभाष्यं व्याचष्टे ।। ब्रह्मैवेति ।। एवकारतात्पर्यमाह ।। न पुनरिति ।। सौत्रतुशब्दोऽवधारणे। व्यस्तेन तत्पदेनान्वेतीति। सूचितम्। यज्ज्योतिराद्यधिष्ठानं ब्रह्मेत्यस्य तात्पर्यमाह ।। ब्रह्मण एवेति ।। योऽग्नौ तिष्ठन्यस्तेजसि तिष्ठन्नित्यादिश्रुतेर्यज्ज्योतिराद्यधिष्ठानं तन्नियामकं ब्रह्म तदेव तस्मिन्नेव प्रकरणे चक्षुरादिनियामकं श्रूयते । यः प्राणे तिष्ठन्यश्चक्षुषि तिष्ठन्नित्यादीति तत्वप्रदीपोक्तं तदंशभूतानामपीत्येतट्टीकोक्ति चानुरुध्य चंद्रिकायां यदग्न्यादिरूपज्योतिराद्यधिष्ठानं ब्रह्म तदेव तत्कार्यरूपचक्षुरादिरूपज्योतिराद्यधिष्ठानमिति सूत्रं योज्यमित्याह भाष्यकार इत्युक्तं सर्वप्राणप्रेरकेत्यादि । यद्यपि यः प्राणे तिष्ठन्निति श्रुतः यो वाचि तिष्ठन् यश्चक्षुषि तिष्ठन्नित्यादि चेंद्रियप्राय-

पाठात् प्राणपरः माध्यंदिनानां तथा पाठाच्च । तथापि चक्षुःश्रोत्रे मुखनासिकाभ्यां प्राणः स्वयं प्रतिष्ठते इति श्रुतेः प्राणेंद्रियप्रधानदेवताया मुख्यवायोरपि प्राणपदेन ग्रहणादधिकार्थलाभाय मुख्यप्राणप्रेरकत्वश्रुतेरित्युक्तम् । अत एव सर्वप्राणप्रेरकेति चोक्तिः । आदिपदेन न्यायविवरणोक्तश्रुतिर्ग्राह्येति भावेनाह ॥ यश्चक्षुषीति ॥ ननु भूतांशत्वात्प्राणानां भूतक्रमेणाकाशाद्यधिष्ठानमिति वा यः पृथिव्यां तिष्ठन्नित्यादिश्रौतक्रमानुसारेण पृथिव्याद्यधिष्ठानमिति वा वाच्यमित्यत आह ॥ चक्षुरादीति ॥ १५ ॥

सूत्रभाष्यम्—

कथं जीवकरणत्वश्रुतिरित्यतो वक्ति—

**॥ ॐ प्राणवता शब्दात् ॐ ॥ १६ ॥**

जीवेनैव (स्व)करणैः कारयति परमात्मा । अतो न विरोधः । एष ह्येनेनाऽत्मना चक्षुषा दर्शयति श्रोत्रेण श्रावयति मनसा मानयति बुद्ध्या बोधयति तस्मादेतावाहुः सृतिरसृतिरिती'ति भाल्लवेयश्रुतेः ।

'करणैः कारणं ब्रह्म पुरुषापेक्षयाऽखिलम् ।
श्रोत्रादिभिः कारयति करणानीत्यतो विदुः ।
न जीवापेक्षया मुख्यं कारयेत्परमेश्वरः ।
केवलात्मेच्छया तस्मान्मुख्यत्वं तस्य निश्चितमि'ति च वाराहे ॥ १६ ॥

तत्त्वप्रकाशिका—

यदि प्राणानां ब्रह्मकरणत्वं कथं तर्हि जीवकरणत्वश्रुतिरुपपद्येत किं तु ब्रह्मकरणत्वस्य विरोध एवेत्याशङ्क्य तत्परिहारत्वेन सूत्रमवतार्य व्याचष्टे ॥कथमिति॥ ब्रह्मकरणत्वाङ्गीकारेऽपि प्राणानां न जीवकरणत्वश्रुतिविरोधः । स्वकरणैरेव प्राणैर्ब्रह्म जीवेन दर्शनादि कारयतीत्येतदर्थत्वोपपत्तेर्जीवकरणत्ववाक्यस्य । ब्रह्मेन्द्रियैर्जीवेन दर्शनादि कारयतीत्येतच्च श्रुतिसिद्धमिति भावः । सृतिरसृतिरिति स्वातंत्र्येण प्रवृत्तियुक्तस्तद्विहीनश्च । अस्तु ब्रह्म जीवेन चक्षुरादिना दर्शनादि कारयतीति तथापि जीवकरणत्वश्रुतिस्तदर्थेत्येतत्कुत इत्यत आह ॥करणैरिति॥ करणानि जीवस्य । यद्येतानि ब्रह्मणस्तर्हि मुख्यप्राणस्याप्येतत्संभवतीत्यकरणत्वहेतुना प्राण

एवाकरणस्तस्मान्मुख्य इत्युक्तं मुख्यत्वं विरुद्धं स्यादिन्द्रियाणां जीवकरणत्वे तदुपपत्तिरित्यत आह ॥ नेति ॥ जीवापेक्षया ब्रह्मकरणत्वं तत्र विवक्षितमिति भावः । मुख्यं मुख्यप्राणम् ॥ १६ ॥

भावदीपः—

॥ ॐ प्राणवता शब्दात् ॐ ॥ १६ ॥ न विरोध इति भाष्यं व्याचष्टे ॥ किं तु ब्रह्मेति ॥ जीवेनैवेत्यादिभाष्यार्थं वदन्नेवातः शब्दार्थमाह ॥ स्वेति ॥ सूत्रे पूर्वत्र ज्योतिरादीत्यनेन प्रकृतत्वात्स्वकरणैरितिलाभः । तदित्यस्यानुवृत्तिरिति भावः । जीवेन प्रयोज्यकर्त्रेत्यर्थः । युक्तिविरोधं त्वग्रे परिहरिष्याम इति भावः ॥ करणानि जीवस्येति ॥ स्मृतौ पूर्वं पुरुषपदेन जीवस्य प्रकृतत्वात्करणानीत्यत्र जीवस्येत्यन्वेतीति भावः । जीवस्येत्यादिस्मृतिशेषस्योपयोगं व्यनक्ति ॥ यद्येतानीति ॥ एतदिति ॥ ब्रह्मप्रयोज्यत्वरूपं ब्रह्मकरणत्वमित्यर्थः ॥ तदुपपत्तिरिति ॥ मुख्यप्राणस्याकरणत्वहेतुकमुख्यत्वोपपत्तिरित्यर्थः । तस्य सर्वजीवोत्तमत्वेन जीवप्रयोज्यत्वरूपकरणत्वाभावादिति भावः । तावता कथमुक्तशंकानिवृत्तिरित्यत आह ॥ जीवापेक्षयेति ॥ जीववशत्वेन ब्रह्मप्रयोज्यत्वरूपकरणत्वं तत्राकरणत्वाच्चेति सूत्रे विवक्षितम् । तदभावश्च मुख्ये संभवतीत्यर्थः । गौणप्रतिद्वंद्वित्वभ्रांतिं निराह ॥ मुख्यं मुख्यप्राणमिति ॥ १६ ॥

सूत्रभाष्यम्—

॥ ॐ तस्य च नित्यत्वात् ॐ ॥ १७ ॥

अनादिनित्यत्वाच्च जीवकरणसम्बन्धस्य युज्यते तत्करणत्वश्रुतिः । ‘ अथावियोगीनि । करणैर्वाव न वियुज्यते देहेनैव वियुज्यत इत्येतद्भाव. करणानां" करणत्वं यद्भाव न वियुज्यत ’ इति गौपवनश्रुतिः । चशब्दः करणसम्बन्धग्राही ॥ १७ ॥

॥ इति ज्योतिराद्यधिकरणम् ॥ १० ॥

तत्वप्रकाशिका—

‘एवमस्वतन्त्रकर्तुः करणान्यन्याधीनान्यपि साधनत्वात्तत्करणानीत्युच्यन्ते । यथा परकीयकुठारेणापि वृश्चतोऽसौ तत्करणमुच्यत इत्येकमर्थं जीवकरणत्वश्रुतेरुक्त्वार्थान्तरप्रतिपादकं च सूत्रं पठित्वा व्याचष्टे ॥ तस्य चेति ॥ प्राणानां ब्रह्म-

करणत्वेऽपि युज्यते जीवकरणत्वश्रुतिः । जीवकरणसंबन्धस्यानादिनित्यत्वात् । परकीयेऽपि बहुकालसंबंधिन्युपचारतस्तदीयत्वव्यवहारदर्शनादिति भावः । एतेनानुभवोऽप्याभिमानिकतया व्याख्यातः । अनादिसंबन्धनिबन्धनोऽयं व्यवहारः श्रौत इति कुत एतदित्यत आह ॥ अथेति ॥ अवियोगीनि जीवेनेति शेषः । करणानां करणत्वमिन्द्रियाणां जीवकरणत्वव्यवहारे निमित्तमित्यर्थः । प्राणवतेति जीवस्य प्रकृतत्वादत्र तत्परामर्शो युक्तोऽतः कथमुच्यते संबन्धस्येत्यत आह ॥ चशब्द इति ॥ तच्छब्देन जीवपरामर्शेऽपि चशब्देन प्राणवत्पदसंनिधापिताः प्राणाः प्राणसंबन्धश्च समुच्चीयन्ते । न हि प्राणान् प्राणवत्त्वं च विना प्राणवान् भवति । अतो युक्तेयं व्याख्येति भावः । संबन्धिनोरभावे संबन्धाभावात्तदुक्तिः । तस्माच्छ्रुत्यविरोधेन प्राणानां ब्रह्मकरणत्वसिद्धेर्युक्तो जगत्कारणे हरौ श्रुतिसमन्वय इति सिद्धम् ॥ १७ ॥ अ० १० ॥

भावदीपः—

॥ ॐ तस्य च नित्यत्वात् ॐ ॥ १७ ॥ इतरव्यपदेशादित्युक्तिविरोधनिरासायोक्तमस्वतंत्रकर्तुरिति । परात्तु तच्छ्रुतेरित्यत्र तथोक्तेरिति भावः । भाष्यमाकांक्षाक्रमेण व्याचष्टे॥ प्राणानामिति ॥ नन्वेवं सूत्रद्वयेन श्रुतिविरोधपरिहारेऽपि ब्रह्मकरणत्वश्रुतेः प्रागुक्तयुक्तिविरोधः स्यादिति शंकां लौकिकदृष्टेस्त्वीशेनैव जीवानुसारित्वक्लृप्त्योपपत्तेरिति न्यायविवरणतात्पर्योक्त्या निराह ॥ एतेनेति ॥ चिरकालं जीववशत्वकथनेनेत्यर्थः ॥ प्राणा इति ॥ एतेन भाष्ये करणानि संबंधश्च तेषां ग्राहीति विग्रहो दर्शितः । सन्निधापितत्वं व्यनक्ति ॥ न हीति ॥ प्राणवत्त्वं प्राणसंबंधः । तदस्यास्त्यस्मिन्निति मतुपो विधानात् षष्ठ्यर्थस्य संबंधत्वात् । यथोक्तं महाभाष्ये षष्ठी स्थानेयोगेत्यत्र एकशतं षष्ठ्यर्था इति । तत्कैयटे ते च स्वस्वामिभावादयः षष्ठीदंडके पठिता इति । सूत्रे संबंधमात्रनित्यत्वोक्त्यैवपूर्तौ जीवस्य प्राणानां च नित्यत्वोक्तिः किमर्थेत्यत आह ॥ संबंधिनोरिति ॥ तस्मादिति ॥ जीवकरणत्वश्रुतेरुपचरितार्थत्वाद्ब्रह्मकरणत्वश्रुतेः सयुक्तिकत्वाच्चेत्यर्थः ॥ १७ ॥ अ० १० ॥

सूत्रभाष्यम्—

'अथेन्द्रियाणि प्राणा वा इन्द्रियाणि प्राणा हीदं द्रवन्ती' ति सयुक्तिका पौत्रा-

यणश्रुतिः सामान्येन प्राणानामिन्द्रियत्वं वक्ति । 'द्वादशैवेन्द्रियाण्याहुर्मनोबुद्धी तु द्वादशे' इति च काषायणश्रुतिः । अतः कस्येन्द्रियत्वं निवार्यत इत्यतो वक्ति—

॥ ॐ न इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॐ ॥ १८॥

मुख्यप्राणमृते त एवेन्द्रियाणि ।

'द्वादशैवेन्द्रियाण्याहुः प्राणो मुख्यस्त्वनिन्द्रियम् ।
द्रवतां हीन्द्रियाणां तु नियन्ता प्राण एकराडि' ति पौत्रायणश्रुतिः ।
'श्रोत्रादीनि तु पञ्चैव तथा वागादिपञ्चकम् ।
मनोबुद्धिसहायानि द्वादशैवेन्द्रियाणि तु ।
विषयद्रवणात्तेषामिन्द्रियत्वमुदाहृतम् ।
तेषां नियामकः प्राणः स्थित एवाखिलप्रभुरि' ति बृहत्संहितायाम् ॥१८॥

तत्वप्रकाशिका—

अत्र जगत्कारणे हरौ श्रुतिसमन्वयसिद्ध्यर्थं प्राणविषयश्रुतिविरोधपरिहारदस्ति शास्त्रादिसंगतिः । विष्णौ जगत्कारणे कथितः श्रुतिसमन्वयः प्राणविषयश्रुतीनां विरोधेनाप्रामाण्ये न सेत्स्यतीत्यसौ निराकर्तव्यः । तत्र संशयबीजं श्रुतिविगानं दर्शयन् विषयसंशयपूर्वपक्षांश्च सूचयति ॥ अथेति ॥ प्राक् प्रकृतमिन्द्रियत्वमत्र विषयः । तत्काचिच्छ्रुतिः प्राणशब्दवाच्यानां त्रयोदशानामपि वक्ति । सामान्येनोक्तत्वात् । सामान्यवचनस्य च सर्वगामित्वात् । अन्या श्रुतिर्द्वादशानामेव तद्वक्ति । अतो विप्रतिपत्तेः संशयः । किं सर्वेषां प्राणानामिन्द्रियत्वमुतैकस्य निवार्य द्वादशानामेवेति । सर्वेऽपि प्राणा इन्द्रियाणि । 'प्राणा वा इन्द्रियाणि' इति श्रुतेः । न च सामान्यश्रुतित्वाद्विशेषश्रुत्येतरया बाधः । इदं द्रवणयुक्तियुक्तत्वात् । अस्ति खलु सर्वेषां प्राणानामिदं द्रवणमिति । दुष्करं च द्वादशानामेवेन्द्रियत्वग्रहणम् । अन्यतमनिवारणस्याशक्यत्वात् । मुख्यप्राणो नेन्द्रियमिति चेन्न । तथात्वे चक्षुषोऽनिन्द्रियत्वं किं न स्यात् । न हि मुख्यप्राणचक्षुषोः कश्चन विशेषोऽस्ति येन मुख्यप्राणो नेन्द्रियं चक्षुरिन्द्रियमिति निश्चिनुमः । उभयोरीशवशत्वाविशेषात् । प्रातिस्विकविशेषाणां तु श्रोत्रादिष्वपि साम्यात् । चक्षुरादिष्वप्येवं द्रष्टव्यम् । अतो युक्तियुक्ताद्यश्रुतिविरोधात् द्वितीयाप्रमाणमेवेति न जगत्कारणे ब्रह्मणि श्रुतिसमन्वयो युक्त इति भावः । द्वादशे एकादशद्वादशे । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ अत

इति ।। न ते सर्वे प्राणा इन्द्रियाणि किं तर्ह्येकमृते द्वादशैव तत्र च मुख्यप्राणमृतेऽन्ये प्राणा इन्द्रियाणि न मुख्यस्तथा विशेषश्रुतेरिति भावः । इदं द्रवणवतस्तस्य कथमिन्द्रियत्वं नास्तीत्यत उक्तम् ।।द्रवतामिति।। अत्रैव स्मृतिमाह ।।श्रोत्रादीनीति।। ।।१८।।

भावदीपः—

।। ॐ तईंद्रियाणि० ॐ ।। १८ ।। संगतिं दर्शयति ।। प्राक्प्रकृतमिति ।। सप्तगतेर्विशेषितत्वाच्चेत्यत्र ज्ञानेंद्रियकर्मेंद्रियत्वाभ्यां प्रकृतं प्राणानामिंद्रियत्वमित्यर्थः। तदनंतरमेवैतच्चिंतामकृत्वात्र कृतौ चंद्रिकायामेवावांतरसंगतिरुक्ता ।।विशेषश्रुत्येति।। द्वादशैवेत्येवकारेण मनोबुद्धीत्विति विशिष्योक्त्या च विशेषश्रुतित्वमितरेंद्रियाणां दशत्व एव पर्यवसानादिति भावः। इदं विषयजातं प्रतिद्रवणमिदं द्रवणं तद्रूपयुक्तीत्यर्थः। ईशवशत्वसाम्यान्मुख्यप्राणस्याप्यन्यसाम्यमित्यन्यत्रोक्तं प्रस्ताव्य योजयति ।। दुष्करं चेत्यादिना साम्यादित्यंतेन ।। जीवापेक्षया ईश्वरप्रयोज्यत्वाप्रयोज्यत्वरूपविशेषोस्तीत्यत आह ।। प्रातिस्विकेति ।। दर्शनश्रवणादिहेतुत्वादिरूपेत्यर्थः ।। चक्षुरादिष्वप्येवमिति ।। चक्षुर्नेंद्रियमिति चेन्न । तथात्वे श्रोत्रस्यानिंद्रियत्वं किं न स्यादित्यादिबोध्यमित्यर्थः ।। अत इति ।। इदं द्रवणस्य सर्वत्र भावादेकस्यापींद्रियत्वनिवारणासंभवाच्च युक्तियुक्तेत्यर्थः। श्रुतौ मनोबुद्ध्योः संभूय द्वादशत्वोक्तेरितरेंद्रियाणां दशत्व एव पर्यवसानात् एकादशाभावेन द्वादशैवेति श्रुतिः कथमिंद्रियद्वादशत्वे मानमित्यत आह ।। द्वादशे इति ।। अन्यथा द्विवचनप्रयोगो न स्यादिति भावः ।। छ ।। सूत्रे भाष्ये च श्रेष्ठादन्यप्राणानामिंद्रियत्वोक्त्या लब्धं सामान्यमाह ।। न त इति ।। भाष्यसूत्रयोरर्थमाह ।। मुख्यप्राणमिति ।। प्राणा इति सूत्रे त इति तच्छब्देन पूर्वत्र तस्य चेति चशब्देन समुच्चितप्राणपरामर्श इति भावः। सूत्रे प्राणोऽनिंद्रियमित्यनुक्त्वा श्रेष्ठादन्ये प्राणा इंद्रियाणीत्युक्त्या लब्धस्यैवेत्यस्यार्थो न मुख्य इति। श्रुतिरिति भाष्यं श्रुतेरिति व्याख्येयमिति भावेनाह ।। तथा विशेषश्रुतेरिति ।। उत्तरार्धोपयोगमाह ।। इदमिति ।। १८ ।।

सूत्रभाष्यम्—

।। ॐ भेदश्रुतेः ॐ ।। १९ ।।

'स्थित एव हीदं मुख्यप्राणः करोति कारयति बलति बालयति धत्ते धारयति प्रभुं वा

एनमाहुरथेन्द्रियाणि न स्थितानि न कुर्वन्ति न कारयन्ति न बलन्ति न बालयन्ति न दधते न धारयन्ति तानि ह वा एतान्यबलानि तस्मादाहुरिन्द्रियाणि करणानी' ति पौत्रायणश्रुतेः ॥ १९ ॥

तत्वप्रकाशिका—

यदि मुख्यप्राणो नेन्द्रियं तर्हि चक्षुरपि न स्याद्विशेषाभावादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य तदुपात्तश्रुतिमेवोदाहरति ॥ भेदेति ॥ न मुख्यप्राणस्य चक्षुरादीनां चाविशेषो मन्तव्यो येन तस्य विशिष्यानिन्द्रियत्वोक्तिविरोधः। मुख्यप्राणस्य सर्वकर्तृकारयितृत्वेनेश्वरसाम्यस्यान्येषां च तदभावस्य श्रुतत्वादिति भावः ॥ १९ ॥

भावदीपः —

॥ ॐ भेदश्रुतेः ॐ ॥ १९ ॥ न स्यादिति ॥ इन्द्रियं न स्यादिति योज्यम्। योग्यसाध्यान्वयेन सूत्रभाष्ययोरर्थमाह ॥ नेत्यादिना ॥ १९ ॥

सूत्रभाष्यम्—

॥ ॐ वैलक्षण्याच्च ॐ ॥ २० ॥

पुरुषापेक्षया प्रवृत्तिरिन्द्रियाणां दृश्यते न मुख्यस्य। 'प्राणाग्नय एवैतस्मिन्पुरे जाग्रती'ति (प्र. उ. ४-३) च श्रुतिः ॥ २० ॥

॥ इति इन्द्रियाधिकरणम् ॥ ११ ॥

तत्वप्रकाशिका—

नन्वयं मुख्यप्राणः परमात्मवशो न वा। आद्ये न तस्यैवानिन्द्रियत्वसिद्धिरीश्वरवशत्वसाम्यात्। अवान्तरवैलक्षण्यस्यान्यत्रापि संभवात्। द्वितीये प्रागुक्तविरोधः इत्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ वैलक्षण्याच्चेति ॥ भवेदीशवशः प्राणस्तथापि नोक्तविरोधः। ईशाधीनत्वेऽपि वैलक्षण्यात्। ईश्वरपरवशा हीन्द्रियाणां प्रवृत्तिर्जीवप्रयत्नापेक्षैव। जाग्रत्येव भावेन सुषुप्तावभावेन च तथा दर्शनात्। मुख्यप्राणस्य हि केवलेश्वरेच्छाधीनैव प्रवृत्तिर्न जीवापेक्षेति भावः। मुख्यप्राणस्य प्रवृत्तिर्न पुरुषप्रयत्नापेक्षयेत्येतत्कुत इत्यतश्चशब्दसूचितां श्रुतिं पठति ॥ प्राणेति ॥ 'एष पुरुषो न शृणोति न पश्यति न जिघ्रति न रसयते न स्पृशते नाभिवदते नादत्ते नानन्दयते न विसृजते नेयायते स्वपितीत्याचक्षते' इतीन्द्रियाणां सुप्तौ प्रवृत्त्य-

भावमभिधाय प्राणाग्नय इति मुख्यप्राणरूपाणां पुरुषप्रयत्नानपेक्षा भगवदधीन-प्रवृत्तिरुच्यते । न हि सुषुप्तस्य प्रयत्नोऽस्ति । अतः श्रुत्यविरोधेन मुख्यप्राणस्यानिन्द्रियत्वसिद्धेर्युक्तो जगत्कारणे विष्णौ श्रुतिसमन्वय इति सिद्धम् ॥ २० ॥ अ०॥११॥

भावदीपः—

॥ ॐ वैलक्षण्याच्च ॐ ॥ २० ॥ प्रागुक्तेति ॥ चक्षुरादिवदित्यत्रोक्तपराधीनत्वविरोध इत्यर्थः । योग्यसाध्यान्वयेन सूत्रं योजयति ॥ नोक्तेत्यादिना ॥ न तस्यैवानिन्द्रियत्वमित्युक्तदोषो नेत्यर्थः । वैलक्षण्यादित्येतद्विवरणपरतया भाष्यं शेषपूर्त्या व्याचष्टे ॥ ईश्वरेति ॥ दर्शनादिति ॥ एतेन पूर्वसूत्रे प्राणस्येंद्रियांतराद्भेदे श्रुतिरत्र तु प्रत्यक्षमिति च भेद इति सूचितम् । प्राणानां जीवापेक्षप्रवृत्तिमत्त्वं प्रत्यक्षमित्युक्त्वा प्राणस्य तदनपेक्षप्रवृत्तिमत्त्वं श्रुतिसिद्धमिति भावेनाह ॥ मुख्यप्राणस्येति ॥ प्राणाग्नय इति ॥ प्राणापानादिरूपाग्नय इत्यर्थः । उच्यते षट्प्रश्नोपनिषदीत्यर्थः ॥ अत इति ॥ सामान्यश्रुतेर्द्वादशमात्रपरत्वाच्चक्षुरादितो मुख्यप्राणस्य वैलक्षण्येनाविरोधाच्चेत्यर्थः ॥ २० ॥ अ० ११ ॥

सूत्रभाष्यम् –

'विरिञ्चो वा इदं सर्वं विरेचयति विदधाति ब्रह्मा वाव विरिञ्च एतस्माद्धीमे रूपनामनी' इति गौपवनश्रुतिः ॥

'यस्माद्विरेचयेत्सर्वं विरिञ्चस्तेन भण्यते ।
एको हि कर्ता जगतो ब्रह्मैव च चतुर्मुख' इति च युक्तिर्ब्राह्मे ॥

'अथ कस्मादुच्यते परम इति परमाध्येते नामरूपे व्याक्रियेते तस्मादेनमाहुः परम इति । अथ कस्मादुच्यते ब्रह्मेति बृहत्त्वाद्बृंहणाच्चे(बृंहितत्वाच्चे)'त्याग्निवेश्यश्रुतिः ।
अत आह—

॥ ॐ संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॐ ॥ २१ ॥

नामरूपक्लृप्तिः परादेव । 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन्य(द्) आस्त' (तै. आ. ३-१२) इति श्रुतेः । त्रिवृत्कुर्वत इति हेतुगर्भः । त्रिवृत्करणापेक्षत्वान्नामरूपयोः ॥

'सर्वनाम्नां च रूपाणां व्यवहारेषु केशवः ।
एक एव यतः स्रष्टा ब्रह्माद्यास्तद्वान्तरा' इति च पाद्मे ॥
'त्रिवृत्क्रिया यतो विष्णो रूपं च तदपेक्षया ।
रूपापेक्षं तथा नाम व्यवहारस्तदात्मकः ॥
अतो नाम्नश्च रूपस्य व्यवहारस्य चैकराट् ।
हरिरेव यतः कर्ता पिताऽतो भगवान्प्रभुरि'ति च ब्रह्माण्डे ॥ २१ ॥
॥ इति संज्ञाधिकरणम् ॥ १२ ॥

तत्वप्रकाशिका––

अत्र जगत्कारणे ब्रह्मणि श्रुतिसमन्वयसिद्ध्यर्थं शरीरादित्रिविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसंगतिः। जगत्कारणे हरावुक्तश्रुतिसमन्वयः शरीरादिविषयश्रुतीनां विरोधेनाप्रामाण्ये न सिध्येदित्यसाववश्यं निरसनीयः। तत्रेन्द्रियादीनामाश्रयः शरीरं तत्प्रसङ्गसंनिधापितं विषयः। किं विरिञ्चसृष्टं परमात्मसृष्टं वेति संदेहः। संदेहबीजं श्रुतिविगानं दर्शयन् पूर्वपक्षं च सूचयति ॥ विरिञ्चि इति ॥ विरे चयतीत्यस्य व्याख्यानं विदधातीति। नामरूपकर्तृत्वम् परमत्वे हेतुरुच्यते ब्रह्मशब्दस्तु निरुच्यते। श्रुतिर्विरिञ्चस्य विष्णोश्च नामरूपकर्तृत्वं वक्तीति क्रमेण शेषः। विरिञ्चस्यैव देहादिकर्तृत्वम्। 'विरिञ्चो वा इदम्' इति श्रुतेः। न च श्रुत्यन्तरविरोधः। विरिञ्चत्वयुक्तियुक्तत्वादाद्यश्रुतेः। न च सृष्टिद्वारत्वेन श्रुत्याद्युपपत्तिरिति वाच्यम्। असंभवे हि मुख्यार्थस्यामुख्यार्थत्वं कल्प्यते। न च विरिञ्चे नामरूपात्मकदेहादिसृष्टिशक्तिर्न संभवति येनात्र श्रुत्यादेरमुख्यार्थत्वं कल्पयामः। अतः सयुक्तिकैतच्छ्रुतिविरोधेनाप्रमाणमन्या श्रुतिस्तथा च न श्रुतिसमन्वयेन परमात्मनो जगत्कारणत्वसिद्धिरिति भावः। सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ परमात्मनः सकाशादेव नामरूपात्मकदेहादिप्रपञ्चस्योत्पत्तिर्भवति। 'सर्वाणि रूपाणि' इति पुरुषसूक्तमन्त्रोक्तत्वादिति भावः। यदिति लिङ्गविपर्यासः। नामरूपयोर्विरिञ्चसृष्टत्वेऽप्यस्ति श्रुतिरतः कथमयं निश्चय इति तत्राह ॥ त्रिवृदिति ॥ विशेषणस्य हेतुगर्भत्वेन नामरूपकर्ता परः। पृथिव्यादिभूतत्रयस्य मिश्रीभावस्त्रिवृत्वं तत्कर्तृत्वादिति युक्तिरुक्ता भवति। तत्र त्रिवृत्कर्तृत्वे कुतो नामादिकर्तृत्वं हरेरित्यत आह ॥ त्रिवृदिति ॥ नामादिकरणं त्रिवृत्करणापेक्षं त्रिवृत्करणमन्तरेण रूपोत्पत्त्यभावस्य वक्ष्यमाणत्वात्तदभावे नामानुपपत्तेः। त्रिवृत्कर्तृत्वं च विष्णोरेव। 'सेयं देवतेमास्तिस्रो

देवता अनेनैव जीवेनात्मनानुप्रविश्य नामरूपे व्याकरोत्तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' इत्यादिश्रुतेः । अतः स एव नामादिकर्तेति भावः । विरिञ्चत्वादियुक्तियुक्तेयमपि श्रुतिरित्यतस्तस्याः सावकाशत्वं स्मृत्यैव दर्शयति ॥ सर्वेति ॥ सर्वकर्तृत्वशक्तिस्तु त्रिवृत्कर्तृत्वेन विष्णोरेवेति सूत्रार्थे स्मृतिसंमतिं चाह ॥ त्रिवृद्विति ॥ त्रिवृत्क्रिया यतो विष्णोरतो नाम्नश्चेत्यन्वयः । तदुपपादनं रूपमित्यादि । हरिरेव कर्ता यतश्च कर्ताऽतः पितेत्यर्थः । अतः श्रुत्यविरोधेन शरीरस्य हरिकर्तृत्वसिद्धेर्युक्त तस्य श्रुतिसमन्वयेन जगत्कारणत्वमिति सिद्धम् ॥ २१ ॥ अ० १२ ॥

भावदीपः—

॥ ॐ संज्ञामूर्ति० ॐ ॥ २१ ॥ संगतिं दर्शयति ॥ तत्रेंद्रियेत्यादिना ॥ ॥ तत्प्रसंगेति ॥ इंद्रियप्रसंगेत्यर्थः । एतेन सूत्रे संज्ञारूपक्लृप्तिरित्यनुक्त्वा मूर्तीत्युक्तेरुपयोगः सूचितः । तत्वप्रदीपे तु इदमिह निरूप्यते । किं चतुर्मुखान्नामरूपक्लृप्तिरुत परमादिति । न चात्र चतुर्मुखस्याप्रसक्तिराशंकनीया । यमेवायं भगवान्प्राणत्वादूर्ध्वं चतुर्मुखपदमधिष्ठास्यतीति ज्ञापयन् प्राणस्वरूपनिरूपणावसरे चतुर्मुखं प्रसंजयतीत्युक्तम् । पौनरुक्त्यनिरासायाह ॥ इत्यस्य व्याख्यानमिति ॥ तत्वप्रदीपे तु विदधाति विशेषेण धारयति नियोजयति चेत्युक्तम् । भाष्ये परामाद्धयेव नामरूपे व्याक्रियेते । इत्येतावतैव पूर्तौ शेषोक्तेरुपयोगमाह ॥ नामरूपेति ॥ परमस्य विष्णोरेव नामरूपकर्तृत्वं वक्तुमिति भावः ॥ ब्रह्मशब्द (स्तु) श्च निरुच्यत इति ॥ नामरूपकर्तृत्वं ब्रह्मत्वे हेतुरिति सूचयितुमिति योज्यम् । कर्तृत्वात्सगुणं ब्रह्म पुरुषं पुरुषर्षभेति स्मृतेः । स्मृत्युक्तयुक्तिमाह ॥ विरिंचत्वेति ॥ विरेचकत्वापरनामकसर्जकत्वाख्यविरिंचपदप्रवृत्तिनिमित्तवत्त्वरूपयुक्तियुक्तत्वादित्यर्थः । तदभिध्यानादित्यत्रोक्तन्यायेन समाधानमाशंकते ॥ न चेति ॥ विरंचस्यापि कर्तृत्वशक्तेः स एव शरीरादिस्रष्टा इत्यन्यत्रोक्तां युक्तिं व्यनक्ति ॥ असंभवे हीत्यादिना ॥ अत इति ॥ विरेचकत्वरूपविरिंचपदप्रवृत्तिहेतुत्वात् । चतुर्मुखस्य नामरूपसर्जनशक्तिमत्वाच्च सयुक्तिकेत्यर्थः ॥ छ ॥ सूत्रभाष्ययोरर्थमाह ॥ परमात्मन इति ॥ सौत्रतुशब्दार्थं एवेति । यदिति यच्छब्दस्य तमेवं विद्वानिति तच्छब्देनान्वयसूचनाय वा श्रुतेर्वैष्णवत्वप्रसिद्धिद्योतनाय वा पुरुषसूक्तमंत्रेत्युक्तम् । अत एवाह ॥ यदिति ॥ लिंगेति ॥ य इत्यर्थः । तथा च तमित्यग्रे परामर्शः सुशक

इति भावः ।। वक्ष्यमाणत्वादिति ।। मांसादिभौममित्यत्र यद्वा वाथो विमिश्रमित्यादिनेत्यर्थः । तावता कथं विष्णोरत आह ।। त्रिवृत्कर्तृत्वं चेति ।। सेयमिति ।। तत्तेजोऽसृजतेति तेजोऽबन्नस्रष्टृत्वेनोक्ता देवतेत्यर्थः। देवता तेजोऽबन्नदेवताभिमानिदेवता अभिमन्यमानसहिता इत्यर्थः । शरीररूपकविन्यस्तगृहीतेरिति न्यायात् । जीवेनात्मनाऽनिरुद्धाख्येन रूपेणेत्यर्थः । अत्राग्निहोत्रं जुहोति। यवागूं पचतीतिवत् नामरूपे व्याकरोत्तदर्थं त्रिवृतमकरोदित्यर्थः । इत्यादिश्रुतेः षष्ठे छांदोग्यश्रुतेरित्यर्थः । कुतो नामरूपादिकर्तृत्वं हरेरिति शंकातत्समाधिप्रकारमाह ।। अतः स एवेति ।। विरिंचस्य द्वारतयोपपत्तेरित्यन्यत्रोक्त्यनुरोधेनाह ।। तस्याः सावकाशत्वमिति ।। त्रिवृत्क्रिया यतो विष्णोरित्यादेस्तस्यैव कर्तृत्वोपपत्तेरित्यन्यत्रोक्त्यनुरोधेनाह।।कर्तृत्वशक्तिस्त्विवति ।। अत इति ।। विरंचत्वयुक्तियुक्तोक्तश्रुतेर्द्वारपरतया सावकाशतायाः स्मार्तत्वेन विष्णोस्त्रिवृत्कर्तृत्वेन नामादिस्रष्टृत्वोपपत्तेश्चेत्यर्थः । शरीरस्येत्युत्तरसंगत्यर्थमुक्तं नामादेरित्यर्थः ।। २१ ।। अ० १२ ।।

सूत्रभाष्यम्—

'अद्भ्यो ह्रीदमुत्पद्यते आपो वाव मांसमस्थि च भवत्यापः शरीरमाप एवेदं सर्वमि'ति कौण्डिन्यश्रुतिः ।

'अम्मयं तु यतो मांसमतस्तृप्तिश्च मांसत' इति च भारते ।

पृथिवी शरीरमाकाशमात्मे'ति (बृ. उ. ५–२–१३) च श्रुतिः अतो ब्रवीति—

**।। ॐ मांसादि भौमं यथाशब्दमितरयोश्च ॐ ।। २२ ।।**

'यत्कठिनं सा पृथिवी यद्द्रवं तदापो यदुष्णं तत्तेज' इति श्रुतेर्मांसाद्येव भौमं न सर्वशरीरम् । अप्तेजसोश्च कार्यं यथाशब्दमङ्गीकर्तव्यम् ।। 'यद्वा वाथो विमिश्रं मिश्राद्ध्येतद्भवति मिश्राणि हि भूतानि तस्मादेवैवमाचक्षते भूतानी'ति हि काषायणश्रुतिः ।

'पञ्चभूतात्मकं सर्वं तथाऽप्येकविवक्षया ।
एकभूतात्मकत्वेन व्यवहारस्तु वैदिके ।
भौममित्येव काठिन्याच्छौक्ल्याद्दौदकमित्यपि ।
तेजिष्टत्वात्तैजसं च यथाऽस्थ्नां वचनं श्रुतावि'ति वायुप्रोक्ते ।। २२ ।।

तत्वप्रकाशिका—

अत्रेश्वरे जगत्कारणे श्रुतिसमन्वयसिद्ध्यर्थं शरीरकारणविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसंगतिः। जगत्कारणे हरावुक्तः श्रुतिसमन्वयो देहकारणश्रुतीनां विरोधेनाप्रामाण्येऽनुपपन्नः प्राप्नोतीत्यवश्यमसौ परिहर्तव्यः। प्रकृतो देह एवात्र विषयः। किमाप्यः किं वा पार्थिव उत तैजसो भूतत्रयात्मको वेति संदेहः। लेशतः संदेहबीजं दर्शयन्पूर्वपक्षं सूचयति ॥ अद्भ्य इति ॥ 'अद्भ्यो हीदम्' इति प्रतिज्ञा। आप इत्युपपादनम्। आप एवेति निगमनम्। श्रुतिराप्यत्वं शरीरस्य वक्तीति शेषः। 'पृथवीं शरीरमप्येति' इति श्रुतिः शरीरस्य पार्थिवत्वमाह। कार्यस्य स्वकारण एवाप्ययनियमात्। आकाशं परमात्मानम्। तैजसत्वेऽपि श्रुतिः 'सोग्नेर्देवयोन्या आहुतिभ्यः संभूय हिरण्यशरीर ऊर्ध्वं स्वर्गलोकमेति' इति। भूतत्रयात्मकत्वं च श्रूयते 'इमास्तिस्रो देवताः पुरुषं प्राप्य' इत्यादौ। आप्यमिति तावत्प्राप्तम्। 'आपो वाव मांसम्' इति श्रुतेः। न च श्रुत्यन्तरविरोधः। मांसादौ तृप्तिजनकत्वदर्शनेनाप्यत्वश्रुतेर्युक्तियुक्तत्वात्। अपां हि तर्पकत्वं धर्मः। पार्थिवमित्यपरः पक्षः 'पृथिवीं शरीरम्' इति श्रुतेः। काठिन्यगन्धवत्त्वादियुक्तेश्च। तैजसमित्यन्यः। तथा श्रवणादौष्ण्यदर्शनाच्च। सर्वथा श्रुतोऽपि न चतुर्थः पक्षो युक्तः। शरीरे भूतानां मिश्रतायामभ्युपेतायामापः शरीरमित्यादिविशेषोक्त्ययोगान्मिश्रत्वादेव। न हि बहुषु विद्यमानेषु कारणविशेषं विनात्र देवदत्तो विद्यत इति विशेषोक्तिर्दृष्टा। न चात्र कारणविशेषं पश्यामः। अतो विरोधेन कासांचिच्छ्रुतीनामप्रामाण्यान्न विष्णौ जगत्कारणे श्रुतिसमन्वयोऽयुक्त इति भावः। सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ यच्छरीरे कठिनं मांसादि तदेव पार्थिवं न सर्वशरीरं किं तर्ह्याप्तेजसोश्च कार्यं शरीरेऽस्थिशोणितमज्जादीत्यङ्गीकार्यम्। यत्कठिनमिति श्रुतेः। एवमङ्गीकारस्यैव यथाशब्दत्वादिति भावः। अयं चैकपक्षप्रतिषेधः। इतरावपि पक्षावेवं निषेध्यौ। ननु कथं मांसस्य पार्थिवत्वमुच्यते। 'आपो वाव मांसम्' इति श्रुतेर्युक्तेश्चेत्यतो वाह ॥ अप्तेजसोश्चेति ॥ न मांसादीनां केवलपार्थिवत्वं किं नाम तत्राप्तेजसोश्च कार्यमङ्गीक्रियते शब्दवशात्। अतो मांसस्याप्यत्वोक्तिर्युक्तेति भावः। कोऽसौ शब्दो यतो मांसादीनां नैकभूतकार्यत्वमिति तं दर्शयति ॥यदिति ॥ भूम्यादिभूतानां स्वत एव मिश्रत्वान्नैकभूतत्वं मांसादीनां संभवतीति विज्ञायते। तस्मात्संभूतत्वान्मांसादीनामनेकभूतकार्यत्वात्तदपेक्षयाप्यत्वाद्युक्तिर्युक्तेति। उक्तार्थे स्मृतिं चाह ॥ पञ्चेति ॥ २२ ॥

भावदीपः—

॥ ॐ मांसादि भौमं० ॐ ॥ २२ ॥ पूर्वसंगतिमाह ॥ प्रकृत इति ॥ तत्वप्रदीपे तु एवमस्य प्राणस्य भरिष्यद्ब्रह्मणः श्रुतिस्मृतिसिद्धं त्रिवृत्कुर्वतः परमादनंतरभाविस्त्रष्टृत्वमनुसंदर्श्य त्रिवृत्कृतैर्भूतैरारभ्यमाणं शरीरमधिकृत्य विचार्यते। भूतसृष्टिं जीवस्वरूपं चोक्त्वातस्य भोगसाधनानां प्राणानां स्वरूपं निगद्य तदाधारभूतं मुख्यप्राणं चानुवर्ण्य तैर्भूतैस्त्रिवृत्कृतैरारभ्य तस्य जीवस्य प्राणस्य भोगायतनं शरीरस्वरूपं निरूपयतीति श्लिष्यते । तस्मादुत्क्रांतस्य संसारिणो गत्यादिनिरूपणा समीपे करिष्यत इत्युक्तम्। भाष्ये कोटिद्वयसंशयबीजप्रदर्शनेऽपि स्वर्गस्थानां शरीराणामिति वक्ष्यमाणस्मृत्यनुरोधेन कोट्यंतरबीजस्याप्यूहृतात्पर्यावगमात् सिद्धांतकोटिबीजस्याग्रे भाष्ये वक्ष्यमाणदिशा सुज्ञानत्वाच्चतुष्कोटिकसंशयमाह ॥ किमाप्य इति ॥ अपौनरुक्त्यायाह । ॥ अद्भ्यो हीति ॥ अप्येतीति ॥ यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यं मनश्चंद्रमसं दिशः श्रोत्रं पृथिवीं शरीरमाकाशमात्मेति बृहदारण्यके पूर्वत्र प्रकृतमप्येतीति पदमत्राप्यन्वेतीति भावः । भाष्ये शेषं पूरयति ॥ इतिश्रुतिरित्यादि ॥ आकाशस्यात्मोपादानत्वभ्रांतिं निराह ॥ परमात्मानमिति ॥ आत्मा जीवोऽप्येति । इतरैरदृश्यः सन् प्रविशतीत्यर्थः। स्वं कुलायं यथापीतः पक्षी स्यादेवमीश्वरं अप्येति जीवः प्रस्वापे मुक्तौ चान्योऽपि सन् सदेत्यादितत्वनिर्णयोक्तेः । सोऽग्नेरिति बह्वृचब्राह्मणवाक्यम् । श्रूयते छांदोग्ये षष्ठे ॥ तथेति ॥ सोऽग्नेरिति श्रवणादित्यर्थः । कोटित्रयस्यापि सयुक्तिकश्रुतिमत्त्वेन तुल्यबलत्वे विनिर्णयाभावेन संदेहादविशेषः स्यादित्यत आह ॥ सर्वथेति ॥ इमास्तिस्र इति श्रुतोऽपीत्यर्थः। एवंरूपेण निर्णयसंभवात्न संदेहाद्विशेष इति भावः । कुत इत्यतो मिश्रत्वाद्भूतानां मिश्रतायामविशेष इति न्यायविवरणोक्तेरभिप्रायं व्यनक्ति ॥ शरीर इति ॥ वैशेष्यात्त्विति सूत्रांशव्यावर्त्योक्तिर्न चात्रेति॥ अत इति ॥ श्रुतीनां सयुक्तिकत्वेन प्रबलत्वादित्यर्थः ॥छ॥ मांसादीत्येतत्सावधारणमित्युपेत्य सूत्रभाष्ययोरर्थमाह ॥यच्छरीर इति॥ मांसादीत्यादिपदेन शोणितमज्जादीत्यत्र प्रत्येकमन्वितादिपदेन च मनःप्राणवागादेः क्रमेण ग्रहः । अन्नमयं हि सोम्य मनः आपोमयः प्राणः तेजोमयी वागित्यादि श्रुतेरिति भावः । ननु सर्वं शरीरं भौममिति पूर्वपक्षस्योक्तदिशा निरासेऽपि आप्यमेव तैजसमेवेति पूर्वपक्षयोर्निरासो नेत्यत आह ॥ अयं चेति ॥ मांसाद्येवेत्यवधारणकृत इत्यर्थः । सूत्रे भाष्ये च मांसादीत्यनेन शोणितादीति मज्जादीति चोपलक्ष्यं भौममिति चाप्यमित्यस्य

तैजसमित्यस्य चोपलक्षणम् । भाष्ये अप्तेजसोश्चेति च भूमितेजसोश्चेत्यस्य भूमिजलयोश्चेत्यस्य चोपलक्षणम् । अत एव सूत्रे इतरयोरिति सामान्योक्तिः । यथाशब्दमित्युक्तशब्दश्च पक्षत्रयनिरासेऽपि यत्कठिनमिति भाष्योक्त एव । व्याख्यानं तु यच्छरीरे द्रवं शोणितादि तदेवाप्यं न सर्वशरीरं किं तर्हि भूतेजसोश्च कार्यं शरीरेऽस्ति मांसमज्जादीत्यंगीकार्यम् । यत्कठिनमित्यादिश्रुतेरिति । तथा यदुष्णं मज्जादि तदेव तैजसं । न सर्वं शरीरं किं तर्हि भूजलयोश्च कार्यं शरीरेऽस्ति मांसशोणितादि । यत्कठिनमित्यादिश्रुतेरित्येवंरूपेण बोध्यमिति भावः । यद्यपि मांसाद्येव भौमं न सवशरीरं किं तु तत्राप्तेजसोश्च कार्यमस्तीति यथान्यासेनैव एकैकमात्रत्वकोटिकपक्षत्रयस्यापि निरासो भवति । तथापि प्रातिस्विकरूपेणापि निषेधलाभायैवमुक्तिः । वक्ष्यमाणश्रुत्यनुरोधेनार्थांतरमाह ॥ नन्विति ॥ चशब्दव्यावर्त्यमाह ॥ न मांसादीनामिति ॥ तत्र मांसादौ । यथाशब्दमित्यस्यार्थः । शब्दवशादिति । तस्मादिति श्रौतपदानुवादः । विमिश्रत्वात्संभूतत्वमिति भावः । श्रुतौ विमिश्रमित्यस्य शरीरादि मांसादि वेति तत्वप्रदीपार्थः ॥ २२ ॥

सूत्रभाष्यम्—

कथं तर्हि विशेषवचनमित्यत आह—

॥ ॐ वैशेष्यात्तु तद्वादस्तद्वादः ॐ ॥ २३ ॥

भूतानां (तु) विशेषसंयोगादेव विशेषव्यवहारः ।

'पार्थिवानां शरीराणामर्धेन पृथिवी स्मृता ।
इतरेऽर्धे त्रिभागिन्य आपस्तेजस्तु भागतः ॥

इति सामान्यतो ज्ञेयं भेदश्च प्रतिपूरुषम् ।
स्वर्गस्थानां शरीराणामर्धं तेज उदाहृतमि'ति च बृहत्संहितायाम् ॥

सर्वाध्यायार्थावधारणार्थोऽध्यायान्ते द्विरुक्तिः । गारुडे च—

'अध्यायान्ते द्विरुक्तिः स्याद्वेदे वा वैदिकेऽपि वा ।
विचारो यत्र सज्येत पूर्वोक्तस्यावधारणे ॥

अनुक्तानां प्रमाणानां स्वीकारश्च कुतो भवेत् ।
विनिन्द्य चेतरान्मार्गान्सम्पूर्णफलता तथे'ति (च)॥ २३ ॥

॥ इति मांसा(द्य)धिकरणम् ॥ १३ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये द्वितीयाध्यायस्य चतुर्थः पादः ॥ २ ॥ ४ ॥

तत्वप्रकाशिका—

यदि शरीरं नैकविधभूतप्रकृतिकं कथं तर्हि विशेषोक्तिरित्युक्तमाशङ्क्य तत्परिहारार्थं सूत्रमवतार्य व्याचष्टे ॥ कथमिति ॥ शरीरस्यानेकभूतप्रकृतित्वेऽपि न विशेषोक्तिविरोधः । तत्तद्भूतविशेषसंयोगापेक्षया तदुपपत्तेरिति भावः । मांसादीनां विशेषोक्तेरप्ययमर्थो ज्ञातव्यः । शरीरे भूतानां विशेषसंयोग एव कुतस्तद्भावे च पुनर्विशेषोक्त्ययोग इत्यत आह ॥ पार्थिवानामिति ॥ पृथिवीस्थितानामित्यर्थः । अर्धं तेज इतरेऽर्धे त्रिभागिन्य आपः पृथिवीभागतः । अन्येषामापोऽर्धत इतरेऽर्धे त्रिभागिनी पृथिवी भागमात्रं तेज इति द्रष्टव्यम् । देहभेदेन विशेषस्योक्तत्वान्नोक्तदोषः । द्विरुक्तेः प्रयोजनविशेषं प्रमाणविशेषेण दर्शयति ॥ सर्वेति ॥ अवधारणे अवधारणार्थम् । संपूर्णफलता शास्त्रस्योक्ता भवतीति शेषः । अतः श्रुत्यविरोधेन शरीरस्य पाञ्चभौतिकत्वसिद्धेर्युक्तो जगत्कारणे नारायणे श्रुतिसमन्वयो न पुनस्तत्र विरोधगन्धोऽपीति सिद्धम् ॥ २३ ॥ अ० १३ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्रभाष्यस्य टीकायां श्रीमज्जयतीर्थमुनिविरचितायां तत्वप्रकाशिकायां द्वितीयाध्यायस्य चतुर्थः पादः ॥

॥ श्रीरस्तु ॥

भावदीपः—

॥ ॐ वैशेष्यात्तु तद्वादस्तद्वादः ॐ ॥ २३ ॥ फलोक्तिपूर्वं सूत्रभाष्ययोरर्थमाह ॥ शरीरस्येति ॥ अन्नमशितं त्रेधा विधीयत इत्यादिना मिश्रतायामपि विशेषोक्तेरिति न्यायविवरणानुरोधेनार्थांतरमुपेत्याह ॥ मांसादीनामिति ॥ शरीरपद-

स्थाने मांसादिपदस्थापनेन यदि शरीरमित्यादिटीका सर्वाप्यावर्तनीयेति भावः । सामान्यभाष्यस्य शरीरपदसंयोजनेन व्याख्यानं तु वक्ष्यमाणस्मृत्यानुगुण्याय । यद्यपि पंचभूतात्मकं सर्वमिति स्मृतौ सर्वं मांसाद्येकैकशः पंचभूतात्मकं तथापि तत्र प्राधान्यविवक्षया भौमं च मांसमित्यादिव्यवहार इत्यादितत्वप्रदीपरीत्याऽत्राप्युक्तार्थे स्मृतिं चाहेति पूर्वोक्त्या च स्मृत्यैव मांसादीनामनेकभूतकार्यत्वे कथं विशेषोक्तिरिति शंकाऽपास्ता । तथापि तमर्थं सूत्रारूढं कर्तुमेवमुक्तम् । यद्वा पूर्वं स्मृतावेकविवक्षया विशिष्य व्यवहार इत्युक्तेरपि तत्तद्भूतविशेषसंयोगो हेतुरित्ययमेवार्थो ज्ञातव्य इत्यर्थः । स्मृतौ पृथिवीस्वर्गरूपाधिष्ठानभेदोक्तिव्यावर्त्यमाह ॥ पुनर्विशेषोक्तीति ॥ एकभूतस्यैव विशेषसंयोगे आपः शरीरमिति पृथिवी शरीरमिति हिरण्यशरीरमित्यादौ शरीरस्याप्यत्वपार्थिवत्वतैजसत्वरूपविशेषोक्तिर्न स्यात् । किं तु पार्थिवमिति वा आप्यमिति वा तैजसमिति वा एकरूपैव विशेषोक्तिः स्यात् । सर्वभूतानां विशेषसंयोगे तु सुतरां विशेषोक्तिर्न स्यादित्यर्थः । स्मृतौ प्रतीकपूर्वं शेषं पूरयति ॥अर्धं तेज इत्यादिना॥ ॥ नोक्तदोष इति ॥ पुनर्विशेषोक्त्ययोग इत्युक्तदोषो नेत्यर्थः । पूर्वाध्यायांत एव द्विरुक्तेरवधारणार्थत्वस्य प्रमाणेनैवोक्तत्वात्पुनरिह तदुक्तिर्व्यर्थेत्यत आह ॥ प्रयोजनविशेषमिति ॥ प्रमाणविशेषेणेति च ॥ अनुक्तानां प्रमाणानां संग्रहादिरूपः प्रयोजनविशेषः । अत एव भाष्ये सूत्रे कंठतोऽनुक्तानामनेकप्रमाणानां प्रतिनयमुदाहरणं कृतमिति भावः । एकदेशस्याध्यायमात्रस्यायोगादाह ॥ शास्त्रस्येति ॥ अत इति ॥ शरीरादेरनेकभूतकार्यत्वे श्रुत्यादिभावात् । देशविशेषस्थितदेहानां भूतसंयोगविशेषेण विशेषोक्तिसंभवाच्चेत्यर्थः । पंचभूतात्मकमिति स्मृत्यनुरोधादाह ॥ पांचभौतिकत्वेति ॥ एतच्चोत्तराधिकरणानामुत्थानसिद्धिसौकर्यायोक्तम् । तथा च मांसादीति सूत्रे त्र्यात्मकत्वोक्तिः प्राधान्यविवक्षयेति भावः । नारायणे निर्दोषानंतगुणपूर्णे ॥२३॥ अ० १३ ॥

इति श्रीमद्भाष्यटीकाभावदीपे राघवेंद्रयतिकृते द्वितीयाध्याये चतुर्थः पादः ।

॥ द्वितीयाध्यायः संपूर्णः ॥

॥ श्रीकृष्णार्पणमस्तु ॥

॥ श्रीगुरुभ्यो नमः ॥

## ॥ ब्रह्मसूत्रानुक्रमणिका ॥

### ( द्वितीयाध्यायः )

| संख्या | सूत्राणि | पा. | अधि |
|---|---|---|---|
| ४२ | उपपद्यते चाप्युप | १ | १० |
| ४३ | उपलब्धिवदनि | ३ | १७ |
| ४४ | उपसंहारदर्शनान्ने | १ | ७ |
| ४५ | उपादानात् | ३ | १७ |
| ४६ | उभयथा च दोषा | २ | ६ |
| ४७ | उभयथा च दोषात् | २ | ७ |
| ४८ | उभयथापि न कर्मा | २ | ६ |
| | ॥ ए ॥ | | |
| ४९ | एतेन मातरिश्वा | ३ | २ |
| ५० | एतेन शिष्टा अप | १ | ४ |
| ५१ | एतेन योगः | १ | १ |
| ५२ | एवं चात्मा | २ | १० |
| | ॥ क ॥ | | |
| ५३ | कर्ता शास्त्रार्थ | ३ | १७ |
| ५४ | करणवच्चेन्न | २ | ११ |
| ५५ | कृतप्रयत्नापेक्षस्तु | ३ | १७ |
| ५६ | कृत्स्नप्रसक्तिर्निर | १ | ७ |
| | ॥ ग ॥ | | |
| ५७ | गुणाद्वा लोक | ३ | १२ |
| ५८ | गौण्यसंभवात् | ३ | १ |
| ५९ | गौण्यसंभवात् | ४ | १ |
| | ॥ च ॥ | | |
| ६० | चराचरव्यपाश्रयस्तु | ३ | ९ |
| ६१ | चक्षुरादिवत्तु | ४ | ७ |
| | ॥ ज ॥ | | |
| ६२ | ज्योतिराद्यधिष्ठानं तु | ४ | १० |
| | ॥ त ॥ | | |
| ६३ | त इंद्रियाणि | ४ | ११ |
| ६४ | तत्पूर्वकत्वाद्वाचः | ४ | ३ |
| ६५ | तत्प्राक् श्रुतेश्च | ४ | २ |
| ६६ | तथा प्राणाः | ४ | १ |
| ६७ | तदनन्यत्वमारंभण | १ | ६ |
| ६८ | तद्गुणसारत्वात्तु | ३ | १४ |
| ६९ | तदभिध्यानादेव | ३ | ७ |
| ७० | तर्काप्रतिष्ठानादप्यन्यथा | १ | ४ |
| ७१ | तस्य च नित्यत्वा | ४ | १० |
| ७२ | तेजोऽतस्तथा | ३ | ४ |
| | ॥ द ॥ | | |
| ७३ | दृश्यते च | १ | ३ |
| ७४ | दृश्यते तु | १ | २ |
| ७५ | देवादिवदपि | १ | ७ |
| | ॥ न ॥ | | |
| ७६ | न कर्माविभागा | १ | १० |
| ७७ | न च कर्तुः | २ | १२ |
| ७८ | न च पर्यायावप्य | २ | १० |
| ७९ | न तु दृष्टांतभावा | १ | ४ |
| ८० | न प्रयोजन | १ | ९ |
| ८१ | न भावोऽनुप | २ | ९ |
| ८२ | न वायुक्रिये | ४ | ६ |
| ८३ | न वियदश्रुतेः | ३ | १ |
| ८४ | न विलक्षणत्वा | १ | २ |
| ८५ | नाणुरतच्छ्रु | ३ | १२ |
| ८६ | नात्माश्रुतेः | ३ | १० |
| ८७ | नाभाव उप | २ | ८ |
| ८८ | नासतो दृष्टत्वा | २ | ८ |
| ८९ | नित्यमेव च | २ | ६ |

॥ श्रीः ॥

# शुद्धिपत्रिका

| पृ. सं. | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 5 | 28 | इतरषां | इतरेषां |
| 10 | 13 | प्रसिद्ध | प्रसिद्धे |
| 15 | 9 | युक्तिर्गु | युक्तिर्गृ |
| 15 | 18 | मुतिभिः | मुनिभिः |
| 18 | 24 | इत्वेवा | इत्येवा |
| 24 | 3 | त्वप्रमाणिकः | त्वप्रामाणिकः |
| 26 | 16 | स्वातंत्र्ये I | स्वातंत्र्येण |
| 29 | 9 | तात्पर्यण | तात्पर्येण |
| 29 | 25 | दार्ष्टातिक | दार्ष्टान्तिक |
| 37 | 16 | नुवर्तने | नुवर्तते |
| 43 | 9 | तीत्युनुभूयते | तीत्यनुभूयते |
| 49 | 8 | सर्वेकार्येषु | सर्वकार्येषु |
| 49 | 18 | मतिस्वत्यत | मस्तित्वत्यत |
| 49 | 19 | चेत्तस्येऽश्वरा | चेत्तस्येश्वरा |
| 50 | 8 | लब्धा | लब्ध्या |
| 50 | 10 | कर्तुत्वे | कर्तृत्वे |
| 51 | 8 | जीवस्येऽश्वरा | जीवस्येश्वरा |
| 51 | 26 | जीवकतृ | जीवकर्तृ |
| 51 | 28 | विवरणस्य | विवरणस्थं |
| 52 | 5 | प्रसक्या | प्रसक्त्या |
| 52 | 8 | इत्येद | इत्येत |
| 52 | 17 | सान्ति | सन्ति |
| 52 | 23 | व्वाचष्टे | व्याचष्टे |
| 55 | 4 | समाध | समादध |
| 55 | 9 | विचित्र | विचित्रा |

| | | | |
|---|---|---|---|
| 55 | 25 | प्रयोजनत्वात् | प्रयोजनवत्त्वात् |
| 56 | 26 | भाष्यम्— | भाष्यम् — किन्तु |
| 62 | 17 | स्थापन | स्थापनपर |
| 65 | 20 | येगौ | योगौ |
| 69 | 7 | पवृत्तौ | प्रवृत्तौ |
| 69 | 10 | त्वमेव | त्वामेव |
| 70 | 22 | यस्या | यस्य |
| 71 | 1 | विरोधाद्युक्तं | विरोधकत्वाद्युक्तं |
| 71 | 19 | मेवेश्वर | मेव सेश्वर |
| 72 | 8 | किंचिद्बाध | किंचिद्बाधकं |
| 72 | 23 | य— | यः |
| 72 | 24 | भावाद्यः | भावाद्य- |
| 73 | 14 | नास्तीनि | नास्तीति |
| 74 | 26 | वाचष्टे | व्याचष्टे |
| 76 | 23 | दृष्टन्त | दृष्टान्त |
| 79 | 9 | मधृत | मवधृत |
| 79 | 26 | कारणाविशेषा | कारणविशेषा |
| 82 | 15 | महत् | परिमाणं महत् |
| 82 | 18 | द्व्यणुकादिति | द्व्यणुकादीति |
| 84 | 1 | परिमाणाभिधाना | परिमाणाभिधान |
| 100 | 9 | भावात् | भवात् |
| 102 | 23 | संगातिः | संगतिः |
| 102 | 24 | प्रसङ्क्ता | प्रसङ्गा |
| 103 | 7 | वाधकत्वे | बाधकत्वे |
| 103 | 27 | पदवृत्त्या | पदावृत्त्या |
| 114 | 3 | इयं पंक्तिः अत्रैव सूत्रात् प्राक् पठितव्या । | |
| 131 | 24 | प्रायोजक | प्रयोजक |
| 133 | 4 | पुरुषो | पुरुषे |
| 133 | 9 | विभाषत | विभाष्यत |
| 134 | 5 | कश्चनेत्यस्य वा | कश्चनेंत्यस्यैवा |

| | | | |
|---|---|---|---|
| 134 | 15 | मियुक्तं | मित्युक्तं |
| 137 | 17 | कुतनो | कुतो |
| 137 | 26 | दारिद्र्या | दारिद्र्या |
| 139 | 8 | क्रमानुक्तावापि | क्रमानुक्तावपि |
| 139 | 25 | वाय्यादि | वाय्वादि |
| 140 | 3 | सृष्टिकारणा | सृष्टिकरणा |
| 141 | 23 | च ध्येयम् | कर्तृत्वं च ध्येयम् |
| 141 | 25 | सद्भुवा | सद्भावा |
| 142 | 1 | विमतः | विमताः |
| 142 | 4 | सूचिता | सूचितां |
| 143 | 2 | तथा विरुद्धता | यथा विरुद्धता |
| 144 | 16 | सारित्वादिति | सारित्वादि |
| 144 | 23 | मुख्यप्रमाणयोः | मुख्यप्राणयोः |
| 145 | 28 | चेति | तज्जनकत्वं चेति |
| 164 | 17 | श्रुतेर्बाधयोगात् | श्रुतेर्बाधायोगात् |
| 171 | 20 | स्वशब्दभावात् | स्वशब्दाभावात् |
| 172 | 12 | भावाह | भावमाह |
| 172 | 13 | तस्यार्थोऽशौ | तस्यार्थोंऽशौ |
| 179 | 23 | प्राकृतस्य | प्रकृतस्य |
| 179 | 24 | वृत्त्या भेद | वृत्त्याऽभेद |
| 183 | 3 | नन्त्याप्राप्त्यो | ·नन्त्यप्राप्त्यो |
| 183 | 20 | कचित् | क्वचित् |
| 186 | 4 | परेणामु | परेणामुं |
| 186 | 10 | ज्ञानं | ज्ञानं |
| 188 | 17 | योगेन | योग्येन |
| 195 | 19 | स्वातन्त्र्यस्य | स्वतन्त्रस्य |
| 197 | 14 | कर्तुत्व | कर्तृत्व |
| 198 | 4 | वृक्ति | वृत्ति |
| 198 | 9 | पुरुषार्थी | पुरुषार्थो |
| 199 | 25 | श्रुतिबंल | श्रुतिर्बल |

| | | | |
|---|---|---|---|
| 202 | 21 | 'श्रुत्या चेति' इति १३ पंक्तौ पठनीयम् । | |
| 203 | 19 | ययो भेदा | ययोर्भेदा |
| 207 | 2 | एकमुत्तर | एवमुत्तर |
| 212 | 25 | रमणीयचरण | रमणीयश्चरणा |
| 216 | 18 | एव ग्रेऽपि द्वेधामयोज्यम् | एवमग्रेऽपि द्वेधा योज्यम् |
| 216 | 24 | व्यवधानाभावरूपविशेष | व्यवधानाभावरूपस्पष्टार्थत्वं निरवकाशत्वरूपविशेष |
| 219 | 12 | अमुत्पत्ति | अनुत्पत्ति |
| 223 | 21 | पैंग्या | पैंगि |
| 227 | 7 | सूत्रमाष्ये | सूत्रभाष्ये |
| 230 | 21 | कृतोऽत्रेति | कुतोऽत्रेति |
| 232 | 5 | प्राणा | प्राण |
| 232 | 5 | र्मध्यम | र्मध्यम इति |
| 232 | 24 | सिद्धान्तयत्मू | सिद्धान्तयत्सू |
| 233 | 9 | स्थाता | स्थाता |
| 233 | 22 | पृथुगु | पृथगु |
| 235 | 16 | (ना) | (नात्) |
| 236 | 8 | कारणत्वासिद्धि | कारणत्वसिद्धि |
| 238 | 1 | इतरषां | इतरेषां |
| 240 | 7 | ब्रह्मणि | ब्रह्मणि |
| 240 | 24 | समानो न स्थितिप्रदः | समानोऽनस्थितिप्रदः |
| 240 | 25 | उतरत्र | उत्तरत्र |
| 241 | 9 | प्राणा नामा | प्राणनामा |
| 242 | 7 | गुणात्वोक्ति | गुणत्वोक्ति |
| 249 | 23 | विशोषो | विशेषो |
| 253 | 13 | विरिञ्ज | विरिञ्च |
| 254 | 16 | परामा | परमा |
| 254 | 17 | कर्तृवं | कर्तृत्वं |
| 255 | 21 | भूतानी'ति | भूतानीती'ति |
| 256 | 8 | पृथवीं | पृथिवीं |
| 256 | 23 | श्रुतेयुं | श्रुतेर्यु |